ष्ठनम्।

६ भिन्नस्य सिक्तस्य वा स्थालीपाकस्याभिमन्त्रणम्।

७ दोहनावस्थायां पयसः स्कन्दने तत्स्कन्नाभिमन्त्रणम्।

८ परिशिष्टेन स्थालीपाकेन होमविधानम्।

९ होमस्यापर्य्याप्तौ अन्येनाज्यस्थालीपाकेन होमकरणम्।

१० पयसि स्कन्ने प्रायश्चित्तिकथनम्।

११ पयसि स्कन्ने स्कन्नाभिमर्शनम्।

१२ पयःशेषेण होमविधानम्।

१३ नष्टस्याशेषे पुनराज्येन होमकरणम्।

१४ स्थालीपाकाशेषे संस्कृतेनाज्येनोाज्येन होमकरणम्।

१५ प्रधानहोमद्वयपर्य्यन्तं उक्तरूपा प्रायश्चित्तिः।

१६ पूर्व्वहोमे प्राप्तस्य मन्त्रस्यापवादरूपया वारुण्या होमकरणम् वारुणीजपकरणञ्च।

१७ वारुणीजपो वारुणीहोमः अनयानमिति त्रयस्य शेषहोमे मात्रापचारहोमे पुनराज्येन होमे च कर्त्तव्यता।

१८ गायत्र्यादिभिते उक्तपदत्रये पुनर्होमः।

१९ सरसरेति शब्दयतोऽग्निहोत्रद्रव्यस्य अभिमन्त्रणम्।

२० उद्वासिते विस्यन्दिते च प्रायश्चित्तम्।

२१ मध्यमेन पलाशपर्णेन वीभत्से होमः।

२२ अभिवृष्टेऽधिकसमिदाधानम्।

२३ उत्तरस्या आहुतेः स्कन्दने समिदाधानम्।

इति तृतीये एकादशी कण्डिका ॥ ० ॥

---

अथ तृतीये द्वादशी कण्डिका।

१ सायं होमस्य प्रदोषान्तात्कालविधानम्।

२ सङ्गवान्तकालस्य प्रातर्होमकालत्वम्।

खनम्।

३ सायं प्रातर्होमेऽतिक्रान्ते चतुर्गृहीतेनाज्येन होमः।

४ उक्तानां कस्मिन् काले केन मन्त्रेण होमस्तत्कथनम्।

५ वारुण्या इष्टेः कर्त्तव्यत्वम्।

६ होमोत्तरकाले इष्ट्यन्ते वरदानम्।

७ अग्निहोत्रसमाप्तौ आहवनीयस्यानुगमनं ज्ञात्वा पुनस्तदुद्धरणम्।

८ मित्रसूर्य्योभयदेवताका इष्टिः।

९ इष्टिसमाप्तौ यतवाचोः पत्नीयजमानयोरग्नौ अनशतोरश्नतोरन्यः प्रोषमुपोषणम्।

१० सूर्योर्गर्वोर्दुग्धेन रात्रेः पूर्व्वचतुर्थभागे सायमग्निहोत्रहोमः।

११ एकस्मिन् पयस्यधिश्रिते द्वितीयमवनीय तेन होमकरणम्।

१२ प्रातःकालातिपातनिमित्ता प्रातरिष्टिः।

१३ उक्तायामिष्टौ भगभद्रूपकस्याग्नेर्देवतात्वम्।

१४ स्वकाले एव प्रणीतेष्वग्निषु होमकालातिपत्तौ प्रायश्चित्तकथनम्।

१५ दुःखेनाश्रुपाते प्रायश्चित्तिः।

१६ अग्निहोत्रार्थं विधिनानुद्धृतमाहवनीयं यद्यस्तमियात् तदा बह्वविद्ब्राह्मणेन तस्य निधापनं कारयेदिति।

१७ पूर्व्ववत् अनुद्धृतेऽभ्युदिते सति बह्वविद्ब्राह्मणेन तत्प्रणयनम्।

१८ आज्यस्य कार्य्यान्तरकथनम्।

१९ कालात्ययेन प्रायश्चित्तविशेषकथनम्।

२० उक्तविषये प्रातःकाले विशेषकथनम्।

२१ विद्यमाने आहवनीये गार्हपत्यानुगमने इतिकर्त्तव्यताविधानम्।

२२ मथनसमर्थ्याभावे भस्मनाऽरणी लेपयित्वा तन्मथनम्।

२३ मथनविषये इतिकर्त्तव्यताकलापः।

सूत्रम्।

२४ उक्तमन्थनविषये द्वितीयः कल्पः।

२५ पुनर्मन्थनविषये कल्पान्तरम्।

२६ त्रिगुणयुक्तोऽग्निरेवात्र मन्थनविषये एका देवता।

२७ अग्निहोत्रार्थं प्रणीते आहवनीयेऽनुगतप्रायश्चित्तत्वेन इष्टि-
विशेषकथनम्।

२८ ज्योतिष्मद्गुणकाग्निवत्कयोः प्रकृते देवतान्वयत्वकथनम्।

२९ सर्व्वेष्वग्निष्वनुगतेषु आदित्येऽस्तमिते उदिते वाऽग्न्याधेयपुन-
राधेयरूपप्रायश्चित्तकथनम्।

३० अरण्योः समारूढेषु अग्निषु अरण्योर्नाशेऽग्न्याधेयस्य पुनरा-
धेयस्य वा कर्त्तव्यत्वम्।

इति तृतीये द्वादशी कण्डिका ॥१२॥

---

अथ तृतीये त्रयोदशी कण्डिका।

१ अतः परं भाविनीनामिष्टीनां आग्नेयीत्वकथनम्।

२ व्रतातिपाते आग्नेयीष्टिः।

३ पूर्वाग्नौ अग्निप्रणयने अग्निवते आग्नेयीष्टिः।

४ आगारदाहे आमायामये अन्याग्निसंसर्जने शुचयेऽग्नये
आग्नेयीष्टिः।

५ सर्वेषां द्वयोर्वा अग्न्योः परस्परं संसर्गे विविचयेऽग्नौ उक्तेष्टिः।

६ पूर्व्वस्यापवादः।

७ पचनाग्निना संवर्गायाग्नये इष्टिकरणम्।

८ वैद्युतेऽग्नौ अप्सुमद्गुणकाय, शवाग्निसम्भोजने वैश्वानरना-
मकायाग्नये चेष्टिकरणम्।

९ पुरोडाशकपाले नष्टेऽनुद्वासिते च उक्ताग्नेयीष्टिः।

१० अभ्याश्राविते उक्ताया इष्टेः कर्त्तव्यत्वम्।

सूचम्।

११ जीवत्येवाहिताग्नौ मृतशब्दोल्लेखे सुरभयेऽग्नये आग्नेयीष्टिः।

१२ आग्नेयीष्टौ मवतो देवता।

१३ आमावास्याख्ये कर्म्मण्यारब्धे चन्द्रमसः पुरस्तादभ्युदये जाते मवद्देवताका उक्तेष्टिः।

१४ प्रायश्चित्तप्रकरणोक्तानां ब्राह्मणोक्तानाञ्चेष्टीनां वैकल्पिकविधिकथनम्।

१५ हविषां स्रुवस्याभिमर्शनम्।

१६ बहिष्परिधि स्रुवया चाहृत्य आग्नीध्रकर्तृको होमः।

१७ हुतवते आग्नीध्राय पूर्णपात्रप्रदानम्।

१८ देवताविपर्य्यासे चावाहनादिषु व्युत्क्रमविधानम्।

१९ कस्मिंश्चित् कर्म्मणि यष्टव्यदेवतावाहनमकृत्वा उत्तरकर्म्मप्रवृत्तौ यावति गते स्मरणम् भवति तद्देवोत्थाय तदावाहनं कर्त्तव्यमिति।

२० अस्थानिन्या देवताया यागकरणम्।

इति तृतीये त्रयोदशी कण्डिका ॥०॥

---

अथ तृतीये चतुर्दशी कण्डिका।

१ अपक्वहविषा होमे कृते चतुःशरावौदनेन चतुर्ब्राह्मणभोजनरूपप्रायश्चित्तिः।

२ अदग्धं किञ्चिद्धविरवदानेभ्यो न पर्य्याप्तश्चेत्तदा पूर्व्वोक्तप्रायश्चित्तम्।

३ हविष्यशेषे दग्धे पुनरावृत्तेः कर्त्तव्यत्वम्।

४ आवाहनात् प्राक् हविर्दोषे पुनरावृत्तिरेव।

५ गुणभूतानां पुनरावृत्तिकथनम्।

६ स्विष्टकृतः प्राक् प्रधानभूतानां पुनरावृत्तिकथनम्।

रणम्।

७ अवदानदोषे पुनरायतनादवदानकथनम्।

८ इष्टे दक्षिणादानं न ऋत्विग्भ्य इति।

९ सर्व्वेषु कर्म्मसु विहितदक्षिणादाने ऊर्वराभूमिदानम्।

१० पुरोडाशश्रपणादूर्द्धं प्रायश्चित्ताभावः।

११ श्वादिभिरवलीढानां तद्दर्शनादिभिरभिच्छिन्नानां अन्यथा वाऽशुचिसम्बन्धानां कपालानामभिन्नानां अपामभ्यवहरणम्।

१२ कपालेभ्योऽन्यासां मृण्मयानां भिन्नानामभिन्नानाञ्च अपामभ्यवहरणम्।

१३ स्फुटितोत्पतितपुरोडाशानां निधानाभिमन्त्रौ।

१४ अग्निहोत्रहोमाय प्रणयनकाले मथ्यमानेऽग्नौ न जाते सातिक्रममग्निं प्रणीय तत्र होमकरणम्।

१५ अग्न्यादीनां एधिष्यन्तानां पूर्व्वपूर्व्वालाभे उत्तरोत्तरग्रहणम्।

१६ ब्राह्मणपाण्यादिषु पञ्चसु आहुतिधारणार्थो समिद्भवति इन्धनार्थाः समिधो न भवन्त्येवेति।

१७ होमानन्तरं मन्थनमपि भवतीति।

१८ यदि पाणौ जुहुयात् तदा वासार्थिनो ब्राह्मणस्य नावरोधः करणीय इति।

१९ यदि कर्णे जुहुयात् तदा छागमांसवर्जनम्।

२० स्तम्बे चेत् दर्भाणामनधिशयनम्।

२१ अप्सु चेत् भोजनाभोजनरूपोऽविवेकः।

२२ सांवत्सरिकयावण्णोविकयोर्व्रतयोर्विकल्पकथनम्।

२३ आहुत्योरन्तराऽग्न्यनुगमने सति निहिते हिरण्ये द्वितीयाहुतिहोमः।

इति तृतीये चतुर्दशी कण्डिका॥ ०॥

इति तृतीयाध्यायः समाप्तः॥

सूत्रसङ्ख्या १८८॥

## चतुर्थाध्याये

कण्डिका: १—१५। सोमयागेतिकर्त्तव्यता।

---

### अथ चतुर्थे प्रथमा कण्डिका।

सूत्रम्।

१ आधानाग्न्यारम्भयोर्दर्शपूर्णमासयोरनन्तरं इष्टिपशुचातुर्मास्यैरिष्ट्वा सोमेन यजनम्।

२ एकेषां मते दर्शपूर्णमासानन्तरं, अपरेषां मते ताभ्यां पूर्व्वमपि सोमेन यजनम्।

३ सोमयागकर्तॄणां ऋत्विजां एवंरूपत्वकथनम्।

४ ऋत्विजां मुख्यामुख्यत्वकथनम्।

५ तस्य तस्य उत्तरेषां त्रयाणां पुरुषाणां मुख्यत्वकथनम्।

६ सर्व्वपुरुषव्यापिपदार्थानुष्ठाने एतत्क्रमज्ञापनार्थः परकर्तृनिर्द्देशः।

७ षोडशानां ऋत्विजां अहीनैकाहैर्याजनं न सदस्यस्य मित्यचमसाध्वर्य्यूणां कर्तृत्वमिति ज्ञापनम्।

८ गृहपतिसप्तदशानां उक्तानां षोडशानां ऋत्विजां सत्त्रैर्यजनम्।

९ ऐष्टिके तन्त्रे सन्निमां पुरुषाणां समवायादिकर्म्मणो यथार्थं ऊहस्य कर्त्तव्यत्वम्।

१० अनग्नानां दीक्षणीयाप्रभृत्येव यथार्थमभिधानमैष्टिके तन्त्रे इति।

११ ऋत्विक्त्वात् अप्राप्तस्योहस्य विधानम्।

सूत्रम्।

१२ दक्षप्रदाने ऊहविधानम्।

१३ प्रैषेषु निवित्सु अप्राप्तस्य ऊहस्य विधानम्।

१४ अनैष्टिकत्वात् ऋक्त्वाच्च हृतयाज्यायां अप्राप्तोहविधानम्।

१५ कुन्ताप्च ऋक्त्वादप्राप्तिः।

१६ अच्छावाकस्य निगदे उपहवप्रत्युपहवेऽप्राप्तिः।

१७ आर्षेयवरणे गृहपतिवरणानन्तरं यात्मादीनां मुख्यानां प्रवरणम्।

१८ सर्व्वात्मवर्गादित्वं सूत्रोक्तक्रमश्च।

१९ समानार्षेयाणां समानगोत्राणां तावतां तन्त्रताकथनम्।

२० इष्यान्वयानां संस्काराणां अवर्त्तनम्।

२१ एकेषां मते अग्निचयनवत्सु क्रतुषु उखासम्भरणीयं ऐष्टिकं कर्म्म।

२२ अग्निवत् अञ्चवत् अश्वदूतकानां त्रयाणां अग्नीनां देवतात्व-कथनम्।

२३ इदम्प्रभृतिकर्म्मणां उत्तरोत्तरं शनैस्तरां भवितव्यत्वम्।

२४ उक्तस्योखासम्भरणीयस्य पौर्णमासात् शनैस्तरत्वकथनम्।

२५ सोमप्रवहणस्य प्रायणीयातुल्यताकथनम्।

२६ औपवसथ्येऽग्निप्रणयनस्य प्रथमाया ऊर्द्धं स्वरेषु नियमाभावः।

२७ घर्म्मे मध्यमोत्तमयोर्नियमाभावकथनम्।

इति चतुर्थे प्रथमा कण्डिका॥०॥

---

अथ चतुर्थे द्वितीया कण्डिका।

१ दीक्षणीयायामिष्टौ विराजौ धाय्ये भवत इति।

२ दीक्षणीयायामग्राविष्णू देवता।

सूचम्।

३ साग्निचित्ये त्रीण्यन्यानि हवींषि इति।

४ अन्त्ययोरुभयोरामावैष्णवादधिकानि त्रीणि हवींषीति।

५ भुवस्त्वमादित्येभ्यः भुवनपतिभ्यो वा आदित्येभ्यो याज्या-
नुवाक्ये।

६ इदमादिषु उदयनीयायाः प्राक् मार्जनाभावकथनम्।

७ इडायां सूक्तवाके च स्थितानामाशिषां स्थाने आगूर्नामक-
मन्त्रस्य प्रयोगः।

८ इडानिगदकथनम्।

९ सूक्तवाक्यानिगदकथनम्।

१० नामादेशाभावकथनम्।

११ सवनीयपश्विडायाः कथनम्।

१२ अग्निप्रणयनोत्तरकालं गार्हपत्याहवनीययोर्मध्ये दीक्षिताना-
मासनशयनरूपसञ्चरदेशः।

१३ सत्राणां दीक्षाविधानम्।

१४ महाव्रतसहिते सत्रे विशेषकथनम्।

१५ द्वादशाहतापश्चितेषु यत्संख्याः सुत्यास्तत्संख्या एवोपसदश्च
दीक्षाश्च भवन्तीति।

१६ विकृत्येकाहानां कर्म्माचारः।

१७ दीक्षाकालएव विधातव्ये दीक्षोपसत्सहितानामेकाहानां
प्रयोगकालविधानम्।

१८ दीक्षाहःसु परिसमाप्तेषु अनन्तरं यदहस्तस्मिन्नहनि सोम-
क्रयविधानम्।

इति चतुर्थे द्वितीया कण्डिका॥०॥

---

## अथ चतुर्थे तृतीया कण्डिका।

सूत्रम्।

१ सोमक्रयदिवसे प्रायणीयेष्टिकरणविधानम्।

२ प्रायणीयेष्टेः शंय्वन्तत्वम्, नोदयनीयान्तत्वमिति।

३ उक्ताया इष्टेरनाज्यभागत्वं नोदयनीयत्वमिति।

४ अहर्गणेषु सोमक्रयस्य सकृदेव कर्त्तव्यत्वम्।

इति चतुर्थे तृतीया कण्डिका॥ ०॥

---

## अथ चतुर्थे चतुर्थी कण्डिका।

१ सोमक्रयरूपं कर्म्म।

२ क्रीतं सोमं प्राग्वंशसमीपं नेष्यत्सु अध्वर्य्युषु अनसः पश्चात् त्रिपदमात्रेऽतीते चक्रवर्त्मनोर्मध्यभागस्य सरलदेशे प्रेषितस्य सतः पाणिमचालयतः प्रपदेन दक्षिणस्यां दिशि त्रिः पांशूद्वपनम्।

३ अन्तरेणैव वर्त्मनी अनुव्रजतएव उत्तरा अनुवचनम् न व्रजनविक्षेपे इति।

४ अवस्थितस्यानसो दक्षिणपार्श्वेन सोमसमीपं गत्वा तमीक्षमाणस्य तत्रैवावस्थानम्।

५ अवस्थितेऽनसि दक्षिणात् पश्चादभिक्रान्तस्य सोमाभिमुखे अवस्थानम्।

६ सोमे निहिते तिष्ठतएव परिधानकथनम्।

७ उपस्पर्शनविषयस्य विकल्पकथनम्।

इति चतुर्थे चतुर्थी कण्डिका॥ ०॥

## अथ चतुर्थे पञ्चमी कण्डिका।

सूचनम्।

१ इडान्ता आतिथ्या नाम इष्टिः।

२ आतिथ्येष्टेरभिमर्शनरूपाङ्गकथनम्।

३ आतिथ्येष्टो धाय्यादयं, संयाज्यादयं, आर्त्विज्यं करिष्यतां स्वयमभिमर्शनम्।

४ उदकस्पर्शानन्तरं सोमराजाप्यायनम्।

५ उपसत्सु उदकस्पर्शने उष्णोदकग्रहणम्।

६ आप्यायनमन्त्रकथनम्।

७ उदकस्पर्शानन्तरं नमस्काराञ्जलिरूपेण पाणिनिधानस्य कर्त्तव्यत्वम्।

इति चतुर्थे पञ्चमी कण्डिका ॥ ० ॥

---

## अथ चतुर्थे षष्ठी कण्डिका।

१ उष्णोदकोपस्पर्शनानां आप्यायननिह्नवप्रवर्ग्याङ्गत्वकथनम्।

२ प्रत्यृचमनवानमुक्त्वा प्रणवेन तदवसानम्।

३ पूर्व्वस्याभिष्टवनस्य एतावत्त्वकथनम्।

इति चतुर्थे षष्ठी कण्डिका ॥ ० ॥

---

## अथ चतुर्थे सप्तमी कण्डिका।

१ पूर्व्वोत्तरयोः पटलयोः सम्बन्धाय उत्तरपटले ऋगावानादिधर्म्मकथनम्।

२ होत्रादिषु उपविष्टेषु अध्वर्य्युकर्त्तृकघर्म्मदुघाह्वानस्य उत्तरारम्भे निमित्तत्वकथनम्।

सूत्रम्।

३ अभिहिङ्कारवर्जं उत्तराभिष्टवनविधानम्।

४ उत्तरपटलस्य एतावत्त्वकथनम्।

५ उत्तमयोः प्रवर्ग्ययोः स्वरूपकथनम्।

इति चतुर्थे सप्तमी कण्डिका ॥ ७ ॥

---

अथ चतुर्थे अष्टमी कण्डिका।

१ प्रवर्ग्योपसदोः सम्बन्धाय प्रवर्ग्यार्थं प्रपन्नस्य उपसत्करण-विधानम्।

२ उपसदि पित्र्यया जपलोपः।

३ पित्र्ययैव प्रादेशोपवेशनयोर्व्याख्याततत्त्वकथनम।

४ पित्र्यया उपवेशनातिदेशात् दक्षिणोत्तर्य्यपस्यताविधानम्।

५ उपसद्यायमीढ्ढुषे इत्याद्याः तिस्रः सामिधेन्यः।

६ आज्यपस्विष्टकृदावाहनस्यार्थलुप्तत्वकथनम्।

७ एकेषां मते देवतानामनावाहनं। अनावाहनेऽपि उक्ता एव देवताः इति च।

८ स्विष्टकृदादिप्रयाजाज्यभागलोपकथनम्।

९ आप्यायननिह्नवयोर्नित्यत्वकथनम्।

१० अपराह्णेऽपि कर्त्तव्यायां उपसदि विशेषकथनम्।

११ पौर्व्वाह्णिकीनापराह्णिकीनामुपसदां कर्त्तव्यत्वम्।

१२ पौर्व्वाह्णिकीनामुपसदां सुपूर्व्वाह्णे आपराह्णिकीनाञ्च स्वपराह्णे कर्त्तव्यत्वकथनम्।

१३ पूर्व्वाह्णिक्यापराह्णिक्यावुपसदौ एकीकृत्य एकोपसद्व्यवहारः, तादृश्या उपसदश्च त्रिस्वहःसु कर्त्तव्यत्वम्।

१४ उक्तैकोपसद्व्यवहारे व्यवस्थानिश्चयः।

सवम्।

१५ अध्वर्य्युप्रश्नयादुपसन्निश्चयः।

१६ एकेषां शाखिनां मते ज्योतिष्टोमस्य प्रथमप्रयोगे धर्म्मेच्छा-भावकथनम्।

१७ औपवसथ्येऽहनि वर्त्तमानयोरुपसदोः पूर्व्वाह्ण एव कर्त्तव्यत्वम्।

१८ होता दीक्षितश्चेत् तदा औपवसथ्येऽहनि प्रथमोपसदि समाप्तायां प्रेषितः पुरीषचित्यर्थमनुवचनम्।

१९ होतरि अदीक्षिते यजमानस्यानुवचनम्।

२० पश्चात् पदमात्रे स्थित्वाऽभिहिङ्कृत्य पुरीष्यासोऽग्नयः इति सप्रणवाया ऋचस्त्रिरनुवचनम्।

२१ सुमन्त्रेणैवानुवचनं नोपांश्विति।

२२ व्रजत्सु अध्वर्य्युषु अनुव्रुवतोऽनुव्रजनम्।

२३ तिष्ठत्सु अध्वर्य्युषु अनुवचनारम्भस्थाने स्थित्वा भूर्भुवः स्वरिति वाचं विसृज्य प्रणयतेति सम्प्रैषानुवचनम्।

२४ होता दीक्षितश्चेत् प्रस्तोष्टकर्त्तृकं सञ्चितस्य अग्नेः अनुगीतस्या-नुशंसनरूपसंस्कारणम्।

२५ निर्मथ्यमया वाचा पूर्व्वोक्तमग्न्यनुशंसनम्।

२६ अग्निपुच्छस्य पश्चात् वैश्वानरीययजनम्।

२७ साग्निचित्येषु क्रतुषु पुरीष्यचितिः, अनुशंसनं, वैश्वानरीय-मित्येतत्त्रयं भवतीति।

२८ ब्रह्मणो नियमकथनम्।

२९ उत्तरस्याग्निप्रणयनस्य कर्त्तव्यत्वम्।

३० दीक्षितश्चेद्ब्रह्मा तदा तस्य वसोर्धाराहोमकाले तत्प्रतिग-मनविधानम्।

इति चतुर्थे अष्टमी कण्डिका॥ ० ॥

## अथ चतुर्थे नवमी कण्डिका।

सूचनम्।

१ अध्वर्य्युकर्त्तृकं हविर्धानयोः शकटयोः प्रवर्त्तनम्।

२ उक्तप्रवर्त्तने कर्त्तव्यस्य सोमप्रवह्णेन करणविधानम्।

३ पूर्व्वोक्तानुवचने विशेषकथनम्।

४ रराट्यामबद्धायां अधिद्वयोरित्यस्या अर्द्धर्चेऽवसानम्।

५ अबद्धां रराटीमोत्समाप्ते ऋग्विशेषानुवचनम्, तदर्द्धर्चे आरामश्च।

६ उपनिहतयोर्मेथ्योः ऋग्विशेषेण परिधानम्।

इति चतुर्थे नवमी कण्डिका ॥०॥

---

## अथ चतुर्थे दशमी कण्डिका।

१ प्रेषितानुवचने हतिकर्त्तव्यताकलापकथनम्।

२ अनुव्रजत उत्तरानुवचनम्।

३ ऋग्विशेषसमाप्तौ प्रणवेनोपरमः।

४ आग्नीध्रीयमतिव्रजत्सु अध्वर्य्युषु उत्तरेण तमतिव्रज्य ऋग्विशेषाणामनुवचनम् ऋग्विशेषस्य चार्द्धर्चे आरामः।

५ प्रपद्यमानस्य राज्ञोऽनुप्रपदनप्रकारकथनम्।

६ अक्षोपवेशने हतिकर्त्तव्यताव्यवस्थापनम्।

७ अक्षकर्तृकस्य सोमप्रणयनस्य पाक्षिकत्वकथनम्।

८ सोमराजानमप्रणयतो ब्रह्मणः कर्त्तव्यविधानम्।

९ आहवनीयस्य दक्षिणतः अक्षोपवेशने नियमकथनम्।

१० अग्निचयनसहितानां सोमयागक्रियायां अग्निपुच्छस्य दक्षिणत उपवेशनम्।

११ अग्नीषोमीये पशौ उक्तं ब्रह्मासनम्।

सूत्रम् ।

१२ सौत्ये चाहनि वपाहोमपर्य्यन्तमाहवनीयस्य दक्षिणत आसनम् ।

१३ गृहपतये सोमं प्रदाय राजानं सोमं हविर्धाने चाग्रेण यदि गतः स्यात्तदा प्रपद्यमाने राजनि आसादनार्थं पुनः प्रत्येयादिति ।

इति चतुर्थे दशमी कण्डिका ॥०॥

---

अथ चतुर्थे एकादशी कण्डिका ।

१ अग्नीषोमीयेण पशुना चरणम् ।

२ दण्डप्रदानपर्य्यन्तमुत्तरवेदिसमीपे एतावतां पदार्थानां कर्त्तव्यत्वम् ।

३ होतुः स्वस्य धिष्ण्यस्य पश्चादुपवेशने इतिकर्त्तव्यताकलापः ।

४ मैत्रावरुणस्य स्वीयधिष्ण्यस्य पश्चादवस्थानम् ।

५ देवसूनां हवींषीति संज्ञाकथनम्, तत्र सर्व्वासां अष्टानां देवतानां सगुणत्वम्, रुद्रस्य गुणविकल्पश्च ।

६ उक्तदेवतानां याज्यानुवाक्याकथनम् ।

इति चतुर्थे एकादशी कण्डिका ॥०॥

---

अथ चतुर्थे द्वादशी कण्डिका ।

१ सर्वंएष्ठानीतिवक्ष्यमाणानां हविषां संज्ञा, अन्वायात्यत्वं, तद्देवतोपदेशस्य ध्यानार्थत्वं, तासामाष्टौ सङ्ख्याः, तत्रादितः चतसृणामेकैकस्याश्चत्वारश्चत्वारो गुणशब्दाः, ततो विष्णुपत्नी अदितिरेका, ततश्चापराऽनुमतिरिति च ।

सूत्रम्।

२ उक्तानामष्टानां देवतानां याज्यानुवाक्याकथनम्, वैश्वानरीयस्य नवमत्वं, कायस्य दशमत्वञ्च।

३ औपयजैरङ्गारैर्थ्ववायपरिहारे यत्नस्य करणीयत्वम्।

४ आग्नीध्रीयाच्चेत् उत्तरेण होतारं पश्चान्नीत्वा तमेव दक्षिणेन हृत्वा होत्रीये निधानस्य कर्त्तव्यत्वम्।

५ प्रामित्रोदाहरणे दक्षिणेन मैत्रावरुणं होत्रीय एव निधानस्य कर्त्तव्यत्वम्।

६ उपोत्थाननिष्क्रमणे हुत्वा देवग्रहणम्।

७ हृदयशूलोद्वासनप्रकारः।

८ वसतीवरीणां परिहारे क्रियमाणे दीक्षितानामन्तर्भावः अदीक्षितानां बहिर्भावश्च।

इति चतुर्थे द्वादशी कण्डिका॥०॥

---

अथ चतुर्थे त्रयोदशी कण्डिका।

१ यस्यां रात्रौ पशोः समाप्तिस्तस्याश्चतुर्थभागे पक्षिप्रवादनात् प्राक् प्रातरनुवाकायामन्त्रितस्य विधिपूर्वकः आहुतिहोमः।

२ उक्तविषये द्वितीयाहुतिहोमः।

३ ब्रह्मणश्च होतुश्चायं विधिः समान इति।

४ हविर्धाने प्राप्य ररात्यभिमर्शनम्।

५ दक्षिणेन पाणिना पर्य्यायेण ररात्यभिमर्शनम्।

६ मन्द्रस्वरेण प्रातरनुवाकानुवचनम्।

७ प्रातरनुवाकार्थमाम्नानविशेषे विशेषकथनम्।

८ अग्निदेवताकक्रतुकथनम्।

इति चतुर्थे त्रयोदशी कण्डिका॥०॥

---

## अथ चतुर्थे चतुर्दशी कण्डिका।

सूत्रम्।
१ उषस्यः क्रतुः।

इति चतुर्थे चतुर्दशी कण्डिका॥०॥

---

## अथ चतुर्थे पञ्चदशी कण्डिका।

१ आश्विनः क्रतुः।
२ तत्र प्रातरनुवाकः।
३ पूर्व्वोक्तादन्यः प्रातरनुवाकः।
४ अन्यैश्छन्दोभिराग्नेयस्य गायत्रस्य छन्दसा नाभ्यावपनम्।
५ राजन्यस्य च त्रैष्टुभं, वैश्यस्य च जागतमिति।
६ अध्यासवत् एकपदद्विपदानां संहितानामन्ते प्रणवकरणम्।
७ विहितानां माक्तादीनां समानक्रमे वक्तव्यत्वकथनम्।
८ प्रेष्यतः स्वर्गकामस्य माक्तत्वकथनम्।
९ तमसोपघातपर्य्यन्तं ईंडेद्यावीयस्तन्नावर्त्तनम्।
१० तमसोपघातकाले ईंडेद्यावीयस्य उत्तमयर्चा प्रतिप्रियतम-मिति सूक्तस्योपसन्तननम्।
११ उत्सर्पणस्वरूपकथनम्।

इति चतुर्थे पञ्चदशी कण्डिका॥०॥

इति चतुर्थाध्यायः समाप्तः॥

सूत्रसङ्ख्या १५४॥

---

# आश्वलायनीयं

## श्रौतसूत्रम्।

---

श्रीगणेशाय नमः।

---

॥ श्रोम्॥

प्रज्ञानानन्दमूर्त्तिः सकलदिगतिगः सर्वदा सन्ननन्यः
सर्वस्मात् स्वप्रकाशः स्थिरचरनिलयः प्रत्यगात्मा सदेवः।
श्रौतस्मार्त्तक्रियात्मा श्रुतिमननिदिध्यासवैराग्यलभ्यः
स ब्रह्मा विष्णुरीशः सकलमपि जगत् सर्वदाऽव्यादसौ नः॥

गुणदोषविनिर्मुक्तं स्वप्रकाशमनाकुलं।
गम्भीरबोधमानन्दं नमामि ब्रह्म शाश्वतं॥

आश्वलायनसूत्रस्य भाष्यं भगवता कृतं।
देवस्वामिसमाख्येन विस्तीर्णं सदनाकुलं॥
तत्प्रसादान्मयेदानीं क्रियते वृत्तिरीदृशी।
नारायणेन गार्ग्येण नरसिंहस्य सूनुना॥

---

अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः ॥ १ ॥

लोके यानि प्रत्याम्नायं प्रयोगशास्त्राणि स्मर्यन्ते, तान्यनुष्ठानोपयिकतया अध्ययनविध्याक्षिप्तत्वात् प्रत्याम्नायमङ्गत्वं प्रतिपन्नानि, तत्राङ्गाङ्गिनोरनुष्ठानक्रमानन्तर्यमथशब्दो द्योतयति। एतस्येतिशब्दो निविशेषपरोऽत्यन्तापचारत्वखिलमहानाम्न्यैतरेयब्राह्मणरहितस्य शाकलस्य बाष्कलस्य चाम्नायद्वयस्य एतदाश्वलायनसूत्रं नाम प्रयोगशास्त्रमित्यध्येतृप्रसिद्धं सम्बन्धविशेषं द्योतयति। समाम्नायस्येत्युच्यते, एतस्यैव सम्यगभ्यासयुक्तस्येदं शास्त्रं न खिलानां सम्यगभ्यासरहितानामिति। वितता अग्नयो यस्मिन्निति श्रौतकर्मजातमग्निहोत्रादि वितानशब्देनोच्यते। समाम्नायस्य वितान इति विशेषणात् श्रौतेष्वेव खिलरहितत्वं गार्ह्येषु सखिलत्वमेवेति ज्ञायते। योगापत्तिः प्रयोगापत्तिः प्रयोगपरिणतिः प्रयोगस्वरूपमित्यर्थः। तां वक्ष्याम इति ब्रुवन्निदमेव शास्त्रं प्रतिपाद्यमिति दर्शयति। तेन छन्दोगप्रत्ययप्राप्तस्य स्तवादेस्तोत्रियत्वादिकार्यसम्बन्ध एवात्र विहितत्वेन ग्रहीतव्यो न स्तवादेः स्वरूपमपि तत्प्रत्ययमेवेति प्रयोग एव शास्त्रस्य व्यापारो न स्तवादेः प्रयोज्यस्वरूपेऽपीति।

एतदुक्तं भवति, अध्ययनविधिना एवोक्तलक्षणमाम्नायमधिगम्यानन्तरं श्रौते कर्मण्येतदुक्तमाम्नायविहितप्रयोगज्ञानायेदमपि शास्त्रमधिगन्तव्यमिति॥ श्रौतेषु कर्मसु एतदुक्तमा-

स्मायविहितानां प्रयोगापकिं वक्ष्याम इत्युक्तमिदानीं तेषु आहिताग्नेरधिकार इत्याह।

अग्न्याधेयप्रभृतीन्याह वैतानिकानि ॥ २ ॥

अग्न्याधेयप्रभृतिरादिरुपक्रमो येषां तान्यग्न्याधेयप्रभृतीनि अग्निहोत्रादीनि कर्माणि, आधानं कृत्वैव कर्त्तव्यानीत्यर्थः। तत्र हेतुमाह, वैतानिकानीति। वितानेषु भवानि वैतानिकानि, वितानसाध्यानीत्यर्थः। वितानशब्दोऽस्मिन् सूत्रे भावसाधनोऽग्नीनां विस्तारवाची, पूर्वस्मिंस्त्वधिकरणसाधनोऽग्निहोत्रादिकर्मवचनः।

एतदुक्तं भवति, गार्हपत्यादिभिरग्निभिः साध्यानि श्रौतानि कर्माणि, अग्नयस्त्वाधानसाध्याः, तस्मादाधानप्रभृतित्वमिद्धं श्रौतानां कर्मणां। बहुवचनं सर्वश्रौतपरिग्रहार्थं, सर्वाणि श्रौतान्याधानादूर्द्धमेव कर्त्तव्यानि न किञ्चिदपि श्रौतमाधानादर्वागित्यनेन प्रकारेणाधानस्य कर्मार्थत्वनिराकरणेनाग्न्यर्थत्वमर्थात् साधितं भवति। तद्यदि कर्मार्थं स्यात् प्रति कर्म क्रियेत, तत्र कस्यचित् परस्तादपि स्यात्, यस्य परस्तादाधानं स्यात् तस्याग्न्याधेयप्रभृतित्वं विहन्येत। आधानस्याग्न्यर्थत्वे च नायं दोषः। अतो बहुवचनेनाधानस्याग्न्यर्थत्वं साधितं भवति। तस्मादनाहिताग्नेः खामवत्यादयो न भवन्ति, अवकीर्णिना पश्वाद्यर्थस्याधानं न कर्त्तव्यं, साधितं भवति न परस्तात्। आहेत्यनेन सर्वमिदं शास्त्रं श्रुतिमूलमिति दर्श-

यति। तेनास्मिन् शास्त्रे यददृष्टं मूलं तदाम्नायान्तरं मूलमिति साधितं भवति। अस्मिंस्तु मूलशास्त्रे अनिबद्धस्य स्वाम्नाये दृश्यमानस्य श्रुतित एव प्रयोगसिद्धिर्भवति, श्रुतेः स्वातन्त्र्यसङ्कीर्त्तनादिति॥ आधानस्य प्रथमानुष्ठेयत्वात् प्रथमं तदेव वक्तव्यमित्यत आह।

दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तन्नाम्नातत्वात्॥ ३॥

दर्शपूर्णमासशब्दौ यथासङ्ख्येन सूर्याचन्द्रमसोरत्यन्तसन्निकृष्टविप्रकृष्टदेशस्थितिलक्षणवचनौ, तद्योगाद्दोराचवचनौ, तद्योगादेव कर्मवचनौ। अत्र तु कर्मवचनौ। पश्चात्प्रयोज्यवचनोऽपि दर्शशब्दोऽल्पाच्तरत्वात् पूर्वस्मिन्निपात्यते। तुशब्दो विशेषद्योतकः। तन्त्रमङ्गसंहतिः, विध्यन्त इत्यर्थः। स चावस्थानादिः संस्थाजपान्तः। प्रधानस्य तन्त्रणात् तन्त्रमित्युच्यते। तच्च दर्शपूर्णमासयोरेवाम्नातं नान्यास्विष्टिषु। अतस्तत्सापेक्षत्वादन्यासां तावेव पूर्वं व्याख्यातव्यौ स्यातां।

एतदुक्तं भवति, आधानस्य प्रथमं प्रयोज्यत्वात् तस्मिन्नेव प्रथमं व्याख्यातव्ये सति तत्साध्यस्य गार्हपत्यादेः पवमानेष्टिसापेक्षत्वात् ता अपि तत्रैव वक्तव्याः स्युः ता अपि विध्यन्तसापेक्षत्वात् तस्य च दर्शपूर्णमासयोरेवाम्नातत्वात् तद्व्याख्यानमन्तरेण तज्ज्ञानाभावात् प्रयोक्तुं नैव शक्यन्ते। अतोऽनेन विशेषेण तावेव पूर्वं व्याख्यास्यामो नाधानमिति सूत्रस्यार्थः॥

इदानीं दर्शपूर्णमासयोर्व्याख्यानमारभते।

दर्शपूर्णमासयोर्हविःष्वासन्नेषु होतामन्त्रितः प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्विहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीताः ॥ ४ ॥

दर्शपूर्णमासयोरित्यधिकारार्थः। आऽध्यायपरिसमाप्तेर्वाक्येन शेषिविशेषासंयुक्तस्योभयार्थत्वाय हविरासादनमामन्त्रणञ्चोभयं संहतमेवैष्टिकस्य प्रवेशस्य निमित्तं। होत्रमित्यृग्वेदस्य समाख्या, तद्वेदविहितानां पदार्थानां कर्त्ता होतेत्युच्यते। प्राङ्मुखत्वं स्नानाचमनाभ्यां सम्बध्यते मध्यगतस्य विशेषग्रहणात्। यज्ञोपवीतं तावदाचमनार्थतया न विधेयं स्मृतिप्राप्तत्वात्। अन्यार्थञ्च न भवति सम्बन्धाभावात्। एकवाक्यगतत्वात् कर्त्रा सम्बध्यमानस्य च प्रयोजनाभावः स्मृतिप्राप्तत्वादेव। अतः स्मृतिप्राप्तमिहानूद्यते। स्मार्त्तानां स्नानाचमनयज्ञोपवीतादीनां श्रौतकर्माविरुद्धानामस्मिञ्छास्त्रे प्राप्तिप्रदर्शनार्थमिदमाचमनं कर्माङ्गं विधीयते। शौचार्थस्य गृहप्रवेशात् प्रागेव कृतत्वात्। तदुक्तं,

'मनःप्रासादात् सत्योत्या तपसा स्नानकर्मणा।

आचान्त्या चात्मनः शुद्धिं कृत्वा कर्म समारभेत्' ॥ इति।

दक्षिणावृन्नाम यो दक्षिणं पार्श्वं मध्ये कृत्वा वर्त्तते स दक्षिणावृत्। विह्रियन्तेऽग्नयो यस्मिन् देशे स विहारः। उत्करो नाम उत्कीर्यन्ते वेदिपांसवो यस्मिन् देशे स उत्करः। प्रणीता नाम

आपो मन्त्रसंस्कृता आहवनीयस्योत्तरतो निहिताः। उत्करं प्रणीताश्चान्तरेण यो देशस्तेन विहारं प्रपद्यते।

एतदुक्तं भवति, स्नात्वाचम्य यज्ञोपवीती भूत्वा हविःष्वासन्नेष्वामन्त्रितश्च स होता प्रागुदगाहवनीयाद्यो देशस्तस्मिन् प्राङ्मुखोऽवस्थाय निष्क्रम्य प्राङ्मुख एव भूत्वाचम्य दक्षिणावृद्भूत्वा पूर्वेणोत्करमपरेण प्रणीता यो देशस्तेन विहारं प्रपद्येत इति। उत्करप्रणीताग्रहणादेव विहारप्रत्यये सिद्धे यद्विहारग्रहणं तत्सर्वः कर्त्ता सर्वकर्मणि विहारप्रपदनं कुर्वन् दक्षिणावृद्भूत्वैतेन पथा प्रपद्येतेत्येवमर्थं॥

इध्ममपरेणाप्रणीते॥५॥

यदनौषधिहविष्कं कर्म तदप्रणीतमिहोच्यते, हविःअपणार्थत्वात् प्रणीतानां। तस्मिन्निध्ममपरेण प्रपद्यते, प्रणीतास्तत्र न सन्तीति॥

चात्वालं चात्वालवत्सु॥६॥

चात्वालो नामावटः पशुसोमादिष्वस्ति, येषु उत्तरवेद्यर्थं यत्र मृत् खाता क्रियते तद्वत्सु तेषु तमपरेण प्रपद्यते। सर्वत्रोत्करः पश्चिमावधिः॥

एतत्तीर्थमित्याचक्षते॥७॥

एतमध्वानं तीर्थमित्याचक्षते वेदविदः। आचक्षत इति ब्रुवन् वैदिकीयं सञ्ज्ञा न पारिभाषिकीति दर्शयति। उत्कराद्यभावेऽपि स देशस्तीर्थसञ्ज्ञक एव देशरक्षणार्थत्वादु-

त्कारादीनां ग्रहणस्येति। अतोऽग्निहोत्रादिष्वपि तेनैव पथा प्रपदनं सिद्धं भवति॥

तस्य नित्याः प्राच्यश्चेष्टाः ॥ ८ ॥

षट् सूत्राणि सर्वार्थानि, तदर्थं तस्येति विशेषणं कृतं। अस-त्यस्मिन् होतुः प्रकृतत्वात् तस्यैवेमे विधयः स्युः, अस्मिंस्तु सति सन्निकृष्टविषयत्वात् सर्वनाम्नो यत्तीर्थेन विहारप्रपदना-र्हो यः कर्त्ता विहितस्तस्यैवेमे विधयो भवन्तीति तस्येति विशे-षणं कृतवानाचार्यः। नित्या इत्यनेन प्राक्चेष्टताया नित्यत्वं न विधातव्यं, विहितत्वादेव स्वरूपनित्यत्वयोरपि सिद्धत्वात्। अतस्त्वयमेषोऽर्थः, तस्य बाह्यानां चेष्टानां उपरमेऽपि मनो-वाक्काययन्त्रणादयो नित्या एवेति। प्राच्य इतिशब्दः पूर्वदिग्-वाची पुंसि बहुवचनान्तः। चेष्टा इतिशब्दः क्रियावाची स्त्रियां बहुवचनान्तः। तत्र प्राच्य इत्यत्र पुंसः प्राक्त्वेन सम्बन्धात् कर्तुः प्राङ्मुखत्वं विधीयते। चेष्टाःशब्दगतबहुवचनेनास्य बहुत्वस्य सामानाधिकरण्यादेव चेष्टानां प्राक्त्वं विधीयते। तासाममूर्त्त-त्वात् स्वतः प्राक्त्वासम्भवात् तत्साधनेषु प्रागग्रता तासाञ्च प्राच्ये-वापवर्ग इत्येवं विधिबलाद्भवति।

एतदुक्तं भवति, यो यत्तीर्थेन विहारं प्रपन्नस्तस्य तस्य प्राङ्निष्क्रमणान्मनोवाक्काययन्त्रणादयो नित्याः स्युः, कर्तुश्च प्राङ्मुखत्वं, चेष्टानाञ्च प्रागपवर्गता, तत्साधनानाञ्च प्रागग्रतेति विषमसूत्रप्रणयनेन व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहा-दलक्षणमिति। एषा परिभाषा सङ्गृहीता भवति॥

अङ्गधारणा च ॥ ९ ॥

अङ्गमुरूपस्थः, तस्य करणं दक्षिणोत्तरिणोपस्थेनेति वक्ष्यमाणरूपं धारणेत्युच्यते। सा च नित्या भवेत्, उपवेशनकालादारभ्याकर्मपरिसमाप्तेरविच्छेदेन कार्येत्यर्थः। अङ्गधारणस्योपवेशनाङ्गत्वेन प्राप्तस्यादृष्टार्थतापरिहारायैव नित्यत्वेऽपि प्राप्ते तन्नित्यतावचनं 'न पत्नीमांयाजिके, अनिरस्य तृणम्' इत्येवमादिषूपवेशनेषु मन्त्रनिषेधेऽपि वक्ष्यमाणस्योपवेशनप्रकारस्य नित्यत्वेन प्रापणार्थं, मन्त्रविध्यसम्बन्धेष्वप्यग्निहोत्रादिषु वक्ष्यमाणलक्षणस्यैवोपवेशनस्य प्रापणार्थञ्च ॥

यज्ञोपवीतशौचे च ॥ १० ॥

पूर्वस्य यज्ञोपवीतग्रहणस्य स्मार्त्तानां प्रापणार्थत्वान्निवीतप्राचीनावीतयोर्मानुषपैतृकयोः कर्मणोः स्मार्त्तत्वेन प्राप्तौ सत्यां नियमार्थमिदमुच्यते। यत्र निवीतप्राचीनावीते विधीयेते तत्रैव ते भवतो न मानुषं पैतृकं वा कर्म दृष्टेति तयोर्विध्यभावे यज्ञोपवीतमेवेति नियम्यते। देशस्याङ्गप्रधानार्थत्वादिग्रहादिभक्षणादेस्साङ्गत्वादस्य च विहारदेशे प्राप्तौ सत्यामेव शौचग्रहणेन नियम्यते। कलर्थमप्यशुचित्वसम्पादि यत् तद्विहारान्निष्क्रम्य बहिः कर्त्तव्यं। अन्तर्विहारे शुचिरेव नित्यं स्यादिति ॥

विहाराद्व्यावृत्तिश्च तच्च चेत् कर्म ॥ ११ ॥

व्यावृत्तिः पृष्ठतः कृतिः। न विहारं पृष्ठतः कुर्यात्। तच्च चेद्विहारे कर्म कुर्वन् भवेत्। प्रयोगमध्येऽपि कर्म कुर्वतामेवायं नियमो नोपरतकर्मणामित्यर्थः। अतो विहारव्यावृत्तिनिषेधात् 'पश्चाद्ध्रोपविश्य पश्चात् स्वस्य धिष्ण्यस्योपविशति, पश्चादुत्तरवेदेरुपविश्याध्वर्युः' इत्येवमादौ मध्यरेखाया अपक्रम्य उत्तरत उपविशेत्। चशब्दस्त्रिषु सूत्रेषु नित्यत्वानुकर्षणार्थः। तच्च चेत् कर्मेतिवचनाद्ब्रह्मणोऽप्ययं नियमो भवेत्। उत्तरसूत्राङ्गं चेदं पदत्रयं। तेन ब्रह्मणो दक्षिणाङ्गव्यापारः सिद्धो भवति ॥

एकाङ्गवचने दक्षिणं प्रतीयात् ॥ १२ ॥

एकशब्दः केवल्यवचनः। एकञ्च तदङ्गं एकाङ्गं, सव्यदक्षिणभेदेन द्वित्वयोगि यदङ्गं हस्तादि तस्य द्वित्वेन विना वचने दक्षिणमेवाङ्गं साधनं *विद्यात्। द्वित्वयोगे द्वाभ्यां कुर्यात्। एकवचनबहुवचने कर्त्रेकत्वबहुत्वापेक्षे, एकत्वादीनामन्यत्रोपयोगात्। केवलाङ्गवचनमेव दक्षिणप्रत्ययस्य निमित्तमित्यर्थः। हस्तेन वा पादेन वेत्युदाहरणं ॥

अनादेशे ॥ १३ ॥

द्वित्वयोगिनोऽङ्गस्यानादेशे क्रियामात्रविधान इत्यर्थः। तत्रापि दक्षिणं विद्यात्। 'प्रपद्यते अभिक्रम्य अङ्गुलीरङ्गुलिभिः'

* विन्द्यादित्येक पु० पाठः।

इत्युदाहरणानि। चतुरादेरनङ्गत्वात् तेष्वयं नियमो नास्ति। अवयवविशेषाश्रया हि प्रकृतयश्चतुरादय उच्यन्ते नावयवा इति॥

कर्मचोदनायां होतारं॥ १४॥

कर्तृरहिते क्रियाविधौ होतारं कर्त्तारं विद्यात्, कर्तृसहिते स एव कर्त्ता भवेत् येन सहितं तत् कर्म स्यात्, कर्तृरहितेऽपि गुणविधिः सर्वार्थ एव। कर्मचोदनायामिति विशेषणात् नेदं होतुः प्रापकं किन्तर्हि प्राप्तस्य नियामकं। तेनेष्टिपशुसोमेभ्योऽन्यत्र न होतुरेव कर्तृत्वनियम इति॥

ददातीति यजमानं॥ १५॥

स्वत्वव्यावृत्तिपूर्वके परस्वत्वापादनपर्यन्ते ददातिविधौ यजमानं कर्त्तारं विद्यात्॥

जुहोति-जपतीति प्रायश्चित्ते ब्रह्माणं॥ १६॥

तृतीयाध्यायगोचरे प्रायश्चित्तप्रकरणे जुहोतिजपतिकर्त्तारं ब्रह्माणं विद्यात्। जपशब्देनात्र साहचर्याज्जपादिषट्कं गृह्यते, तस्मिन् प्रकरणे मुख्यजपस्याभावात्। एवञ्च सति कर्मकरणत्वेन होममन्त्रस्यापि ग्रहणे सिद्धे यज्जुहोतिग्रहणं तज्जपग्रहणेन होममन्त्रा न गृह्यन्त इत्येवमर्थं, तेन पित्र्यायां जपादिलोपेऽपि होममन्त्रा न लुप्यन्ते॥

ऋचं पादग्रहणे॥ १७॥

पादशब्दोऽत्र मूलवाची। ऋचो मूलग्रहणे ऋचं विद्यात्

मान्त्रमध्ययोर्ग्रहणे। 'प्र वो वाजा अभिद्यवः, अग्निर्नेता त्वं सोम क्रतुभिः' इत्युदाहरणं॥

सूक्तं सूक्तादौ हीने पादे॥ १८॥

अत्र पादशब्दो गायत्र्यादीनां भागवाची। सूक्तादौ हीने पादे गृह्यमाणे सूक्तं विद्यात्। 'त्वमग्ने वसून, त्वं हि क्षैतवत्' इत्याद्युदाहरणानि॥

अधिके तृचं सर्व्वत्र॥ १९॥

अधिके पादे गृह्यमाणे तृचं विद्यात्। सर्वत्र सूक्तादावसूक्तादौ चेत्यर्थः। 'अग्न आयाहि वीतये गृणानः, ईडेन्यो नमस्यस्तिरः' इत्याद्युदाहरणानि॥

जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु॥ २०॥

सर्वत्रशब्दोऽत्रापि सम्बध्यते, मध्यगतस्य विशेषाग्रहणात प्रयोजनवत्त्वाच्च। अस्मिञ्छास्त्रे यानि जपादीनि तान्युपांशु प्रयोक्तव्यानि॥

मन्त्राश्च कर्म्मकरणाः॥ २१॥

चशब्देनाच सर्वत्रेत्युपांश्विति चानुकृष्यते। मन्त्राः कर्मकरणाश्च सर्वत्रोपांशु प्रयोक्तव्याः। उपांशुत्वस्येदं लक्षणं करणवदशब्दममनःप्रयोग उपांश्विति। जपादीनां पर्णां लक्षणमुच्यते,

जपमुच्चारणं विद्यात् क्रत्वर्थमपि तद्भवेत्।

यद्यतः कार्यलाभश्चेदर्थ एव कृतोर्भवेत्॥

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
प्रेषितं तन्मना भूत्वा स्यादेतदनुमन्त्रणं॥
एतदेवाभिमन्त्रस्य लक्षणञ्चैतदाधिकं।
अद्भिः संस्पर्शनाधिक्यात्तदेवाप्यायनं स्मृतं॥
उपस्थानं तदेव स्यात् प्रणतिस्थानसंयुतं।
बाह्यं कार्यं यदेतेषु मन्त्रकाले क्रियेत तत्॥
कर्मणः करणास्ते स्युर्विदितार्थप्रकाशनात्।
मन्त्रेण क्रत्वा मन्त्रान्ते क्रियते कर्म येषु तु॥
इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः।
लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञिताः॥

अनुमन्त्रणग्रहणेनाभिमन्त्रणमपि गृह्यते। अनुमन्त्रणाप्यायनोपस्थानानां कर्मकरणत्वाविशेषेऽपि यत् पृथक्ग्रहणं तत्तन्मन्त्रान्ते कर्मारम्भ इति कर्मकरणधर्मो यः स तेषु न भवतीत्येवमर्थं। तेन मन्त्रोच्चारणसमकालमेव तेषु क्रिया भवति॥

## प्रसङ्गादपवादो बलीयान्॥ २२॥

सामान्यविधेर्विशेषविधिर्बलीयानित्यर्थः। लोकवेदप्रसिद्धस्य न्यायस्य वचनप्रयोजनं सर्वेऽपवादाः प्रसङ्गस्यैव बाधकानामपवादाः सावकाशत्वे परस्परं बाधका इत्येवमर्थं। अतः स्यादुक्थिनीयासु आहावोत्तरयोः प्रणवयोः यौ मद्वत्प्रतिगरौ तयोः प्रणवरूपप्रतिगरौ न बाधकौ भवतः॥

प्रपद्याभिहततरेण पादेन वेदिश्रोण्योत्तरस्याः पार्ष्णी समां निधाय प्रपदेन बर्हिराक्रम्य संहतौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसम्मितावङ्गसम्मितौ वा द्यावापृथिव्योः सन्धिमीक्षमाणः॥ २३॥

तिष्ठेदिति शेषः। तीर्थेन विहारं प्रपद्यत इत्युक्तं, तच्चैकेन पदविक्षेपेण बहिर्विहारादंतर्विहारप्रपदनं कर्त्तुं शक्यं, दक्षिणाङ्गप्रत्ययश्च सिद्ध एव। इदानीं प्रपद्येत्युच्यते, आवेदिश्रोण्या यत् प्रपदनं तस्य सर्वस्य विहितत्वसिद्ध्यर्थं। अभिहततरेणेति तरपो वचनं अनेकपदविक्षेपसाध्यत्वादस्य प्रपदनस्य सर्वेषु च पदविक्षेपेषु दक्षिणस्याग्रतोहरणसिद्ध्यर्थं। वेदेरपरांस्योः श्रोणिरिति संज्ञा। पूर्वांस्योरंस इति। पादस्यापरो भागः पार्ष्णिः। पूर्वः प्रपदः। उत्तरया श्रोण्या दक्षिणस्य पादस्य पार्ष्णिं समां निधाय तस्यैव प्रपदेन वेद्यां आस्तीर्णं बर्हिराक्रम्य बहिर्वेदि सव्यं निधायात्मनः सव्यदक्षिणौ हस्तौ पृथक् पृथक् विरलाङ्गुलीयकौ कृत्वा पुनस्तथाभूतावेव तौ पाणी परस्पर संहतौ च कृत्वा तौ हृदयसम्मितौ अङ्गसम्मितौ वा धारयन् द्यावापृथिव्योः सन्धिमीक्षमाणः नोर्द्धमधस्तिर्यगवेक्षमाणः, ऊर्द्धः प्रांमुखस्तिष्ठेत्॥

एतद्धोतुः स्थानं॥ २४॥

अयं स्थानशब्दो भावसाधनो नाधिकरणसाधनः। एतच्छब्देन श्रोणिदेशेन हस्तपादादियत्नेन च विशिष्टं यत् पूर्व-

सूत्रोक्तं तदत्र स्थानशब्देनोच्यत इति प्रदर्श्यते। यत्र होतुः स्थानं चोद्यते तत्र एतत् स्थानं भवतीत्यर्थः। होतृग्रहणमुत्तरसूत्रस्य सर्वार्थलाय॥

आसनं वा सर्वत्रैवम्भूतः॥ २५॥

अयं वाशब्दश्चशब्दस्यार्थे वर्त्तते। स्थानञ्च आसनञ्च सर्वत्र सर्वः कर्त्ता एवम्भूतः कुर्यात्। पूर्वोक्तहस्तपादादियन्त्रणाविशिष्टो न श्रोणिदेशविशिष्ट इत्यर्थः। श्रोण्यादिषु सर्वेषु प्राप्तेषु श्रोणिदेशवर्जनेन कर्तृशरीरविशेषणानामेव प्रापणार्थमेवम्भूतवचनं॥

वचनादन्यत्॥ २६॥

उक्तस्यान्यथाभावो यावन्मात्रस्य वचनं तावन्मात्रस्यैव न तत्सम्बन्धिनोऽन्यस्यापीति। तेन होमादौ क्रियमाणे दक्षिणस्य पाणेरपायेऽपि सव्यं हृदयान्नापैतीति सिद्धं॥

प्रेषितो जपति॥ २७॥ १॥

अत्रान्यार्थस्य प्रैषस्याभावात् सामिधेन्यर्थं प्रेषितो होता॥

इति प्रथमा कण्डिका।

---

नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च वाक्समस्थितयज्ञः साधु छन्दांसि प्रपद्येऽहमेव मामममुमिति स्वन्नामादिश्येत भूते भ,वक्ष्यति

जाते *जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्तिं वहेत्यङ्गुल्यग्राण्यवकृष्य जातवेदो रमयापशून्मयीति प्रतिसन्दध्यात् वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः। तदद्य वाचः प्रथमं मसीयेति॥ १॥

नमः प्रवक्त्र इत्यादि होत्रं जुषध्वमित्यन्तं जपेत् सामिधेन्यर्थं। प्रैषोत्तरकालवर्त्तित्वादयं जपः सामिधेन्यर्थो भवति। अत्रामुमितिशब्दस्य स्थाने द्वितीयया विभक्त्या स्वमात्मीयं नाम निर्द्दिशेत्। स्वग्रहणात् प्रतिनिधित्वेन प्रवृत्तस्यापि जपकर्तुरेव नाम निर्द्देष्टव्यं न होतुरिति लभ्यते। अशान्तिं वहेति जपैकदेशमुच्चारयन्नङ्गुल्यग्राण्यवकर्षेत्। मयीति चोच्चारयन् प्रतिसन्दध्यात्।* तेनावकर्षसन्धाने जपाङ्गं, तत्कुर्वतो विधानात्॥

समाप्य सामिधेनीरन्वाह॥ २॥

समाप्येत्यनेन नमः प्रवक्त्र इत्यादेर्होत्रं जुषध्वमित्यन्तस्यैकजपत्वं दर्शयति। तेनान्तरा यत् कार्यद्वयमवकर्षणञ्च तज्जपकर्त्तुः संस्कार एव भवति, न कार्यान्तरं। अतः पित्र्यायां जपलोपेन कर्त्तव्यं भवति। अग्नेः समिन्धनार्था ऋचः सामिधेन्यः, ता अन्वाह अनुब्रूयादित्यर्थः।

हिं ३ इति हिंकृत्य भूर्भुवः स्वरोमिति जपति॥ ३॥

हिंकारस्य नानारूपत्वादिष्टपरिग्रहार्थः पाठः॥

---

* जनिष्यमाणा इति सं० सटी० पु० द्वय।

एषोऽभिहिंकारः ॥ ४ ॥

जपसहितस्य हिंकारस्याभिहिंकार इति सञ्ज्ञा विधीयते ॥

भूर्भुवः स्वरित्येव जपित्वा कौत्सो हिंकरोति ॥ ५ ॥

एवेत्यवधारणान्न केवलं व्युत्क्रममात्रं प्रणवरहितत्वं चेति दर्शयति। आचार्यग्रहणं विकल्पार्थं ॥

न च पूर्वं जपं जपति ॥ ६ ॥

कौत्स इति शेषः। पूर्वमिति नमः प्रवक्त्र इत्यादि जुषध्वमित्यन्तमित्यर्थः ॥

अथ सामिधेन्यः प्र वो वाजा अभिद्यवो *ऽग्न आयाहि वीतये गृणान ईडेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे ॥ ७ ॥

अथशब्द ऋचामेव सामिधेनीत्वं दर्शयति। पूर्वं सामिधेनीग्रहणं सामिधेन्याद्यङ्गानां मध्येऽभिहिङ्कारः सामिधेन्यादीनामनन्तरमङ्गमिति दर्शयति। तेन वैश्वदेवे शस्त्रे दिग्ध्यानोत्तरकालमभिहिङ्कारः कर्त्तव्य इति गम्यते ॥

ता एकश्रुति सन्ततमनुब्रूयात् ॥ ८ ॥

या एता उक्ता ऋचस्ता एवमनुब्रूयादित्यर्थः ॥

---

* वो अग्न० इति सो०।

उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यं ॥ ९ ॥

ऐकश्रुत्यलक्षणमुच्यते। उदात्तानुदात्तस्वरितानामभिव्यञ्जका ये प्रयत्ना आयामविस्रम्भाक्षेपास्तेषामन्यतमस्यैकस्यैवात्यन्तसन्निकर्षेणासजातीयप्रयत्नाव्यवधानेन यदुच्चारणं तदैकश्रुत्यमित्यर्थः ॥

स्वरादिमृगन्तमोङ्कारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽवस्येत् तत् सन्ततं ॥ १० ॥

इदं सन्ततलक्षणं। स्वराद्यृगन्तपदयोर्दृष्टिप्रदेशोपलक्षणार्थत्वादृगन्तो यः स्वरादिः स्वर एव वा केवलस्तमोङ्कारन्त्रिमात्रं कृत्वा तेन प्रणवेनोत्तरामृचं सन्धाय तस्या अर्धर्चेऽवस्येत्। मकारान्तन्त्रिमात्रमिति व्युत्क्रमेण योजना, समुदायस्य त्रिमात्रताया इष्टत्वात्। अत एवाभवति। उकारोऽर्धतृतीयमात्रः, मकारोऽर्धमात्र इति त्रिमात्रत्वं प्रणवस्य। उत्तरवचनमावृत्तिनः अनावृत्तिनश्च उभयथा मृच्यते। यत् प्रणवेनोत्तरासन्धानमात्रं विधीयते तत्सन्ततमित्युच्यते ॥

एतदवसानं ॥ ११ ॥

सामिधेनीष्वनूच्यानां ऋचां अर्धर्चेऽवसानस्य पूर्वसूत्रेणैव सिद्धत्वादिदमवसानविधानं आद्यायामृचि प्रापणार्थं, अन्यत्र च जपादिष्वपीति।

उत्तरादानमविप्रमोहे ॥ १२ ॥

आदानमारम्भः, विप्रमोहो विभ्रेषः। पूर्वस्योच्छ्वासस्याऽविप्रमोह एवोत्तरमुच्छ्वासमारभेतेत्यर्थः। विप्रमोहे पूर्वमेव सम्यग् ब्रूयादित्यर्थः। अस्मिन् भ्रेष इदमेव प्रायश्चित्तं नान्यदिति सूत्रस्य प्रयोजनं॥

समाप्तौ प्रणवेनावसानं॥ १३ ॥

अर्थप्राप्तस्य विधानं विहित एवायमर्थो नार्थप्राप्त इत्येवमर्थं॥

चतुर्मात्रोऽवसाने ॥ १४ ॥

यदवसानं विहितमेव नार्थप्राप्तं तस्मिन्नवसाने चतुर्मात्रः प्रणवो न त्रिमात्रः ॥

तस्यान्तापत्तिः ॥ १५ ॥

तस्य प्रणवस्य योऽन्तो मकारः तस्य वर्णान्तरापत्तिर्वक्ष्यत इत्यर्थः ॥

स्पर्शेषु स्ववर्ग्यमुत्तमं ॥ १६ ॥

स्पर्शेषु परेषु यः स्पर्शो मकारात् परः तस्य स्ववर्ग्यं उत्तममापद्यते मकारः। 'समिध्यमानमर्च्चयन्त' इत्यादि निदर्शनं॥

अन्तस्थास्तु तान्तामनुनासिकां ॥ १७ ॥

रेफस्यानुनासिकत्वासम्भवाद्यवला एवाचाम्नस्था गृह्यन्ते,

तासु याः परास्तस्यास्तास्तामनुनासिकां मकार आपद्यते। तत्र सानुनासिका पूर्वा, उत्तरा शुद्धा। एवं मन्त्रसंयोगः। 'विदथानि प्रचोदयीं वाजी वाजेषु' इति निदर्शनं॥

रेफोष्मस्वनुस्वारं॥ १८॥

एतेषु मकारोऽनुस्वारमापद्यते। अनुस्वारो नाम नासिकास्थानोऽस्पष्टकरणश्च। 'अस्य यज्ञस्य सुक्रतों समिध्यमानो अध्वरे' इत्यादि॥

त्रिः प्रथमोत्तमे अन्वाह्वाध्यर्धकारं॥ १९॥

अध्यर्धकारमध्यर्धीकृत्येत्यर्थः। प्रथमोत्तमे ऋचौ त्रिरध्यर्धकारं ब्रूयात्॥

अध्यर्धामुक्त्वाऽवस्येदथ द्वे॥ २०॥

प्रथमायामेवमध्यर्धकारम्भवति। पूर्वामध्यर्धामुक्त्वावसाय ततो द्वे ऋचौ ब्रूयात्। द्वे इतिवचनमर्धर्चचतुष्काभिप्रायं। पूर्वस्मिन्नुच्छ्वासे प्रथमायामावृत्तौ द्वावर्धर्चौ द्वितीयायामेकश्चेति त्रयोऽर्धर्चा उक्ताः, अस्मिंस्तूच्छ्वासे द्वितीयतृतीययोरावृत्त्योस्तयोऽर्धर्चा उत्तरस्या ऋच एकोऽर्धर्च इत्येवं चत्वारोऽर्धर्चा वक्तव्या भवेयुः। अध्यर्धकारविधेरुत्तरया सन्धानाविरोधादित्यथशब्दोऽस्य सूत्रस्यान्यार्थत्वप्रतिभासनिवृत्त्यर्थः॥

द्वे प्रथममुत्तमस्यामथाध्यर्धां ॥ २१ ॥

पूर्वेण सन्धानाविरोधादुत्तमायामेव भवति। अथशब्दश्च पूर्ववत् ॥

ताः पञ्चदशाभ्यस्ताभिः ॥ २२ ॥

एकादशानामृचां द्वयोस्त्रिरभ्यासे कृते ता अभ्यस्ताभिः सह पञ्चदशैव भवन्तीत्यर्थप्राप्त एवायमर्थः। अस्य वचनस्येदं प्रयोजनं सर्वत्राभ्यस्ताभिः सह विहितसङ्ख्यापूरणं कर्त्तव्यमिति।

एतेन शस्त्रयाज्यानिगदानुवचनाभिष्टवनसंस्तवनानि ॥ २३ ॥

शंसत्यादिशब्दचोदितानि शस्त्रादीनि भवन्ति। एतेनेति सामिधेन्यनुवचनमुच्यते। शस्त्रादीनि च तत्र तत्र विहितानि, तेषां धर्मापेक्षास्ति। तत्रैतेन तानीत्युक्ते एतद्धर्मकाणि तानीति गम्यते। अनेन प्रकारेण तेषां सामिधेनीधर्मातिदेश उक्तो भवति। सर्वधर्मप्राप्तौ कतिपयधर्मनिषेधार्थमाह।

न त्वन्यत्राध्यर्धकारं। न जपः प्रागभिहिङ्कारात्। नाभिहिङ्काराभ्यासाववक्लृप्तेषु प्रकृत्या ॥ २४ ॥

अन्यत्रेत्येतावदनुवर्त्तते। तत्र सामिधेनीभ्योऽन्यत्रेत्ययमर्थः। अतः पिच्छायामभिहिङ्कारः प्रसिद्धो भवति। अभ्यासनिवृत्त्यर्थं तत्रैवतायहणं करिष्यति। तेनाभ्यासो न भवति। प्रकृत्येतिशब्दोऽभ्यासेन बह्वष्वपि 'पुरीष्यासो अग्नयः' इत्येवमादिषु तयोरभावं दर्शयति ॥

नावच्छेदादौ ॥ २५ ॥

अवच्छेदो नाम यत्र शस्त्रादिषु मध्ये समाप्यावस्येदित्येवमादिभिः शब्दैरवसानं विहितं । 'समाप्य प्रणवेन' इत्येवमादिषु सोऽवच्छेदः, तत्रापि तौ न स्तः ।

शस्त्रेष्वेव होत्रकाणामभिहिङ्कारः ॥ २६ ॥

अस्मिन्काले मुख्यवर्जिताः द्वादशर्त्विजो होत्रका इत्युच्यन्ते न सप्त वा त्रयो वा । तेन ग्रावस्तुतोऽभिहिङ्कारनिषेधः सिद्धो भवति ॥

सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाꣳ असि ब्राह्मणभारतेति निगदेऽवसाय ॥ २७ ॥ २ ॥

इति द्वितीया कण्डिका ॥

---

यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः ॥ १ ॥

प्रणवेन निगदं सन्धाय निगदेऽवस्येदित्यर्थः । तत्र निगदेऽवसायार्षेयान् प्रवृणीते यावन्तो यजमानस्य ते भवन्ति । ते च प्रवराध्याये व्याख्याताः ॥

परम्परं प्रथमं ॥ २ ॥

'अनेन आर्षेया इयन्तः अयम्परः अयमपर' इत्येवमादि-

स्मृत्यनुसारेण प्रवराम्नाय एव वरणप्रकारः पठितः, स एव इदानीमियन्तो वरितव्या इत्थं वरितव्या इति विधानमन्यचेच-जातस्यामुष्यायणार्थं ॥

पौरोहित्यान्राजविशां ॥ ३ ॥

पुरोहितस्य ये आर्षेयास्तानेव राजन्यवैश्ययोः प्रवृणीते। बहुवचनन्त्रैवर्णिकस्त्रीजातानामनुलोमानां सङ्ग्रहार्थं ॥

राजर्षीन् वा राज्ञां ॥ ४ ॥

मानवैलपौरूरवसेत्येवं वा पौरोहित्यान् वा ॥

सर्वेषां मानवेति संशये ॥ ५ ॥

अज्ञाने संशये च त्रयाणां वर्णानां मानवेत्ययं शब्दः प्रवरो भवेत् ॥

देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्त्तो होता तूर्णिर्हव्यवाडित्यवसायास्यात्त्वं जुहूर्देवानाञ्चमसो देवपानोऽराँ इवाग्ने नेमिर्देवांस्त्वं परिभूरस्यावह देवान् यजमानायेति प्रतिपद्य देवता द्वितीयया विभक्त्या देशमादेशमावहेत्यावाहयेत्यादिं श्रावयन् ॥ ६ ॥

निगदेऽवसायेति निगद इतिसप्तमीनिर्देशात् पूर्वापरीभूतो निगदो न परिसमाप्त इति गम्यते। अतः प्रवरोऽपि तस्यैव

शेषः। कश्चिन्मन्त्राचार्ये भारतशब्दानन्तरमसावसाविति प्रवर-प्रकृतेः पठितत्वाच्च सम्बुद्धिसामानाधिकरण्याच्च। देवेद्ध इति निवित्पदनिगदः। चतुर्दश निवित्पदानि परिभूरसीत्येवमन्तानि। आवह देवान् यजमानायेत्यादिषु यजायजेत्यन्त आवाहननिगदः। सामिधेन्यादय एते मन्त्रा आहवनीयाभिधायिनः। तत्र भारतेत्यवस्येत् प्रवरान्ते च निवित्पदानामेकादशे च। चतुर्दशेन आवाहननिगदं सन्धाय यजमानायेत्यवस्येत्। प्रतिपद्यावसायेत्यध्याहारात् प्रतिपद्येतिवचनं अस्य वाक्यस्य प्रतिपत्तिसंज्ञाकरणार्थं। तेन पित्र्यायां प्रतिपत्त्यन्तरविधान एतन्न भवति। तत्र स्विष्टा देवता वक्ष्यमाणा द्वितीयया विभक्त्यादिश्यानन्तरं आवहेत्यावाहयति, आवहशब्दस्यार्धं प्लावयन्। द्वितीयाविधानं सर्वार्थं। अत्र पाठादेव द्वितीया सिद्धेति। तेन देवतामादिश्य प्रणयायजेत्यत्र द्वितीयैव भवति। विभक्त्यन्तरविधाने तु तदेव भवति। 'आवह देवान् होतायावहावह जातवेदः' इत्येतेषु त्रिषु प्लुतावसाने न स्तः॥

अग्न आवहेति तु प्रथमदेवता॥ ७॥

प्रथमदेवतायामयं विशेषः। तुशब्देन यष्टव्यदेवतावाहनशब्दयोर्मध्येऽग्नेशब्दं ब्रूयात्॥

अग्निं सोममित्याज्यभागौ॥ ८॥

यागयोरियमाख्या। तत्सम्बन्धाद्देवतयोरपीति॥

अग्निमग्नीषोमाविति पौर्णमास्यां ॥ ९ ॥

विशेषाभावात् सोमयाजिनोऽसोमयाजिनश्च प्रधानदेवते एते।

अग्नीषोमयोः स्थान इन्द्राग्नी अमावास्यायामसन्नयतः ॥१०॥

पौर्णमास्याः प्रथमाम्नातत्वात् सैव प्रथमं प्रयोज्या। स्थानशब्दः पौर्णमास्या धर्माणां प्रथमसम्बन्धं दर्शयति। प्राप्ताविशेषेऽपि प्रयोगावस्थायां विशेषग्रहणादिति। तेनेदम्बोधितम्भवति, असमाम्नातानामपि चोदनालिङ्गविशेषे पौर्णमासमेव तन्त्रमिति। दधिपयोभ्यां यागं कुर्वन् सन्नयन्नित्युच्यते। यो न सन्नयति तस्येन्द्राग्नी द्वितीया ॥

इन्द्रं महेन्द्रं वा सन्नयतः ॥ ११ ॥

संनयतोऽमास्यायां इन्द्रं महेन्द्रं वा ऽग्नीषोमस्थाने आवाहयेत्।

अन्तरेण हविषी विष्णुमुपांश्वैतरेयिणः ॥ १२ ॥

ऐतरेयिणः शाखाविशेषाः। त एवमुपांशुयागं उभयोरपि पर्वणोरन्तरेण हविषी इच्छन्ति ॥

अग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेके नैके कञ्चन ॥ १३ ॥

उभयोरपि पर्वणोः कञ्चनोपांशुयागमेके नेच्छन्ति ॥

अन्येषामप्युपांशूनामावह स्वाहायाट् प्रिया धामानीदं हविर्महो ज्याय इत्युच्चैः ॥ १४ ॥

अन्येषामपीति पिच्छादीनामङ्गोपांशूनां संग्रहार्थं । आवाहनादिषु चतुर्षु निगदेषु यान्युपांशुयाजसम्बन्धीनि षट् पदान्यावाहनादीनि तेषामुच्चैरिति संज्ञामात्रं विधीयते । तत्रस्वराण्युपांशोरस्थानीत्यनेन सर्वेषामुच्चसंज्ञानान्तस्वरो विधीयते ॥

येऽन्ये तद्वचनाः परोक्षास्तानुपांशूच्चैर्वा ॥ १५ ॥

येऽन्य इति सर्वनाम्नः सन्निहितविषयत्वात्तेष्वेव निगदेष्विति गम्यते । तद्वचना उपांशुयाजवचनाः परोक्षास्ते येषां पदान्तरसन्निधानादेव विशेषनिष्ठताऽवसीयते न स्वतः, अजुषतादयः क्रियावचना इत्यर्थः, तेषामुपांशुत्वं प्राप्तमनूद्यते । उच्चैःसंज्ञा विकल्पेन विधीयते ॥

प्रत्यक्षमुपांशु ॥ १६ ॥

यागं प्रति चोदितं देवतानामधेयं प्रत्यक्षमित्युच्यते, तस्य प्राप्तमुपांशुत्वं नियमार्थं विधीयते, तस्य चोपांशुत्वं भवेत् । उपांशुदेवतायाः प्राथम्येऽपि प्रथमदेवतायाः सम्बन्धी योऽग्निशब्दः आवाहनस्विष्टकृन्निगदयोर्न तस्यापीत्यत्र किञ्चिदुच्यते । 'उपांशु यष्टव्यं' इति वचनादुपांशुत्वं यागधर्मतयाऽवगम्यमा-

मन्त्रवाक्यभवादानर्थक्यात्तदङ्गन्यायेन तत्सम्बन्धिनः शब्दान् परिगृह्य तिष्ठति। तत्रावहादीनामागूरादीनाञ्च होता यच्च-दित्यस्य चोपांशुत्वं निवर्त्य तन्त्रस्वरोऽनुज्ञातः, परोक्षाणामनु-षतादीनां विकल्पेन तन्त्रस्वर उक्तः। प्रत्यक्षस्य विष्णादेरावह-दादीनाञ्चोपांशुत्वनियमादन्यस्य सर्वस्य तन्त्रस्वरे प्राप्ते या-ज्यानुवाक्ययोरागूरादिभिः प्राणसन्तानविधानादुपांशुत्वमेव स्थितं॥

## प्रतिचोदनमावाहनं॥ १७॥

चोदनाञ्चोदनां प्रति प्रतिचोदनं, चोदनादेवता चोदना। यावत्यो देवताश्चोदितास्तावन्त्यावाहनानि भिन्नानीत्यर्थः। प्र-त्यावाहनमुच्छ्वासनिश्वासमिद्ध्यर्थं भेदसन्धानं॥

## सर्वा आदिश्य सकृदेकप्रदानाः॥ १८॥

यत्र बहुभिर्हविर्भिरेकया याज्यया बह्वीभ्यो देवताभ्यो युगपद्यागः क्रियते तत् सकृत्प्रदाना यागाः, तत्सम्बन्धात् देवता अप्येकप्रदाना इत्युच्यन्ते। सर्वा इति वचनं सर्वासां पृथगादे-शार्थं। आदिश्यवचनं सर्वा आदिश्यान्ते आवहशब्दप्रयोगार्थं। सकृद्वचनमन्तेऽपि सकृदेव वक्तव्यो न यावद्दैवतमित्येवमर्थं॥

## तथोत्तरेषु निगमेष्वेकामिव संस्तुयात्॥ १९॥

एकामिवेति वचनं यथैकस्या देवतायाः पुरस्तात् स्वाहाऽ-याड्शब्दो अनुषतादयश्चैकवचनेन तथैतास्वपीति॥

समानान्देवता समानार्था ॥ २० ॥

निगमेष्वेकामिव संस्तुयादित्यचापि सम्बध्यते, विशेषाग्रह-णात् । प्रयोजनवत्त्वात्सम्प्रदायाच्च समानामित्येकशब्दमित्यर्थः । समानार्थामित्येकप्रयोजनार्थामित्यर्थः ॥

अव्यवहितां सन्नन्निगमेषु ॥ २१ ॥

अव्यवहितां अन्यया देवतया निगमेषु सन्नत् ब्रूयात् एक-वचनेनैव ॥

ॐल्हास्वावापिकास्तु देवाꣳ आज्यपाꣳ आवहाग्निं होत्रायावह स्वं महिमानमावहावह जातवेदः सुयंजायजेत्याचाह्य यथास्थितमूर्ध्वजानुरुपविश्योदग्वेदेर्व्यूह्य तृणानि भूमौ प्रादेशं कुर्यात् अदितिर्मातास्यान्तरिक्षान्मा छेत्सोरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथन्तरेण साम्ना गायत्रेण छन्दसाऽग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तं हन्मीति ॥ २२ ॥

आवापिकाः आवापोद्धारयोग्याः प्रधानदेवता इत्यर्थः । तासु कृतावाहनासु देवानाज्यपानावाहयेत्, स्विष्टकृतञ्च । पाठोऽनुनासिकलाभाय मकारलोपाय च, होत्रायावहशब्दयोः स्विष्टकृदावाहनप्रयोगाय च । किञ्च । पठितावाहनानां पा-

ठादेवोत्तरेष्वपि निगमेषु निगमनमिद्भिर्लच्यत इत्येवमर्थं । आज्यपाः प्रयाजानूयाजदेवताः। अग्निं होत्रायावह स्वं महिमानमावहेत्येतावान् स्विष्टकृदावाहनार्थः। आवह जातवेदः इत्यादिः सुयजायजेत्यन्तो निगदशेषः। आवाह्यवचनं सुयजायजान्तस्य आवाहननिगदत्वाय। सामिधेन्यर्थं यथास्थितस्तथोर्ध्वजानुरुपविश्य उदग्व्यूह्य वेद्यास्तीर्णानि तृणानि वेद्यां भूमौ प्रादेशं कुर्याददितिर्मातेतिमन्त्रेण॥

आश्रावयिष्यन्तमनुमन्त्रयेताश्रावय यज्ञन्देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसायेति। प्रवृणानं देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताऽहं मानुष इति। मानुष इत्यध्वर्योः श्रुत्वोदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थामम्टताँ अन्वित्युत्तिष्ठेत्॥ २३॥

अध्वर्युग्रहणमुत्तरार्थं॥

षष्टिश्चाध्वर्योर्नवतिश्च पाशा अग्निꣳ होतारमन्तरा विवृत्ताः। सिनन्ति पाकमतिधीर एतीत्युत्थाय॥ २४॥

ब्रूयादिति शेषः। नायमुत्थानमन्त्रः, पूर्वेणैव निरपेक्षत्वात्। अत ईदृशो मन्त्रो मन्त्रसंज्ञकः॥

ऋतस्य पन्थामन्वेमि होतेत्यभिक्रम्यांसेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना ॥ २५ ॥

अत्राध्वर्युग्रहणेन प्रयोजनमभिक्रमणान्वारम्भणेऽध्वर्योरेवाध्वर्युमेव कुर्यान्न प्रतिप्रस्थातारमित्येतत्। जत्रुबाह्वोः सन्धिरंसः, तस्मिन्देशेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना, पार्श्वेन तिष्ठतीति पार्श्वस्थः कनिष्ठिकाप्रदेशे न स्थितः, न न्यक् नोत्तान इत्यर्थः, तेनान्वारभेताध्वर्युं ॥

आग्नीध्रमङ्कदेशेन सव्येन वा ॥ २६ ॥

सव्येन पाणिना पार्श्वस्थेनांस एव, अङ्केन ऊरुणा वा ॥

इन्द्रमन्वारभामहे होतृवूर्ये पुरोहितं। येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति ॥ २७ ॥

उभयोः साधारणो मन्त्रः, अतो नावर्त्तते नोह्यते च ॥

संमार्गतृणैस्त्रिरभ्यात्मं मुखं संमृजीत सम्मार्गोऽसि सम्मां प्रजया पशुभिर्मृड्ढीति ॥ २८ ॥

इध्मसन्नहनानि सम्मार्गशब्देनोच्यन्ते। अग्निसम्मार्जनसाधनत्वात्तेषां, तैस्तृणैरभ्यात्मं मुखं संमृजीत। तृणैरितिवचनात्तृणभूतैरेव तैः संमृजीत, न ग्रन्थिभूतैः पाशभूतैर्वेति गम्यते। अभ्यात्ममात्माभिमुखं पाणितलमवागपवर्गं च संमार्जनमिति ॥

सकृन्मन्त्रेण द्विस्तूष्णीं सर्वत्रैवं कर्मावृत्तौ ॥ २९ ॥

सकृन्मन्त्रेण द्विस्तूष्णीमित्येतत् सर्वत्र भवति एवम्प्रकारस्य कर्मण आवृत्तौ सत्यामिति। एवम्प्रकारशब्देन संस्कारकर्मत्वमुच्यते। एतदुक्तं भवति। यत्र संस्कारकर्मणि त्रिरावृत्तिर्विधीयते तत्र सकृन्मन्त्रेण द्विस्तूष्णीमिति न प्रधानकर्मणि ॥

स्पृष्ट्वोदकं होतृषदनमभिमन्त्रयेताहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत् पाकतर इति ॥ ३० ॥

होतृषदनं अपरेण स्थित्वा प्राङ्मुखोऽभिमन्त्रयेत। इदमुदकोपस्पर्शनं पूर्वांगं। अग्निसम्मार्जनतृणैरात्मनो मुखसम्मार्जनादात्मनो यद्दौष्ट्यं तच्छान्त्यर्थत्वेनास्य दृष्टार्थत्वं भवति ॥

अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरसेन्निरस्तः परावसुरितीदमहमर्वा वसोः सदने सीदामीत्युपविशेद्दक्षिणोत्तरिणोपस्थेन ॥ ३१ ॥

दक्षिणश्च तदुत्तरश्च दक्षिणोत्तरं, तद्यानुपस्थो दक्षिणोत्तरी, तेनोपविशेत् ॥

एते निरसनोपवेशने सर्वासनेषु सर्वेषामहरहः प्रथमोपवेशनेऽपि समाने ॥ ३२ ॥

एते इति प्रकारमन्त्रविशिष्टयोर्ग्रहणार्थं। ते च सर्वेषां सर्वासनेषु प्रथमोपवेशने भवतः, न द्वितीयादिप्रयोग इत्येकोऽर्थः।

समानेऽप्यासने अपवर्गेणेच्छतरत: प्रथमोपवेशने भवत:, अयमप-
रोऽर्थ: । समानेऽपि स्थाने प्रयोगावृत्तौ पुन:पुनरावर्त्येते । प्रव-
र्ग्यादिष्वयञ्चापरोऽपिशब्दाल्लभ्यते । अस्य विधेर्दर्शपूर्णमासप्रक-
रणे पठितत्वात्तदतिदिष्टेष्वेवेष्टिपशुसोमेषु भवतो नाग्निहोत्रा-
दिष्वित्ययञ्चधारणम्भवत्येव ॥

द्विरिति गौतम: ॥ ३३ ॥ ३ ॥

अस्याचार्यस्य द्वि: द्वितीयेऽपि प्रयोगे भवतीत्यभिप्राय: ॥

इति तृतीया कण्डिका ॥

---

ब्रह्मौदने प्राशिष्यमाणेऽग्न्याधेये ब्रह्मा ॥ १ ॥

द्विरित्यनुवर्त्तते । क्रियमाणस्य कर्मण: दक्षिणत उपविष्ट:
सन् पुन: प्राशनकाले द्वितीये निरसनोपवेशने कुर्यात् ।
अग्न्याधेये ब्रह्मौदने द्वितीयविधानसामर्थ्यादेव इष्टिपशुसो-
मेभ्योऽन्यत्रापि ब्रह्मणो निरसनोपवेशनप्राप्तिरिति गम्यते ।
अग्न्याधेयग्रहणमश्वमेधे यत् ब्रह्मौदनं तत्र नैवं कर्त्तव्यमिति ॥

बहिष्पवमानात् प्रत्येत्य सोमे ॥ २ ॥

आहवनीयस्य दक्षिणत उपविष्ट: सन् बहिष्पवमानङ्कृत्वा
तत: प्रत्येत्य पूर्वासने पुन: कुर्यात् । सोमग्रहणं सर्वेषु सोमेषु

प्रापणार्थं। इतरथा याथाराधिकारात् तत्सम्बन्ध एव सोमे स्यान्न सर्वसोमेष्विति॥

प्रहृप्य होता॥ ३॥

पश्वर्थमुपविष्ट आसने सदः प्रसर्पणं कृत्वा तत्रैव पुनः कुर्यात्। होतृग्रहणं ब्रह्माधिकारनिवृत्त्यर्थं॥

स्रुगादापने पशौ॥ ४॥

स्वाहाकृत्यर्थे स्रुगादापने पुनः कुर्यात्॥

न पत्नीसांयाजिके॥ ५॥

पत्नीसंयाजार्थे उपवेशने नैव कुर्यात्॥

नान्यत्र होतुरिति कौत्सः॥ ६॥

होतुरन्येषामेते न भवत इति कौत्सो मन्यते॥

उपविश्य देव बर्हिः स्वासस्थं त्वाध्यासदेयमिति॥ ७॥

उपविश्यानन्तरं ब्रूयादित्यर्थः॥

अभिह्वेष होतः प्रतरां बर्हिषन्नवेति। जानुशिरसा बर्हिरुपस्पृश्यात ऊर्ध्वं जपेत्॥ ८॥

*जानुश्चिरो जान्वयं । अत ऊर्ध्वग्रहणं उपस्पृशतो न जपः स्यादिति । तेनान्यत्रैवंरूपे शब्देऽसति कुर्वन्नेव कुर्यादिति गम्यते । 'अरणी संस्पृश्य मन्थयेत्' इत्यादिषु ॥

भूपतये नमो भुवनपतये नमो भूतानां पतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यो विश्वे देवाः शास्तनमा यथेहाराधि होता निषदा यजीयांस्तदस्य वाचः प्रथमं मसीयेति समाप्य प्रदीप्त इध्मे स्रुचावादापयेन्निगदेन ॥ ९ ॥

समाप्य प्रदीप्ते इत्युभयस्य स्रुगादापनावसरप्रदर्शनार्थत्वा-ज्जपसमाप्तिरपि प्रदीप्त एवेति गम्यते । अनेन निगदेन आ-दापयेदध्वर्युं ॥

अग्निर्होता वेत्वग्नेर्होत्रं वेतु प्रावित्रं साधु ते यजमानदेवता यो अग्निमित्यवसाय होतारमवृथा इति जपेत् ॥ १० ॥

अवसायेतिवचनं निगदमध्ये उच्छ्वासलाभार्थं । जपेदि-ति निगदमध्ये उपांशुत्वलाभार्थं ॥

---

* जानुश्चिरसा जान्वयमिति पु० द्वये ।

L

अथ समापयेद्धृतवतोमध्वर्यो: स्रुचमास्थस्व देवयुवं विश्ववारे ईडामहै देवाँ ईडेन्यान्नमस्याम नमस्यान् यजाम यज्ञियानिति ॥ ११ ॥

अथेतिवचनमत्राप्युच्छ्वासलाभार्थं। समाप्तिवचनमग्निर्होतेत्यादेर्यज्ञियानित्यन्तस्यैकनिगदत्वसूचनार्थं ॥

समाप्तेऽस्मिन्निगदेऽध्वर्युराश्रावयति ॥ १२ ॥

अध्वर्युकर्मविधानं प्रत्याश्रावणस्येदं निमित्तमिति ज्ञापनार्थं। समाप्तिवचनमाश्रावणे कृतेऽपि समाप्त एव निगदे प्रत्याश्रावणं कुर्यादित्येवमर्थं ॥

प्रत्याश्रावयेदाग्नीध्रं उत्करदेशे तिष्ठन् स्फ्यमिध्मसन्नहनानीत्यादाय दक्षिणामुख इति ग्राम्यायनकमस्तुश्रौ३षडित्योकारं प्लावयन् ॥ १३ ॥ ४ ॥

ग्राम्यायनग्रहणं विकल्पार्थं। अतः प्राङ्मुखत्वमपि लभ्यते। प्लावयन् प्लुतं कुर्वन्नित्यर्थः ॥

इति चतुर्थी कण्डिका ॥

---

प्रयाजैश्चरन्ति ॥ १ ॥

वक्ष्यमाणशब्दलक्षणा यागाः प्रयाजा इत्युच्यन्ते। तैश्चरन्ति यजन्ति इत्यर्थः ॥

पञ्चैते भवन्ति ॥ २ ॥

पञ्चवचनं नराशंसः तनूनपाद्वा द्व्यामुष्यायणस्यापि पञ्चैव भवन्ति न षडित्येवमर्थं। एत इति वचनमतः पठिता एवैते तनूनपान्नराशंसयोरन्यतरेण सह पञ्च भवन्ति नापठितेन सहेत्येवमर्थं ॥

एकैकं प्रेषितो यजति ॥ ३ ॥

न सकृत् प्रेषितः सर्वान् यजति ॥

आगूर्याज्यादिरनुयाजवर्जं ॥ ४ ॥

सर्वत्र सर्वासामनुयाजवर्जितानां याज्यानामादावागूर्भवति। कोऽयमागूरित्याह ॥

ये३ यजामह इत्यागूः। वषट्कारोऽन्त्यः सर्वत्र ॥ ५ ॥

अनुयाजानामपीति सर्वत्रवचनं ॥

उच्चैस्तरां बलीयान् याज्यायाः ॥ ६ ॥

अत्रोच्चैस्तरत्वमेकयमातिशायमात्रं, बलीयस्त्वं व्यक्ततरोच्चारणं, एतदुभयं याज्याया एव ॥

तयोरादौ प्लावयेत् ॥ ७ ॥

तयोरागूर्वषट्कारयोराद्योः प्लुतिः कार्या ॥

याज्यान्तश्च ॥ ८ ॥

प्लावयेदिति शेषः ॥

विविच्य सन्ध्यक्षराणामकारं न चेद्दे वचनो व्यञ्जनान्तो वा ॥ ९ ॥

न चेत् प्रगृह्य* इति पठितव्ये न चेद्दे वचन इति प्रमादपाठः। यागन्ते यान्यप्रगृह्याणि सन्ध्यक्षराणि तानि विविच्याकारमेव प्लावयेदिति, एकारैकारयोः आ इ इति, ओकारौकारयोः आ उ इत्येवं विविच्य प्लुतिः कार्या। 'ज्येष्ठस्य मन्त्रो विश्वचर्षणा ३ इ वौ३षड्' इत्यादि दृष्टान्तः। 'इन्दुं समह्यन् पीतये समस्मा ३ इ वौ०' इति निदर्शनं। एकारस्य प्रगृह्यस्य स्वरूपेणैव प्लुतिः कार्या। 'अधिश्रियं शुक्रपिशन्दधाने ३ वौ०' इत्यादि दृष्टान्तः। ओकारस्य प्रगृह्यसञ्ज्ञाया अनित्यत्वान्नित्यानित्यसंयोगविरोधात्तस्य सर्वदापि विविच्यैव प्लावनं कर्त्तव्यं। 'कविः कविमियक्षसि प्रयज्या ३ उ वौ०' इत्यादि निदर्शनं। तथैव औकारस्यापि, 'सहस्रस्थूणं बिभृथः सह द्वा ३ उ वौ०' इति। व्यञ्जनान्तानां सन्ध्यक्षराणां सर्वदा स्वरूपेणैव प्लुतिः कार्या, न विवेकः कर्त्तव्यः। 'त्रीणि पदा विचक्रमे० अतो धर्माणि धारयान् ३ वौ०' इत्यादि दृष्टान्तः ॥

विसर्जनीयोऽनत्यक्षरोपधो रिफ्यते ॥ १० ॥

---

*प्रगृह्य इति पाठे हि अस्मे युष्मे इत्यादिसंग्रहो भवतीति भावः। 'नाभिमस्मे' इत्युदाहरणं। इत्येकस्मिन् पुस्तके उद्धृतपाठः।

अनत्यक्षरोपधः अनवर्णोपध इत्यर्थः। स वषट्कारेण स-न्धीयमानो रिफ्यते। 'पिबा सोममभिश्रवोभौर्वौ॰' इत्यादि निदर्शनं॥

इतरश्च रेफी॥ ११॥

इतरः अवर्णोपधः, स च रेफिसंज्ञो चेत् रिफ्यते। 'महो यो वर्जमितरो यथोक्तम्' इत्यत्र रेफिसंज्ञाऽधिगन्तव्या। 'उत त्यं चमसं नवं॰ अकर्त्त चतुरः पुनर्वौ॰' इत्यादि निदर्शनं॥

लुप्यते रेफी॥ १२॥

अवर्णोपधो यो विसर्जनीयः रेफिसंज्ञश्च न भवति स लुप्यत एव वषट्कारसन्धौ। 'अर्वाङेहि सोम कामं त्वयमाना वौ॰' इत्यादि निदर्शनं॥

प्रथमः स्वन्तृतीयं॥ १३॥

वर्गाणां यो यः प्रथमः स सः, स्वन्तृतीयमापद्यते। 'विद-र्वाग्वौ॰' उदाहृतिः॥

नित्यं मकारे॥ १४॥

अन्तस्थासु तान्तामित्यनेनोक्तमित्यर्थः॥

ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु३ वौ३-षडिति वषट्कारः॥ १५॥

वौषट्शब्दो वषट्कार इत्यर्थः॥

इति प्रथमः॥ १६॥

अयं प्रथमः प्रयाज इत्यर्थः॥

वागोजः सह ओजो मयि प्राणापानाविति वषट्कारमुक्तोक्ताऽनुमन्त्रयते ॥ १७ ॥

सर्वस्यायं विधिः स्यादित्येवमर्था वीप्सा ॥

दिवा कीर्त्यो वषट्कारः ॥ १८ ॥

वृथा रात्रौ न प्रयोक्तव्य इत्यर्थः। किञ्च, वषट्कारसम्बन्धि यत्कर्म तद्विध्यन्तराविरोधे सति दिवैव कर्त्तव्यमिति ॥

तथानुमन्त्रणं ॥ १९ ॥

दिवा कीर्त्यमित्यर्थः। तच्चोक्तार्थमेव ॥

एतद्याज्यानिदर्शनं ॥ २० ॥

यदिदं याज्यायाः पुरस्तादागूः तस्यास्त्वादौ याज्यान्ते च प्लुतिः स्यात् उपरिष्टाच्च वषट्कारस्तस्य चादौ प्लुतिः, ततोऽनुमन्त्रणं, इत्येतद्याज्यास्वरूपनिदर्शनं। अनुमन्त्रणस्य याज्यान्तर्भाववचनं तदन्तरागमनार्थं ॥

तनूनपादग्न आज्यस्य वेत्विति द्वितीयोऽन्यत्र वसिष्ठशुनकात्रिवध्र्यश्वराजन्येभ्यः ॥ २१ ॥

वसिष्ठादिभ्योऽन्येषामयं द्वितीयः ॥

नराशंसो अग्न आज्यस्य वेत्विति तेषां ॥ २२ ॥

वसिष्ठादीनामयं द्वितीयः ॥

इडो अग्न आज्यस्य व्यन्त्विति तृतीयः ॥ २३ ॥

सर्वेषामिति शेषः ॥

बर्हिरग्न आज्यस्य वेत्विति चतुर्थः । आगूर्य पञ्चमे स्वाहा-मुं स्वाहामुमिति यथावाहितमनुद्रुत्य देवता यथाचोदितम-नावाहिता स्वाहादेवा आज्यपा जुषाणा अग्न आज्यस्य व्य-न्त्विति ॥ २४ ॥

पञ्चमे एवं कृत्वा तेनैव यजेदिति शेषः। आगुरो वि-धानं क्रमार्थं। प्रतिदेवतं स्वाहाशब्दाभ्यासार्थं वीप्सावचनं। यथावाहितग्रहणं प्रमादादावाहिताया अस्थानिन्या अपि ग्रहणार्थं। अनावाहिता इत्यनेन यथास्थानिन्योऽपि देवताः प्रमादादनावाहिता स्युस्तासामप्यत्र यथाचोदिते क्रमे निगम-नार्थं। प्रयाजाद्यनुयाजान्तेत्यादिषु यथाचोदितं तदीयानां देवतानां निगमनार्थञ्च। इदमेव प्रकारद्वयमनावाहितग्र-हणात् गृह्यते। अन्यथा यथावाहितग्रहणेन पठितावाहना न गृह्यन्ते। तासां पाठादेव निगमनं नान्यथेत्यर्थः। स्वाहा-देवा इति यथासूत्रं मन्त्रशेषः ॥

अतो मन्द्रेण ॥ २५ ॥

इतः पूर्वं यत्तन्मन्द्रेण प्रयोक्तव्यं। अत्र पूर्वावधेरभावादन्य-च्चैतत्पूर्वमग्निमन्थनादि यद्भवति तदपि मन्द्रेण प्रयोक्तव्यमिति गम्यते। त्रीणि वाचः स्थानानि मन्द्रमध्यमोत्तमसंज्ञकानि। तेषु

च सप्त सप्त यमा भवन्ति। यमा नाम अवस्थाः। तत्र सप्तमयमेन वषट्कारः प्रयोक्तव्यः। तत एकावरोहेण याज्या। एवं सर्वत्र एकैकयमारोहेण वषट्कारः प्रयोक्तव्यः॥

ऊर्ध्वञ्च शंयुवाकात्॥ २६॥

मन्द्रेण प्रयोक्तव्यं॥

मध्यमेन हवींष्यास्विष्टकृतः॥ २७॥

सर्वत्राकारोऽभिविधावेव। अत्र त्वभिविधौ मर्यादायां वा भवत्यध्वर्युवशात्। अत्र स्विष्टकृत् मध्यमेनोत्तमेन वाऽध्वर्युवशात्प्रयोक्तव्यः। प्रयाजेभ्य ऊर्ध्वं आस्विष्टकृतो मध्यमेन प्रयोगः। हविर्ग्रहणं स्थानान्तरेऽपि प्रधानहविषां मध्यमस्वर एवेति॥

उत्तमेन शेषः॥ २८॥

इडादिः स्विष्टकृदादिर्वा शंयुवाकान्तः शेष इत्युच्यते, स उत्तमेन प्रयोज्यः॥

अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याज्यभागस्यानुवाक्या। त्वं सोमासि सत्पतिरित्युत्तरस्य। जुषाणो अग्निराज्यस्य वेत्विति पूर्वस्य याज्या। जुषाणः सोम आज्यस्य हविषो वेत्वित्युत्तरस्य। तावानुपूर्व्यादेशं यजति॥ २९॥

तावित्याज्यभागसम्प्रत्ययार्थं। आनुपूर्व्येति देवतादेशस्य क्रमविधानार्थं। यजतीति देवतादेशस्य याज्यया सन्धानार्थं।

तावाज्यभागसंज्ञकौ यागौ आग्नेयोऽनन्तरं द्वितीयया विभक्त्या देवतामादिश्यादिश्य याज्यया सन्धाय यजतीत्यर्थः ॥

सर्वाश्चानुवाक्यावत्योऽप्रैषा अन्या अन्वायात्याभ्यः ॥ ३० ॥

या अन्वायातशब्देनानुनिर्वापशब्देन वा चोदिताः ता अन्वायात्याः ताभ्योऽन्या या देवता अनुवाक्यावत्योऽप्रैषाश्च ताः सर्वा आदिश्य यष्टव्याः। अन्वायात्यानामनुवाक्यारहितानाञ्च सप्रैषाणामादेशो न कर्तव्य इत्यर्थः। सर्वग्रहणमाज्यभागयोरपि सप्रैषयोरादेशनिवृत्त्यर्थं ॥

सौमिकीभ्यश्च या अन्तरेण वैश्वानरीयं पत्नी-
संयाजांश्च ॥ ३१ ॥

सौमिकीभ्यः सोमे उत्पन्नाः न सोमे प्रयोज्या अपि तत्रोत्पन्नानामेव तत्रभवत्वसम्भवात् वैश्वानरीयपत्नीसंयाजानां तच्छब्दचोदितानामेव ग्रहणं युक्तं। अत एतस्मिन्नेवासने वैश्वानरीयस्य यजतीत्येतदेव गृह्यते। पत्नीसंयाजैश्चरित्वाऽत्रऽर्थं प्रजन्तीत्येतदेव च। अन्या इत्यनुवर्तते। अङ्गप्रधानरूपे सोमकर्मणि यौ तौ वैश्वानरीयपत्नीसंयाजशब्दचोदितौ पदार्थौ, तयोर्मध्ये यास्तत्रैवोत्पन्ना देवतास्ताभ्योऽप्यन्या देवता आदिश्य यष्टव्याः, न ता आदिश्य यष्टव्या इत्यर्थः ॥

एतौ वार्त्रघ्नौ पौर्णमास्यौ ॥ ३२ ॥

यावेतौ पौर्णमास्यामाज्यभागौ तौ वार्त्रघ्नसंज्ञौ भवत इत्यर्थः। सनिमित्तेयं संज्ञेत्याह॥

अनुवाक्या लिङ्गविशेषान्नामधेयान्यत्वं। ततो विचारः॥३३॥

अनुवाक्यात एव विचारावगमोऽन्यत्वमित्यर्थः॥

नित्ये याज्ये॥ ३४॥

उक्ते एवेमे सर्वत्र याज्ये, नानुवाक्यावदेतयोरन्यत्वमित्यर्थः।

वृधन्वन्तावमावास्यायां। अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयमिति। अतो वाग्यमनं॥ ३५॥

आदित आरभ्याज्यभागपर्यन्तं वाग्यमनं भवति।

अन्तरा च याज्यानुवाक्ये। निगदानुवचनाभिष्टवनशस्त्रजपानाञ्चारभ्यासमाप्तेः॥ ३६॥

अत्राभिष्टवनसंस्तवनशस्त्रेति संस्तवनशब्दः पठितव्यः। आरभ्येतिवचनमन्यदपि यत् याज्यादिभ्यस्तदारभ्यासमाप्तेर्वाग्यमनमित्यर्थं। हेतुरधिकारात् कर्त्रन्तरस्यापि प्रापणार्थञ्चेति॥

अन्यद्यज्ञस्य साधनात्॥ ३७॥

यज्ञसाधनवचसोऽन्यत्र वाग्यमनं नियम्यते। यज्ञसाधनवचो नाम यद्यज्ञसम्पादनार्थं तद् भ्रेषपरिहारार्थञ्च॥

आपद्यातो देवा अवन्तु न इति जपेत्॥ ३८॥

आपद्येति नियममतिक्रम्येत्यर्थः ॥

अपि वान्यां वैष्णवीं ॥ ३९ ॥ ५ ॥

अन्यामपीतिवचनं पूर्वोक्ताया अपि वैष्णवीत्वप्रतिपत्त्यर्थं ॥

इति पञ्चमी कण्डिका ॥

उक्ता देवतास्तासां याज्यानुवाक्या अग्निर्मूर्द्धा भुवो यज्ञस्यायमग्निः सहस्रिण इति वेदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एतामग्नीषोमा सवेदसा युवमेतानि दिवि रोचनानीन्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमान एन्द्र सानसिं रयिं प्रससाहिषे पुरुहूत शत्रून्महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महानिति यद्यग्नीषोमीय उपांशुयाजोऽग्नीषोमा यो अद्य वामान्यं दिवो मातरिश्वा जभारेति ॥ १ ॥

उक्तसङ्कीर्तनं देवताविधिक्रमस्मरणार्थं। तासां याज्यानुवाक्या वक्ष्यमाणा लिङ्गक्रमाभ्यां योजनीया इति। इदमपि उक्तसङ्कीर्तनस्य प्रयोजनं यत्र देवताविधानानन्तरमृचो विधीयन्ते तत्र तासां देवतानां ता एव याज्यानुवाक्या इति सार्वत्रिकोऽयं विधिरित्येतज्ज्ञापयितुं। अयमग्निरिति गायत्र्यपि याज्यानन्तरमुक्तत्वाद्याज्यैव भवति। सा तु गायत्री सामान्या-

दाधाने एव भवति। यद्यग्नीषोमीय इति व्युत्क्रम्याग्ने पठन् असंशयार्थमुक्तवानाचार्यः॥

**अथ स्विष्टकृतः पिप्रीहि देवाꣳ उशतो यविष्ठेत्यनुवाक्या॥२॥**

अथशब्दः प्रधानानन्तरं स्विष्टकृतो यागः स्यान्नावाहनक्रमेणेति। अनुवाक्यावचनं सर्वत्र पूर्वमनुवाक्या पश्चाद्याज्येति प्रदर्शनार्थं॥

**ये३ यजामहेऽग्निं स्विष्टकृतमयाडग्निरित्युक्त्वा षष्ठ्या विभक्त्या देवतामादिश्य प्रिया धामान्ययाडित्युपसन्तनुयात्॥३॥**

*आगुर्विधानं निगदादावेव स्यान्न स्रगादाविति। अग्निं स्विष्टकृतमिति वचनं अग्निं होत्रायशब्देनादेशो न स्यादिति। षष्ठीविधानं द्वितीयाया निवृत्त्यर्थं। देवतामादिश्य प्रियाधामानिशब्दमुपसन्तनुयात्। अयाट्शब्दः पूर्वपठित एवोत्तरेण सूत्रेण तस्यास्तस्या देवतायाः पुरस्तादनिदेशरूपेण विधीयते। देवताया उपरिष्टाद्विधीयमानेन प्रियाधामानिशब्देन सन्धानार्थं प्रियाधामान्ययाडिति सन्ततं पठितं। अतोऽत्र प्रतिदेवतमेक एवायाट्शब्दः प्रयोक्तव्यो न द्वितीय इति स्थितं॥

**एवमुत्तरा अयाडयाडिति त्वेव तासां पुरस्तात्॥४॥**

उत्तरासामयं विशेषः। अयाट्शब्द एव तासां पुरस्तात् प्रयोज्यो नाग्निशब्दोऽपीति। एतदुक्तं भवति, प्रथमदेवतायाः

---

* आगूर्वि० इति आदर्श पु० द्वये।

पुरस्तादयाडग्निशब्दः, उत्तरासामयाट्शब्द एव, सर्वासामुपरिष्टात् प्रियाधामानिशब्दः, सर्वे च सन्तता वक्तव्या इति।

आज्यपान्तमनुक्रम्य देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत् स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविरग्ने यदद्य विशो अध्वरस्य होतरित्यनवानं यजति॥ ५ ॥

आज्यपान्तमिति प्रसिद्धक्रमसंग्रहादावाहनक्रमोऽत्रापि परिगृह्यते। तेनाग्न्यानिन्या निगमनमिहापि स्यात्। आज्यपान्तमेवमुक्त्वा तदनन्तरेण प्रियाधामानिशब्देन यक्षदिति सन्धाय यथासूत्रमुक्त्वा जुषतां हविरग्ने यदद्येत्यृचाऽनुच्छ्वसन् यजेत्। सर्वत्रानुच्छ्वासः कर्तव्योऽस्यां याज्यायां॥

प्रकृत्या वा॥ ६ ॥ ६॥

अर्धर्चे वोच्छ्वसेत्॥

इति षष्ठी कण्डिका॥

---

प्रदेशिन्याः पर्वणी उत्तमे अङ्क्त्वौष्ठयोरभ्यात्मं निमार्ष्टि॥ १॥

प्रदेशिनी नाम अङ्गुलिविशेषः। पर्वसन्धी उत्तमे इत्यग्रतो द्वे पर्वणी इत्यर्थः। अध्वर्युणा ते पर्वणी अङ्क्त्वा अभ्यात्मानं पाणितलं कृत्वा ओष्ठयोरपवर्गं निमार्ष्टि॥

वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामीत्युत्तरमुत्तरे म-
नसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामीत्यधरमधरे ॥ २ ॥

अनेनैकस्मिन्नित्यनयोरर्थः ॥

स्पृष्ट्वोदकमञ्जलिनेडां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चा-
दस्या उदगङ्गुलिं पाणिमुपधायावान्तरेडामवदापयीत ॥ ३ ॥

द्विहस्तसंयोगोऽञ्जलिः, तं कृत्वा, तेनेडां गृहीत्वा सव्ये पाणौ कृत्वा निधायेत्यर्थः। अस्या इतीडाया इत्यर्थः। या इस्तेऽवदीयते सा अवान्तरेडा। अवदापयीताध्वर्युं ॥

अन्तरेणाङ्गुष्ठमङ्गुलीश्च स्वयं द्वितीयमाददीत ॥ ४ ॥

अङ्गुल्यङ्गुष्ठयोर्मध्येन प्रदेशेन स्वयमिडाया अवान्तरेडा-
माददीत ॥

प्रत्यालभ्यामङ्गुष्ठेनाभिसंगृह्य प्रत्याहृत्य ॥ ५ ॥

प्रत्यालब्धां स्पृष्टां अध्वर्युणा वेत्यर्थः ॥

अङ्गुलीरमुष्टिं कृत्वा दक्षिणत इडां परिगृह्यास्यसम्मिता-
मुपह्वयते प्राणसम्मितां वा ॥ ६ ॥

अमुष्टिं कृत्वाङ्गुलीभ्यो बहिरङ्गुष्ठमकृत्वेत्यर्थः। सव्ये हस्ते निहितामिडां दक्षिणेन हस्तेन गृहीत्वाऽवान्तरेडां तां दक्षिणतः परिगृह्यास्यसम्मितां प्राणसम्मितां वेडां कृत्वा तामुपह्वयते। प्राणसम्मितां नासिकासम्मितामित्यर्थः ॥

इडोपहूता सह दिवा बृहतादित्येनोपास्मा३ँ इडा ह्वयतां सह दिवा बृहतादित्येनेडोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्मा३ँ इडा ह्वयतां सहान्तरिक्षेण वामदेव्येन *वायुनेडोपहूता सह पृथिव्या रथन्तरेणाग्निनोपास्मा३ँ इडा ह्वयतां सह पृथिव्या रथन्तरेणाग्निनोपहूता गावः सहाशिर उप मां गावः सहाशिराह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखा भक्ष उप मां सखा भक्षो ह्वयतामुपहूतेडा वृष्टिरुप मामिडा वृष्टिर्ह्वयतामित्युपांश्वथोच्चैः इडोपहूतोपहूतेडोपास्मा३ँ इडाह्वयतामिडोपहूता। मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः। य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे। उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इति॥ ७॥

इडोपहूतेति सह दिवेत्यादिना तस्मिन्नुपहूत इत्यन्तेन। इत्युपांश्वित्यनेन निगदानां तन्त्रस्वरत्वादप्राप्तमुपांशुत्वं विधीयते। तेनैकश्रुत्यमनुपरतमेवेति स्थितं। अथोच्चैरित्यनेनान्तरस्य निगदभागस्य तन्त्रस्वरामपगमः कथ्यते। प्राप्तत्वान्ना-

* वायुनेति सो॰ मू॰ का॰ मू॰ पु॰ द्वये।

पूर्वं विधीयते। तस्मिन्ननूच्यमाने संशयः स्यान्निगदमध्ये उपांशुत्वमुच्यमानं किं सर्वस्य निगदस्य, आहोस्वित् पूर्वभागस्य परस्य वेति। अस्मिंस्तूच्यमाने पूर्वस्यैव भागस्योपांशुत्वं विहितं भवति, नोत्तरस्य भवतीति नात्र संशयः। इडोपहूता मनुष्याः देवी देवपुत्रे इति त्रीण्यवसानानि ॥

उपहूयावान्तरेडां प्राश्नीयादिडे भागं जुषस्व नः पिन्वंगा जिन्वार्वतो रायस्पोषस्येशिषे तस्य नो रास्व तस्य नो दास्तस्यास्ते भागमशीमहि। सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः सर्वपुरुषा इति वा ॥ ८ ॥ ७ ॥

उपहूयेत्यनूच्यमाने हविर्जुषन्तामिति निगदान्तः स्यात्। तस्मिन्नुपहूत इत्यवान्तरेडाभक्षणमन्त्रः स्यात्, इडे भागमिति वा, अनयोर्विकल्पार्थो वाशब्दः। सर्वपूरुषाः सर्वपुरुषा इति पदद्वयविशिष्टस्य मन्त्र इत्येते दोषाः स्युः। एतस्मिंस्तूच्यमाने तस्मिन्नुपहूत इत्येवमन्तो निगदः स्यात्। पूरुषा इतिशब्दो निगदैकदेशः स्यात्। वाशब्दश्च मन्त्रावयवविकल्पार्थ एव स्यात्। सर्वपुरुषा इत्यन्त इतिशब्दात्। नैतावानेव च मन्त्रः स्यात् इत्येवं सर्वं समञ्जसं भवति। होताऽवान्तरेडां भक्षयित्वा इडामपि भक्षयेत्। सर्वे च सयजमाना इडां भक्षयेयुः। इडा सर्वेषामिति पशुविभागे दर्शनात्, शाखान्तरे च यजमानपञ्चमा इडां भक्षयेयुरिति दर्शनाच्च ॥

इति सप्तमी कण्डिका ॥

---

मार्जयित्वानुयाजैश्चरन्ति ॥ १ ॥

मार्जनमिडाभक्षणाङ्गं, पिष्ट्यायामिडाभक्षणाभावे मार्जनस्याप्यभावदर्शनात्। भक्षयितुर्मार्जने दृष्टोपकारोऽस्ति। शुद्धिर्नामाप्त इडान्तकर्मस्वपि मार्जनमस्त्येव। नैतदनूयाजाङ्गं, चतुर्धाकरणदक्षिणादानाभ्यां व्यवहितत्वात्। पिष्ट्यायामनूयाजसत्तायामपि तदभावदर्शनाच्च। अतो मार्जयित्वानुयाजैश्चरन्तीतिवचनं चतुर्धाकरणदक्षिणादानयोरनित्यत्वसूचनार्थं। तथा ह्यनाग्नेयेषु चतुर्धाकरणं नास्ति, अङ्गभूतेषु दक्षिणादानं नास्तीति ॥

परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनं ॥ २ ॥

आहवनीयस्य परिस्तरणैः भक्षणार्थं निष्क्रम्य पुनः प्रविष्टानां प्रथमप्राप्तत्वात् तेषामासेचयतेऽपः सहकारिणा ॥

देवादयो*ऽनुयाजाः ॥ ३ ॥

देवादयो देवशब्दादय इत्यर्थः। पुनरनुयाजग्रहणं उत्तरस्य सूत्रस्य प्रयाजानूयाजार्थत्वाय ॥

वीतवत्पदान्ताः ॥ ४ ॥

वीतवत्पदान्तत्वं प्रयाजानूयाजयोर्गुणः स्यात् ॥

त्रयः ॥ ५ ॥

तेऽनूयाजास्त्रयो भवन्ति ॥

---

* ऽनुयाज्याः इति सं॰ एकपु॰।

एकैकं प्रेषितो यजति ॥ ६ ॥

देवान् यजेति प्रथमसम्प्रैषस्य सर्वार्थत्वे सत्यपि पुनः प्रेषित एव यजेत्। इमेऽनुयाजाः ॥

देवं बर्हिर्वसुवने वसुधेयस्य वेतु। देवो नराशंसो वसुवने वसुधेयस्य वेतु। देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान् *देवानयाळ्ँ अपिप्रेर्ये ते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहीत्यनवानं वा ॥ ७ ॥ ॥ ८ ॥

अमत्सतेत्यत्रावसाय वा अनवसाय वा यजेत् ॥

इत्यष्टमी कण्डिका ॥

---

सूक्तवाकाय सम्प्रेषित इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि। उपश्रुती दिवस्पृथिव्योरोमन्वती तेऽस्मिन् यज्ञे यजमानद्यावापृथिवी स्तां। शङ्गयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयङ्कृतौ। वृष्टिद्यावारीत्यापाशंभुवौ मयोभुवा

---

* देवानयाड्ढ इति सं० एकपु०। देवानयाळां इति का० मू० पु०।

ऊर्जस्वती पयस्वती स्वपचरणा च स्वधिचरणा च तयोराविदीत्यवसाय प्रथमया विभक्त्यादिश्य देवतामिदं हविरजुषतावीवृधत महो ज्यायोऽक्रतेत्युपसन्तनुयात् ॥ १ ॥

अपि । स्वां । अभयङ्कृतौ । विदि । अक्रतेति च । अक्रातां । अक्रतेत्येवं । यजमानस्य नामनी । मानुषा इत्यवसानानि सर्वाणि निगदे । अत्र तु प्रथमाविधानं द्वितीयानिवृत्त्यर्थं । आविदीत्यत्रावसाय प्रथमया विभक्त्यादिश्य देवतामिदं हविरित्युपसन्तनुयात् ॥

एवमुत्तराः ॥ २ ॥

उत्तरा अपि देवता आदिश्य इदं हविरित्येवमुपसन्तनुयात् ॥

अक्रातामक्रतेति यथार्थं ॥ ३ ॥

द्विदेवतबहुदेवतयोरेवमूहः कर्तव्यः । यथार्थवचनं अर्थवशेनाभिधानमित्येवमर्थं ॥

उक्तमुपांश्वोः ॥ ४ ॥

आवह स्वाहेत्युक्तमित्यर्थः । उक्तस्य वचनमस्य निगदस्य पश्चावपीष्टिवदेव प्रयोगार्थं न सूक्तवाकप्रैषवदजुषतादीनामुपांशुत्वं भवति ॥

आवापिकान्तमनुद्रुत्य देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रताग्निर्होत्रेणेदं हविरजुषतावीवृधत महो

ज्यायोऽकृत। अस्यामृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं यजमानोऽसावसावित्यस्यादिश्य नामनी उपांशुसन्निधौ गुरोरायुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते तदस्यां तदृध्यात् तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः। इष्टञ्च वित्तञ्चोभे च नो द्यावापृथिवी अंहसस्पातामेह गतिर्वामस्येदं नमो देवेभ्य इति ॥ ५ ॥ ९ ॥

आवापिकान्तमित्येतदावापिकदेवताक्रमप्राप्त्यर्थं। तेनास्थानेऽन्यत्रापि निगद्यते। देवा आज्यपा इति यथा सूत्रं। असावसावित्यत्र यजमाननामनी प्रथमया विभक्त्या निर्दिशेत्, सांव्यवहारिकं नाक्षत्रञ्च। होतुर्गुरुश्चेद्यजमानः स्यात् तत्सन्निधौ उपांशु नामनी ब्रूयात् ॥

इति नवमी कण्डिका ॥

---

शंयुवाकाय सम्प्रेषितस्तच्छंयोरावृणीमह इत्याहानुवाक्यावदप्रणवां ॥ १ ॥

अनुवाक्यावद्वचनमेकश्रुत्यप्रापणार्थं। अप्रणवामिति प्रणवो निषिध्यते ॥

वेदमस्मै प्रयच्छत्यध्वर्युः ॥ २ ॥

वेदग्रहणकालज्ञापनार्थमेतत् सूत्रं। अतोऽध्वर्युणा दत्ते गृह्णीयात्। अदत्तेऽपि स्वयमेव गृह्णीयात् ॥

तं गृह्णीयाद्वेदोऽसि वेदो विदेयेति ॥ ३ ॥

तमिति विस्पष्टार्थं। यदा द्वौ दद्यात् तदा तं तं गृह्णीयादित्यर्थः। यदि द्वौ युगपद्दद्यात् तदा ऊहेन मन्त्रं ब्रूयात् वरुणप्रघासादिषु ॥

उदायुषेत्येतेनोपोत्थाय पश्चाद्गार्हपत्यस्योपविश्य सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमित्याज्येन यजन्ति ॥ ४ ॥

एतेनेतिवचनं प्रकृतिविकारभावेऽपि कृत्स्नस्य मन्त्रस्य प्रापणार्थं। आज्यवचनं यत्राज्येन सोम इज्यते तत्रैते याज्यानुवाक्ये भवतो नान्यहविष्के सोम इति। यजन्तीतिवचनं याग एव तासां देवतानां न निगमेष्वनुवृत्तिरिति ॥

आप्यायस्व समेतु ते सन्ते पयांसि समुयन्तु वाजा इह त्वष्टारमग्रियं तन्नस्तूरीयमधपोषयित्नु देवानां पत्नीरुशतीरवन्तु न इति द्वे अग्निर्होता गृहपतिः स राजा हव्यवाडग्निरजरः पिता न इति पत्नीसंयाजाः ॥ ५ ॥

इदं संज्ञाविधानार्थं ॥

अथ प्रजाकामो राकां सिनीवालीं कुहूमिति प्राग्गृहपते-र्यजेत ॥ ६ ॥

अथशब्दः पक्षान्तरपरिग्रहार्थः। अथ चेद्यजमानः प्रजा-कामः स्यात् तदैवैता देवता यजेतेति। प्राग्गृहपतेरिति देश-विधानेन पूर्वाभिः समुच्चयं दर्शयति ॥

राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये ॥ ॥ ७ ॥

याज्यानुवाक्यावचनं प्रजाकामो यजेतेत्यनेन यजमाने स-न्निहितेऽपि होतैव कर्ता स्यादिति। याज्यानुवाक्ययोर्होतृ-कर्तृत्वमन्यतः प्रसिद्धमिति। कुहूमहमिति प्रतीके गृहीतेऽपि स्वयमेव पठति ॥

कुहूमहं सुवृतं विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम।
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु।
संदाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधात्विति।
आज्यं पाणितलेऽवदापयीतेडामुपहूय सर्वां प्राश्नीयात् ॥ ८ ॥

पर्वाश्चनाद्युपक्रामान्तं कार्यं। माचावान्तरेडा। पाणि-तलसमाज्यमिडेत्युच्यते। ततः सर्वां प्राश्नीयादित्युच्यते ॥

शंयुवाको भवेन्न वा ॥ ९ ॥ ॥ १० ॥

आज्येडाया ऊर्द्ध्वमनुवाको भवति न भवति वेत्यध्वर्यूणां संस्थाप्रकाराः सन्तीति तत्सूचनार्थमेतत् सूत्रं यदि स्याद्धोतापि तथा कुर्यादित्येवमर्थं ॥

इति दशमी कण्डिका ॥

---

वेदं पत्न्यै प्रदाय वाचयेद्धोताध्वर्युर्वा वेदोऽसि वित्तिरसि विदेयकर्मासि करणमसि क्रियासंसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं। यं बहव उपजीवन्ति यो जनानामसद्वशी। तं विदेय प्रजां विदेय कामाय त्वेति ॥ १ ॥

पत्न्यै वेदं प्रदाय तां वाचयति होताध्वर्युर्वा वेदोऽसीत्यादि कामाय त्वेत्येवमन्तं मन्त्रं। वाचनमन्त्रयोर्वैः प्रयोगोऽर्थात् सिध्यति। कार्यन्तु लिङ्गजनितमेव ॥

वेदशिरसा नाभिदेशमालभेत प्रजाकामा चेत् ॥ २ ॥

यदि पत्नी प्रजा मे स्यादिति कामयेत तदा वेदस्य वामुसदृशेन प्रदेशेन पत्नी स्वनाभिमालभेत। कामाभावेऽपि वाचनं भवत्येव ॥

अथास्यायोक्त्रं विचृतेत् प्र त्वा मुञ्चामि वरुणस्य पाशादिति ॥ ३ ॥

अथेतिशब्दः सम्बन्धार्थः। यद्यनन्तरं योक्त्रविमोकः स्यात् तदैव वाचनमपीति। कामाभावे वाचनानन्तरं योक्त्रविमोकः स्यान्न लालम्बनमपीति। अस्या इति योक्त्रविमोचनं होतृकर्तृकमिति दर्शयति॥

तत् प्रत्यग्गार्हपत्याद्द्विगुणं प्राक्पाशं निधायोपरिष्टाद्-स्योदगग्राणि वेदतृणानि करोति॥ ४॥

तद्योक्त्रं द्विगुणं कृत्वा गार्हपत्यात् प्रत्यक् प्राक्पाशं प्राङ्मूलाग्रप्रदेशमित्यर्थः, तन्निदध्यात्। योक्त्रस्य मूलप्रदेशः पाशः। पाशशब्दोऽत्र मूलाग्रयोः प्रदर्शनार्थः। अस्य योक्त्रस्योपरिष्टाद्वेदतृणान्युदगग्राणि निदध्यात्॥

पुरस्तात् पूर्णपात्रं संश्लिष्टं वेदतृणैः॥ ५॥

तृणेभ्यः पुरस्तात् तृणैः संश्लिष्टं पूर्णपात्रं निदध्यात्॥

अभिमृश्य वाचयेत् पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मामेक्षेष्ठा इति॥ ६॥

अभिमृश्याभिमृशन्नित्यर्थः। ताश्चाभिमृशन्तीं वाचयेत्। प्रत्यगाशीष्ट्वान्मन्त्रस्य॥

अथैनां पूर्णपात्रात् प्रतिदिशमुदकमुदस्यन्तीं वाचयति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणस्यां

**दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा॥ ७॥**

पूर्णपात्रादुदकं गृहीत्वा तदुदृचन् तां चैवं कुर्वतीं वाचयति। अत्रोदुचणमकुर्वत्या वाचने मन्त्रलिङ्गस्य विरोधाभावात् उदुचणमपि विधीयते। पूर्वत्र तन्मन्त्रलिङ्गादेवाभिमर्शनमकुर्वत्या मन्त्रोच्चारणं न सम्भवतीति न तस्याभिमर्शनं विहितं। मार्जयन्तामिति वेति पदद्वयमात्रविकल्पः॥

**अथास्या उत्तानमञ्जलिमधस्ताद्योक्त्रस्य निधायात्मनश्च सव्यं पूर्णपात्रं निनयन् *वाचयेन्माहं प्रजां परासिचं या नः सयावरी स्थन। समुद्रे वो निनयानि स्वं पाथो अपीथेति॥ ८॥**

योक्त्रस्याधस्तात् पत्न्यञ्जलिमुत्तानमात्मनश्च सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयन् माहं प्रजामिति तां वाचयेत्। यथा तन्निनीयमानं उदकं हस्तेष्वेव पतेत् तथा निनयेत्। प्राङ्मुखत्वमत्र नाद्रियते, अधस्तादञ्जलिनिधानस्यादृष्टार्थत्वप्रसङ्गात्। अत्र पत्नीद्वित्वबहुत्वे सर्वासां वाचनं कर्तव्यं। प्रतिपत्नि योक्त्रविमोचनमावर्तते। सर्वेषां योक्त्राणां द्विगुणीकृत्य निधानं भवति। निनयनेन सर्वासां सयोक्त्रसम्पृ-

---

वाचयेन्माहमिति सो॰ मू॰ पु॰।

णोदकत्वाभावेऽप्युदुत्पत्तेऽपि सर्वासामन्वयः। वाचने वाच्यमन्त्र-लिङ्गजनितकार्याभावेऽपि वाच्यस्य पुरुषस्यैवायं संस्कार इत्यव-गन्तव्यं। य एते पत्नीसम्बन्धाः पदार्थास्ते सर्वे परस्परं सम्ब-द्धाः अथशब्देन तच्छब्देनान्येन वा, अतस्ते सर्वे सहैव कर्त-व्या नैकैकशः॥

वेदतृणान्यग्रे गृहीत्वाऽविधून्वन्सन्ततं स्तृणन्सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन् रजसो भानमन्विहीति॥ ॥९॥

वेदबन्धस्य मूलत्वात् तृणानीत्युच्यते। तानि दक्षिणेन ह-स्तेनाऽग्रप्रदेशे गृहीत्वा अविधून्वन् विस्रंसेनाकम्पयन् गार्ह-पत्यादारभ्य सव्येन हस्तेन सन्ततं स्तृणन् आहवनीयं गच्छति। तन्तुं तन्वन्नित्यास्तरणमन्त्रः, न गमनमन्त्रः। ततो मन्त्रान्ते स्तरणारम्भः॥

शेषं निधाय प्रत्यगुदगाहवनीयादवस्थाय स्थाल्याः स्रुवेणादाय सर्वप्रायश्चित्तानि जुहुयात् स्वाहाकारान्तैर्मन्त्रैर्न चेन्मन्त्रे पठितः॥ १०॥

शेषं निधायेतिवचनात् तानि सर्वाणि न स्तरितव्यानि नियमेन शेषितव्यानीति गम्यते। आज्यस्थाल्याः स्रुवेणाज्यमादाय आहवनीये स्रुवेणैव जुहुयात्। आहवनीयात् प्रत्यगुदगवस्थाय सर्वप्रायश्चित्तानीति संज्ञैषां होमानां। स्वाहाकारान्तैर्मन्त्रैः मन्त्रान्ते स्वाहाकारं कृत्वेत्यर्थः। न चेन्मन्त्रे यत्र

क्वापि स्वाहाकारो न पठितस्तदाऽन्ते स्वाहाकारः कर्तव्यः। यत्र क्वापि पठितश्चेत् स एव प्रदानार्थो भवति॥

यत्किञ्चाप्रेषितो यजेदन्यत्रापि॥११॥

यः कश्चनास्मिन्काले देवतोद्देशेन द्रव्यत्यागात्मको व्यापारो यागो होमोऽभ्याधानं बलिहरणादयो वा मन्त्रेण साध्यन्ते, तत्र सर्वत्र स्वाहाकारः कर्तव्य इति सूत्रार्थः। अन्यत्रेति वचनं गार्ह्येष्वपि प्रापणार्थं। अप्रेषित इति वषट्कारसमुच्चयनिवृत्त्यर्थः॥

एवम्भूतोऽव्यक्तहोमाभ्याधानोपस्थानानि च॥१२॥

एवम्भावो नाम एवम्प्रकारः। आहवनीयात् प्रत्यगुदग्देशे स्थित आज्यं स्रुवेणाहरायाहवनीय इत्येवम्प्रकारविशिष्टः कर्ता एवम्भूत इत्युच्यते। विशेषणपरोऽयं निर्देशः। अव्यक्तशब्देनाविहितविशेष उच्यते। यत्र होमाभ्याधानोपस्थानान्यविहितविशेषाणि विधीयन्ते तत्रानेन प्रकारेण कर्तव्यानीत्यर्थः। एकदेशविशेषे चाप्यपेक्षितमात्रमस्माद् गृह्यते॥

अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि। अयासावयसा कृतोऽयासन् हव्यमूहिषे या नो धेहि भेषजं स्वाहा। अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च भूः स्वाहा भवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति॥१३॥

एकमन्त्राणि कर्माणीति न्यायेन द्वाभ्यां द्वे आहुती होतव्ये। व्याहृतिभिरिति निर्देशं कृत्वा पुनः पठितेन ज्ञायते व्याहृत्युपदेशेन क्रमेणैव एते चत्वार इति॥

हुत्वा संस्थाजपेनोपस्थाय *तीर्थे निष्क्रम्यानियमः॥१४॥

स्यादिति शेषः। हुत्वेतिवचनं संस्थाजपेन होमस्य सम्बन्धार्थं। यत्र संस्थाजपोऽस्ति तत्र प्रायश्चित्तहोमोऽपि भवतीति। अतः स्वकृतेष्टिष्वपि संस्थाजपस्य प्रयोज्यत्वात् प्रायश्चित्तहोमोऽपि प्रयोज्य एव। उपस्थायान्ते तीर्थेनैव निष्क्रामेत्। निष्क्रम्यानियम इत्यर्थतुन्नानियम इत्यर्थः। अर्थलुप्तत्वे सत्यपि अनियमविधानं कर्ममध्येऽपि तीर्थेन निष्क्रान्तस्याप्यावृत्त्यादयो नियमा न भवन्तीति। तेन प्रयोगमध्ये मार्गान्तरेण निष्क्रान्तस्यापि नियमा भवन्त्येवेति ज्ञायते॥

ॐ च मे स्वरश्च मे यज्ञोपचते नमश्च। यत्ते न्यूनं तस्मै त उपयत्तेऽतिरिक्तं तस्मै ते नम इति संस्थाजपः॥१५॥

अन्वर्थसंज्ञेयं। तेनायं सोमेष्टिषु न भवति॥

इति होतुः॥१६॥ ॥११॥

इतिशब्देनान्तैतावत्त्वमुच्यते। एतावदेव होतुर्नान्यदिति। होतृग्रहणं होतुरेवैतावत्, आग्नीध्रस्यान्यदपीति॥

इत्येकादशी कण्डिका॥

---

* तीर्थेनेति सो० मू० पु०।

अथ ब्रह्मणः ॥ १ ॥

अथशब्दोऽधिकारार्थः। इदानीं ब्रह्मणोऽपि विधयो वक्ष्यन्त इत्यर्थः ॥

स्नानाचमनयज्ञोपवीतशौचानि ॥ २ ॥

व्याख्यातानीत्यर्थः। स्नानाचमनादिना शुचिर्भूत्वा ब्रह्मत्वं करिष्यामीत्यागुरितो विहारं प्रविशन् प्राङ्मुख आचमनं कुर्यात्। कर्माङ्गत्वाद्यज्ञोपवीतग्रहणं पैतृकमानुषयोरपि कर्मणोर्वचनादृते यज्ञोपवीत्येव स्यादिति। शौचग्रहणं क्रत्वर्थमपि अशुचित्वसम्पादि यत्तद्विहाराद्बहिः कर्तव्यमिति। एतच्चाप्राप्तं विधीयते। अयमपि तीर्थेन विहारं प्रपन्न इति प्राक्चेष्टतास्य नेष्यते, यज्ञमना इति कर्माभिमुख्य एव यज्ञमनस्त्वोपपत्तेः। अङ्गधारणमुपवेशनाङ्गतया प्राप्तमदृष्टार्थतापरिहारायैव यावदासनमनुवर्त्तते। तत्र चेत् कर्मत्वस्यापि कर्मसम्बन्धाद्व्यावृत्तिरविशिष्टैव, दक्षिणाङ्गतया च तत्र चेत् कर्मत्वस्य उत्तराङ्गत्वेनाविशेषादस्यापि भवति ॥

नित्यः सर्वकर्मणां दक्षिणतो ध्रुवाणां प्रजतां वा ॥ ३ ॥

अन्यतः प्राप्तस्य ब्रह्मणोऽयं नियम उच्यते। ध्रुवाणां प्रजताञ्च पुरुषाणां यानि कर्माणि तेषां दक्षिणतो नित्यो भवेत्। प्राकृतानामप्राकृतानाञ्च ध्रुवाणां नित्यं दक्षिणत्वं ध्रुवेणैव कर्तुं शक्यत इति ध्रुवेषु ध्रुव एव भवेत्। प्रजतां कर्मसु नित्यं दक्षि-

णत्वाय व्रजन्नेव भवेत्। ध्रुवाणां व्रजतामिति कर्तृविशेषणं। न कर्मणां नित्यत्वमत्रोपक्रमप्रभृत्यापरिसमाप्तेर्दक्षिणत्वसिद्ध्यर्थं। वाशब्दः समुच्चयार्थः। कश्चित् कर्मणि कश्चित्तिष्ठति कश्चिद्व्रजति तत्र भूयसां धर्मः परिगृह्यते॥

बहिर्वेदि यां दिशं व्रजेयुः सैव तत्र प्राची॥ ४॥

यत्र बहिर्वेदि वसतीवरीग्रहणादि कर्तुं यां दिशमभिमुखा व्रजन्ति ऋत्विजः तत्र तामेव दिशं प्राचीं कृत्वा दक्षिणतो भवेत्। सैव तत्रेतिवचनात् तिष्ठतामभिमुख एव प्राची भवेत्॥

चेष्टास्वमन्त्रासु स्थानासनयोर्विकल्पः॥ ५॥

अमन्त्रेषु कर्मसु स्थानमासनं वा भवेत्। वाशब्देनैव विकल्पे सिद्धे विकल्पवचनमव्यवस्थया विकल्पसिद्ध्यर्थं। तेनैकस्मिन्नपि प्रयोगे क्वचिदासनं क्वचित्स्थानमिति लभ्यते॥

तिष्ठद्धोमाश्च येऽवषट्काराः॥ ६॥

तिष्ठतां ये होमाः वषट्काररहिताश्च तेषु च स्थानमासनं वा भवेत्॥

आसीतान्यत्र॥ ७॥

अन्यत्रेत्यमन्त्रकस्वत्रयविषयादन्यत्रेत्यर्थः॥

समस्तपाण्यङ्गुष्ठोऽग्रेणाहवनीयं परीत्य दक्षिणतः कुशेषूपविशेत्॥ ८॥

समस्तौ पाणी अङ्गुष्ठौ च यस्य सोऽयं समस्तपाण्यङ्गुष्ठः। सव्येन पाणिना दक्षिणं पाणितलप्रदेशं गृह्णीयात्, दक्षिणेन सव्याङ्गुष्ठं। एवं कृते पाणी अङ्गुष्ठौ च समस्तौ भवतः। एवम्भूतोऽग्रेणाहवनीयं परीत्य तस्य दक्षिणतः कुशेषूपविशेत्। निरसनं कृत्वा कुशग्रहणात् सति सम्भवे तएवासने प्रकल्पन्ते। दक्षिणत इति पुनर्वचनं आहवनीयस्यैव दक्षिणतो न क्रियमाणस्य कर्मण इत्येवमर्थं॥

बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपायेत्युपविश्य जपेत्॥ ९॥

उपविश्यग्रहणं सकृदुपविश्य पुनरपि कर्मण एव दक्षिणतो न भवेदासमाप्तेस्तत्रोपविशेदिति॥

एष ब्रह्मजपः सर्वयज्ञतन्त्रेषु साग्नौ यत्रोपवेशनं॥ १०॥

एष मन्त्रो ब्रह्मजपसंज्ञो भवति। स चातिदेशशब्दमनपेक्ष्य सर्वेषु यज्ञेषु भवति। तन्त्रग्रहणं पाकयज्ञेष्वपि प्रापणार्थं। पाकयज्ञानामेतत् तन्त्रमिति तन्त्रशब्दत्वात् तेषामिति। साग्नौ यत्रोपवेशनमित्यग्निप्रणयनेन साग्नित्वे कर्मणः प्रतिपन्ने यत्रोपवेशनं विहितं तत्रायं जपो भवति। एतदुक्तं भवति। एष जपः सर्वेषु यज्ञेषु प्रविष्टमात्रे भवेत्। अग्निप्रणयनवत्स्वग्निप्रणयनान्त एव भवति॥

उपविष्टमतिसर्जयते ॥ ११ ॥

अनुज्ञालाभार्थं मन्त्रेणामन्त्रयतेऽध्वर्युरित्यर्थः। उपविष्टग्रहणं प्रवेशकालज्ञापनार्थं। यस्मिन् काले उपविष्टस्य उपवेशनानन्तरमध्वर्युणातिसर्जनं सम्भवति तस्मिन् काले प्रविशेदित्यर्थः ॥

ब्रह्मन्नपः प्रणेष्यामीति श्रुत्वा भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वो प्रणयेत्यतिसृजेत् सर्वत्र ॥ १२ ॥

अध्वर्युमन्त्रपाठेऽप्शब्दरहितेऽपि याज्ञावचने प्रणयेत्येवानुजानीयान्नापः प्रणयेत्यपि। श्रुत्वेतिवचनं श्रुत्वा पश्चाज्जपेन्नार्हति। जपित्वेति पूर्वस्योपांशुत्वायोत्तरस्य च तन्त्रस्वरत्वाय। अतिसृजेदनुजानीयात्। सर्वत्रेति सर्वेष्वनुज्ञावचनेषु अस्य विधेः प्रापणार्थं ॥

यथाकर्म त्वादेशाः ॥ १३ ॥

प्राप्तस्यायं विशेषविधिः। यस्मै कर्मणेऽनुज्ञामिच्छति तदेवानुजानीयान्न प्रणयेत्येव। यथाकर्म कर्मानुरूपं, आदेशाः कर्तव्या इत्यर्थः ॥

प्रणवान्तुच्चैः ॥ १४ ॥

उत्तरविवक्षार्थं ॥

ऊर्द्ध्वं वा प्रणवात् ॥ १५ ॥

उच्चैर्भवतीत्यर्थः ॥

अत ऊर्द्धं वाग्यत आस्त आहविष्कृत उद्वादनात्॥ १६॥

प्रणीताप्रणयनोपलक्षितात् कालादूर्द्धमाहविष्कृन्मन्त्रोच्चारणाद्वाग्यतो भवति। आस्त इतिवचनं अमन्त्रेष्वपि कर्मस्वस्मिन्नवसरे आसनमेवेतिनियमार्थं॥

आमार्जनात् पशौ॥ १७॥

पशावग्निप्रणयनमारभ्य आचात्वालमार्जनाद्वाग्यतो भवेत्॥

सोमे घर्मादि चातिप्रैषादि चासुब्रह्मण्यायाः॥ १८॥

घर्ममारभ्यातिप्रैषञ्चारभ्य आसुब्रह्मण्याया वाङ्नियमः। सोमग्रहणं पश्वधिकारात् पशुनामक एव सोमे स्यादिति तन्निवर्त्त्यं सर्वसोमेषु प्रापणार्थं॥

प्रातरनुवाकाद्यान्तर्यामात्॥ १९॥

प्रातरनुवाकलक्षितात् कालादूर्द्धं आअन्तर्यामग्रहयागात्॥

हविर्वतोऽनुसवनमेडायाः॥ २०॥

तथा सवनत्रयेऽपि पुरोडाशप्रचारमारभ्य आपुरोडाशेडायाः॥

स्तोत्रेष्वतिसर्जनाद्यावषट्कारात्॥ २१॥

स्तोत्रादौ स्तुध्वमित्युपाकरणं, तदादि। आशस्त्रयाज्यावषट्काराद्वाग्यतो भवेदित्यर्थः॥

**आहृचः पवमानेषु ॥ २२ ॥**

पवमानस्तोत्रेषूपाकरणादारभ्य आउदृचः। उदृगिति समाप्तिरुच्यते ॥

**यच्च किञ्च मन्त्रवत् ॥ २३ ॥**

सर्वत्र मन्त्रवति कर्मणि वाग्यमनं भवति ॥

**होता शेषः ॥ २४ ॥**

उक्तादन्यो यो विषयस्तत्राप्यस्य वाग्यमनं होतृतुल्यं भवति। 'आतो वाग्यमनं' इत्यादिर्नियमोऽस्याप्यधिक्रियते इत्यर्थः ॥

**आपत्तिश्च ॥ २५ ॥**

'आपश्चातो देवा अवन्तु नः' इति जपेदित्युक्तत्वादेतत् प्रायश्चित्तमापत्तिरित्युच्यते। अनन्तरोक्तैर्नवभिः सूत्रैर्विहितस्य वाग्यमनस्य भेषे एतदेव प्रायश्चित्तमित्यर्थः। अन्यत्रैव भूरित्याहुतिः ॥

**यत्र त्वग्निः प्रणीयतेऽपि ससोमे तदादि तत्र वाग्यमनं ॥ २६ ॥**

विहित एव वाग्यमने तदादित्वमात्रमत्र विधीयते, तुशब्दसमन्वयात्। अपि ससोमे सोमसहितेऽपि अग्नीषोमीयप्रणयनेऽपीत्यर्थः। तत्रवचनं यस्मिन्नहन्यग्निः प्रणीयते तस्मिन्नेवाहनि कर्मप्रवृत्तौ तदादिवाग्यमनं न पूर्वेद्युः प्रणयने त-

दादित्वनियमः। तथा आवसथ्काल्लेषु पूर्वेद्युः प्रणीयते वरुण-प्रघासादिषु॥

दक्षिणतश्च व्रजन् जपत्याग्नुः श्रिशान इति सूक्तं॥ २७॥

सूक्तग्रहणं व्रजन् जपतीति व्रजतो जपविधानात् व्रजन-समाप्तावपि कृत्स्नसूक्तप्रयोगविधानार्थं। दक्षिणतो व्रजनवि-धानं दक्षिणतो व्रजत एवायं जपः स्यात् नाग्निं सोमस्याप्रणयतः, तदा स्वग्रेण गच्छतीति॥

समाप्योपवेशनाद्युक्तं॥ २८॥

समाप्येतिवचनं समाप्योपवेशनादि यदुक्तं तदेव कुर्यात् सूक्तावृत्तिं गमनापरिसमाप्तावपीति। आदिग्रहणेन ब्रह्म-जपः परिगृह्यते। उपवेशनग्रहणेन निरसनमपि गृह्यते। सहचारित्वादेतत् त्रयमग्निप्रणयनाग्नीषोमप्रणयनयोरन्ते वि-धीयते। तेन सूत्रेण साग्नौ यत्रोपवेशनमित्यनेन साग्निप्रणय-नेषु पश्वादिषु कर्मसु अग्निप्रणयनान्त एव ब्रह्मजपो नान्य-त्रेति नियम्यते॥

न तु सौमिके प्रणयने ब्रह्मजपः॥ २९॥

सोमे यदग्निप्रणयनं तदन्ते न ब्रह्मजपो भवति। तत्र निरसनोपवेशने एव भवतः॥

अन्यच्च विसृष्टवागवक्रभाषी यज्ञमनाः॥ ३०॥

यज्ञमनाः क्रियमाणपदार्थपरामर्शी विसृष्टवागपि यज्ञमनाः स्यादिति योगविभागः कृतः ॥

**विपर्यासेऽन्तरिते मन्त्रे कर्मणि वाऽऽख्याते वोपलक्ष्य वाजान् वाच्याकृतिं जुहुयात् ॥ ३१ ॥**

विपर्यासो व्युत्क्रमः । अन्तरितो निगमनमन्त्रयोः कर्मणोर्वा, विपर्यासेऽन्तरिते मन्त्रे कर्मणि वा स्वयमुपलक्ष्य परेण वाऽऽख्याते दक्षिणं जानु निपात्य वक्ष्यमाणेन मन्त्रेण वक्ष्यमाणेऽग्नावाकृतीर्जुहुयात् । सर्वत्र जानुनिपातनमुपस्थानानन्तर्यविरोधेन कर्त्तव्यं, न त्वभावे केनचिद्दृष्टकारेण यांवक्यादिना दोषनिबन्धनात् । आख्यातोपलक्षणग्रहणमन्यस्मिन्नपि विषये यथाकथञ्चिज्ज्ञाते एतत् प्रायश्चित्तं भवतीत्येवमर्थं । तेनैवमस्य सूत्रस्यार्थोऽवगन्तव्यः । सर्वेषु भ्रेषेष्वेतत् प्रायश्चित्तं सामान्यरूपेण भवति । यदन्यद् भ्रेषविशेषे विहितं तदस्यापवादकं भवति । विपर्यासान्तरितयोरत्र भेदेन ग्रहणात् तद्विषये विशेषेणाप्यस्य समुच्चयो भवति । सर्वेषां नैमित्तिकानामयमुत्सर्गः । निमित्तादनन्तरं कर्त्तव्यमिति । यस्य पुनर्बलवता प्रमाणेनानन्तरं कर्त्तुमसम्भवः तस्य यावत्सम्भवमुत्कर्षो नात्यन्तमिति । वाशब्दस्य द्विरुच्चारणं ज्ञात एव निमित्ते एतत् प्रायश्चित्तं न पूर्वोक्तसर्वप्रायश्चित्तवदज्ञातेऽपीति ज्ञापनार्थं । आकृतिमित्येकवचनं बहुष्वपि निमित्तेषु युगपज्ज्ञातेष्वेकैवाकृतिः कर्त्तव्या न प्रतिनिमित्तं ज्ञापनाय ॥

स्वक्तस्त्वेह्नरिति गार्हपत्ये। यजुष्टो भुव इति दक्षिणे। आग्नीध्रीये सोमेषु॥ ३२॥

प्रागाग्नीध्रीयप्रणयनात् सोमेऽपि दक्षिणाग्नावेव दक्षिणाग्न्यर्थत्वादाग्नीध्रीयप्रणयनस्य॥

सामतः स्वरित्याहवनीये सर्वतोऽविज्ञाते वा भूर्भुवः स्वरित्याहवनीय एव॥ ३३॥

यदा सर्वेभ्यो वेदेभ्यो युगपद्भ्रेषा आगच्छेयुस्तदा समस्ताभिरेकाहुतिराहवनीय एव कार्या। एवकारग्रहणं समस्ताभिरेकाहुतिराहवनीय एवेतिज्ञापनार्थं। अविज्ञात इति स्मार्त्तानां शौचाचमनादीनां भ्रेषस्य प्रापणार्थं। एते ऋगादयः शब्दा वेदवचनाः न जातिवचनाः।

प्राक् प्रयाजेभ्योऽङ्गारं बहिष्परिधि निर्वृत्तं स्रुवदण्डेनाभिनिदध्यान्मा तपो मा यज्ञस्तपन्मा यज्ञपतिस्तपत्। नमस्ते अस्त्वायते नमो रुद्र परायते। नमो यत्र निषीदसीति॥ ३४॥

प्राक् प्रयाजेभ्य इति स्रुगादापनात् प्राक् कृत्स्नं संगृह्यते बहिः परिधीत्यस्य परिधिशब्दस्य देशोपलक्षणार्थत्वात् सर्वतो निर्वृत्तं गृह्यते, तच्च वक्ष्यमाणैः सूत्रैः स्पष्टयति॥

अमुं मा हिᳫंसीरमुं मा हिᳫंसीरिति च प्रतिदिशमध्वर्यु-

यजमानौ पुरस्ताच्चेत्। ब्रह्मयजमानौ दक्षिणतः। होतृ-पत्नीयजमानान् पश्चात्। आग्नीध्रयजमाना उत्तरतः॥ ३५॥

अध्वर्युं मा हिंसीर्यजमानं मा हिंसीरित्येवमन्तेन मा तप इत्यनेन पुरस्तान्निर्गतमभिनिदध्यात्। एवमुत्तरेष्वपि प्रयोगो द्रष्टव्यः। चशब्दोऽमुमादेः पूर्वेण समुच्चयार्थः। दिगनुक्रमणेन प्रतिदिशशब्दार्थे सिद्ध एव यत् प्रतिदिशग्रहणं करोति तज्ज्ञापयति सर्वदिक्सम्बन्धकर्मानेन क्रमेण कर्त्तव्यमिति॥

अथैनमनुप्रहरेदाहवं यज्ञं *दधे निर्ऋतेरुपस्थात्तं देवेषु परिददामि विद्वान्। सुप्रजास्त्वं शतꣳ हि मामदन्त इह नो देवा मयि शर्म यच्छतेति॥ ३६॥

न स्वाहाकारान्तं।

तमभिजुहुयात् सहस्रशृङ्गो वृषभो जातवेदास्तोमपृष्ठो घृतवान्त्सुप्रतीकः। मा नो हिꣳसीद्धिꣳसितो †दधामि न त्वा जहामि गोपोषञ्च नो वीरपोषञ्च यच्छ स्वाहेति॥ ३७॥ ॥ १२॥

तमिति प्रकृतमेवाङ्गारमभिजुहुयादित्यर्थः॥

इति द्वादशी कण्डिका॥

---

* ददे इति सो० का० मू० पु० पाठः।
† दधामीति सो० का० मू० पु० नास्ति।

प्राशित्रमाह्रियमाणमीक्षते मित्रस्य त्वा चक्षुषा प्रतीक्ष इति। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति। तदञ्जलिना प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति। कुशेषु प्राग्दण्डं निधायाङ्गुष्ठोपकनिष्ठिकाभ्यामसङ्खादन् प्राश्नीयात्। अग्नेष्टास्येन प्राश्नामि बृहस्पतेर्मुखेनेति। आचम्यान् वाचामेत् सत्येन त्वाभिजिघर्मि या अप्स्वन्तर्देवतास्ता इदं शमयन्तु चक्षुः श्रोत्रं प्राणान्मे मा हिंसीरितीन्द्रस्य त्वा जठरे दधामीति नाभिमालभेत। प्रक्षाल्य प्राशित्रहरणं त्रिरनेनाभ्यात्ममपो निनयते॥ १॥

तदित्याहृतस्य प्रतिग्रहणार्थं नाह्रियमाणस्येति। अन्तर्वेदिकुशेषु प्राग्दण्डं प्राशित्रहरणं निधायासङ्खादन् प्राश्नीयात्। असङ्खादन् दन्तैरपीडयन्नित्यर्थः। शौचार्थमाचमनं कृत्वा पश्चान्मन्त्रेणापः पिबेत् पुनरपि प्राग्वत् शौचार्थमाचमनं कुर्यात्। अनेन प्रक्षालितेन प्राशित्रहरणेनात्मानमभिमुखेन हस्तेन च तथाभूतेनात्मनः पुरतस्त्रिरपः सिञ्चेत्॥

मार्जयित्वास्मिन् ब्रह्मभागं निदध्यात्॥ २॥

सर्वैः ऋत्विग्भिरिडाभक्षणस्यानुष्ठेयत्वात् तदङ्गत्वाच्च मार्जनस्यास्मिन्नवसरेऽयमपीडां भक्षयित्वा मार्जनञ्च कृत्वा ततः पश्चा-

चतुर्धाकरणे कृते ब्रह्मण आनीतं ब्रह्मभागं प्राशित्रहरणे निदध्यादित्यर्थः ॥

पश्चात् कुशेषु यजमानभागं ॥ ३ ॥

यस्मिन् देशे प्राशित्रहरणं निहितं तस्य पश्चात् कुशेषु यजमानभागं निदध्यात् न प्राशित्रहरण इत्यर्थः ॥

अन्वाहार्यमवेक्षेत प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वानक्षितिरसि मा मेक्षेष्ठा अस्मिंश्च लोकेऽमुष्मिंश्च ॥ ४ ॥

इतिकाराध्याहारेण सूत्रच्छेदः ॥

प्राणापानौ मे पाहि कामाय त्वेत्यस्पृशन्नवघ्रायाङ्गुष्ठोपकनिष्ठिकाभ्यां शिष्टं गृहीत्वा ब्रह्मभागे निदध्यात् ॥ ५ ॥

अन्येनाङ्गेनास्पृशन्नवजिघ्रेत् अन्वाहार्यं प्राणापानावित्यादिना। शिष्टं पुलाककलामात्रमित्यर्थः। तन्मात्रमन्वाहार्याद् गृहीत्वा ब्रह्मणो भागे निदध्यात् ॥

ब्रह्मन् प्रस्थास्याम इति श्रुत्वा बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्ट बृहस्पते यज्ञमजूगुपः स यज्ञं पाहि यज्ञपतिं पाहि स मां पाहि ॥ ६ ॥

अध्वर्युमन्त्रपाठः प्रस्थास्यामः प्रस्थास्यामीति वा श्रुत्वा प्रतिष्ठेत्येवानुज्ञावचनं ब्रूयादित्येवमर्थं ॥

भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वोऽ३ प्रतिष्ठेति समिधमनुजानीयात्। संस्थिते जघन्य ऋत्विजां सर्वप्रायश्चित्तानि जुहुयात् तमितरेऽन्वालभेरन्॥ ७॥

भूर्भुवः स्वरित्यादेः पाठः समुच्चयार्थः। समिद्ग्रहणं समिदाधानानुज्ञानमपि सत् प्रतिष्ठेत्येवंरूपमेव भवति, नाधेहीत्येवंरूपं। ऋत्विजां कर्मसु संस्थितेषूपरतेषु अनुपरते यजमानकर्मणि जघन्यः सन् सर्वप्रायश्चित्तानि जुहुयात्। अन्याग्नीध्रोऽन्वारभेत ब्रह्माणं। बहुवचनं विकल्पार्थं॥

होतारं वा॥ ८॥

होतारं वेतरेऽन्वारभेरन्॥

एतयोर्नित्यहोमः॥ ९॥

होम एवैतयोः कार्ये अन्वारम्भः परस्परमित्यर्थः॥

सर्वे संस्थाजपेनोपतिष्ठन्त उपतिष्ठन्ते॥ १०॥ ॥ १३॥

सर्वे होमकर्तारोऽन्वारम्भकर्तारश्चेत्यर्थः॥

इति त्रयोदशी कण्डिका॥

इत्याश्वलायनसूत्रवृत्तौ नारायणीयायां प्रथमोऽध्यायः॥ १॥

॥ ॐ ॥

पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः ॥ १ ॥

प्रथमेऽध्याये दर्शपूर्णमासौ व्याख्यातौ विध्यन्तसहितौ। उत्तरत्रेष्टयः पशवश्च वक्ष्यन्ते विध्यन्तरविहिताः। तेषां विध्यन्तरापेक्षास्ति यथार्हं।

'नहि तत्कारणं लोके वेदे वा किञ्चिदीदृशं।
इतिकर्तव्यता साध्या यस्य नानुग्रहे स्थिता'॥ इति।

एवञ्च तदपेक्षायां सत्यां तदपि वैदिकमेव श्रौतमेवेत्यपि सिद्धे श्रौतेषु चाग्निहोत्रिकदार्शपौर्णमासिकसौमिकेषु त्रिषु सत्स्विदमिति विध्यन्तरविशेषग्रहणे चोदनासामान्यं स्वरूपसामान्यञ्च मुक्त्वान्यस्य विशेषलिङ्गस्याभावात् तैरेव विशेषलिङ्गैर्विध्यन्तरविशेषः परिगृह्यते। तानीमानि विध्यन्तरविशेषग्रहणलिङ्गानि।

निर्वपेत् तद्धितञ्चाज्यमौषधं च पयो दधि।
कपालानि च तत्सङ्ख्या देवता शब्द एव च॥
तस्मिन्नचरसङ्ख्या च तद्वाच्ये ह्येकवन्नपि।
द्रव्यत्वं प्राकृतः शब्दो हविषः प्रभवादि च॥
एतद्ब्राह्मणशब्दश्च तद्वदित्युपदेशनं।
नामधेयं तथा व्यक्तचोदना चान्यदीदृशं॥
लिङ्गान्येतानि चान्यानि गुरूणि च लघूनि च।
समीक्ष्य प्रकृतिस्त्वेयं विकृतिस्त्वेति कल्पना॥
द्रव्यदैवतयोर्यत्र विरोधस्तत्र निश्चये।
तत्र द्रव्यं बलीयः स्याद्देवताया इति स्थितिः॥

यत्र सर्वासामिष्टीनां दर्शपूर्णमासौ प्रकृती तत्र विशेषलिङ्गात् कासाञ्चिद्दर्शः प्रकृतिः, कासाञ्चित् पौर्णमासीत्येव समीक्ष्य व्यवस्था कल्पनीया। एवं सर्वेषां पशूनां दर्शपूर्णमासावेव प्रकृती, तद्धितादिविशेषलिङ्गात् अग्नीषोमीयस्य पशोरन्येषाञ्च। अत्र न्यायविद आहुः 'अग्नीषोमीयस्य पशोर्दर्शपूर्णमासौ प्रकृती नान्येषां पशूनां, स चातिदेशिकैरौपदेशिकैश्च *सम्बद्धोऽन्येषां पशूनां प्रकृतिः, एवं सत्युपकारप्राप्तिरखण्डिता भवति' इति। सत्यमेषां न्यायविदां स्थितिः, किन्त्वत्र कल्पसूत्रकाराणामेवं प्रवृत्तिः, 'सर्वेषु पशुषु दार्शपौर्णमासिको विध्यन्तो दर्शपूर्णमासाभ्यामेव प्राप्नोति, अग्नीषोमीयाच्च पशोः पाशुकः' इति। अत एवास्मिन् सूत्रेऽग्नीषोमीयमनुक्त्वा पशुसामान्यवाचिनं पशुशब्दमेव प्रयुक्तवानाचार्यः। †तेन चैत्रायमतिदेशः सर्वेषां पशूनां, नाग्नीषोमीयस्यैवेति गम्यते। अत एव भाष्यकारः, 'अथ सवनीयेन' इत्यस्मिन् सूत्रे यद्दैवतग्रहणस्येदं प्रयोजनमुक्तवान्। अनुक्तदेवतानामपि पशूनां सवनीयत्वप्राप्तौ तेषामपि समाम्नातत्वं भवतीति, समाम्नातत्वे च वार्त्रघ्नावाज्यभागस्य लाभः प्रयोजनं नान्यत्, अतः सर्वपशूनामतिदेशः सिद्धः। तत्राग्नेय उपांशुयाजोऽग्नीषोमीय इति पूर्णमाससंज्ञका यागाः। आग्नेय उपांशुयाज ऐन्द्राग्न इत्यसन्नयतोऽमावास्यायां सन्नयत ऐन्द्राग्नस्य स्थाने ऐन्द्रो महेन्द्रो वा दधिपयसी इति, तयोः समुदाययोरपि पौर्ण-

---

* सम्बद्ध इति सं० पु० द्वये। † ते चैवेति उक्तपु० द्वयं।

मासममावास्यानामनी भवतः। अनयोस्तन्त्रं साधारणं। एतावानेव भेदः प्रधानदेवता आज्यभागयोरनुवाक्ये च। यच्च प्रधानदेवता विकृतिषु प्रत्यक्षाम्नातातिदेशव्यापारो नास्ति। अतयाविशेष्यादाज्यभागानुवाक्ययोरेवातिदेशः फलति। एवं स्थिते अस्मिन्काण्डे समाम्नाता इष्टयः पशवश्च स्वप्रकरणेऽविशेषिताज्यभागाश्च। तेषां मध्ये केषाञ्चिद्वार्त्रघ्नाज्यभागतां मत्वा तदुपदेशार्थमेतत्सूत्रं प्रणीतवानाचार्यः। तस्यायमर्थः। उपदिष्टाः समाम्नाता इत्यर्थः। अनुवादत्वेन चायं शब्दः सम्बध्यते। अतोऽयमर्थः सूत्रस्य, यस्मिन्काण्डे उपदिष्टा इष्टयः पशवश्चापि अविशेषिताज्यभागास्ते सर्वे वार्त्रघ्नाज्यभागा इति। पौर्णमासेनेत्यस्यायमर्थः, पौर्णमासेन व्याख्याता इति वार्त्रघ्नाज्यभागा इत्यर्थः। तेन समाम्नातानामिष्टीनां पशूनाञ्च अन्यदेवतागममात्रः सिद्धो भवति। तथा चोक्तमिष्ट्ययनप्रकरणे 'असमाम्नातास्वर्थात् तन्त्रविकारः' इति। तच्च पशूनामपि प्रदर्शनार्थत्वेनोक्तमिति द्रष्टव्यं। सोमग्रहणमुत्तरार्थं। अत्रापि किञ्चित् प्रयोजनमस्ति। याज्याधर्मा निरसनादयस्त्वेवम्प्रकाराः श्रुतावनारभ्याधीता अप्यस्मिन्काण्डे दर्शपूर्णमासप्रकरणविहितास्तेषां प्रापणायेति॥

## तैरमावास्यायां पौर्णमास्यां वा यजेत॥ २॥

तैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्यां वा यागः कर्त्तव्य इति इष्टिपशूनां प्रकृतिप्राप्त एवायं कालः पुनर्विधीयते द्व्यहकालतां निवर्त्य सद्यस्कालताप्राप्त्यर्थं। किञ्च दर्शप्रकृते-

रमावास्या पौर्णमासप्रकृतेः पौर्णमासीत्येवं नियमं निवर्त्य अनियमेन उभयकालताप्राप्त्यर्थं। प्रकृत्यविरोधात् पर्वण-स्तदत्यहोरात्रे विकृतिः कर्तव्या। यदाऽऽहः पूर्वभागे पर्वः स्यात् तदा प्रकृतिं कृत्वा विकृतिः कार्या। तदा परभागे रात्रौ वा तदा विकृतिं कृत्वा प्रकृतिः कार्येति सोमस्यायमप्राप्तः कालो विधीयते। इष्ट्यादिशब्दसम्बन्धादेव यजेतेत्यपि सिद्धे यजेतेति-वचनं सोमस्य याग एवानयोः कालयोः सम्पादनीयो *नान्यत् दीक्षादीति॥

राजन्यस्याग्निहोत्रं जुहुयात्॥ ३॥

क्षत्रियस्याग्निहोत्रहोमः पर्वणोरेव कर्तव्यो नान्यस्मिन् काल इति। चशब्दाद्वैश्योऽप्यनयोरेव कालयोरग्निहोत्रं जुहुयात् नान्यस्मिन्नित्यवगम्यते। कथमनयोरन्यस्मिन् काल इत्याह॥

तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत्॥ ४॥

तपस्वी कर्मनिरतस्तस्मै ब्राह्मणाय, अतपस्विनेऽपि ब्रा-ह्मणायैव दद्यात् न जात्यन्तराय तपस्विनेऽपीति। इतरं कालमिति, इतरेषु सर्वेष्वग्निहोत्रकालेष्वित्यर्थः। भक्तमुपह-रेत्, भक्तं पक्वोदनं पक्वान्नमुपहरेत् दद्यात्। एतदुक्तं भवति। राजन्यवैश्ययोः पर्वण्यग्निहोत्रकालद्वयं वर्जयित्वा इतरेषु का-लेषु ब्राह्मणायोदनं दातव्यं, न होमः कर्तव्य इति। अग्नि-धारणन्तु क्रियत एव॥

* दीक्षादीनि इति सं॰ पु॰ द्वये।

ऋतसत्यशीलः सोमसुत् सदा जुहुयात् ॥ ५ ॥

ऋतं वाङ्मनसयोः सत्यत्वं। सत्यं वाच एव। ऋतसत्यस्वभावः सोमयाजी च यः क्षत्रियो वैश्यो वा स सदा जुहुयादग्निहोत्रं न पर्वणोरेव। ऋतशब्देनैव सत्यशब्दे सिद्धे सत्यग्रहणं वाक्सत्यस्वभावस्यापि सर्वदा होमसिद्ध्यर्थं ॥

बहुषु बहूनामनुदेश आनन्तर्ययोगः ॥ ६ ॥

समानानामिति शेषः। अनेकेषु विहितेषु तानुद्दिश्यानेकेषां समानानां अनुदेशे पश्चाद्विधाने सत्यानन्तर्ययोगः क्रमेण सम्बन्धः स्यादित्यर्थः ॥

द्वे द्वे तु याज्यानुवाक्ये ॥ ७ ॥

याज्यानुवाक्ययोर्देवताभिरेव आनन्तर्ययोगो भवति। एकस्या एकस्या देवताया द्वाभ्यां द्वाभ्यामृग्भ्यां नैकैकस्या एकैकयेति ॥

अदृष्टादेशे नित्ये ॥ ८ ॥

यदि क्वचिदनेका देवता विधाय, कस्याश्चिद्देवताया स्वलिङ्गयोर्याज्यानुवाक्ययोर्विधिं न कुर्यात् तदा नित्ये ग्रहीतव्ये इत्येकोऽर्थः। अयमपरोऽर्थः गृहीतत्वात् पुनस्ताभ्यां विहिताभिस्सह देवताभिरानन्तर्ययोग इति। आदेशो विधिरित्यर्थः। नित्ये उक्ते इत्यर्थः ॥

अग्न्याधेयं ॥ ९ ॥

अग्न्याधेयप्रभृतित्वं कर्मणामनुष्ठानस्योक्तं। अनुष्ठानक्रमेणैव

व्याख्यानमपीत्युक्तं। तत्रोपोद्घाताद्दर्शपूर्णमासौ व्याख्यातौ। तत्प्रसङ्गादतिदेशः। तत्प्रसङ्गात् कालविधिः। तत्प्रसङ्गादेवाग्निहोत्रहोमप्रकारविधिः। परिभाषाप्रसङ्गात् कथञ्चिदानन्तर्ययोगविधिः। सूत्रत्रयेणैवं गते सति प्रथमप्राप्तमाधानमुच्यते। विशिष्टकाले विशिष्टदेशे विशिष्टपुरुषेण विशिष्टैर्मन्त्रैर्गार्हपत्याद्यग्न्युत्पत्त्यर्थं यदङ्गाराणां निधानं तदग्न्याधेयमुच्यते। अग्नीनामाधेयमग्न्याधेयं, तत्कर्तव्यं इत्यर्थः। कस्मिन् काल इत्याह॥

**कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोः॥ १०॥**

फल्गुनीष्विति पूर्वे उत्तरे च गृह्येते, अविशेषाद्बहुवचनाच्च। प्रोष्ठपदास्तूत्तरे एव। अतः सप्त एतानि नक्षत्राणि, तेषामेकस्मिन्नक्षत्रेऽग्न्याधेयं कर्तव्यमित्यर्थः॥

**एतेषां कस्मिंश्चित्॥ ११॥**

एतेषां कस्मिंश्चित् पर्वणि। एवमेतत्सूत्रमर्थतो द्रष्टव्यं। उत्तरञ्च सूत्रं 'वसन्ते पर्वणि ब्राह्मण आदधीत' इति। एवं कृते सर्वमनुगुणं भवति। एतेषां नक्षत्राणां कस्मिंश्चिन्नक्षत्रे पर्वणि वाग्न्याधेयं कर्तव्यमितीदं सूत्रं पर्वनक्षत्रसमुच्चयमग्न्याधेयस्य कालत्वेन विदधाति। पूर्वसूत्रन्तु केवलं नक्षत्राणामेवाधानसम्बन्धं विदधाति। अतो द्वौ पक्षौ स्तः। समुच्चयस्तत्र प्रथमः कल्पः। तदसम्भवे केवलं नक्षत्रमेवेति विनिवेशो युक्तः। इदं कल्पद्वयं सोमाधानवर्जितेषु सर्वेष्वाधानेषु भवति॥

वसन्ते पर्वणि ब्राह्मण आदधीत ॥ १२ ॥

इदमपि सूत्रमर्थत एवं भवति। अनेन वसन्ते ब्राह्मणगुणकमाधानं विधीयते॥

ग्रीष्मवर्षाशरत्सु क्षत्त्रियवैश्योपक्रुष्टाः ॥ १३ ॥

वैश्यस्तक्षकर्मोपजीवी उपक्रुष्ट इत्युच्यते। अस्मिन् सूत्रे त्रीण्याधानानि विधीयन्ते। ग्रीष्मे क्षत्त्रियगुणकं, वर्षासु वैश्यगुणकं, शरदि उपक्रुष्टगुणकञ्च। एते वसन्तादयः शब्दा ऋतुवाचकाः। ऋतवो नाम षट्। वसन्तग्रीष्मवर्षाः शरद्धेमन्तशिशिराः। ते च चैत्रमासमारभ्य द्वौ द्वौ मासावृतवः। वसन्तादयो मासाश्चैत्रादय एव॥

यस्मिन् कस्मिंश्चिदृतावादधीत ॥ १४ ॥

आदधीतेति प्रकृते पुनरादधीतेतिवचनं आपत्कल्पोऽयमाधानविधिरिति दर्शयति। अत्यापदि मुमूर्षाः सर्वेष्वृतुषु आधानं कर्तव्यं नैवानाहिताग्निर्म्रियेतेति। इदञ्चापरमाधानं, पूर्वोक्तानि चत्वारि, तेषु सर्वेषु पर्वनक्षत्रविधय उपसंहर्तव्याः, न पर्वर्तुस्वातन्त्र्येणाधानस्य कालविधयो भवेयुः। अत एव सूत्रकारः पर्वनक्षत्रविधीनामृतुविधिभिः सम्बद्धानामेवाधानकालताप्रदर्शनार्थमेवैतेषां कस्मिंश्चिद्वसन्त इति पर्वनक्षत्रसमुच्चयविधिपरे सूत्रे उत्तरसूत्राय पठितव्यं ऋतुशब्दं व्यतिषज्य पठितवान्। पर्वनक्षत्रविध्योर्ऋतुविध्युपसंहारे न्यायविरोधस्य नास्ति, तत्रैव तयोरन्तर्भावदर्शनादिति॥

सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रं ॥ १५ ॥

अद्यैव सोमेन यक्ष्य इति सङ्कल्प्य य आधानमिच्छेत् स आधानस्य कालं नावेक्षेत, सोमोपक्रमकालमेवादधीतेत्यर्थः। अयमपि मुख्य एवाधानकालः। ऋतुनक्षत्रनिरपेक्षवचनं पर्वणोरपि प्रदर्शनार्थं। अस्य मूलं यदहरेवैनमिति सोमाधानस्य विधायकं, न सोमस्य। तेन वसन्तसम्बन्धित्वं सोमस्य न बाध्यते, इक्षु[illegible]ना तु बाध्यते, सोमाधानयोरानन्तर्यविधानादिति ॥

अश्वत्थाच्छमीगर्भादरणी आहरेदनवेक्षमाणः ॥ १६ ॥

शम्या गर्भः शमीगर्भः। शमीगर्भादश्वत्थादरण्याहरणं कुर्यात्। तच्चाधानार्थं, आहरणे कृते अध्वर्युणा अरण्याहरणे क्रियमाणे तेन सह यजमानोऽप्यनेन मन्त्रेणाहरेत्। अनवेक्षमाणः पृष्ठतोऽनवेक्षमाणः। अयञ्चापरोऽर्थः, कथं न कुर्यामिति नान्यदपेक्षमाणः, अध्यवसिताधान इत्यर्थः ॥

यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा। तं त्वाहरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति, पूर्णाहुत्यन्तमग्न्याधेयं॥१७॥

पूर्णाहुतिरन्ते यस्य तत् पूर्णाहुत्यन्तं, अग्न्याधेयं कर्तव्यं। तच्चाग्न्याधेयमरण्याहरणादि पूर्णाहुत्यन्तं भवतीत्यर्थः। अस्य सूत्रस्य प्रयोजनं पूर्णाहुत्यन्ते आहिताग्नित्वप्राप्तिः कथमिति

येत्। श्रुतावेवमाम्नातं। ‘अग्नयः पुरुषार्थसाध्याः’ इति प्रस्तुत्य ‘वसन्ते ब्राह्मणोऽग्नीनादधीत’ इत्येवमादीनि वसन्तादिकालानि ब्राह्मणादिकर्तृकाणि कर्तृगामिक्रियाफलयुक्तानि निरधिकाराणि आधानानि विधाय, “ततोऽरणी आहरेत्, सम्भारान् सम्भरेत्, अग्न्यायतनानि कुर्यात्, केशश्मश्रु वपेत्, ब्राह्मौदनिकमौपासनिकं निदध्यात्, तस्मिन् ब्रह्मौदनं पचेत्, समिध आदध्यात्, आयतनेषु सम्भारान्निदध्यात्, ब्राह्मौदनिकमरण्योः समारोप्य मथित्वा गार्हपत्यादीनादध्यात्, तत्र काश्चित् समिध आदध्यात्, अग्निहोत्रं जुहुयात्, पूर्णाहुतिं जुहुयात्, तत आग्नेयमष्टाकपालं निर्वपेत् तदहरेव, तदहरादिसंवत्सरान्तानां कालानां कस्मिंश्चित् काले पवमानहवींषि निर्वपेत् ततस्वान्यानि हवींषि” इति। तथाऽऽहिताग्निः क्षिप्रं दारु नाभ्यादध्यादित्याद्याहिताग्निव्रतानि चाम्नातानि। तथाग्निमत्तायां सिद्धायां अग्निहोत्रादीनि नित्यनैमित्तिककाम्यानि कर्माणि तत्र तत्राम्नातानि, तत्र कस्मिन्नवसरे आहिताग्निव्रतप्राप्तिः, कस्मिन्नवसरे अग्निहोत्रादीनामारम्भ इति तद्विवेकार्थमिदं सूत्रद्वयं। तत्र पूर्वेण सूत्रेण श्रुत्यादिभिः प्रकरणरहितैः पञ्चभिः प्रमाणैर्यावन्तः पदार्थाः आधानविधिना सम्बध्यन्ते तावत्सु समाप्तेषु आधानसमाप्तिः, आधानसमाप्तौ चाहिताग्निव्रतसमाप्तिरित्येतत् प्रतिपादयितुं पूर्णाहुत्यन्तमित्युक्तवानाचार्यः। उत्तरेण चाग्निहोत्राद्यारम्भकालं प्रतिपादितवान्॥

यदि त्विष्टयस्तनुयुः ॥ १८ ॥

अग्नीनेवेति वाक्यशेषः। यद्यनधिकारत्वादाधानविधेर्विनियोजकस्य प्रकरणस्य व्यापारासम्भवादाधानाङ्गमिष्टयो न स्युः, इष्टीनाञ्चानधिकारत्वादिष्ट्यङ्गमाधानं न स्यात्, तथापि न कश्चिद्दोषः, अग्न्यर्थत्वेनैवोभयोरप्यनुष्ठानसिद्धेः। नन्विष्टीनामग्निसम्बन्धाभावादग्न्यर्थता न सम्भवतीति चेत्। न, 'यदाहवनीये जुह्वति' इत्येवमादिभिरग्निसम्बन्धोऽस्ति। नन्वेष सम्बन्धः साधनत्वेन न दृश्यते। सत्यमेव न दृश्यते, तथाप्याहवनीयादिष्वग्निषु साध्यत्वबुद्धेरनुवर्त्तमानत्वादन्यस्य च साध्यस्यानवगमाद्राविसत्रन्यायेनाग्नय एवेष्टिभिः साध्या इत्येवमाश्रयितुं युक्तं, आनर्थक्याश्रयणादधिकारान्तरकल्पनाश्रयणाच्चेति। तत्राधानेनेष्टिभिश्चाग्निसिद्धिर्भवति, न तयोरन्यतरेण। तेन सिद्धमग्निहोत्रादीनामग्निसाध्यानामिष्टिभ्य उत्तरकालमेवारम्भ इति। अस्मिन्नर्थे सूत्रयोजना। यद्यासामिष्टीनामाधानाङ्गता न स्यात् तथापि आहवनीयाद्यग्निसम्बन्धात् तानेवाग्नीनिष्टयस्तनुयुः विस्तारयेयुः कुर्युः साधयेयुरित्यर्थः। तुशब्दस्तु साधानादिषु विशेषं दर्शयति। आधानेऽग्नीनां साध्यत्वेन सम्बद्धानामेव साध्यत्वं। इष्टिषु साधनत्वेन सम्बद्धानामपि कल्पनागौरवभयात् साध्यत्वमिति विशेषं ग्टह्णीमः। एवं यद्याधानेनेष्टिभिश्चाग्नय एवांशतः साध्या इत्यनधिकाराणां कथमनुष्ठानसिद्धिरिति न्यायविदामेष उपालम्भो नास्माकं। अस्माकं तु साध्यसाधनसम्बन्धेऽवगते

तदर्थिनां कर्तृत्वेनावगतानां ब्राह्मणादीनां कथञ्चिदधिकार-कल्पनयानुष्ठानसिद्धिः। अथवाऽनधिकाराणाममन्त्राशेषाणामपि तत्साधनसाध्यरूपेणोपकारकत्वेन कामं श्रुतिप्रयुक्त्यैवंविधाना-मनुष्ठानसिद्धिरित्यलमतिविस्तरेण ॥

प्रथमायामग्निरग्निः पवमानः ॥ १९ ॥

प्रथमायामिष्टौ द्वे देवते। अग्निः प्रथमः केवलः। द्वितीयः पवमानगुणकोऽग्निः। केवलस्याग्नेर्नित्ये एव ॥

अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः ॥ २० ॥

एते द्वितीयस्य पवमानगुणकस्य ॥

स हव्यवाडमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृतः सं-याज्ये इत्युक्ते सौविष्टकृती प्रतीयात् ॥ २१ ॥

सौविष्टकृत्योर्याज्यानुवाक्ययोर्ऋचोरनेन संयाज्ये इति संज्ञा विधीयते ॥

सर्वत्र देवतागमे नित्यानामपायः ॥ २२ ॥

सर्वत्रेति प्रकरणान्तरेऽपीति दर्शयति। देवतागम इत्यत्र समासनिर्देशस्य तुल्यत्वाद्देवतायाः देवतयोर्देवतानां वा आगम इत्येवं भवति। नित्यानां प्राकृतीनामित्यर्थः। अपाय उद्धार इत्यर्थः। एतदुक्तं भवति। विकृतौ देवतायाः एकस्या आगमे द्वयोर्बह्वीनां वा आगमेऽपि प्राकृतीनां सर्वासामुद्धार इति।

यस्यां पुनर्विकृतौ इष्टिचोदनां कृत्वा देवतां न विदधाति, तत्र नोङ्कारः प्राकृतीनां। तत्र ता एव देवता भवन्तीत्यर्थः। यथा गदितः 'सोमेन पशुना इष्ट्वा वा' इत्यादौ ॥

याः स्विष्टकृतमन्तराज्यभागौ च तास्तत्स्थाने ॥ २३ ॥

नित्यानामपाय उक्तः। तत्र किं सर्वा नित्या उद्धर्तव्याः उत काश्चिद्देवतेत्येतं संशयं निवर्तयति। यो आज्यभागौ स्विष्टकृतं चान्तरा देवता यष्टव्यास्ता उद्धर्तव्याः। याः पुनर्विकृतौ विहितास्तास्तत्स्थाने 'उद्धृतानां प्राकृतीनां स्थाने भवन्ति' इति वचनात्, तद्धर्मिकाश्च भवन्तीति गम्यते ॥

एष समानजातिधर्मः ॥ २४ ॥

योऽयमतिदिष्टो विधिर्देवताभ्योऽन्यत्रापि स समानजातीयेषु भवति। समानजातीय एककार्य इत्यर्थः ॥

द्वितीयस्यां वृधन्वन्तौ। अग्निः पावकोऽग्निः शुचिः स नः पावकदीदिवोऽग्ने पावकरोचिषाऽग्निः शुचिव्रततम उदग्ने शुचयस्तव ॥ २५ ॥

एकः पावकगुणकोऽग्निः, अपरः शुचिगुणकः ॥

साक्षान् विश्वा अभियुजोऽग्निमीडे पुरोहितमिति संयाज्ये। तृतीयस्यां सामिधेन्यावावपते प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे ॥ २६ ॥

आवपते इतिवचनात् अधिके एते सामिधेन्यौ भवतः। प्रथमस्यां द्वितीयस्यां तृतीयस्यामितिवचनात् यस्यामिष्टौ यत् तन्त्रं विहितं तस्यामेकदेवतायामपि तत् तन्त्रं भवति, न यथोक्तनानादेवतायामेवेति॥

धाय्ये इत्युक्त एते प्रतीयात् पुष्टिमन्तावग्निना रयिमश्नवदग्नयस्फानो अमीवचेति। अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि॥ २७॥

त्रयाणामेको गृह्यते॥

अदितिः॥ २८॥

अदितिस्तान्या, अस्यां द्वे देवते॥

उत त्वामदिते महि महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम। तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिं॥ २९॥

एषा कश्यपा॥

प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजावित्युक्त एते प्रतीयादिति तिस्रः॥ ३०॥

इत्येतास्तिस्र इष्टयोऽनुक्रान्ता इत्यर्थः। उक्तानुकीर्त्तनमुत्तरार्थं। यदाद्योत्तमे वैव स्यातामाद्या वेति पञ्चस्वदापि ति-

मृधामिष्टीनां यावत्यो देवतास्ताः सर्वा यष्टव्या इत्येवमर्थं। आद्योत्तमपक्षे मध्यमायां ये देवते ते आद्यायामेव प्रवेष्टव्ये। यदा पुनराद्यैव तदा सर्वा देवता आद्यायामेव प्रवेष्टव्या इत्येवमर्थं॥

आद्योत्तमे वैव स्यातां॥ ३१॥

इष्टी इति शेषः॥

आद्या वा॥ ३२॥

आद्यैव वेष्टिर्भवतीत्यर्थः॥

तथा सति तस्यामेव धाय्ये विराजौ॥ ३३॥

यद्याद्यैव भवति तदा द्वितीयतृतीययोरपि देवतास्तत्र भवन्तीत्युक्तं। अतस्तस्यामेव धाय्ये विराजौ भवतः। धाय्याविराजामनुप्रवेशस्य निमित्तं तृतीयस्या इष्टेर्देवतानुप्रवेश इत्येवमर्थं तथा सतीत्युक्तं॥

इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात्॥ ३४॥

पौर्णमासतन्त्रायामिष्टौ धाय्याविराण्मात्रे विकारे सति सेष्टिर्वैराजतन्त्रेति वेदितव्या॥

आधानाद् द्वादशरात्रमजस्राः॥ ३५॥

अथाधानमिष्टीश्चोक्त्वा आधानादूर्द्धं द्वादशरात्रमजस्रा इत्युक्तं। तस्यायमभिप्रायः, यावता कर्मसमुदायेनाग्नीनां

सिद्धिर्भवति तावतः कर्मसमुदायस्याधानशब्दो वाचक इति ज्ञापयितुं। तेनाग्न्याधेयं पुनराधेयं वेत्यत्र सेष्टिकस्याधानस्य ग्रहणं भवतीति सिद्धं। आधानेनेष्टिभिश्च सिद्धा अग्नयो द्वादशाहोरात्राणि सर्वे स्वरूपेणैव धार्यन्ते। एतदजस्रधारणमग्निहोत्रपूर्व एवाधाने भवति, अग्निहोत्रस्यैवानन्तरमुच्यमानत्वात्। अनुष्ठानक्रमेणैव कर्मणां व्याख्यानमित्युक्तत्वाच्च। इष्टिपूर्वे च सोमपूर्वे च शास्त्रान्तराण्यालोच्य विचारणीयं। तत्रायं विचारः। इष्टिपूर्वेऽजस्रधारणं नास्ति, आपस्तम्बवचनात्। 'अन्यमाहवनीयं प्रणीयाग्नीनन्वादधाति' इति। इष्ट्यर्थतयान्यस्य प्रणयनस्य विधानात्। 'अपवृज्य श्वो भूते पौर्णमासेन यजेत' इति अपवर्जनविधानाच्च। तथा सोमपूर्वेऽपि नास्ति। तस्मात् 'दीक्षितो द्वादशाहं भृतिं वन्वीत' इति। प्रकृतौ द्वादशदीक्षानियमादुपसद्भिः सुत्यया च सह षोडशाहानि प्रकृतेः कालः। अजस्रधारणन्तु द्वादशाहपरिच्छिन्नं। सोममध्ये विहरणस्य वा सम्भवः, दीक्षणीयासंस्कृतेष्वग्निषु सोमयागविधानात्। अत इष्टिपूर्वे सोमपूर्वे चाजस्रधारणं नास्तीति सिद्धं। अग्निहोत्रपूर्वेऽपि यदाऽर्वागिष्टिकालात् द्वादशाहानि न पूर्यन्ते तदा कथं तत्रैते पक्षाः, अजस्रेष्विष्टिकरणं, इष्टिलोपः, यथासम्भवमजस्रधारणं, अजस्रलोप इति। तत्र यथासम्भवमजस्रधारणपक्षो दुराश्रयः। तथा विध्यभावात्, द्वादशाहकालविशिष्ट एवासौ विधिः श्रूयते, नान्यकालविशिष्ट इति। तथेष्टिलोपपक्षोऽपि न सम्भवति। अग्निमत्तायां सिद्धायां

पौर्णमासकाले आगते तदनारम्भे प्रमाणाभावात्, अक्रियायां प्रायश्चित्तोपदेशाच्च। एवं चेदजस्रेष्वेव पौर्णमासो भवतु को दोषः, स्वार्थ एव प्रणीतेऽप्याधानदर्शनात्, अपवर्जनविधानाच्चेति। नन्वग्निहोत्रमपि स्वार्थ एव प्रणीत आहवनीये भवति, 'अर्थायार्थायाग्निं प्रणयति' इत्यस्याविशिष्टत्वात्। सत्यमविशिष्टं, तथाप्याधानानन्तरं धारणविधेः प्रवृत्तत्वात् तदवस्थेष्वेवाग्निष्वग्निहोत्राधिकारस्य प्राप्तस्य त्यागे प्रमाणाभावात् तेष्वेवाग्निहोत्रहोमो युक्तः। एतमेव न्यायमनुसृत्योक्तं भगवतापस्तम्बेन, 'द्वादशाहमजस्रेष्वग्निषु यजमानः स्वयमग्निहोत्रं जुहुयात्' इति। तथा प्रणीते चेदग्निहोत्रकाल एतस्मिन्नेवाग्निहोत्रं जुहुयात् एवमन्यत्र विप्रक्रान्ते तन्त्र इत्यग्निहोत्रस्यान्यार्थेष्वपि प्रवृत्तिदर्शनान्नात्रायं दोष इति गम्यते। अतः अग्निहोत्रस्यान्यार्थेष्वपि प्रवृत्तिदर्शनादाधानानन्तरमग्निहोत्रस्यानन्यार्थाहवनीयासम्भवादजस्रेष्वेवाग्निहोत्रहोमो न विरुध्यते। पौर्णमास्याः पुनर्द्वादशाहोत्तरकालवर्तिन्याः स्वार्थाहवनीयसम्भवादजस्रेष्वेतस्याः प्रवृत्तिर्विरुध्यते। अतोऽजस्रेष्विष्टिकरणमित्ययमपि पक्षो न सम्भवति। नन्वजस्रलोपपक्षेऽप्याधानात् 'द्वादशरात्रमजस्राः' इति नित्यवदाम्नानं विरुध्यते। न विरुध्यते, अस्य नित्यत्वासम्भवात्। उक्तं हि। 'इष्टिपूर्वं सोमपूर्वं वा प्रवृत्तिकरणम्' इति। तस्मादस्य विध्यन्तरानुपरोधेन प्रवृत्तिदर्शनात्, अकरणे च प्रायश्चित्ताभावात्। अस्मिन् विषयेऽजस्रलोप एव श्रेयानिति वक्तुं युक्तं॥

अत्यन्तं तु गतश्रियः ॥ ३६ ॥ ॥ १ ॥

अत्यन्तं यावज्जीवमित्यर्थः । गतश्रियः 'त्रयो वै गतश्रियः' इति श्रुतावुक्ताः । गतश्रियामग्नयो यावज्जीवमजस्रा भवन्ति, न द्वादशाहमेवेति ॥

द्वितीये प्रथमा कण्डिका ॥ * ॥

उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैश्ययोनय इत्येके ध्रियमाणं वा प्रज्वल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत् ॥ १ ॥

उत्सर्गे अजस्रोत्सर्गे अग्निहोत्रहोमार्थं विहरेत्, नाजस्रेषु । होमस्त्वजस्रेष्वपि भवतीत्युक्तं । एवं स्थिते विहरणसहितमग्निहोत्रहोमप्रयोगं वक्तुकाम उत्सर्ग इत्युक्तवान् । अत्रापराह्णशब्देन अह्नश्चतुर्थभागो गृह्यते । विहरणकाले गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत् । चतुर्णां वर्णानामन्यतमस्य द्रव्यवतो वा गृहात्, गार्हपत्याद्वा । धार्यमाणं प्रज्वलयेत् । काले काले यदि निर्मन्थ्यः तदा मन्थेत् । एषां प्रकाराणामुत्पत्तिवशाद्व्यवस्था । तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्यात् ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत् । पात्रान्तरेण पृथक् कुर्यादित्यर्थः ॥

देवं त्वा देवेभ्यः श्रिया उद्धरामीत्युद्धरेत् ॥ २ ॥

अनेन मन्त्रेणाग्निं सर्वार्थमुद्धरेत्। पूर्वस्योद्धरेदिति वचनस्येदं प्रयोजनं, गार्हपत्यं प्रज्वल्येत्यादेराहवनीयं ज्वलन्तमुद्धरेदित्येतस्य मन्त्रवर्जितोद्धरणप्रकारस्य सर्वार्थत्वज्ञापनं। एवं सर्वार्थमुद्धरणं विदधता एतत् साधितं भवति, येनाग्निना यत्र प्रयोजनं तत्र तस्योद्धरणं कर्तव्यमिति। शाखान्तरे स्पष्टं वचनमस्ति, 'सर्वाथार्थायाग्निं प्रणयति' इति। उद्धरणमन्त्रोऽयमग्निशोचे एव नान्यत्रेति सिद्धं ॥

उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वांश्चकार। अह्ना यदेनः कृतमस्ति किञ्चित् सर्वस्मान्मोद्धृतः पाहि तस्मादिति प्रणयेत् ॥ ३ ॥

प्रणयेत् प्राकृयेत्। अग्निमाहवनीयं प्रत्यनेन मन्त्रेण ॥

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ। तयानन्तं काममहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहेति निदध्यादादित्यमभिमुखः ॥ ४ ॥

आदित्याभिमुखो भूत्वानेन मन्त्रेणाहवनीयायतनेऽग्निं निदध्यादित्यर्थः ॥

एवं प्रातर्व्युष्टायान्तमेवाभिमुखः ॥ ५ ॥

एवमेव प्रातर्होमार्थमप्यादित आरभ्य निधानान्तं कुर्यात्। तमेवाभिमुखो निधीयमानमाहवनीयाभिमुख इत्यर्थः। एवं सति प्रातःकाले आहवनीयायतनात् पश्चात्स्थितेन निधानं भवति। सायन्तु पुरस्तात्स्थितेन, व्युष्टायामुषसि उदितायामादित्योदयात् प्राक्॥

रात्र्या यदन इति तु प्रणयेत्॥ ६॥

प्रणयनमन्त्रे अह्ना यदेन इत्यस्य स्थाने रात्र्या यदेन इति कर्तव्यं प्रातःकाले॥

अत ऊर्द्ध्वमाहिताग्निर्व्रतचार्याहोमात्॥ ७॥

सत्रिधर्माश्चातुर्मास्यव्रतान्यत्र व्रतशब्देनोच्यन्ते। विहरणादूर्द्ध्वमग्निहोत्रहोमप्रयोगसमाप्तेर्व्रतचारी भवत्याहिताग्निः॥

अनुदितहोमी चोदयात्॥ ८॥

अनुदितहोमी चेत् समाप्तेऽपि प्रयोगे आोदयाद्व्रतचारी भवेत्॥

अस्तमिते होमः॥ ९॥

अस्तमिते होमः कर्तव्यः। अङ्गान्यपि प्रधानकाले कर्तव्यानि। यत् पुनरङ्गं विहरणवत् स्वकालविशिष्टं तत् स्वकाल एव कर्तव्यं॥

नित्यमाचमनं॥ १०॥

उक्तं प्राङ्मुखस्याचमनं यत् पुरस्तात् तदिह।नां कर्तव्यमस्याकुलाय ॥

ऋतसत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत् त्रिस्त्रिरेकैकं पुनः पुनरुदकमादाय ॥ ११ ॥

पर्युक्षणमन्त्रोऽपि जपित्वा पर्युक्षेदिति पृथक् क्रियते। पर्युक्षणातिदिष्टे परिसमूहने मन्त्रो मा भूदिति त्रिरेकैकमित्येतावतैव एकैकस्याग्नेस्त्रिस्त्रिः पर्युक्षणे सिद्धे त्रिस्त्रिरिति वीप्सावचनं मन्त्रस्यापि त्रिरावृत्तिर्भवत्वित्येवमर्थं, पुनः पुनरुदकमादायेतिवचनं न सकृद्गृहीतेन त्रिः पर्युक्षेदित्येवमर्थं॥

आनन्तर्ये विकल्पः ॥ १२ ॥

अग्नीनां पर्युक्षणादिषु कर्तव्येषु केनानन्तर्येण कर्तव्या इत्यानन्तर्यविशेषे ज्ञातव्येऽनेन सूत्रेणाग्नीनामुत्पत्तिक्रमस्य होमक्रमस्य च विकल्पो विधीयते ॥

दक्षिणं त्वेव प्रथमं विज्ञायते पिता वा एषोऽग्नीनां यद्दक्षिणः पुत्रो गार्हपत्यः पौत्र आहवनीयस्तस्मादेवं पर्युक्षेत्॥ ॥ १३ ॥.

पर्युक्षणेऽयमेव क्रमः, दक्षिणाग्निं गार्हपत्यमाहवनीयमिति। तच श्रुतिमेव हेतुमुपन्यस्य तस्मादेवं पर्युक्षेदित्युपसंहृतं। तेन पर्युक्षणातिदिष्टे परिसमूहनेऽयमेव क्रमः। अन्यच पूर्वोक्तो

विकल्पः। अत्र विनिवेशः प्रधानात् पूर्वेषामुत्पत्तिक्रमः, परेषां प्रधानक्रम इति॥

गार्हपत्यादविच्छिन्नामुदकधारां हरेत् तन्तु तन्वन् रजसो भानुमन् विह्नीत्याहवनीयात्॥ १४॥

अयमाकारो मर्यादायां, अभ्युपघातविरोधात्॥

पश्चाद्गार्हपत्यस्योपविश्योदङ्ङ्गारानपोहेत् सुकृतकृतः स्थ सुकृतं करिष्यथेति॥ १५॥

पश्चाद्गार्हपत्यस्य तूष्णीमेव दक्षिणोत्तरेणोपस्थेनोपविश्य गार्हपत्यात् कतिपयानाङ्गारानुदक् पृथक् कुर्यादधिश्रयणार्थं॥

तेष्वग्निहोत्रमधिश्रयेदधिश्रितमध्यधिश्रितमधिश्रितं स्थिं३ इति॥ १६॥

तेष्विति पृथक्कृतेष्वङ्गारेष्वित्यर्थः। अग्निहोत्रमिति होमसाधनभूतं द्रव्यमुपपद्यते॥

इडायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व। ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विति वा॥ १७॥

अनेन वा मन्त्रेणाधिश्रयेत् पूर्वेण वेति विकल्पविधिः॥

न दध्यधिश्रयेदधिश्रयेदित्येके ॥ १८ ॥ २ ॥

अधिश्रयेन्न वेत्येतावतैव सिद्धे गुरुसूत्रकरणं न्यायविकल्पोऽयमिति प्रदर्शनार्थं। अत्रैके आचार्याः प्रवृत्तिपरत्वाच्छास्त्रस्य कार्यस्य चातीन्द्रियत्वादलोपमाहुः। आचार्यस्तु कार्यार्थत्वात् प्रवृत्तेः, कार्यस्य च दृष्टस्य त्यागे प्रमाणाभावात्, तदत्यागे संस्कार्यस्वरूपविनाशात् संस्कार्यसंवादकत्वात् संस्कारस्य लोप एवात्र श्रेयानित्याह ॥

द्वितीये द्वितीया कण्डिका ॥ * ॥

---

पयसा नित्यहोमः ॥ १ ॥

नित्यश्चासौ होमश्च नित्यहोमः, स पयसा कर्तव्यः। अकामस्याग्निहोत्रहोमः पयसा कर्तव्य इत्यर्थः। कामानुपदेशादेवास्य नित्यत्वे सिद्धे नित्यग्रहणमुत्तरार्थं ॥

यवागूरोदनो दधि स[र्पि]ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानां ॥ २ ॥

यथासङ्ख्येन ग्रामकामादीनां यवाग्वादीनि अग्निहोत्रद्रव्याणि भवन्ति। ग्रामकामः प्रसिद्धः। अन्नञ्च तदाद्यञ्च अन्नां। खाद्यान्नकाम इत्यर्थः। इन्द्रियं शुक्रं, चक्षुरादीनि वा। [ते]जस्त्विः। नित्यहोम इत्यत्रापि सम्बध्यते। तेन पुरुषार्थैरपि

क्रियमाणो होमो नित्य एव स्वाश्रकामार्थः। होमाश्रितानि द्रव्याण्येव कामाश्रितानि भवन्तीति॥

अधिश्रितमवज्वलयेत्॥ ३॥

अधिश्रितग्रहणात् अधिश्रितमात्र एवावज्वलयेन्न कालविक्षेपः कर्तव्य इत्यवगम्यते॥

अनधिश्रयं दध्यग्निष्टे तेजो माद्यार्षीरिति॥ ४॥

न अधिश्रयो यस्य तत् अनधिश्रयं। अधिश्रयरहितमपि दधि अवज्वलयेदित्यर्थः। सर्वत्रावज्वलनमन्त्रोऽयं अग्निष्टे तेज इति। दधि वेत्येतावतैव सिद्धे गुरुसूत्रकरणं दध्यादीनामपक्वानां सङ्ग्रहार्थं॥

स्रुवेण प्रतिषिञ्चत्यापो वा शान्तिरस्यमृतमसीति॥ ५॥

पयसा होमे दोहनपात्रप्रक्षालनं स्रुव आनीय तेन प्रतिषिञ्चेत्। अग्निहोत्रद्रव्यं अन्यत्रोदकेनैव। शान्तिरिति मन्त्रेण। न वा प्रतिषेकः कर्तव्यः॥

तयोरव्यतिचारः॥ ६॥

तयोः प्रतिषेकाप्रतिषेकयोरित्यर्थः। अव्यतिचारोऽसङ्करः, एकस्मिन् पुरुष इत्यर्थः। एकः सर्वदा प्रतिषिञ्चेत्। अपरः सर्वदा न प्रतिषिञ्चेदित्यर्थः॥

पुनर्ज्वलता परिहरेत् त्रिरन्तरितं रक्षोऽन्तरिता अरातय इति ॥ ७ ॥

पुनर्वचनात्तेनोल्मुकेन अवज्वलनं कृतं तेनैव परिहरणं कुर्यादिति गम्यते। उल्मुकादानं गार्हपत्यादेव, न श्रपणार्थात्। श्रपणार्थं पृथक् कृतस्य पुनः प्रक्षेपविधानात् अन्यत्र कार्यार्थं पृथक् कृतस्य कार्यपरिसमाप्तौ त्याग एव कर्तव्यः। तेनावज्वलनार्थं पृथक् कृतं, अवज्वलने कृते पृथगेव निधाय तेनैव परिहरणमपि कृत्वा त्यजेत् ॥

समुदन्तं कर्षन्निवोदङ्ङुद्वासयेद्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति निदधत् ॥ ८ ॥

समुद्गतः अन्तो यस्य द्रव्यस्य तत् समुदन्तं द्रव्यं। परितः स्थालीसम्बन्धप्रदेशोऽन्त इत्युच्यते। यदा पच्यमानं पय एवमवस्थं भवेत् तदा कर्षन्निवोदगुद्वासयेत्। कर्षन्निवेति मन्दगत्येत्यर्थः। निदधदिति त्रिभिर्मन्त्रैस्त्रिर्निधानं कुर्वन्नवतारयेत्। प्रथमद्वितीयाभ्यामाकाशे धृत्वा तृतीयेन भूम्यां निदध्यात् ॥

सुकृतकृतः स्थ सुकृतमकार्ष्टेत्यङ्गारानतिसृज्य स्रुक्स्रुवं प्रतितपेत् प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इति ॥ ९ ॥

अतिसर्गोऽङ्गाराणां गार्हपत्ये प्रक्षेपः ॥

उत्तरतः स्थाल्याः स्रुवमासाद्योमुन्नयानीत्यतिसर्जयीत ॥ ॥ १० ॥

स्थाल्या उत्तरतः स्रुवमासाद्य स्रुवहस्त एव सन् 'ओमुन्नयानि' इत्यनेन मन्त्रेण आहिताग्निमतिसर्जयेत् ॥

आहिताग्निराचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्यैतत्कृत्वोमुन्नयेत्यतिसृजेत् ॥ ११ ॥

विहरणकाल एवाहिताग्निश्चाध्वर्युः पत्नी च स्नात्वाचम्य तीर्थेन प्रविशन्ति। तत्राध्वर्युर्विहरणं कृत्वा होमकाले प्राप्ते निष्क्रम्य प्राङ्मुख उदङ्मुखो वाचम्य तीर्थेनैव प्रविश्य पर्युक्षणादि कुर्यात्। पत्नी तु गार्हपत्यस्य दक्षिणत आस्ते, आहोमपरिसमाप्तेः। आहिताग्निश्चाहवनीयविहरणकाले दक्षिणत उपविश्य उद्धराहवनीयमित्यध्वर्युं सम्प्रेषमुक्त्वास्ते। ततो होमकाले प्राप्ते निष्क्रम्य प्राङ्मुख उदङ्मुखो वाचम्य तीर्थेनैव प्रपद्य अपरेण वेदिदेशं पूर्वेण गार्हपत्यं दक्षिणाग्निञ्च गत्वा वेदेर्दक्षिणत उपविशेत्। उपविष्टः सन्नेतदतिसर्जनवाक्यं श्रुत्वोमुन्नयेत्यतिसृजेत् ॥

अतिसृष्टो भूरिडा भुव इडा स्वरिडा भूर्भुवः स्वरिडेति स्रुवपूरमुन्नयेत् ॥ १२ ॥

अतिसृष्ट इतिवचनं प्रवसति यजमाने स्वेनैवातिसृष्ट उन्न-

येत् नागतिस्पष्टइत्येवमर्थं। चत्वार एते मन्त्राः समवत्त्वात् संसर्गाणां, अतश्चतुष्कृत्व उन्नयेत्। स्रुवपूरमिति णमुलप्रत्यययोगाच्च, अग्नियमग्नियमिति उन्नयनभेददर्शनाच्च स्रुवपूरमिति स्रुवं पूरयित्वा पूरयित्वेत्यर्थः। अत्र पञ्चममन्त्रस्याभावात् *पञ्चावत्तिनां तूष्णीमेव पञ्चममुन्नीयते, पुरुषविशेषधर्मत्वादवदानविशेषसम्बन्धस्य॥

अग्नियमग्नियं पूर्णतमं योऽनु ज्येष्ठमृद्धिमिच्छेत् पुत्राणां॥ ॥१३॥

यो यजमानः पूर्वजानुसारेण आत्मनः पुत्राणामृद्धिं तारतम्यमिच्छेत्, तस्य पूर्वः पूर्वः पूर्णतमो भवेत्। अनेन पुत्रस्यायं काम्यः कल्पः, न चतुःपुत्रस्यैव॥

योऽस्य पुत्रः प्रियः स्यात् तं प्रति पूर्णमुन्नयेत॥१४॥

प्राकृतानामेव पञ्चानां चतुर्णां वा एकं स्रुवं प्रियं पुत्रं ध्यात्वा पूर्णमुन्नयेत्। अयमपि काम्यः। अयमेकपुत्रस्यापि भवति॥

स्थालीमभिमृश्य समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वा प्राणसम्मितामाहवनीयसमीपे कुशेषूपसाद्य जान्वाच्य समिधमादध्यात्व्रजतां त्वाग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहेति ॥१५॥

---

* पञ्चावत्तिनामिति मु०।

स्थाल्याः स्रुवेण स्रुच्युन्नयनं कृत्वा स्थालीमभिमृश्य स्रुचा सह समिधञ्च गृहीत्वाऽध्यधि गार्हपत्यं गार्हपत्यस्योपरि समीपं कृत्वा आहवनीयस्य नेदीयसि नासिकासम्मितां हरेत्। हृत्वा तस्य पश्चाददूरे कुशेषूपसाद्य दक्षिणं जानु निपात्य तां समिधमादध्यात्, 'रजताम्' इति मन्त्रेण॥

समिधमाधाय विद्युदसि विद्य मे पाप्मानमग्नौ अद्भेत्यप उपस्पृश्य प्रदीप्तां द्व्यङ्गुलमात्रेऽभिजुहुयाद्भूर्भुवः स्वरोऽमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति॥ १६॥

समिधमाधायेत्युच्यते, समिदाधानधर्मस्य जानुनिपातनस्यानुवृत्त्यर्थं। समिधमाधायेत्यनेनैव समिद्ग्रहणेन पूर्वसूत्रे आदध्यादित्येवोक्तेऽपि समिध एवाधाने सिद्धे यत् पूर्वसूत्रे समिद्ग्रहणं करोति तज्ज्ञापयति, यत्र यत्र समिधमादध्यात् तत्र तत्र जान्वाच्यादध्यादिति। विद्युदसीत्यप उपस्पृश्य, प्रदीप्तां समिधं मूलतो द्व्यङ्गुलमात्रेऽभिजुहुयात्, 'भूर्भुवः स्वरोम्' इति मन्त्रेण॥

पूर्वामाहुतिं हुत्वा कुशेषु सादयित्वा गार्हपत्यमवेक्षेत पशून्मे यच्छेति॥ १७॥

हुत्वेतिवचनं निपातितजानुरेवोत्तरमपि कुर्यादित्येवमर्थं। पूर्वामितिवचनं पूर्वाहुत्युत्तरकालीनं स्रुचं सादयित्वैव

कुर्यात्, उत्तराहुत्युत्तरकालीनं स्रुग्घस्त एव कुर्यादित्येव-मर्थं ॥

अथोत्तरां तूष्णीं भूयसीमसंहष्टां प्रागुदगुत्तरतो वा ॥ १८ ॥

अथेत्यानन्तर्यवचनेन पूर्वाहुत्योत्तराहुतेः सम्बन्धः क्रियते। तेन जान्वाच्येत्यस्यानुवृत्तिर्लभ्यते, प्राधान्यञ्चोत्तराहुतेः। अतः पूर्वाहुतौ हुतायां द्रव्यदोषे सति उत्तराहुत्यर्थं द्रव्यमुत्पाद-यितव्यमेव। भूयसीं पूर्वाहुतेः भूयो द्रव्यं। असंहृष्टां पूर्वया-ऽऽहुत्या। प्रागुदक् पूर्वाहुतेः, उत्तरतो वा तस्या एव ॥

प्रजापतिं मनसा *ध्यायात् तूष्णीं होमेषु सर्वत्र ॥ १९ ॥

यत्र तूष्णींशब्दविशिष्टो होमस्तोत्पद्यते तत्र प्रजापतिर्देव-तां ध्यायेत्, देवतासाध्यत्वाद्धोमस्य। ध्यानत्वादेव मानसत्वे सिद्धे मनोग्रहणं शब्दध्यानार्थं। तेन चतुर्थ्यन्तं प्रजापतिशब्दं ध्यात्वा तदनन्तरं स्वाहेत्युपांशूक्त्वा जुहुयात्। होमेष्विति बहुवचनादेव प्रकरणादुत्कर्षे सिद्धे सर्वत्रग्रहणं गार्ह्येष्वपि प्रापणार्थं ॥

भूयिष्ठं स्रुचि शिष्ट्वा त्रिरनुप्रकम्प्यावमृज्य कुशमूलेषु नि-मार्ष्टि पशुभ्यस्त्वेति ॥ २० ॥

उत्तराहुतेर्भूयिष्ठं भूयोद्रव्यं पूर्वाहुतेर्भूयिष्ठं यथा भवति

* ध्यायेदित्यर्थे ध्यायादिति पाठः सर्वत्र।

तथा भक्षार्थं स्रुचि शेषयेत्। पूर्वाहुत्यर्थं प्रक्षिप्ताद्द्रव्यादुत्तराहुत्यर्थं भूयो भवति। तस्मादपि भूयो भक्षार्थं भवति। तत् पूर्वाहुत्यपेक्षया भूयिष्ठमित्युच्यते। भूयिष्ठं द्रव्यं स्रुचि शेषयित्वा स्रुचमेवाहुतिदेशस्थां प्रकम्पयेत्। ततः स्रुग्गतलेपं पाणिनाऽधोमुखेनावमृज्य पाणिगतलेपं कुशमूलेषु निमार्ष्टि निमृजेत्, 'पशुभ्यस्त्वा' इति॥

तेषां दक्षिणत उत्ताना अञ्जलीः करोति प्राचीनावीती तूष्णीं स्वधा पितृभ्य इति वा॥ २१॥

तेषां कुशमूलानां दक्षिणत उत्ताना अञ्जलीर्निदध्यात्। प्राचीनावीती भूत्वा 'स्वधा पितृभ्यः' इति मन्त्रेण वा॥

अपोऽवनिनीय॥ २२॥

एतावदेव सूत्रं। अपश्च कुशमूलानां दक्षिणतो निनयेत्, अवाचीनेन पाणिना। एतावत् स्रुग्घस्त एव करोति। एवं वा तेषां दक्षिणतः करोति प्राचीनावीती निनीय॥

वृष्टिरसि वृश्च मे पाप्मानमप्स्वद्वेत्यप उपस्पृश्य॥ २३॥

इदमपि सूत्रमेतावदेव। निधाय स्रुवमप उपस्पृशेत्॥

आहिताग्निरनुमन्त्रयेत॥ २४॥

अधिकारोऽयं॥

आधानमुक्त्वा तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गि-रस्वद्ध्रुवासीदेति समिधं ॥ २५ ॥

समिदाधानमन्त्रेण 'तेन ऋषिणा' इत्यनेन मन्त्रेण च समिधमाधीयमानामनुमन्त्रयते ॥

ता अस्य सूद दोहस इति पूर्वामाहुतिं ॥ २६ ॥

एतयर्चा पूर्वामाहुतिमनुमन्त्रयते ॥

उपोत्थायोत्तरां काङ्क्षेतेक्षमाणो भूर्भुवः स्वः सुप्रजाः प्रजा-भिः स्यां सुवीरो वीरैः सुपोषः पोषैः ॥ २७ ॥

इतिकाराध्याहारेण सूत्रच्छेदः। उत्तराहुतेर्हूयमानायाः देशतः कालतश्च समीपे स्थित्वा कटाक्षेणेक्षमाणस्तामेवाहुति-मनुमन्त्रयते। काङ्क्षेतशब्दः कटाक्षवचनः। केचिदुत्तराहुति-मीक्षमाणोऽनुमन्त्रयते, तन्मन्त्राभिहितान् कामान् काङ्क्षेत चेति वर्णयन्ति ॥

आग्नेयीभिश्च ॥ २८ ॥

याभिः काभिश्च त्र्यवराभिराग्नेयीभिरुत्तरामेवाहुतिम-नुमन्त्रयते ॥

अग्न आयूंषि पवस इति तिसृभिः ॥ २९ ॥ ३ ॥

इति द्वितीये तृतीया कण्डिका ॥ * ॥

---

संवत्सरे संवत्सरे ॥ १ ॥

पूर्णे पूर्णे संवत्सरे एताभिरधिकाभिः सहादनुमन्त्रयते ॥

यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात् ॥ २ ॥

यवाग्वा पयसा वा स्वयं पर्वणि पौर्णमास्याममावास्यायां च सायम्प्रातर्यजमानः स्वयमेवाग्निहोत्रं जुहुयात्। अस्मिन् सूत्रे पर्वणि द्रव्यनियमः, स्वयंकर्तृनियमश्च विधीयते। स्वयंहोमे समिधमनुमन्त्र्य 'विद्युदसि' इति पूर्वामाहुतिमनुमन्त्र्य 'पशून्मे यच्छ' इत्युत्तरामाहुतिमनुमन्त्र्य 'वृष्टिरसि' इत्येवं क्रमो भवति। यत्किञ्चिदग्निहोत्रद्रव्यं काम्यं वैकल्पिकं वा प्रयुज्यते सायमुपक्रम्य प्रातरपवर्गं प्रयुज्यते नान्यथेति। प्रतिनिधिस्त्वेकप्रयोगपर्यवसाय्येव ॥

ऋत्विजामेक इतरं कालं ॥ ३ ॥

ऋत्विजामेकः कश्चिदृत्विगितरस्मिन् कालेऽग्निहोत्रं जुहुयात् ॥

अन्तेवासी वा ॥ ४ ॥

इतरस्मिन् कालेऽग्निहोत्रं जुहुयादिति शेषः। अन्ते समीपे वसतीत्यन्तेवासी, स पुनः पुत्रः शिष्यो वा। अत्र किञ्चिदुच्यते। ऋत्विजस्त्रिविधाः, देवभूताः पितृभूता मनुष्यभूताः इति। ये कर्मणि कर्मणि व्रियन्ते ते देवभूताः। येऽन्वयागता ऋत्विज-

स्ते पितृभूताः। ये लोकस्य पुरुषस्य सर्वाणि कर्माणि कर्तुं त्रियन्ते ते मनुष्यभूताः। तत्र यस्याहिताग्नेः पितृभूता मनुष्यभूता वा ऋत्विजः सन्ति तेषाम्त्विजामेकः कश्चित् पर्ववर्जितेषु कालेषु जुहुयात्। यस्य देवभूताः तस्यात्मैवास्त्वेवेति विनिवेशः॥

स्पृष्टोदकमुदङ्ङावृत्य भक्षयेत्॥ ५॥

उक्तमेवोपस्पर्शनं कृत्वा उदगावृत्य स्रुग्गतं शेषं भक्षयेत्। उक्तसङ्कीर्त्तनमाहिताग्न्यधिकारे सत्यपि होमकर्तृप्रापणार्थं॥

अपरयोर्वा हुत्वा॥ ६॥

भक्षयेदिति शेषः॥

आयुषे त्वा प्राश्नामीति प्रथमं। अन्नाद्याय त्वेत्युत्तरं॥ ७॥

प्रथममुत्तरमिति भक्षणयोः सम्बन्धकरणार्थं। तेन उत्तरस्यापि मन्त्रस्य प्राश्नाम्यन्तता भवति॥

तूष्णीं समिधमाधायाग्नये गृहपतये स्वाहेति गार्हपत्ये॥ ॥ ८॥

जुहुयादित्यध्याहारः। तूष्णींग्रहणमाहवनीयसमिदाधाने होमे च ये धर्माः जानुनिपातनं प्रदीप्ताभिहोमो द्व्यङ्गुलमात्राभिहोमश्च तेषां प्राप्तिसूचनार्थं॥

नित्योत्तरा ॥ ९ ॥

उत्तराहुतिं तूष्णीं भूयसीमित्येवमुक्तेत्यर्थः ॥

तूष्णीं समिधमाधायाग्नये संवेशपतये स्वाहेति दक्षिणे। अग्नयेऽन्नादायान्नपतये स्वाहेति वा ॥ १० ॥

मन्त्रविकल्पोऽयं ॥

नित्योत्तरा ॥ ११ ॥

गतार्थमेतत् ॥

भक्षयित्वाभ्यात्ममपः स्रुचा निनयते त्रिः सर्वदेवजनेभ्यः स्वाहेति ॥ १२ ॥

भक्षयित्वेतिवचनं भक्षणानन्तरमेव निनयनमपि स्यादित्येवमर्थं। अभ्यात्ममपः स्रुचा निनयत इत्यसंस्कारकर्मत्वान्मन्त्रोऽपि त्रिरावर्तते ॥

अथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः प्रागुदीच्योर्निनयेदृतुभ्यः स्वाहा दिग्भ्यः स्वाहा सप्तर्षिभ्यः स्वाहेतरजनेभ्यः स्वाहेति ॥ १३ ॥

अथेत्यभ्यात्मनिनयनानन्तरमेव इदमपि कर्त्तव्यं इति दर्शयति। एनां स्रुचमित्यर्थः। विहारस्य प्रागुदग्देशे पूर्णाश्चतस्रः स्रुचो निनयेत्, एकैकेन मन्त्रेणैकैकामिति ॥

पञ्चमीं कुम्भदेशे पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहेति । षष्ठीं पश्चाद्गार्हपत्यस्य प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहेति ॥ १४ ॥

पञ्चमीं षष्ठीमिति पूर्णास्रुक्सम्प्रत्ययार्थं ॥

प्रताप्यान्तर्वेदि निदध्यात् ॥ १५ ॥

प्रतपनमाहवनीये, अन्तर्वेदिशब्दसमन्वयात् । प्रताप्य स्रुचमन्तर्वेदिदेशे निदध्यादित्युक्तं ॥

परिकर्मिणे वा प्रयच्छेत् ॥ १६ ॥

परिचारकः परिकर्मीत्युच्यते ॥

अग्रेणाहवनीयं परीत्य समिध आदध्यात् तिस्रस्तिस्र उदङ्मुखस्तिष्ठन् ॥ १७ ॥

पूर्वेणाहवनीयं विहारस्य दक्षिणदेशं गत्वा तस्य तस्याग्नेर्दक्षिणत उदङ्मुखस्तिष्ठन् तिस्रस्तिस्रः समिध आदध्यात् । पुनः प्रत्येत्य पर्युक्षणादि कुर्यात् ॥

प्रथमां समन्त्रां ॥ १८ ॥

सकृन्मन्त्रेणेति परिभाषा प्रधानकर्मसु न प्रवर्त्तत इति कृत्वा प्रथमां समन्त्रामित्युक्तवानाचार्यः ॥

आहवनीये दीदिहीति गार्हपत्ये दीदायेति दक्षिणे दीदिदायेति ॥ १९ ॥

सर्वे स्वाहाकारान्ताः कर्त्तव्याः ॥

उक्तं पर्युक्षणं ॥ २० ॥

यदुक्तं पर्युक्षणं तदिहापि कर्त्तव्यं ॥

ताभ्यां परिसमूहने ॥ २१ ॥

पूर्वोक्तमिदञ्च द्वे पर्युक्षणे ताभ्यां परिसमूहने व्याख्याते इति धर्मातिदेश एकोऽर्थः। परिसमूहने इति योगविभागात् स्वरूपसिद्धिश्च भवति। मन्त्रस्तु जपित्वेति पृथक्करणान्न भवति, लिङ्गाभावाच्च ॥

पूर्वं तु पर्युक्षणात् ॥ २२ ॥

ये द्वे परिसमूहने पर्युक्षणधर्मके विहिते तयोरनेन क्रमो विधीयते, पर्युक्षणाभ्यां पूर्वं परिसमूहने भवत इति ॥

एवं प्रातः ॥ २३ ॥

सायङ्कालेऽग्निहोत्रविधिरुक्तः, एवं प्रातःकालेऽपि होमः कर्त्तव्य इत्यर्थः। तत्र विशेषमाह ॥

उपोदयं व्युष्टे उदिते वा ॥ २४ ॥

उपोदयमादित्योदयसमीपमित्यर्थः। व्युषिते उषस्युदित इत्यर्थः। उदिते आदित्यमण्डले कृत्स्न उदित इत्यर्थः। एते त्रयः प्रातर्होमप्रधानकालाः। तत्र यद्युपोदयमुदित इत्युच्यते उदित आदित्ये सति उदयसमीप इति द्वाभ्यां पदाभ्यां एक एव कालो विहितः स्यात्, तद्भ्रान्तिनिवृत्त्यर्थं व्युषितशब्दात् पूर्वं उपोदयशब्दं पठितवानाचार्यः। एतेषु त्रिषु कालेषु प्रधानं यथा सम्पद्यते तथाङ्गानामेवोत्कर्षाऽपकर्षौ द्रष्टव्यः॥

सत्यर्त्ताभ्यां त्वेति पर्युक्षणमोमुन्नेष्यामीत्यतिसर्जनं हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे स्वाहेति समिदाधानं भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति होम उन्मार्जनञ्च॥२५॥ ॥४॥

एते प्रातर्होमे विशेषाः॥

इति द्वितीये चतुर्थी कण्डिका॥ * ॥

प्रवत्स्यन्नग्नीन् प्रज्वल्याचम्यातिक्रम्योपतिष्ठते॥१॥

यस्मिन् ग्रामेऽग्नय आसते तस्मात् प्रदेशाद्ग्रामान्तरे एकरात्रावमो वासः प्रवासः, तं करिष्यन् प्रवत्स्यन् भवति। अग्नी-

निति बहुवचनात् सर्वान् विहृत्य प्रज्वलयेत्। प्रज्वल्य आचम्य तीर्थदेशेन प्रपद्य अतिक्रम्य अग्नीन् उपतिष्ठते। अतिक्रम्येति अव्यक्तोपस्थानदेशमतिक्रम्य समीपं गत्वा तं तमग्निमुपतिष्ठत इत्यर्थः। इदं कर्माहिताग्निः स्वयमेव कुर्यात्। इदमनेनेत्याह ॥

आहवनीयं शंस्य पशून्मे पाहीति। गार्हपत्यं नय प्रजां मे पाहीति। दक्षिणमथर्वपितुं मे पाहीति। गार्हपत्याहवनीयावीक्षेतेमान् मे मित्रावरुणौ गृहान् गोपायतं युवं अविनष्टानविहुतान् पूषैनानभिरक्षत्वास्माकं पुनरायनादिति ॥ २ ॥

दक्षिणाग्निमुपस्थाय तत्रैव तिष्ठन् गार्हपत्याहवनीयावीक्षेत, इमान्मे मित्रावरुणाविति। उत्तरत्र 'यथेतं प्रत्येत्य' इतिवचनात् तत्रैव तिष्ठतीति लभ्यते। द्विवचनलिङ्गाद्युगपदेवेक्षेत ॥

यथेतं प्रत्येत्य प्रदक्षिणं *पर्यन्नाहवनीयमुपतिष्ठते। मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे। तत्त्वं बिभृहि पुनरामदैतोस्तवाहं नाम बिभराण्यग्न इति ॥ ३ ॥

आहवनीयमुपस्थाय उत्तरेण विहारं गत्वा गार्हपत्यस्य प्रत्यगुदग्देशेऽत्यन्तसमीपं गत्वा तमुपस्थाय तद्देव स्थित्वा

* परियन्निति सा० मू०।

दक्षिणाग्निमुपस्थाय तत्रैव तिष्ठन् गार्हपत्यमाहवनीयञ्चेक्षणं कृत्वा पुनस्तेनैव मार्गेणाहवनीयसमीपं गत्वा ततः प्रदक्षिणमावर्त्तमानः आहवनीयमुपतिष्ठते 'मम नाम प्रथमं' इत्यनेन मन्त्रेण ॥

*प्रव्रजेदनवेक्षमाणो मा प्रगामेति सूक्तं जपन् ॥ ४ ॥

पृष्ठतोऽग्नीन् नेक्षमाणो 'मा प्रगाम' इति सूक्तं जपन् यथेष्टं गच्छेत्। सूक्तग्रहणमनभ्यासार्थं ॥

आरादग्निभ्यो वाचं विसृजेत ॥ ५ ॥

अग्निभ्योऽदूराद्गत्वा वाचं विसृजेत। यावद्गतेऽग्न्यागारच्छदिर्न दृश्यते तावदत्र आराच्छब्देनोच्यते। अत्र वाग्विसर्गविधानादितः प्राक् वाग्यत एव सर्वं कुर्यात् ॥

सदा सुगः पितुमाँ अस्तु पन्था इति पन्थानमवरुह्य ॥ ६ ॥

ब्रूयादिति शेषः। योऽभिलषितदेशगामी पन्थास्तं प्राप्येत्यर्थः ॥

अनपस्थिताग्निश्चेत् प्रवासमापद्येत। इहैव सन् तत्र सन्तं त्वाग्ने हृदा वाचा मनसा वा बिभर्मि। तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठत इति प्रतिदिशमग्नीनुपस्थाय ॥ ७ ॥

---

* प्रव्रजेदनपेक्षमाण इति सो॰ मू॰।

यदि कदाचिद्यथोक्तोपस्थानमकृत्वैव गमनं स्यात् तर्हि-वाश्वानुषाद्वा निमित्तात् तदा तत्रैव स्थित 'इहैव सन्' इत्यनेन मन्त्रेण उत्पत्तिक्रमेण तं तमग्निं ध्यात्वा तां तां दिशं अभिमुखमुपस्थाय गच्छेत्॥

अपि पन्थामगन्महीति प्रत्येत्य॥ ८॥

ब्रूयादिति शेषः। प्रवासं कृत्वा प्रत्येत्य स्वग्रामसमीपं प्राप्य 'अपि पन्थामगन्महि' इति ब्रूयात्॥

समित्पाणिर्वाग्यतोऽग्नीन् ज्वलतः श्रुत्वाऽभिक्रम्याहवनीयमीक्षेत। विश्वदानीमाभरन्तोऽनातुरेण मनसा। अग्ने मा ते प्रतिवेशारिषाम। नमस्ते अस्तु मीढुषे नमस्त उपसद्वने। अग्ने शुम्भस्व तन्वः सम्मारय्यास्वजेति॥ ९॥

वाग्यतः समिधो गृहीत्वा पुत्रेण शिष्येण वा पूर्वं प्रस्थापितेनाग्नीन् विहृतान् ज्वलतश्च ज्ञात्वा स्वयमाहिताग्निराचम्य शुचिर्भूत्वा तीर्थेन प्रपद्याव्यक्तदेशादत्यन्तं समीपदेशं अभिक्रम्याहवनीयमीक्षेत 'विश्वदानीम्' इति द्वाभ्यां मन्त्राभ्यां॥

अग्निषु समिध उपनिधायाहवनीयमुपतिष्ठते। मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः। ते विभृवो दृक्से जीवसे च यथायथं नौ तन्वा जातवेद इति॥ १०॥

इदानीमानीताः समिधो विभज्य तस्य तस्याग्नेः समीपे निधाय तत आहवनीयमुपतिष्ठते 'मम नाम तव च' इत्यनेन मन्त्रेण॥

ततः समिधोऽभ्यादध्यात्॥ ११॥

उपनिहिता एवाग्निष्वनेनेत्याह॥

आहवनीयेऽगन्म विश्ववेदसमस्मभ्यं वसुवित्तमं। अग्ने सम्राडभिद्युम्नमभिसह आयच्छस्व स्वाहेति। गार्हपत्येऽयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः। अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व स्वाहेति। दक्षिणेऽयमग्निः पुरीष्यो रयिमान् पुष्टिवर्धनः। अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व स्वाहेति। गार्हपत्याहवनीयावीक्षतेमान्मे मित्रावरुणौ गृहानजूगुपतं युवं। अविनष्टानविहृतान् पूषैनानभ्यराक्षीदास्माकं पुनरायनादिति॥ १२॥

दक्षिणाग्निसमीपे स्थित इत्युक्तं॥

*यथेतं प्रत्येत्य। परिसमूह्योदग्विहारादुपविश्य भूर्भुवः स्वरिति वाचं विसृजेत॥ १३॥

भूर्भुवः स्वरित्यनेन यथेतं प्रत्येत्य सर्वस्य विहारस्य परि-

* यथेतं प्रत्येत्येतावन्मात्रं सूत्रं, अवशिष्टं सूत्रस्वरूपमिति विवृतं, अतः केवलमूलपुस्तकेऽवशिष्टभागो नास्तीति प्रतीयते।

समूहनं कृत्वा तस्योत्तरत उपविश्य वाचं विसृजेत्। अबत्यति-प्रवासनिमित्ते एवं प्रयोगक्रमः। सति तु निमित्ते यथेतं प्रत्येत्य नैमित्तिकं कृत्वा परिसमूहनवाग्विसर्गौ कुर्यात्। एव-मेव सूत्रस्वरूपं विविच्यं॥

प्रोष्य भूयो दशरात्राच्चतुर्गृहीतमाज्यं जुहुयात् मनो-ज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु। या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहेति॥ १४॥

दशरात्रादूर्ध्वं प्रवासं कृत्वा जुह्वां चतुर्गृहीतं गृहीत्वाऽनया जुहुयात्, 'मनो ज्योतिः' इत्येतयर्चा। चतुर्गृहीतशब्दादेव आ-ज्यद्रव्यसिद्धौ बत्याज्यग्रहणं तूष्णीमुत्पवनलाभार्थं॥

अग्निहोत्रहोमे च॥ १५॥

अग्निहोत्रहोमविच्छेदे चैतामाहुतिं जुहुयात्। विशेषा-भावात् एकस्य द्वयोर्बहूनामपि विच्छेदे एषैव प्रायश्चित्तिः कार्या॥

प्रतिहोममेके*॥ १६॥

---

* मूलपु॰द्वये नैतावन्मात्रं सूत्रं। अयोदशसूत्रशेषांशोऽप्येतदन्ते विनिवेशितः। सं॰सटीकपु॰द्वये तु केवलमेतावन्मात्रं, परन्तु तद्वृत्तौ अदंशोल्लेखो वर्त्तते।

चग्रन्थोऽध्याख्यातार्थः। एतामाकृतिं कृत्वा प्रतिहोमश्च कुर्यादित्यर्थः। प्रतिहोमो नाम यावन्तः काला होमेन विच्छिन्नास्तावतामेकैकं कालं प्रत्येकैको होमः कर्त्तव्य इत्येवं, परिसमूह्येत्यादि पूर्वमेव व्याख्यातं॥

गृहानोक्षेताप्यनाहिताग्निर्गृहा मा बिभीतोपमः स्वस्ति वोऽस्मासु च प्रजायध्वं मा च वो गोपतीरिषदिति प्रपद्येत। गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान्। इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशामीति शिवं शग्मं शंयोः शंयोरिति त्रिरनुवीक्षमाणः॥ १७॥

ईक्षणं प्रपदनञ्चानाहिताग्निरपि कुर्यात्। 'गृहा मा बिभीत' इतीक्षेत। 'गृहानहं' इति प्रपद्येत। प्रतिपद्यमान एवं प्रपद्येत। 'शिवं शग्मं शंयोः शंयोः' इति त्रिरनुवीक्षमाणः। अनुवीक्षमाणमनुमन्त्रणं मन्त्रेण प्रकाशनं। तत् पुनर्मन्त्रेण विना कर्तुं न शक्यत इति मन्त्रोऽपि त्रिरावर्त्तते॥

विदितमप्यलीकं न तदाचक्षापयेयुः॥ १८॥

अलीकमप्रियं। अवगतमप्रियं प्रवासादागतस्य तस्मिन्नहनि न निवेदयेयुः॥

विज्ञायतेऽभयं वोऽभयं मेऽस्त्वित्यथैवोपतिष्ठेत प्रवसन् प्रत्येत्याहरहर्वेति॥ १९॥ ॥५॥

वाशब्दश्चशब्दस्यार्थे। 'अभयं वः' इत्यनेन मन्त्रेण। 'प्रवत्स्यन् प्रवासादागतश्चाप्यहरहरग्निहोत्रहोमे च उपतिष्ठेत' इति श्रुतिरेवोपन्यस्ता विज्ञायत इति। अस्मिन् पक्षे प्रयोगक्रमः। विहृत्य प्रक्षाल्याचम्य तीर्थेन प्रपद्य तत्रैव स्थित्वा सर्वानग्नीन् सकृदेवोपस्थाय प्रदक्षिणमावृत्य तीर्थेनैव निष्क्रम्य 'मा प्रगाम' इति जपन् प्रव्रज्य 'सदा सुगः' इति पन्थानं प्राप्य ब्रूयात्। प्रत्येत्य 'अपि पन्थां' इत्युक्त्वा विहृतान् ज्वलितान् तीर्थेनैव प्रपद्य तत्रैव स्थित्वा 'अभयं वः' इत्युपस्थाय, परिसमूहनादिशेषं पूर्ववत्। अतिप्रवासोऽस्ति चेत् तस्य नैमित्तिकमपि कुर्यात्। अग्निहोत्रहोमे च दक्षिणाग्निहोमानन्तरं 'अभयं वः' इत्युपतिष्ठेत। पूर्वोक्तस्यानुमन्त्रणस्य याजमानत्वादस्य चोपस्थानत्वान्न विकल्पः, तेन समुच्चय एव। अनुपस्थिताग्नेः प्रवासः 'इहैव सन्' इत्येतदेव, नान्यत् किञ्चित्॥

इति द्वितीये पञ्चमी कण्डिका॥ ※॥

---

## अमावास्यायामपराह्णे पिण्डपितृयज्ञः॥ १॥

अमावास्याशब्दः प्रतिपत्पञ्चदश्योः सन्धिवचनोऽप्यत्रापराह्णशब्दसमन्वयात् तद्वत्यहोरात्रे वर्त्तते। तत्रापराह्णे अह्नश्चतुर्थे भागे पिण्डपितृयज्ञः कर्त्तव्यः औपवसथ्येऽहनि यजनीये वाहनि। यजनीये चेत् स्वार्थ एव दक्षिणाग्निः प्रणीयते।

यदा पुनरहोरात्रसन्धौ तिथिसन्धिः स्यात् तदोपवसथ्य एवा-हनि क्रियते॥

दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणा प्रणयेत् ये रूपाणि प्रति-मुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात् प्रणुदात्वस्मादिति॥ २॥

एकोल्मुकं एकतः प्रदीप्तमुल्मुकं प्राग्दक्षिणा, प्राग्दक्षिणस्यां दिशीत्यर्थः। दक्षिणाग्नेः सकाशादेकोल्मुकं गृहीत्वा तस्मादेव प्राग्दक्षिणस्यां दिशि प्रणयेत्, 'ये रूपाणि' इत्यनेन मन्त्रेण॥

सर्वकर्माणि तां दिशं॥ ३॥

अविशिष्टदिक्कानि सर्वाणि कर्माणि तामेव प्राग्दक्षिणां दिशं अभिमुखानि कर्त्तव्यानि॥

उपसमाधायोभौ परिस्तीर्य दक्षिणाग्नेः प्रागुदक् प्रत्यगु-दग्वैकैकशः पात्राणि सादयेच्चरुस्थालिशूर्पस्फ्योलूखलमु-सलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्मामेक्षणकमण्डलून्॥ ४॥

उभयोरपि उपसमाधानं परिस्तरणञ्च कर्त्तव्यं, मध्यगत-स्योभावितिशब्दस्य विशेषसम्बन्धे कारणाभावात्। पात्राणीति चरुस्थाल्यादीन्युच्यन्ते। तेन शब्देन संव्यवहारार्थं चरुश्रपणार्था

स्थाली चरुस्थाली । चरुस्थालीभुवामन्थयोमध्यान्तं प्रस्तम् ।
एकेन प्रयत्नेन छिन्नाः कुशाः सकृदाच्छिन्नाः ॥

दक्षिणतोऽग्निष्ठमारभ्य चरुस्थालीं व्रीहीणां पूर्णां निमृजेत्
॥ ५ ॥

निमृज्यादिति प्राप्ते निमृजेदिति छान्दसः । अग्निसमीपे तिष्ठतीत्यग्निष्ठं शकटं । प्रयाणकाले वाग्नयो यत्र तिष्ठन्तीति तदग्निष्ठं, दक्षिणत आरभ्य तत्रैव शूर्पे स्थालीं निधाय व्रीहिभिरापूरयेत् । तां पूर्णां निमृज्यात् यथोपरितनादिस्तदेशाच्छूर्पोपरि पतन्ति ॥

परिमृष्टान् निदध्यात् ॥ ६ ॥

स्थाल्यास्तदेशाच्छूर्पोपरि ये पतन्ति तान् परिमृष्टान् शकटे निदध्यात् ॥

कृष्णाजिन उलूखलं कृत्वेतरान् पत्यवहन्यादविवेचं ॥ ७ ॥

कृत्वा निधायेत्यर्थः । इतरान् स्थाल्यन्तर्गतानित्यर्थः । अविवेचं अविविच्याविविच्येत्यर्थः ॥

अवहतान्सकृत् प्रक्षाल्य दक्षिणाग्नौ श्रपयेत् ॥ ८ ॥

अवहतेषु अवहतवचनं फलीकरणनिवृत्त्यर्थं । दक्षिणाग्नौ

अपर्येदितिअपणवचनं वचनादृते गार्हपत्य एव अपणमितिज्ञापनार्थं ॥

अर्वागतिप्रणीतात् स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति ॥ ९ ॥

दक्षिणाग्न्यतिप्रणीतयोरन्तराल उल्लिखेदित्यर्थः ॥

तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य आसादयेदभिघार्य स्थालीपाकमाज्यं सर्पिरनुत्पूतं नवनीतं वोत्पूतं ध्रुवायामाज्यं कृत्वा दक्षिणतः ॥ १० ॥

आज्यं सर्पिरित्यादिः ध्रुवायामाज्यं कृत्वा दक्षिणत इत्येवमन्तः पदसमूहः आसादयेदभिघार्येत्यस्मात् पुरस्तादर्थतो द्रष्टव्यः। तेनायमर्थः। तां लेखामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य आज्यं सर्पिर्गृहीत्वा ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाज्येन स्थालीपाकमभिघार्य दक्षिणाग्नेः पश्चादासादयेत्। यदि नवनीतमाज्यकार्यार्थं स्यात् तदास्य विलीयनमात्रं कृत्वाऽन्यस्मिन् पात्र आनीय पवित्राभ्यां त्र्यभ्युत्पूय ततो ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाभिघार्येत्यादि समानं। द्वितीयाज्यग्रहणस्येदं प्रयोजनं पात्रान्तरस्थमुत्पूय पश्चात् ध्रुवायां ग्रहणमित्येवमर्थं। पूर्वमाज्यग्रहणं कार्यलक्षणार्थं। सर्पिः पक्वं। नवनीतमपक्वं ॥

*आञ्जनाभ्यञ्जनकशिपूपबर्हणानि ॥ ११ ॥

दक्षिणत इत्यत्रापि सम्बध्यते, विशेषाग्रहणात्, अपेक्षितत्वाच्च। आञ्जनादीनि च दक्षिणतो दक्षिणाग्नेर्निदध्यात्। पूर्वसूत्रे अयथाक्रमेण सूत्रप्रणयनं दक्षिणत इत्यस्योभयार्थत्वायैव ॥

प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनादायावदानसम्पदा जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति ॥ १२ ॥

इध्मः पञ्चदशसङ्ख्याकः। मेक्षणेनादाय तेनैव जुहुयात् अवदानसम्पदा। अवदानसम्पन्नाम उपस्तरणं द्विरवदानं †हविषामभिघारणं प्रत्यभिघारणञ्च, तयेत्यम्भूतं जुहुयात्, नात्र स्वाहाकारः, स्वधानमःशब्दस्य प्रदानार्थत्वात् ॥

स्वाहाकारेण वाग्निं पूर्वं यज्ञोपवीती ॥ १३ ॥

स्वधानमःशब्दस्य स्थाने स्वाहाकारं वा कृत्वा जुहुयात्। अस्मिन् पक्षे मन्त्रविपर्ययो व्यत्यासः, यज्ञोपवीतत्वञ्च भवति। अग्निं पूर्वमिति 'अग्नये कव्यवाहनाय' इत्येतं मन्त्रं पूर्वं कुर्यादित्यर्थः ॥

---

* एतत्सूत्रादौ दक्षिणतः-पदं सटीकपु॰द्वयेऽधिलिखितं वर्त्तते नान्यत्र। मीमांसा तु विवृता स्फुटीकृता।

† हविषामभिघारणमित्यस्य पाठान्तरत्वेनोल्लेखः केवलमेकस्मिन् पुस्तके कृतः।

मेक्षणमनुप्रहृत्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति ॥ १४ ॥

प्राचीनावीतीग्रहणं स्वाहाकारपक्षेऽपि मेक्षणानुप्रहरणोत्तरकालं प्राचीनावीतित्वप्रापणार्थं। उभयस्मिन् पक्षेऽपि मेक्षणमग्नावनुप्रहर्तव्यमेव त्रिभिर्मन्त्रैस्त्रिर्निनयेत् पिण्डस्थानेषु ॥

तस्यां पिण्डान् निपृणीयात् पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत् तेऽसौ ये च त्वामत्रान्विति ॥ १५ ॥

अधिकृतायां लेखायां लेखासम्प्रत्ययार्थं तस्यांग्रहणं क्रियते नाधिकाराल्लेखासम्बन्धोऽस्तीतिज्ञापनार्थं। तेन हविरासादनमग्नेः पश्चादिति साधितं भवति, तथैवोक्तञ्च। निपृणीयात् दद्यादित्यर्थः। निपरणं पित्र्येणैव तीर्थेन, पाणेरुत्तानत्वमजहदेव पित्र्येण तीर्थेन यदा कुर्यात् तदा पराचीनपाणिर्भवति। असावित्यस्य स्थाने सम्बुद्ध्यन्तानि पित्रादीनां नामानि गृह्णीयात् ॥

तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः प्रत्यक्षमितरानर्चयेत् तदर्थत्वात् ॥ १६ ॥

त्रयाणां मध्ये प्रेतानां पिण्डदानं, जीवानां प्रत्यक्षार्चनमिति गाणगारेर्मतं, पितृप्रीत्यर्थत्वात् कर्मण इति ॥

सर्वेभ्य एव निपृणीयादिति गौतमः क्रियागुणत्वात्॥ ॥१७॥

पित्रादिभ्यस्त्रिभ्यः प्रेतेभ्यो जीवद्भ्यश्च सर्वेभ्यो निपरणं गौतमो मन्यते। क्रियायामुद्देश्यकारकत्वेन च गुणभूताः पितरः न तेषां प्रीतिः शास्त्रतो लोकतोऽवगम्यत इति॥

अपि जीवान्त आदिभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः क्रिया ह्यर्थकारिता॥ १८॥

आदिमध्यान्तशब्दैः पितृपितामहप्रपितामहा उच्यन्ते। जीवः अन्तो यस्य स जीवान्तः। अपिशब्देन जीवादिर्जीवमध्य इत्यपि लभ्यते, जीवसर्व इति च। त्रयाणामेकस्मिन् द्वयोः सर्वेषु वा जीवत्सु यावदर्थं परान् पितॄन् गृहीत्वा प्रेतेभ्य-स्तेभ्यो दद्यादिति गौतमो मन्यते। क्रिया ह्यर्थकारिता मरणपदार्थप्रवृत्ता यस्मात् क्रियेत्यर्थः॥

उपायविशेषो जीवमृतानां॥ १९॥

पित्रादीनां जीवानां मृतानाञ्च पिण्डदाने उपायविशेषो वक्ष्यत इत्यर्थः। उपन्यस्तान् पक्षान् दूषयितुमाह॥

न परेभ्योऽनधिकारात्। न प्रत्यक्षं। न जीवेभ्यो निपृणीयात्॥ २०॥

गौतमगाणगारिगौतमीनां क्रमेण दूषणानि॥

न जीवान्तर्हितेभ्यः ॥ २१ ॥

जीवव्यवहितेभ्यो न निपृणीयादित्यर्थः। सर्वपक्षव्यापीदं दूषणं। सर्वत्रानधिकारादित्ययमेव हेतुः। अनधिकारात् अयोग्यत्वादित्यर्थः। क्वचिद्विध्यभावात् क्वचिन्निषेधादयोग्यत्वमवगम्यते। अयमुपायविशेष उच्यते ॥

जुहुयाज्जीवेभ्यः ॥ २२ ॥

जीवेभ्यो जुहुयात् प्रेतेभ्यो निपृणीयादित्यर्थः। 'न जीवन्तमतीयाद्दद्यात्' इत्यत्रापि निषेधोऽस्ति। तेन जीवपितुः जीवपितामहस्य जीवोभयस्य वाऽयमपि पक्षो नास्ति. तत्र होमात्रं अनारम्भो वा। अथ सर्वेषु जीवत्सु कथमित्याह ॥

सर्वहुतं सर्वजीविनः ॥ २३ ॥

सर्वहुतमिति सर्वे पिण्डा होतव्या इत्यर्थः। पिण्डहोमो निपरणमन्त्रेण स्वाहाकारान्तेन कर्तव्यः। अत्र दूषणीयपक्षाणामुपन्यासे प्रयोजनं सपिण्डीकरणे पितामहे जीवति पितरि मृते संवत्सरादिषु कालेषु तस्यावश्यकर्तव्यत्वात् तत्रैषां पक्षाणामुपयोग इत्येवमर्थं। एवमादीन्यन्यान्यपि प्रयोजनानि चिन्त्यानि ॥

नामान्यविद्वांस्ततपितामहप्रपितामहेति ॥ २४ ॥ ॥ ६ ॥

पित्रादीनां नामाज्ञाने ततादयःशब्दाः नामस्थाने प्रयोक्तव्याः ॥

इति द्वितीये षष्ठी कण्डिका ॥ ＊ ॥

---

निपृताननुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ॥ १ ॥

निपूर्तानिति प्राप्ते निपृतानिति छान्दसो निर्देशः। निपूर्तानेव पिण्डाननुमन्त्रयते न हुतानित्येवमर्थं निपृतानित्युच्यते। तेन सर्वहोम इदमनुमन्त्रणं न भवति। अस्मिन् प्रकरणे यद्यपि पिण्डानामेवानुमन्त्रणमुपस्थानं प्रवाहणञ्च विधीयते, तथापि मन्त्राणां पितृलिङ्गत्वात् पिण्डा एव पितर इति कृत्वा पितर इत्येतैर्मन्त्रैरभिधातव्याः ॥

सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वाऽभिपर्यावृत्यामीमदन्त पितरो यथाभागमावृषायीषतेति ॥ २ ॥

अनुमन्त्रयेतेति शेषः। सव्यावृदुदङ्ङित्येतावतैव सव्यावृत्त्वोदङ्मुखत्वयोः सिद्धयोरावृत्येतिवचनं आवृत्त्यैवोच्छ्वासो न पूर्वमित्येतदर्थं। यथाशक्त्यनुच्छ्वसन्नासित्वा पुनरभिपर्यावृत्य अमीमदन्त इत्यनुमन्त्रयते। आवृषायीषतेति यकारः पठितव्यः। व्यक्तिस्तु प्रमादजा ॥

चरोः प्राणभक्षं भक्षयेत् ॥ ३ ॥

तूष्णीमेवात्र प्राणभक्षणं कार्यं ॥

नित्यं निनयनं॥ ४॥

यदुदकोपनयनमुक्तं शुन्धन्तां पितर इत्यादिमन्त्रकं तदत्र निनयनमित्युच्यते, तदत्र कर्तव्यमित्यर्थः॥

असावभ्यंक्ष्वासावंक्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने॥ ५॥

दद्यादिति शेषः॥

वासो दद्याद्दशामूर्णास्तुका वा पञ्चाशद्वर्षताया ऊर्द्ध्वं स्वं लोमैतद्वः पितरो वासो मा नोऽतोऽन्यत् पितरो युंग्ध्वमिति॥ ॥ ६॥

एतेषामन्यतमं द्रव्यं वासोऽर्थं पिण्डेषु दद्यादित्यर्थः। दशां वस्त्रस्यान्तप्रदेशं। ऊर्णास्तुका वा अविलोमानि। पञ्चाशद्वर्षतायाः पञ्चाशद्वर्षेष्वतीतेषु ऊर्द्ध्वं जीवन् स्वीयमेव लोम वासोऽर्थं दद्यात्। मन्त्रस्त्वयमेव सर्वेषु द्रव्येषु सकृदेव भवति॥

अथैनानुपतिष्ठेत नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरोऽघोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय। स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम॥ ७॥

इतिकाराध्याहारेण सूत्रच्छेदः। सन्तः स्यामेति मन्त्रः पठितव्यो वःकारं वर्जयित्वा॥

नमोऽस्माकुवामचं इति च तिसृभिः ॥ ८ ॥

उपतिष्ठेतेति शेषः ॥

अथैनान् प्रवाहयेत् परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्व्विणेभिः। दत्तायास्मभ्यं द्रविणे च भद्रं रयिञ्च नः सर्व्ववीरं नियच्छतेति ॥ ९ ॥

अत्रापि पिण्डस्थान् पितॄनेव प्रवाहयेत् ॥

अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति ॥ १० ॥

प्रत्येयादितिवचनसामर्थ्याद्दक्षिणामुखेनात्र किञ्चिदनुव्रजनं कर्तव्यं। 'अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैः' इति अविशेषवचनं दक्षिणाग्निमेवेतरयोर्विशेषाभिधानात् ॥

गार्हपत्यं यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसमिति* ॥ ११ ॥

प्रत्येयादिति शेषः ॥

---

* मूलमात्रपुस्तके एतत् सूत्रं इत्यन्तं नास्ति।

वीरं मे दत्त पितर इति पिण्डानां मध्यमं ॥ १२ ॥

आददीतेति शेषः ॥

पत्नीं प्राशयेदाधत्त पितरो गर्भं कुमारं पुष्करस्रजं। यथायमरपा असदिति ॥ १३ ॥

तमेव मध्यममिति शेषः। पत्न्येव मन्त्रं ब्रूयादाधत्तेति ॥

अप्स्वितरौ ॥ १४ ॥

प्रक्षिपेदित्यर्थः ॥

अतिप्रणीते वा ॥ १५ ॥

प्रक्षिप्य दाहयेत् ॥

यस्य वागन्तुरन्नकाम्याभावः स प्राश्नीयात् ॥ १६ ॥

आगन्तुरभिनवः निर्निमित्त एवान्नेच्छाभावो यस्य स वेतरौ प्राश्नीयात् ॥

महारोगेण वाभितप्तः प्राश्नीयादन्यतरां गतिं गच्छति ॥
॥ १७ ॥

क्षयकुष्ठादिनाऽसह्यपरिहारेणातिपीडितः। प्राश्नीयादिति पुनर्वचनं पूर्वेणास्य सम्बन्धनिवृत्त्यर्थं। तेनान्यतरामित्यत्रैव भवति।. अन्यतरां गतिं गच्छतीत्ययमर्थः सद्य एव अरोगो भवेत् म्रियेत वेति ॥

एवमनाहिताग्निर्नित्ये ॥ १८ ॥

अनाहिताग्निरप्येवं पिण्डपितृयज्ञं कुर्यात् नित्ये औपासन इत्यर्थः ॥

अपयित्वातिप्रणीय जुहुयात् ॥ १९ ॥

तस्यायं विशेषः। हविःश्रपणं कृत्वाऽतिप्रणयनं कर्तव्यं। तस्यैवातिप्रणीतस्योपसमाधानं परिस्तरणञ्च कृत्वा ततोऽर्वागतिप्रणीतादित्यादि समानं। जुहुयादित्ययमनुवादः। अथ-स्यात्र विशेषः। यदन्तरिक्षमित्यस्मिन्मन्त्रे गार्हपत्यशब्द उद्धर्तव्यः, तच्छब्दप्रवृत्तिनिमित्तस्य संस्कारस्यात्राभावादिति ॥

द्विवत् पात्राणामुत्सर्गः ॥ २० ॥

द्विश इत्यर्थः ॥

तृणं द्वितीयमुद्रिक्ते ॥ २१ ॥ ॥ ७ ॥

एकस्यातिरिक्तस्य तृणेन द्वित्वं सम्पाद्य उत्सर्गः कर्तव्य इत्यर्थः ॥

इति द्वितीये सप्तमी कण्डिका ॥ * ॥

दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयां ॥ १ ॥

पूर्वं दर्शपूर्णमासयोः स्वरूपमात्रमुक्तं, इदानीं तयोरनुष्ठानारम्भ उच्यते, *तावारप्स्यमानस्यान्वारम्भणीयाविधानात्। यस्मादाधानानन्तरं अजस्राग्निहोत्रपिण्डपितृयज्ञानुक्त्वाऽनयोरारम्भ उच्यते तस्मादेतत् साधितं भवति पौर्णमास्यामाधानमिष्टिञ्च कृत्वा ततोऽजस्रधारणमग्निहोत्रहोमञ्च कृत्वाऽमावास्यायां पिण्डपितृयज्ञञ्च कृत्वा पौर्णमास्यां तयोरारम्भ इति। तत्र यदापस्तम्बवचनं, 'पौर्णमास्यां तु पूर्वस्मिन् पर्वणि सेष्टि सान्वारम्भणीयमपवृज्य श्वोभूते पौर्णमासेन यजेत' इति। अस्यायमर्थः, पौर्णमास्यामादधानस्तदहरेव पौर्णमासीमारभेतेति। तस्यायं विषयः। यस्यां पौर्णमास्यामन्वारम्भणीयापर्यन्तं सर्वं प्रतिपत्पञ्चदशीसन्धिक्षणात् प्रागेव कर्त्तुं शक्यते साऽस्य विषयः। सन्ध्यनपगमात् पौर्णमास्यधिकारप्राप्तिरित्येकस्मिन्नहनि य उत्तरस्मिन् क्षणे दर्शपूर्णमासावारभते स तस्मात् पूर्वस्मिन् क्षणे तावारप्स्यमान इत्युच्यते, तस्यान्वारम्भणीया कर्त्तव्या। सेयं पुरुषार्था न कर्मार्था, श्रुत्यादीनामभावात्। दर्शपूर्णमासावारप्स्यमान इत्यनेन च कर्मसम्बन्धो वक्तुं न शक्यते। निमित्ततयाधिकारिविशेषणत्वेन उपक्षयात् उद्देशकं न भवितुमर्हति, तस्मादनङ्गं तयोरन्वारम्भणीया। तथापि तत्सम्बन्धिपुरुषसम्बन्धात् तयोरेवाधिकारित्वेन पुरुषं सम्पादयतीति युक्तमुक्तं। अतो

* इदानीं ताविति आदर्श पु०।

दर्शपूर्णमासावृत्तौ विकृतिषु च न पुनः पुनः कार्यातिदेशा-
भावात् कार्यसम्बन्ध्यतिदिश्यते न पुरुषार्थसम्बन्धमपीति ॥

अग्नाविष्णू सरस्वती सरस्वानग्निर्भगी ॥ २ ॥

भगीत्यग्नेर्गुणः ॥

अग्नाविष्णू सजोषसे मा वर्द्धन्तु वाङ्गिरः। द्युम्नैर्वाजेभिराग-
तं। अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा।
दमे दमे सुष्टुतिर्वामियाना प्रति वां जिह्वा घृतमुच्चरण्यत्।
पावकानः सरस्वती पावीरवी कन्या चित्रायुः पीपिवांसं सर-
स्वतो दिव्यं सुपर्णं वायसं बृहन्तमासवं सवितुर्यथा स नो
राधांस्याभरेति ॥ ३ ॥

इष्टेर्याज्यानुवाक्याः ॥

आधानाद्यद्यामयावी यदि वार्था व्यथेरन् पुनराधेय इष्टिः
॥ ४ ॥

आमयावी उदरव्याधिमान्। अर्थव्यथा अर्थहानिः। अ-
र्थाः पुत्रपश्वादयः। आधानानन्तरं तस्मिन्नेव संवत्सरे यद्ये-
तानि निमित्तानि स्युः तदा पुनराधेयं कर्त्तव्यमित्ययमर्थो-
ऽस्मिन् सूत्रेऽर्थाल्लभ्यते। तस्मिन् पुनराधेये वक्ष्यमाणलक्षणा
इष्टिः कार्येत्यर्थः ॥

तस्यां प्रयाजानूयाजान् विभक्तिभिर्यजेत् ॥ ५ ॥

तस्यामितिवचनं तस्यामेवेष्टौ नान्यस्यां वच्यमाणो विधिः स्यादित्येवमर्थं। तेन ज्ञायतेऽनेकेष्टिकं पुनराधेयमिति विभक्तिभिः सहितान् प्रयाजानूयाजान् कुर्यात्। का विभक्तिः, क्व वा प्रदेशे प्रयोक्तव्या, किं सर्वेषु उत कतिपयेष्वित्येतेषां संशयानां निवृत्तये चतुरः प्रयाजान् पठित्वा तानेव प्रयाजांश्चतुरो विभक्तिभिः सहितान् पठति, द्वावनूयाजौ च पठति, अनयोरविकृतत्वसिद्ध्यर्थं ॥

समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु। तनूनपादग्निमग्न आज्यस्य वेतु। इडो अग्निनाग्न आज्यस्य व्यन्तु। बर्हिरग्निरग्न आज्यस्य वेत्विति ॥ ६ ॥

नराशंसिनां नराशंसोऽग्निमग्न इति भवति। विभक्तिविधानस्याविशेषात् पाठस्य चोत्तमप्रयाजानूयाजव्यावृत्त्यर्थत्वात् ॥

समिधाग्निं दुवस्यते ह्यूषु ब्रवाणि त इत्याग्नेयावाज्यभागौ ॥ ॥ ७ ॥

सोमस्थानेऽप्यग्निरेव। तयोरेते अनुवाक्ये ॥

वृद्धिमदिन्दुमन्तावित्याचक्षते ॥ ८ ॥

आज्यभागयोरेतौ गुणौ ॥

तथानुवृत्तिः ॥ ९ ॥

निगमेषु सगुणयोरेवानुवृत्तिरित्यर्थः ॥

इज्या च ॥ १० ॥

इज्याशब्देन याज्यायां देवतादेश उच्यते। स च सगुणयोरेव कर्त्तव्यः। केचिदिहानुवृत्तिशब्देनैव देवताशब्दस्यापि ग्रहणमभ्युपगम्य इज्यां चेत्यनेन याज्यामध्यगतस्याग्निशब्दस्य सगुणोच्चारणमिच्छन्ति ॥

नित्यं पूर्वमनुब्राह्मणिनः ॥ ११ ॥

नित्यः केवलोऽग्निः अनुवाक्या च। 'अग्निर्वृत्राणि' इत्यनुब्राह्मणिन आचार्याः ॥

अग्न आयूंषि पवस इत्युत्तरं ॥ १२ ॥

उत्तरोऽपि केवलोऽग्निरियञ्चानुवाक्या। अनुब्राह्मणिनामेवाभिप्रायेण ॥

नित्यस्तूत्तरे हविःशब्दः ॥ १३ ॥

उत्तरे याज्यामन्त्रे हविःशब्दस्य सोमधर्मत्वात्तन्निवृत्तौ तस्य निवृत्तिप्रसक्ते तस्यानापन्नत्वादग्नेरपि तद्धर्मसम्बन्ध इति मत्वा नित्यस्त्वित्युक्तवान् ॥

आग्नेयं हविः। अथाह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्य गीर्भि-र्गृणन्त एभिर्नो अर्कैरग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये। देवं बर्हिरग्नेर्वसुवने वसुधेयस्य वेतु देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेत्विति ॥ १४ ॥ ॥ ८ ॥

गतार्थमिदं ॥

इति द्वितीये ऽष्टमी कण्डिका ॥ * ॥

आग्रयणं व्रीहिश्यामाकयवानां ॥ १ ॥

अग्रे अयनं भक्षणं येन कर्मणा तदाग्रयणं। प्रथमद्वितीययोर्ह्रस्वदीर्घत्वव्यत्ययः। एषान्त्रयाणां द्रव्याणां संवत्सरे प्रथमनिष्पन्नानां आग्रयणं नाम कर्म कर्त्तव्यमित्यर्थः। व्रीहिशब्दस्य प्रथमनिपातो व्रीहीणां प्राधान्यख्यापनार्थं। तेन कालचोदना व्रीह्याग्रयणस्यैव भवति। श्यामाकशब्दस्य मध्यनिपातो व्रीहिकालाद्-यवकालो भिन्न इति ज्ञापयति ॥

सस्यं नाश्नीयादग्निहोत्रमहुत्वा ॥ २ ॥

सस्यं नवनिष्पन्नं, तन्नाश्नीयात् आग्रयणेनानिष्ट्वा। यद्याग्रयणेनानिष्टवतो नवनिष्पन्नेनान्नेन विना निर्वाहोऽत्र स्यात्

तदा तेषां द्रव्याणां तत्कालनिष्पन्नेन सायम्प्रातरग्निहोत्रं हुत्वाऽश्नीयात् । ततः काल आगते लाग्रयणं कुर्यात् । अग्निहोत्रमहुत्वा नाश्नीयादितिवचनादाग्रयणेनानिष्ट्वाप्यग्निहोत्रं हुत्वाऽश्नतो न दोष इति गम्यते । सस्यग्रहणं व्रीह्याद्यन्यदपि यन्निष्पन्नं तस्य सर्वस्य प्रतिषेधार्थं ॥

यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत ॥ ३ ॥

यदा वर्षतृप्तिर्लोकस्य भवति तदाग्रयणेन यजेत । अनेन प्रकारेण व्रीह्याग्रयणस्य शरत्काल उक्तो भवति । एतमेव कालं श्रुत्या समर्थयति ॥

अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजत इति अग्निहोत्रीं वै नानादयित्वा तस्याः पयसा जुहुयात् ॥ ४ ॥

अथाग्रयणेन यजेतेति इष्टिरेवाग्रयणशब्देनोक्ता, इदानीमिदमप्युच्यते । अग्निहोत्रहोमार्था धेनुरग्निहोत्रीत्युच्यते । तां व्रीहिश्यामाकयवानामन्यतमं आशयित्वा तस्याः पयसा सायंप्रातरग्निहोत्रं जुहुयात् । इष्टिः प्रथमकल्पः, तदसम्भवेऽयमनुकल्पः इति द्वावेवाग्रयणकल्पावत्रोच्येते ॥

अपि वा क्रिया यवेषु ॥ ५ ॥

यवैराग्रयणस्य क्रिया भवेत् अक्रिया वेति विकल्पः ॥

इष्टिस्तु राज्ञः ॥ ६ ॥

त्रयाणां वर्णानामविशेषेण कल्पद्वये प्राप्ते राज्ञो विशेष उच्यते इष्टिरेव नान्य इति ॥

सर्वेषां चैके ॥ ७ ॥

सर्वेषामपि वर्णानामिष्टिरेवेत्येके मन्यन्ते ॥

श्यामाकेष्ट्यां सौम्यश्चरुः ॥ ८ ॥

श्यामाकाग्रयणे इष्ट्यां सोमदैवत्यश्चरुर्भवति। कालो वर्षा ऋतुः, शास्त्रान्तरे दर्शनात् ॥

सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामित्यवान्तरेडाया नित्यं जपमुक्त्वा सव्ये पाणौ कृत्वेतरेणाभिमृशेत् प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रिये मह्यं यशसे मह्यमन्नाद्याय ॥ ९ ॥

इतिकाराध्याहारेण सूत्रच्छेदः। नित्यजपशब्देनेडे भागमिति मन्त्र उच्यते। तस्य नित्यत्वे सत्यपि नित्यवचनं एतेन भक्षिण इति विध्यतिदेशे तद्वर्जितस्य प्रापणार्थं ॥

भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा। स नो मयोभूः पितवाविशस्व शन्नो भव द्विपदे शं चतुष्पद इति

प्राश्याचम्य नाभिमालभेतामोऽसि प्राण तदृतं ब्रवीम्यमासि सर्वानसि प्रविष्टः। स मे जरां रोगमपनुद्य शरीरादमा म एधि मामृधाम इन्द्रेति ॥१०॥

स्मृतिप्राप्तस्याचमनस्य विधानं यस्मिन् देशे आचमनं कृतं तस्मिन्नेव देशे स्थितस्य च नाभ्यालम्भनमित्यर्थं॥

एतेन भक्षिणो भक्षान् सर्वत्र नवभोजने ॥ ११ ॥

एतेन विधानेन सर्वभक्षेषु सर्वे भक्षिणः सर्वान् भक्षान् भक्षयेयुः। सर्वत्रवचनं प्रकरणादुत्कर्षार्थं। नवभोजनवचनं लौकिकेऽपि नवभोजने प्रापणार्थं। सर्वत्रवचनात् प्रकरणादुत्कृष्टमपि नवभोजनवचनाल्लौकिक एव व्यवतिष्ठते। वैदिकेऽग्निहोत्रहोमे 'नवानां स्वनीयात्' इत्यत्र न प्राप्नुयात्, तत्रापि प्रापणार्थं भक्षणवचनं॥

अथ व्रीहियवानां धाय्ये विराजौ ॥ १२ ॥

अथानन्तरं व्रीहीणां यवानां चाग्रयणेष्टिरुच्यते। तत्र व्रीह्याग्रयणस्य काल उक्तः, वसन्तो यवाग्रयणस्य। तत्र हि तेषां प्रथमः पाक इति तत्के विशेषाभावात् उभयोः सहवचनं तयोर्धाय्ये विराजौ च भवतः। 'इतरत् पौर्णमासं तन्त्रं वैराजं' इत्येतावतैवोक्तेऽपि तावन्मात्रविकारसिद्धौ सत्यां धाय्याविराजग्रहणं विकल्पेन वृधन्वतोरपि प्रापणार्थं॥

*अग्नीन्द्राविन्द्राग्नी वा विश्वेदेवाः सोमो यदि तत्र श्यामाको द्यावापृथिवी ॥ १३ ॥

आद्ययोर्विकल्पेनैता देवता गृह्यन्ते। यदि श्यामाकाग्रयणमस्यामेवेष्टौ समानतन्त्रेण क्रियते तदा सोमस्तृतीयो भवति ॥

आद्या ये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्तो विश्वेदेवास आगत ये के च ज्मा महि नो अहिमाया मही द्यौः पृथिवी च नः प्रपूर्वजे पितरा नव्यसोभिरिति ॥ १४ ॥ ॥ ९ ॥

इन्द्राग्न्योः सोमस्य चोक्ता याज्यानुवाक्याः ॥

इति द्वितीये नवमी कण्डिका ॥ * ॥

---

अथ काम्याः ॥ १ ॥

अथ अनन्तरं, काम्या इष्टयो वक्ष्यन्ते। प्राक् चातुर्मास्येभ्य इत्यर्थः। काम्या इति वचनं अनिर्दिष्टकामा अपि न नित्याः शास्त्रान्तरादपि तासां कामोऽन्वेष्टव्य इत्येवमर्थं ॥

---

* अग्नेन्द्राविति सटीकपु॰द्वये।

आयुष्कामेष्ट्यां जीवातुमन्तौ ॥ २ ॥

आयुष्कामस्य इष्टिः आयुष्कामेष्टिः। अस्मिन् प्रकरणे कामग्रहणानामेतत् प्रयोजनं यद्देवतासंयुक्तायामिष्टौ यत् तन्त्रं विहितं तद्देवतासंयुक्तायामप्यन्यकामसंयुक्तायान्तन्न भवतीतिज्ञापनार्थं ॥

आ नो अग्ने सुचेतुना त्वं सोम महे भगमित्यग्निरायुष्मानिन्द्रस्त्राता ॥ ३ ॥

द्वे देवते। आयुष्मानित्यग्नेर्गुणः। त्रातेति इन्द्रस्य गुणः ॥

आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः। पुनस्ते प्राण आयातु परा यक्ष्मं सुवामि ते। आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमं। त्रातारमिन्द्रमवितारमिन्द्रं मा ते अस्यां सहसावन् परिष्टौ। पाहि नो अग्ने पायुभिरजस्रैरग्ने त्वं पारयानव्यो अस्मानिति संयाज्ये ॥ ४ ॥

स्वस्त्ययन्यां रक्षितवन्तौ ॥ ५ ॥

स्वस्तिगमनसाधनीभूता स्वस्त्ययनीष्टिः ॥

अग्ने रक्षा णो अंहसस्त्वं नः सोम विश्वत इति ॥ ६ ॥

त्वं नः सोम विश्वत इति रक्षालिङ्गाद्धोतस्येव ॥

अग्निः स्वस्तिमान्त्स्वस्ति नो दिवो अग्ने पृथिव्या आरे अस्मदमतिमारे अंहइति पूर्वयोक्ते संयाज्ये ॥ ७ ॥

'पाहि नः' इत्येते ॥

पुत्रकामेष्ट्यामग्निः पुत्री ॥ ८ ॥

पुत्रकामेष्टौ अग्निः पुत्री देवता। पुत्रीत्यग्नेर्गुणः ॥

यस्मै त्वं सुकृते जातवेदो यस्त्वा हृदा कीरिणा मन्यमानः। अग्निस्तु विश्रवस्तममिति द्वे संयाज्ये ॥ ९ ॥

आग्नेय्या उत्तरे ॥ १० ॥

ये उत्तरे इष्टी वक्ष्येते 'मूर्धन्वतः' 'कामाय' इति च ते अग्निदेवत्ये भवत इत्यर्थः। पूर्वस्यामग्नेर्मूर्धन्वान् गुणः। उत्तरस्यां कामो गुणः ॥

नित्ये मूर्द्धन्वतः ॥ ११ ॥

'अग्निर्मूर्द्धा भुवो यज्ञस्य' इत्यर्थः ॥

तुभ्यं ता अङ्गिरस्तमाश्यामन्तं काममग्ने तवोतीति कामाय ॥ १२ ॥

कामगुणकस्याग्नेः 'तुभ्यं ता अङ्गिरस्तमाश्यामन्तं कामम्' इति याज्यानुवाक्ये ॥

वैमृध्या उत्तरे ॥ १३ ॥

उत्तरे द्वे ऋचौ वैमृध्यौ भवतः। तयोर्वक्ष्यमाणे याज्यानुवाक्यायुगले, ते इन्द्रदेवते भवतः। स चेन्द्रो विमृद्गुणकः, *वैमृध्यार्थगुणको वा भवति। अत एते ऋचौ वैमृध्यौ इत्युच्येते॥

वि न इन्द्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः। सद्युत्तिमिन्द्र सच्युतिं प्रच्युतिं जघनच्युतिं। प्रनाकाफान आभर प्रयच्छन्निव सक्थ्यौ वि न इन्द्र मृधो जहि। चनीखुदद्यथासपमभि नः सुष्टुतिं नयेति॥ १४ ॥

एते पुष्टिकामस्य याज्यानुवाक्ये॥

इन्द्राय दात्रे पुनर्दात्रे वा॥ १५ ॥

इन्द्रो दाता स पुनर्दाता वा देवता भवति। उभयथाप्येते याज्यानुवाक्ये, वचनसामर्थ्यात्॥

यानि नो धनानि क्रुद्धो जिनासि मन्युना। इन्द्रानुविद्धि नस्तानि अनेन हविषा पुनः। पुनर्न इन्द्रो मघवा ददातु धनानि शक्रो धनोः सुराधाः। अर्वाचीनं कृणुतां याचितो मनः श्रुष्टी न इन्द्रो हविषा मृधातीति॥ १६ ॥

आशानामाशापालेभ्यो वा॥ १७ ॥

---

* वैमृध्योऽयगुणको वेति सटी॰पु॰ह॰।

आशा आशापाला वा देवता। अत्रापि याज्यानुवाक्ययो-रैक्यं॥

आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः। इदम्भूतस्या-ध्यक्षेभ्यो विधेम हविषा वयं। विश्वा आशा मधुना संसृ-जामि अनमो वा आप ओषधयः सन्तु सर्वाः। अयं यजमानो मृधो व्यस्यत्वगृभीताः पशवः सन्तु सर्व इति॥ १८॥

लोकेष्टिः॥ १९॥

इष्टिनामेदं॥

पृथिव्यन्तरिक्षं द्यौरिति देवताः॥ २०॥

देवताग्रहणं पृथिव्यादीनां पृथग्देवतात्वसिद्ध्यर्थं। त्रिलि-ङ्गत्वाद्याज्यानुवाक्ययोस्तिस्रः सहिता एका देवता माभूदिति। तेनैतत् साधितं भवति, याज्यानुवाक्यालिङ्गाद्देवतानिर्णयः कार्य इति॥

पृथिवीं मातरं महीमन्तरिक्षमुपब्रुवे। बृहतीमूतये दिवं। विश्वं बिभर्त्ति पृथिवी अन्तरिक्षं विपप्रथे। दुहे द्यौर्बृहती पयः। वर्म मे पृथिवी मह्यो अन्तरिक्षं स्वस्तये। द्यौर्मे शर्म महि अव इति तिसृस्त्रयाणां॥ २१॥

एतास्तिस्र ऋचस्त्रयाणां हविषां याज्यानुवाक्या भवन्ति।

उत्तरसूत्रे विनिवेशसामर्थ्यादेवास्यार्थस्य सिद्धौ सत्यां वचनमिदमन्यत्रापि तिसृस्तयाणां विहिता एवं विनिवेशयितव्या इत्येवमर्थं। एवं भवन्तीत्याह ॥

प्रथमे *प्रथमस्योत्तमे मध्यमस्य ॥ २२ ॥ ॥ १० ॥

उत्तमा प्रथमा सोत्तमस्य ॥

इति द्वितीये दशमी कण्डिका ॥ ※ ॥

मित्रविन्दा महावैराजी ॥ १ ॥

मित्राणि यया विन्दते सा मित्रविन्दा। गुणनामैतत्। महावैराजीति नामैव ॥

अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टेत्येकप्रदानाः ॥ २ ॥

दशैता देवता एकप्रदानाः महावैराज्यां भवन्ति। एकप्रदानशब्द उक्तार्थः ॥

* प्रथमोत्तर इति मू॰माजपु॰।

अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपेण समनक्तु यज्ञं ॥ ३ ॥

इयमनुवाक्या ॥

प्रतिलोममादिश्य यजद् ये यजामहे त्वष्टारं सरस्वतीं पूषणं सवितारं बृहस्पतिमिन्द्रं मित्रं वरुणं सोममग्निं त्वष्टा रूपाणि दधती सरस्वती भगं पूषा सविता नो ददातु । बृहस्पतिर्ददिन्द्रः सहस्रं मित्रो दाता वरुणः सोमो अग्निरिति ॥ ४ ॥

एता देवताः प्रतिलोममादिश्य यजेत् । ये यजामह इतिवचनं याज्यायामेव प्रतिलोमत्वं मान्येषु निगमेष्वित्येवमर्थं । प्रतिलोमविधानादेव प्रतिलोमत्वे सिद्धे प्रतिलोमपाठस्येदं प्रयोजनं, उत्पत्तियागक्रमयोर्विरोधे पूर्वेषूत्पत्तिक्रमः, उत्तरेषु यागक्रम इति । अस्य न्यायस्यैन्द्रमारुत्यामुक्तत्वादुत्तरेषु निगमेषु प्रतिलोमत्वं स्यादिति तन्निवृत्त्यर्थं इदस्य पाठप्रयोजनं । वरुणस्याप्युपांशुत्वं भवतीति 'त्वष्टा रूपाणि' इति याज्या ॥

अष्टौ वैराजतन्त्राः ॥ ५ ॥

'आग्नेय्या उत्तरे' इत्येवमाद्या महावैराज्यन्ता इष्टयो वैराजतन्त्राः ॥

तासामाद्याः षडेकहविषः ॥ ६ ॥

अनुवादोऽयं, प्राप्तत्वात्। प्राप्तानुवादे प्रयोजनं हविःशब्देन प्रधानहविषामेव ग्रहणमिति ज्ञापनार्थं ॥

स्नुषाश्वशुरीययाभिचरन् यजेत ॥ ७ ॥

स्नुषाश्वशुरीया नाम इष्टिः। तयाऽभिचरन् शत्रुं मारयामीति सङ्कल्पयन् यजेत ॥

इन्द्रः सुरो अतरद्रजांसि स्नुषा सपत्ना श्वशुरोऽहमस्मि।
अहं शत्रून् जयामि जर्हृषाणोऽहं वाजं जयामि वाजसातौ ॥
इन्द्रः सुरः प्रथमो विश्वकर्मा मरुत्वाँ॑ असुगणवान् सुजातैः।
मम स्नुषा श्वशुरस्य प्रविष्टौ सपत्ना वाचं मनस उपासतां ॥
॥ ८ ॥

याज्यानुवाक्ययोर्लिङ्गादेवास्या देवता कल्प्या, सा चेन्द्रः, इन्द्रः सुरगुणो वा ॥

जुष्टोदमूना अग्ने शर्द्ध महते सौभगायेति संयाज्ये ॥ ९ ॥

विमतानां सम्मत्यर्थे संज्ञानी ॥ १० ॥

विमतानां विमनस्कानां सम्मतिप्रयोजनार्थं संज्ञानी नाम इष्टिः कार्या ॥

अग्निर्वसुमान् सोमो रुद्रवानिन्द्रो मरुत्वान् वरुण आदित्यवानित्येकप्रदानाः ॥ ११ ॥

चतस्रः सगुणा देवताः एकप्रदाना वेदितव्याः ॥

अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रैरभिरक्षतु त्मना।
इन्द्रो मरुद्भिर्ऋतुथा कृणोतु आदित्यैर्नो वरुणः शर्म यंसत् ॥
समग्निर्वसुभिर्नो अव्यात् सं सोमो रुद्रियाभिस्तनूभिः।
समिन्द्रो रातहव्यो मरुद्भिः समादित्यैर्वरुणो विश्ववेदा इति ॥
॥ १२ ॥

एषा संग्रामो नामेष्टिः। स्वामिभृत्ययोः सम्प्रत्यर्थं, 'यः समानैर्मिथो विप्रियः स्यात्तमेतया याजयेत्' इति श्रुतेः ॥

ऐन्द्रामारुतीं भेदकामाः ॥ १३ ॥

इन्द्रस्य मरुतश्च देवते यस्याः सा ऐन्द्रामारुतीत्येवात्र विग्रहः। केवलानां मरुतां याज्यानुवाक्यादर्शनादिन्द्रस्य च पूर्वयोाक्योर्ग्रहणेन द्विदेवत्येयमिति निश्चीयते। भेदकामाः राज्ञाश्च विशश्च लोके आहिताग्नयो यदि स्युः तेषामस्यामधिकारः। एकैकस्यैव ॥

मरुतो यस्य हि क्षये प्रत्नवद्वाय मारुताय स्वभानव इति ॥ १४ ॥

इन्द्रस्य नित्ये एव ॥

ऐन्द्रीमनूच्य मारुत्या यजेन्मारुतीमनूच्यैन्द्र्या यजेदिन्द्रं पूर्वं निगमेषु मरुतो वा ॥ १५ ॥

प्रधानक्रम एवाङ्गानां क्रम इति प्रसिद्धो न्यायः। अत्र तु प्रधानयोः परस्परव्यतिषक्तसिद्धयोः क्रमो नास्ति, याज्यानुवाक्याभ्यामुभाभ्यां यागक्रियावयवभूतस्य उद्देशभागस्य सिद्धेरिति मन्यमानो विकल्पमुक्तवान्। व्युदस्यत्येनं ॥

इन्द्रं वा। प्रधानादूर्ध्वं मरुतः ॥ १६ ॥

सत्यमुत्पत्तिक्रमाभावे प्रधानक्रम एवाङ्गानां भवति, उत्पत्तिक्रमे तु सति स एवानुपजातविरोधित्वात् प्रधानात् प्राक् भवति, पश्चात् तु प्रधानक्रम एवेति न्यायः। अत्र तु प्रधानयोः क्रमोऽस्त्येव, याज्याया एवोद्देश्यतायाः प्रतिपादकत्वात्। आवाहनादिवदनुवाक्याया देवताद्रव्यस्वरूपप्रतिपादकत्वाभ्याहत एवात्र यागः पूर्वं क्रियते, पश्चादैन्द्र इति विनिवेशमुक्तवानाचार्यः। वाशब्दोऽत्र पक्षव्यावृत्त्यर्थः ॥

प्रकृत्या सम्पत्तिकामाः संज्ञानीश्च ॥ १७ ॥

यद्याहिताग्नयो राजविशौ सम्पत्तिं कामयेरन् तदा ते एते देवते प्रकृत्यैव यजेरन् । पूर्ववदेकैक एव ते । ततः संज्ञानीश्च कुर्युरेवमेव ॥

ऐन्द्राबार्हस्पत्यां प्रधृष्यमाणाः ॥ १८ ॥

शत्रुभिरभिभूयमानाः ॥

आ न इन्द्राबृहस्पती अस्मे इन्द्राबृहस्पती इति यद्यपीन्द्राय चोदयेयुः ॥ १९ ॥ ॥ ११ ॥

यद्यैन्द्राबार्हस्पत्यं निरूप्य इन्द्राय चोदयेयुः अध्वर्यवः, यदा बार्हस्पत्यं निरूप्य इन्द्राय चोदयेयुः, उभयोरपि पक्षयोरेते एव याज्यानुवाक्ये भवत इत्यर्थः ॥

इति द्वितीये एकादशी कण्डिका ॥ * ॥

---

*पवित्रेष्ट्यां ॥ १ ॥ ॥ १२ ॥

एतत् खण्डमत्र न दृष्टं ॥

इति द्वितीये द्वादशी कण्डिका ॥ * ॥

---

* (एतावन्मात्रमेव सटीकपुस्तकद्वये। निष्टीकमूलपुस्तकद्वये त्वेतत् खण्डमखण्डमत्र वर्तते, सुतरां विलक्षणत्वेनास्य खण्डस्य भिन्नाक्षरेणाधः सन्निपातः कृत इति ॥)

पवित्रेष्ट्यां ॥ १ ॥

अपामिदं न्ययनं समुद्रस्य निवेशनं। अन्यान्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव। नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्यान्ते भवेति पावकवत्यौ धाय्ये ॥ २ ॥

पावकवन्तावाज्यभागावग्नौ रक्षांसि सेधति यो धारया पावकयेत्यृचे। याज्ये ॥ ३ ॥

यत् ते पवित्रमर्चिषा कलशेषु धावतीति पवित्र इत्येते ॥ ४ ॥

अग्निः पवमानः सरस्वती प्रिया अग्निः पावकः सविता सत्यप्रसवोऽग्निः शुचिर्वायुर्नियुत्वानग्निर्व्रतपतिर्दधिक्रावाऽग्निर्विश्वानरो विष्णुः शिपिविष्टः उत नः प्रियाप्रियास्विमा जुह्वाना युष्मदानमोभिर्वायुरग्रेगा यज्ञप्रीर्वायो शुक्रो अयामि ते दधिक्राव्णो अकारिषमादधिक्राः शवसा पञ्च कृष्टीर्जुष्टो अमूना अग्ने शर्द्ध महते सौभगायेति संयाज्ये ॥ ५ ॥

सैषा संवत्सरमतिप्रवसतः शुद्धिकामो वा तदेषाऽभि यज्ञगाथा गीयते—

'वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च।

ऋतावृतौ प्रयुञ्जानः पुनाति दशपौरुषं' इति ॥

वर्षकामेष्टिः कारीरी ॥ १ ॥

वर्षकामस्य कारीरी नाम इष्टिः कार्या ॥

तस्यां प्रति त्यं चारुमध्वरमीडे अग्निं स्ववसं नमोभिरिति धाय्ये ॥ २ ॥

तस्यामिति कारीर्यामित्यर्थः । अत्र बहुदेवत्याया आम्नानात् अन्यदा इयमेव कारीरी एकदेवत्या भवति, तस्यामपि प्रापणार्थं तस्यांग्रहणम् ॥

याः काश्च वर्षकामेष्ट्याऽनुमन्त्री ॥ ३ ॥

एते वर्षकामेष्टिमात्रे भवतः ॥

अप्स्वग्ने सधिष्टवाप्सु मे सोमो अब्रवीदिति ॥ ४ ॥

अत्र पूर्वस्या गायत्रीत्वात् तत्साहचर्यादुत्तरापि गायत्र्येव ग्रहीतव्येति । तथा चोत्तरत्र वक्ष्यति । *'अप्सुमन्तौ गायत्रौ' इति । इदमेव वाक्यामायमनुसरन् ॥

अग्निर्धामच्छन्मरुतः सूर्यः ॥ ५ ॥

धामच्छदित्यग्नेर्गुणः ॥

---

* अप्सुमन्त्री इति पाठः प्रामादिकः ।

तिस्रश्च पिण्ड्य उत्तराः ॥ ६ ॥

उत्तरास्तिस्रः पिण्ड्यश्च भवन्ति। पिण्ड्य इति पिण्डीद्रव्या मरुद्देवत्यास्तयो यागा इत्यर्थः ॥

हिरण्यकेशो रजसो विसार इति द्वे त्वन्त्याचिदच्युता धामन्ते विश्वं भुवनमधिश्रितमिति वावाश्रेव विद्युन्मिमाति पर्वतश्चिन्महि वृद्धो बिभाय स्वजन्ति रश्मिमोजसा वह्निष्ठेभिर्विहरन् यासि तन्तुमुदीरयथा मरुतः समुद्रतः प्र वो मरुतस्तविषा उदन्यव आयं नरः सुदानवो ददाशुषे विद्युन्महसो नरो अश्मदिद्यवः कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः ॥ ७ ॥

धामच्छदो याज्यानुवाक्यायुगलद्वयं व्यवस्थया योजनीयं। यदा केवलोऽग्निस्तदा पूर्वं, यदाग्निर्धामच्छत्तदोत्तरमिति ॥

अग्ने बाधस्व विमृधो विदुर्ग्रहा यं त्वा देवापिः शुशुचानो अग्न इति संयाज्ये। ऋचोऽनूच्य यजुर्भिरेके यजन्ति ॥ ८ ॥

पिण्डीयागानिति शेषः। एके शाखिन ऋच एवानुवाक्या उक्त्वा यजुर्भिरेव पीण्डीयागं कुर्वन्तीत्यर्थः। अत्र विशेषस्तेभ्य एवाधिगन्तव्यः ॥

संस्थितायां सर्वा दिश उपतिष्ठेताच्छावदनवसं गीर्भिरा-भिरिति चतसृभिः प्रत्यृचं सूक्तेन सूक्तेन वा ॥ ९ ॥ ॥ १३ ॥

'एकैकां दिशं सर्वा दिशः' इत्युपक्रम्य चतसृभिः प्रत्यृचमित्युपसंहारादन्यत्रापि दिशां सर्वत्वश्रुतस्रुष्वेव पर्यवस्यतीति गम्यते। सूक्तेन सूक्तेन वा, एकैकां दिशं कृत्स्नेन सूक्तेनोपतिष्ठेतेत्येवं वा ॥

इति द्वितीये त्रयोदशी कण्डिका ॥ * ॥

---

अत ऊर्ध्वमिष्ट्ययनानि ॥ १ ॥

अत ऊर्ध्वं यानि वक्ष्यन्तेऽस्मिन् अध्याये तानि इष्ट्ययनसंज्ञानीति विद्यात्। इष्टिभिरयनं गमनं येषु कर्मसु तानीष्ट्ययनानि ॥

सांवत्सरिकाणि ॥ २ ॥

संवत्सरेण क्रियन्ते संवत्सरेषु क्रियन्त इत्युभयथा विग्रहः कर्त्तव्यः, दाक्षायणयज्ञचातुर्मास्यानामनेकसांवत्सरिकत्वसिद्ध्यर्थं ॥

तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः ॥ ३ ॥

फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी, चित्रया युक्ता चैत्री। तेषां सांवत्सरिकाणां आगन्तुकानामस्मिन् काले प्रारम्भः कार्यः। दर्शपूर्णमासगुणविकाररूपाणां दाक्षायणयज्ञादीनामारम्भे कालनियमो नास्तीति तेषामित्युच्यते ॥

तुरायणं ॥ ४ ॥

तुरायणं नामेष्ट्ययनमुच्यते ॥

अग्निरिन्द्रो विश्वेदेवा इति पृथगिष्टयोऽनुसवनमहरहः ॥ ॥ ५ ॥

अग्निदेवत्या इन्द्रदेवत्या विश्वेदेवदेवत्या चैतास्तिस्र इष्टयः त्रिषु सवनेषु यथामन्त्रेण एकैकेष्टिः कार्याऽहन्यहनि। अहरहरितिवचनं पौर्णमास्यमावास्ययोर्बाधनार्थं ॥

एका वा त्रिहविः ॥ ६ ॥

एताभिरेव देवताभिर्युक्ता एकैवेष्टिस्त्रिहविष्काऽहन्यहनि प्रातःसवन एव कर्त्तव्या वेत्यर्थः ॥

दाक्षायणयज्ञे द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत ॥ ७ ॥

दाक्षायणयज्ञः कर्त्तव्य इत्ययमर्थोऽर्थाल्लभ्यते। तस्मिन्

दाक्षायणयज्ञे द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत, द्वितीयानिर्देशात् प्रतिपन्नयोर्द्वित्वं गुणो विधीयते नाप्रतिपन्नयोर्द्वित्वविशिष्टयोर्विधानमत्रेति गम्यते । एतदुक्तं भवति । या पौर्णमासी याऽमावास्या ते एव स्वस्वकाले द्विरावर्त्तयितव्येति ॥

नित्ये पूर्वे यथाऽसन्नयतोऽमावास्यायां ॥ ८ ॥

आवृत्तयोः पूर्वे ये त उक्ते एव न विकृते । तत्रामावास्याद्वित्वे असन्नयतो या सैव नियम्यते ॥

उत्तरयोरैन्द्रं पौर्णमास्यां द्वितीयं ॥ ९ ॥

उत्तरयोर्विकार उच्यते । पौर्णमास्यां यत् द्वितीयं हविस्तदैन्द्रं भवति ॥

मैत्रावरुणममावास्यायां ॥ १० ॥

अमावास्यायां यत् द्वितीयन्तन्मैत्रावरुणं भवति ॥

आ नो मित्रावरुणा यद्बंहिष्ठं नातिविधे सुदानू इति प्राजापत्य इडादधः ॥ ११ ॥

इडादधो नामेष्ययनं । तत् प्रजापतिदैवत्यं । तत् पर्वणि पर्वणि कर्त्तव्यं, विशेषविध्यभावात् ॥

x

प्रजापते न त्वदेतान्यन्यस्त्वेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च। प्रजापते विश्वसृज्जीव धन्य इदं नो देव प्रतिहर्य हव्यमिति द्यावापृथिव्योरयनं॥ १२॥

इदमपीष्ट्ययनं नाम। तस्य स्वरूपमुच्यते॥

पौर्णमासेनामावास्यादामावास्येनापौर्णमासात्॥ १३॥

स्वकाले पौर्णमासङ्कृत्वा तेनैवाहरहर्यजेत, आमावास्यायाः कालात्। ततोऽमावास्यां स्वकाले कृत्वा तयैवाहरहरा पौर्णमासात्। एवं संवत्सरे समापयेत्। अत्रापि दर्शपूर्णमासयोः पुनःक्रिया नास्ति॥

असमाम्नातास्वर्थात् तन्त्रविकारः॥ १४॥

अस्मिञ्छास्त्रे या असमाम्नाता इष्टयस्तास्वर्थात् तन्त्रविकारो भवति। इष्टिप्रकरणात् स्थालीपाकेष्टिष्वित्यवगम्यते। अर्थात् सामर्थ्यात् द्रव्यदेवतादेशोदनात् सामान्यात्, स्वरूपसामान्याच्चेत्यर्थः। तदुक्तं प्रकृतिविकारेऽमावास्यालक्षणं, 'निर्वपेत् तद्धितं चाज्यं' इत्यादिना। तन्त्रविकारः तन्त्रान्यत्वं पौर्णमासादित्यर्थः। उपदिष्टानामिष्टिपशूनां तन्त्रमुक्तं, अनुपदिष्टानां कथमित्यपेक्षायां तन्निश्चयार्थं इदं सूत्रचतुष्टयमारब्धं। अस्यार्थस्य न्यायलभ्यत्वात् पशूनामप्येतत्प्रदर्शनार्थत्वेन व्याख्येयं॥

अध्वर्युर्वा यथा स्मरेत् ॥ १५ ॥

अध्वर्युशब्देन यजुर्वेद उच्यते तन्त्रप्रदर्शनार्थं। तेनैवं भवति, यत्र क्वापि तन्त्रेऽस्यैतत् तन्त्रमित्याम्नातं स्यात्तस्य तदेव तन्त्रं भवेत् न न्यायतस्तन्त्रकल्पनेति। वाशब्दोऽवधारणार्थः ॥

वैराजन्त्वग्निमन्थने ॥ १६ ॥

अग्निमन्थनसंयुक्तायामिष्टौ वैराजमेव तन्त्रं भवति। तु शब्दोऽवधारणार्थ एव ॥

धाय्ये त्वेवैके ॥ १७ ॥

अग्निमन्थने सत्यपि धाय्ये एव केवले नियम्येते, न वैराजं धाय्याभ्यामन्यत् न्यायकल्प्यमेव तन्त्रमिति। असमाम्नातासु तन्त्रलक्षणमुक्त्वा इदानीं याज्यानुवाक्यालक्षणमुच्यते ॥

देवतलक्षणा याज्यानुवाक्याः ॥ १८ ॥

देवतलक्षणेति छान्दसो ह्रस्वः। लक्ष्यते अभिधीयते विहितदेवता येन पदेन तल्लक्षणं। देवताया लक्षणं यासु ता याज्यानुवाक्या भवन्ति। विहितदेवतावाचकपदवत्य इत्यर्थः। व्यधिकरणोऽयं बहुव्रीहिः ॥

गायत्र्यावती कृतवत्युपोक्तवती पुरस्तालक्षणानुवाक्या ॥ १९ ॥

इदमनुवाक्यालक्षणं। गायत्री छन्दः। आइत्येतत्पदवती आवती। कृतवती। निष्ठान्तग्रहणे धातुमात्रग्रहणं भवतीति सार्वत्रिकमेतत्। कृतवतीति कृञो रूपं। उपोक्तवती उपपूर्वस्य वचेरिदं रूपं। उपोत्तवतीति प्रमादपाठः। पुरस्तालक्षणा, यस्य: पूर्वभागे देवतापदं यस्याः सा पुरस्तालक्षणा ॥

त्रिष्टुब्वती वीतवती जुष्टवत्युपरिष्टाल्लक्षणा याज्या। अपि वान्यस्य छन्दसः ॥ २० ॥

असम्भवे विहितच्छन्दसोऽन्यस्य वा याज्यानुवाक्याः कर्त्तव्याः ॥

न तु याज्या ह्रसीयसी ॥ २१ ॥

सर्वथा तावदनुवाक्यायाः याज्या ह्रसीयसी न भवति ॥

नोष्णिक्ककुब्वती ॥ २२ ॥

नोष्णिक् न ककुब्वती याज्येत्यर्थः ॥

त्रामनष्टहतदग्धवतीस्तु वर्जयेत् ॥ २३ ॥

एकवचनाधिकारे बहुवचनं याज्यानुवाक्यापरिग्रहणार्थं ॥

व्यक्ते तु दैवते तथैव ॥ २४ ॥

सर्वलक्षणसम्पादनासक्तौ स्वपदार्थपर्यवसिते कार्ये देवतापदे सति तथैवाश्रयणीयं न लक्षणान्तरमन्वेषणीयमित्यर्थः ॥

लक्षणमपि वाऽव्यक्ते ॥ २५ ॥

अथवा एवं भवति, अव्यक्ते देवतापदे सति लक्षणं गायत्र्याद्याश्रयणीयमित्यर्थः । अव्यक्तइति चोदितनामधेयपर्याये वा वज्रहस्तधूमकेत्वादिपदे चोदितनामधेये वा परार्थे सतीत्यर्थः ॥

अनधिगच्छन् सर्वशः ॥ २६ ॥

उभयथाप्यभावे सर्वशोऽधिगन्तव्याः, शाखान्तरादाहर्त्तव्या इत्यर्थः ॥

अनधिगम आग्नेयीभ्यां ॥ २७ ॥

एवमप्यसम्भवे याभ्यां काभ्यां चिदाग्नेयीभ्यां यजेतानुब्रूयाच्चेत्यर्थः ॥

व्याहृतिभिर्वा ॥ २८ ॥

तत्रानुब्रूयाद्यजेच्चेत्यर्थः । एवं व्याहृतिभिरित्याह ॥

देवतामादिश्य प्रणुयाद्यजेच्च ॥ २९ ॥

पुरस्ताल्लक्षणत्वाय अनुवाक्यायां देवतां द्वितीयया विभ-

स्वादिश्य ततो भूर्भुवः स्वरोमिति ब्रूयात्। याज्यायामागु-रमुक्त्वा ततो देवतां ततो व्याहृतीः पुनस्तां देवतां उपरिष्टा-च्छ्रावणत्वाय ततो वषट्कार इति॥

* नाम्राभ्यां वा॥ ३०॥

नम्रे इति नामधेयमृचोर्वक्ष्यमाणयोः॥

इममाघृणुधी हवं यन्त्वागीर्भिर्हवामहे। एदं †बर्हिर्निषीद नः। स्तीर्णं बर्हिरानुषगासदेतदुपेडाना इह नो अद्य गच्छ। अहेडता मनसेदं जुषस्व वीहि हव्यं प्रयतमाहुतम्म इति नम्रे॥ ३१॥

एते नम्रसंज्ञे। पुनर्नम्रे इतिवचनं एतयोर्नमनप्राप्त्यर्थं। नम्रे नमनशीले ऊह्ये इत्यर्थः॥

आग्नेय्यावनिरुक्ते॥ ३२॥ ॥ १४॥

देवतापदरहिते इत्यर्थः। तथाप्यग्निदेवत्ये एते ऋचौ भवत इत्यर्थः॥

इति द्वितीये चतुर्दशी कण्डिका॥ ०॥

---

* नम्राभ्यामिति सो॰ मू॰। † बर्हिर्निषीदत इति सो॰ मू॰।

चातुर्मास्यानि प्रयोक्ष्यमाणः पूर्वेद्युर्वैश्वानरपार्जन्या ॥ १ ॥

चातुर्मास्यानीति इष्ट्ययननाम। तानि च वैश्वदेवादीनि चत्वारि पर्वाणि। तानि फाल्गुन्यां चैत्र्यां वा आरभमाणः तस्याः पूर्वस्मिन्नहनि वैश्वानरपार्जन्यदेवत्यामिष्टिं चातुर्मास्यानामारम्भार्थं कुर्यात्। द्वे एते देवते, याज्याऽनुवाक्यायुगलदर्शनात्। वैश्वानरोऽग्नेर्गुणः, याज्यानुवाक्ययोरग्निलिङ्गत्वात्। यद्यध्वर्यवः केवलं वैश्वानरं कुर्युः तदा 'ऋतावानं वैश्वानरं नाभिं यज्ञानां सदनं' इति याज्यानुवाक्ये भवतः ॥

वैश्वानरो अजीजनदग्निर्नो नव्यसीम्मतिं। त्वमया वृधान ओजसा। पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पर्जन्याय प्रगायत प्रवाता वान्ति पतयन्ति विद्युत इत्यग्न्याधेयप्रभृत्यन्ता उपांशुहविषः ॥ २ ॥

अग्न्याधेयं प्रभृतिं कृत्वा वैश्वानरपार्जन्यान्ता इष्टयो यास्ता उपांशुहविषः उपांशुप्रधाना इत्यर्थः ॥

सौमिक्यः ॥ ३ ॥

सोमोत्पन्नाः ॥

प्रायश्चित्तिक्यः ॥ ४ ॥

प्रायश्चित्तप्रकरणोत्पन्नाः ॥

अन्वायात्यैककपालाः ॥ ५ ॥

अन्वायात्यैककपालानामिष्टित्वासम्भवाद्यागा विशेष्यन्ते अन्वायात्याः एककपालाश्च ये यागाः ते उपांशु प्रयोक्तव्या इत्यर्थः ॥

सर्वत्र वारुणवर्जं ॥ ६ ॥

सर्वत्र विषये वारुणं वर्जयित्वा उपांशुत्वं भवति । न क्वचिदपि विषये वारुण उपांशुर्भवतीत्यर्थः ॥

सावित्रश्चातुर्मास्येषु ॥ ७ ॥

चातुर्मास्येषु सावित्र उपांशुर्भवति ॥

प्रधानहवींषि चैके ॥ ८ ॥

हवींषीत्येतावता प्रधानप्रत्यये सिद्धे प्रधानवचनं प्रधानान्तरस्य सम्प्रत्ययार्थं । अतो ये चतुर्णां पर्वणां व्यपदेशहेतवो वैश्वदेववरुणप्रघासमाहेन्द्रशुनासीरीयास्ते प्रधानशब्दवाच्याः, तेषामुपांशुत्वं भवतीत्यर्थः ॥

पित्र्योपसदः सतन्त्राः ॥ ९ ॥

तन्त्रेण सहैता उपांशवो भवन्ति ॥

पौनराधेयिकी च प्रागुत्तमादनुयाजात् ॥ १० ॥

याऽस्माभिराम्नाता पुनराधेयेष्टिः, सा चोत्तमादनुयाजात् प्राक् सतन्त्रोपांशुर्भवति ॥

अपि वा सुमन्त्रतन्त्राः ॥ ११ ॥

यासु सतन्त्रमुपांशुत्वं विहितं ताः सर्वाः सुमन्त्रतन्त्रा वा भवेयुः। सुमन्त्रतन्त्रा इति मन्त्रेऽपि ये पूर्वतरा यमास्तैः प्रयोक्तव्यं तासां तन्त्रं। प्रधानं तूपांश्वित्यर्थः ॥

*आगुःप्रणववषट्कारा उच्चैः सर्वत्र ॥ १२ ॥

प्रणवशब्देनात्रानुवाक्याप्रणव एव गृह्यते। आगुर्वषट्कार-साहचर्यात्। आगुरादयः सर्वविषये उच्चैर्भवन्ति, न क्वचि-दपि विषये तेषामप्युपांशुत्वं स्यात् ॥

तथाऽऽग्रयणेऽग्र्यं ॥ १३ ॥

अग्रे भवमग्र्यं। आग्रयणे यत् प्रथमं हविः आग्नेन्द्रं ऐन्द्राग्नं वा तदुच्चैर्भवति ॥

आचार्यस्तु प्राणसन्ततः प्रणवः पुरोऽनुवाक्यायाः ॥ १४ ॥

पुरोऽनुवाक्यायाः प्रणवस्त्वोच्चैस्त्वं विहितं। स प्रणवः पुरो-ऽनुवाक्यायाः प्राणसन्ततः कार्यः ॥

* आगूः इति सटीकपु०द्वये।

तथागुर्वषट्कारौ याज्यायाः ॥ १५ ॥

तथैतौ याज्यायाः प्राणसन्तौ कार्यावित्यर्थः। आगुरादिभिः प्रसिद्धोच्चस्वरैर्याज्यानुवाक्ययोः प्राणसन्तानविधिसामर्थ्यादेवोपांशुत्वं सिद्धं भवति। प्राणसन्ततः प्रणवः, तथाऽऽगुर्वषट्कारावित्येतावतैव याज्यानुवाक्ययोरुपांशुत्वस्य प्राणसन्तानस्य च सिद्धौ सत्यामपि यद्याज्यानुवाक्याग्रहणं करोति तज्ज्ञापयति, अनुवाक्याया याज्यायाश्च पृथक्कृत्य प्राणसन्तानेन आगुःप्रणववषट्कारा वक्तव्याः। आगन्तेश्च आगाद्येश्च श्रुतैरन्यः शास्त्रितो विकारो माभूदिति ॥

तन्त्रस्वराण्युपांशुरूपाणि ॥ १६ ॥

तन्त्रस्वराः 'आतो मन्द्रेण' इत्येवमादिभिर्विहिताः। ते तन्त्रावयवसम्बन्धत्वात् तन्त्रस्वरा इत्युच्यन्ते। ते येषां तानि तन्त्रस्वराणि उपांशुयाजसम्बन्धीनि। यान्युच्चानि आवपादीनि आगुरादीनि च तानि तन्त्रस्वराणि भवन्ति ॥

मन्द्राण्युपांशुतन्त्राणां ॥ १७ ॥ ॥ १५ ॥

उपांशुतन्त्राणां तान्युच्चानि मन्द्रस्वराणि भवन्ति, न तन्त्रस्वराणि भवन्तीत्यर्थः ॥

इति द्वितीये पञ्चदशी कण्डिका ॥ * ॥

---

प्रातर्वैश्वदेव्यां प्रेषितोऽग्निमन्थनीया अन्वाह पश्चात् सामिधेनीस्थानस्य पदमात्रेऽवस्थायाभिहिङ्कृत्य ॥ १ ॥

प्रातरित्युच्यते, प्रयोक्ष्यमाणः पूर्वेद्युरित्यनद्यतनविभक्तिदर्शनात् पूर्वेद्युरेव वैश्वदेव्या अपि यागः प्राप्नोतीति, तन्निवृत्त्यर्थं । अतः पूर्वेद्युरुपक्रम्यापरेद्युः प्रातर्वैश्वदेव्या यष्टव्यमित्यर्थः । अग्निमन्थनार्था ऋचः अग्निमन्थनीयास्ताः प्रेषितोऽनुब्रूयात् । प्रेषितवचनमस्यानुवचनस्य प्रैष एव निमित्तं, नाम्नाने । अनाम्नानेऽपि प्रेषितोऽनुब्रूयादेवेति । सामिधेनीस्थानस्य पश्चादवस्थायेत्येतावतैव पदमात्रेऽवस्थानस्य सिद्धौ सत्यां पदमात्रइतिवचनं पदमात्रेऽतीतज्ञापनार्थं । अभिहिङ्कृत्येतिवचनं अस्यानुवचनस्याभिहिङ्कारप्रतिषेधे सत्यपि अभिहिङ्कृतिसिद्ध्यर्थं । तथा च वक्ष्यति 'प्रातरनभ्यासमनभिहिङ्कृतानि' इति ॥

अभि त्वा देव सवितर्मही द्यौः पृथिवी च नस्त्वामग्ने पुष्कराद्ध्यीति तिसृणामर्द्धर्चे ग्निष्ट्वाऽऽरमेदासंप्रैषात् ॥ २ ॥

त्वामग्न इति तिस्र ऋचः, तासामुत्तममर्धर्चे ग्निष्टा यदवसानं तत्रावसायारमेत् आसंप्रैषात् आसंप्रैषश्रवणात्, नोत्तरामाददीतेत्यर्थः ॥

अनवानमन्त्यस्य ऋचोऽवसाने जायमाने त्वेतस्मिन्नेवावसाने ॥ ३ ॥

अन्यत्रापि विषये ऋचो मध्येऽवसाने यथारमेदिति विधि-रस्ति तत्राप्यसंप्रैषाद्वोत्तरामारभेत ॥

अग्ने वंसीत्यर्चिर्णामिति सूक्तमावपेत पुनः पुनराजन्मनः ॥ ४ ॥

मथ्यमानोऽग्निः यदि न जायते तदा तत्रैवावसाने स्थित्वा ऽग्ने वंसीत्यावपेत। पुनः पुनरसकृदप्यावपेत, अग्नेराजन्मनः। आजन्मन इति वचनात् जाते सति संप्रैषात् प्रागपि सूक्तस्य काश्चिदप्यृचं नारभेत। एतस्मिन्नेवावसानइतिवचनात् एत-स्मिन्नेवार्धर्चावसाने सूक्तान्तरमावपेन्नान्यत्र। अन्यत्र ऋगन्त एव सूक्तान्तरमावपेतेति गम्यते। तेन यदा यूपसंस्कारेष्वञ्जनोच्छ्र-यणपरिव्ययणेषु पदार्थानुसमयं कुर्वन्ति बहुयूपे कर्मणि तदा ऋगन्ते ऋगन्तरावापः सिद्धो भवति। पादग्रहणसूक्त-ग्रहणयोः प्रयोजन आवापे पूर्वावधिरेका ऋक्। पराऽवधिः सूक्तं। तत्रैकस्याः द्वयोः बह्वीनां वा ऋचां सूक्तस्य वा वापः सिद्धो भवति। आवृत्तौ च सूक्तं समाप्यैवावृत्तिरित्येवमादि ॥

जातं श्रुत्वानन्तरेण प्रणवेन त्रिष्टुभमुपसन्तनुयात् ॥ ५ ॥

जातश्रवणानन्तरं 'अग्ने वंसि' इत्यस्य सूक्तस्य यः प्रणव आगच्छति तेन त्रिष्टुभमर्धर्चमुपसन्तनुयात् ॥

स्विष्टेनोत्तराम् ॥ ६ ॥

अनावापपक्षे आतिथ्याणामनन्तरमेव स्विष्टकृतार्धर्चेनोत्तरां सन्ततमुपसन्तनुयात् ॥

उत ब्रुवन्तु जन्तव आयं हस्तेन खादिनमित्यर्धर्च आरमेत्। प्र देवं देव वीतय इति द्वे अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना तमर्जयन्त सुक्रतुं यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात् ॥ ७ ॥

यज्ञेनेत्यनयर्चा परिदध्यात्, समापयेदित्यर्थः ॥

सर्वत्रोत्तमां परिधानीयेति विद्यात् ॥ ८ ॥

सर्वत्र प्रत्यादिषु योत्तमा सूक्तां परिधानीयेति विद्यात् ॥

धाय्ये विराजौ नव प्रयाजाः प्रागुत्तमाच्चतुर आवपेत तुरो अग्न आज्यस्य व्यन्तूषासा नक्ताग्न आज्यस्य वीतां दैव्या होतारावग्न आज्यस्य वीतां तिस्रो देवीरग्न आज्यस्य व्यन्त्विति ॥ ९ ॥

बर्हिरग्न इति प्रयाजानन्तरमेतानावपेत ॥

अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसो विश्वेदेवा द्यावापृथिवी ॥ १० ॥

अष्टौ देवताः। स्वतवस इति मरुतां गुणः ॥

आ विश्वदेवं सत्पतिं वाममद्य सवितर्वाममुश्वः पूषन् तव व्रते वयं शुक्रन्ते अन्यद्यजतं ते अन्यदिषुरूवः स्वतवसः प्रचित्रमर्कं गृणते तुरायेति ॥ ११ ॥

अस्मिन् पर्वणि निर्गुणानां महतामेते एव भवतः, प्रकरणपठितत्वात्, गुणशब्दस्य च स्तुत्यर्थतयाप्यन्वयसम्भवात् ॥

नवानूयाजाः षड्ढं प्रथमाद्देवो द्वारो वसुवने वसुधेयस्य व्यन्तु । देवी उषासा नक्ता वसुवने वसुधेयस्य वीतां । देवो जोष्ट्री वसुवने वसुधेयस्य वीतां । देवो ऊर्जाहुती वसुवने वसुधेयस्य वीतां । देवा दैव्या होतारा वसुवने वसुधेयस्य वीतां । देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्त्विति ॥ १२ ॥

अनूयाजानामेष देशः ख्यातः ॥

अनूयाजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद्वाजिभ्यो वाजिनमनावाह्यादेशं ॥ १३ ॥

त्रयाणामन्यतमस्मिन् काले वाजिभ्यो यागः कर्त्तव्यः । वाजिनञ्च तस्य द्रव्यं । द्रव्यशब्देन कर्मणः संव्यवहारार्थं,

तद्वचनमनावाह्येत्यावाहनप्रतिषेधोऽयमनुवादः, अपूर्वत्वादस्य कर्मणः। अपूर्वत्वस्य पूर्ववत्त्वे कारणाभावात् द्रव्यदेवतासम्बन्धमात्रमत्र चोद्यते। नैतावता प्राकृतधर्मसम्बन्धोऽस्ति। उक्तञ्च प्राकृतधर्मसम्बन्धे कारणं निर्वपत्यादि, तस्य चात्राभावः, तेनापूर्वत्वं निश्चीयते। इष्टिशब्दवाच्यता चास्य नास्ति, तेन चापूर्वत्वं। तस्मादपूर्वत्वादुत्तरेष्वपि निगमेषु निगमनं नास्ति। आदेशवचनं वाजिनामन्वायात्यसंशयनिवृत्त्यर्थं। तत्रायं संशयः। किं यस्य कस्यचित् प्रधानस्यानु पश्चादायात्यते क्रियते तत् सर्वमन्वायात्यमुतान्वायात्यशब्दचोदितमेवेति। तत्र तच्छब्दचोदिते चातच्छब्दचोदिते चान्वायात्यशब्दप्रवृत्तिनिमित्तस्य विशेषाभावाद्यत् किञ्चिदन्यानुप्रवेशि तत् सर्वमन्वायात्यमिति कृत्वा वाजिनामप्यन्वायात्यत्वादनादेशः प्राप्नोति। एवं प्राप्तेऽनुप्रवेशिनामादेशं विदधन्नानुप्रवेशित्वमन्वायात्यत्वे निमित्तमिति दर्शितवानाचार्यः। अतस्तच्छब्दचोदितमेवान्वायात्यमिति सिद्धं। एतदेवादेशवचनस्य प्रयोजनं, नान्यदिति मन्तव्यं॥

शन्नो भवन्तु वाजिनो हवेषु वाजे वाजेऽवत वाजिनो न इत्यूर्ध्वज्ञुरनवानं याज्या॥ १४॥

ऊर्ध्वज्ञुरूर्ध्वजानुः। याज्याग्रहणस्य प्रयोजनमनुवषट्कारे ऊर्ध्वज्ञुता मा भूदिति॥

अग्ने वीहीत्यनुवषट्कारो वाजिनस्याग्ने वीहीति वा। यत्र क्वचैकसंप्रैषे द्वौ वषट्कारौ समस्तावेव तत्र द्विरनुमन्त्रयेत॥ ॥ १५॥

संव्यवहारार्थमिदं। यत्र क्व विषये एकस्मिन्नेवाध्वर्युसंप्रैषे तुल्यरूपावतुल्यरूपौ वा द्वौ वषट्कारौ भवतः, तत्र तौ वषट्कारौ समस्तावेव। 'वागोजः' इत्यादिना द्विरनुमन्त्रयेत॥

न चागूरुत्तरस्मिन्॥ १६॥

याज्यादावागूर्भवतीत्युक्तत्वादनुवषट्कारेऽप्यागुःप्राप्तौ निषेधः। आगुरः प्रतिषेधो याज्याधर्माणामितरेषां प्रापणार्थः॥

वाजिनभक्षमिडामिव प्रतिगृह्योपहवमिच्छेत॥ १७॥

इष्टशिष्टं वाजिनं भक्षार्थं पात्रेणानीतं इडामिवाञ्जलिना प्रतिगृह्याञ्जलौ निधायोपहवमिच्छेत। भक्षणानुज्ञापनार्थं वाजिनभक्षसम्बन्धिनः सर्वान् याचतेत्यर्थः। सर्वेषु भक्षसम्बन्धिषु उपहवयाचनं कर्त्तव्यमित्युक्तं। तदनेन क्रमेणैतं प्रकारेण वाक्येनेत्याह॥

अध्वर्य उपह्वयस्व ब्रह्मन्नुपह्वयस्वाग्नीदुपह्वयस्वेति ॥ १८ ॥

वचनसामर्थ्यादेवैषामयं क्रमः । एते चादितोऽर्न्ततोऽन्ये भक्षिणः । वाक्यं च एवंप्रकारं कर्मनामधेययुक्तमित्येतत् सर्वमवगम्यते । अतोऽन्ततो यजमानोपह्वयस्वेत्येतदपि लब्धं भवति । अतिवचनशब्दस्यास्मिन्काले त्वऽनुक्तत्वात् तस्य चापेक्षितत्वाच्छाखान्तरोक्तस्योपहूत इतिशब्दस्य ग्रहणं भवति ॥

यन्मे रेतः प्रसिच्यते यदा मे अपि गच्छति यद्वा जायते पुनः । तेन मा शिवमाविश तेन मां वाजिनं कुरु । तस्य त वाजिपीतस्योपहूतस्योपहूतो भक्षयामीति प्राणभक्षं भक्षयेत् ॥ ॥ १९ ॥

तस्य वाजिनस्य किञ्चिदादाय अनेन मन्त्रेणावजिघ्रेत् ॥

एवमध्वर्युर्ब्रह्माग्नीध्रः ॥ २० ॥

एते च प्राणभक्षं भक्षयेयुः । अध्वर्युग्रहणं भक्षणेऽपि क्रमोऽस्तीतिज्ञापनार्थं, न तस्यापि प्राणभक्षणनियमार्थं । अतो होतुर्भक्षणानन्तरं अध्वर्य्वादेः क्रमेण भक्षणं सिद्धं भवति ॥

यजमानः प्रत्यक्षमितरे च दीक्षिताः ॥ २१ ॥

यजमानादितरे च यत्र दीक्षिता भवन्ति तत्र सर्वे प्रत्यक्ष-

मेव भक्षयेयुः। तच्च सर्वे सम्भवति। तत्र गृहपतेरन्येषां च प्रत्यक्षमेवेत्यर्थः। तत्र च क्रमो मुख्यादिगृहपत्यन्तः॥

पौर्णमासेनेष्ट्वा चातुर्मास्यव्रतान्युपेयात्॥ २२॥

यस्मिन्नहनि वैश्वदेवी क्रियते तस्मादपरस्मिन्नहनि पौर्णमासेनेष्ट्वा तदानीमेव वक्ष्यमाणानि व्रतानि कर्त्तुमारभेत। पौर्णमासीयागवचनं व्रतारम्भकालविधानार्थं, नित्यानामनिवर्त्तकत्वात् विकृतीनामिति। व्रतशब्देन मानसो नियम उच्यते। अतः केशनिवर्त्तनादीनि करिष्ये, मध्वादीनि वर्जयिष्ये इति दृढसङ्कल्पो भवेत्। एतत् व्रतरूपं निवर्त्तनादीनि च कुर्यात्, मध्वादीनि वर्जयेच्च, न केवलं सङ्कल्पमात्रमेव॥

केशान्निवर्तयीत॥ २३॥

निवर्त्तनं कर्त्तव्यं॥

श्मश्रूणि वापयीत। अधः शयीत। मधुमांसलवणाभ्यवलेखनानि वर्जयेत्॥ २४॥

केशप्रसाधनादीनि स्वैरिकर्माणि अवलेखनशब्देनोच्यन्ते। पूर्वाणि त्रीणि कार्याणि। पराणि पञ्च वर्जनीयानि। एतानि चातुर्मास्यव्रतानि। चातुर्मास्यव्रतवचनं सर्वेषां पर्वणामेतानि व्रतानि नैकस्यैव सन्निहितस्य पर्वण इत्येवमर्थं॥

ऋतौ भार्यामुपेयात् ॥ २५ ॥

स्त्रीशब्देन प्रतिषिद्धस्य कालविशेषे प्रतिप्रसवोऽयं ॥

वापनं सर्वेषु पर्वसु ॥ २६ ॥

उत्तरविवक्षार्थोऽयमनुवादः ॥

आद्योत्तमयोर्वा ॥ २७ ॥ ॥ १६ ॥

आद्योत्तमयोर्वा पर्वणोर्वापनं, न मध्यमयोरित्यर्थः। अनुवादाभावे आद्यन्तयोरेव वापनं स्यात् तच्च विकल्पेन मध्यमयोर्वापनप्रसङ्ग एव नाप्नोति गम्यते। तेनाद्यन्तयोर्नित्यं वापनं मध्यमयोरनित्यमिति सिद्धं भवति ॥

इति द्वितीये षोडशी कण्डिका ॥ * ॥

---

पञ्चम्यां पौर्णमास्यां वरुणप्रघासैः ॥ १ ॥

यस्यां पौर्णमास्यां वैश्वदेवी कृता तामारभ्य या पञ्चमी पौर्णमासी तस्यां वरुणप्रघासकर्मानुष्ठेयमित्यर्थः ॥

पश्चाद्दार्शपौर्णमासिकाया वेदेरुपविश्य प्रेषितोऽग्निप्रणय-नीयाः प्रतिपद्यते ॥ २ ॥

वेदेः पश्चादिति प्रदर्शनार्थं। प्रणीयमानस्याग्नेः पश्चादित्यर्थः। प्रेषितवचनमुक्तप्रयोजनं। अग्निप्रणयनीया अग्निप्रणयनार्थाः ॥

प्र देवं देव्या धियेति तिस्र इडायास्त्वाप देव यमग्ने विश्वेभिः स्वनीक देवैरित्यर्द्धर्च आरमेत्। आसीनः प्रथमामन्वाहोपांश्वु सप्रणवां ॥ ३ ॥

उपविष्टस्यैवासीनइतिवचनं व्रजत्स्वपि प्रथमामसमाप्य नानुव्रजनायोत्तिष्ठेदित्येवमर्थं। सप्रणवां समानप्रणवामित्यर्थः। प्रथमायास्तृतीयप्रणवेऽवसानेऽपि त्रिमात्र एवेत्यर्थः ॥

तत्र स्थानात् स्थानसङ्क्रमणे प्रणवेनावसायाऽनुच्छ्वस्योत्तरां प्रतिपद्यते ॥ ४ ॥

तत्र प्रणवेनावसायेत्येतावतैव सिद्धे स्थानात् स्थानसङ्क्रमण इतिवचनं अस्य विधेः सर्वार्थत्वाय। तत्रोपांश्वुस्वरस्थानात् स्वरान्तरस्थानसङ्क्रमणे प्रणवेनावसाय अनुच्छ्वस्यैव उत्तरां समारभेत। स्वगमे भावस्य प्राप्त्यभावे तत्पदनुच्छ्वासवचन-

नवमानविधिवशादुच्छ्वासोऽपि प्राप्नोतीति तन्निवृत्त्यर्थमनुच्छ्वासविधानं। तेन श्ववसानविधानमुच्छ्वासार्थं साधितं भवति। अतो यत्रोच्छ्वासप्रतिषेधस्तत्रावसानमपि न कर्त्तव्यं भवेत्। उगावानादौ अग्निमन्थनाग्निप्रणयनादयो मन्त्रस्वरेण प्रयोक्तव्याः, प्राथम्यात् तस्य स्वरस्य। तदतिक्रमणे कारणाभावात्, अतो मन्त्रस्वरेणेत्यत्र पूर्वावधेरभावात्॥

प्राणसन्ततं भवतीति विज्ञायते॥ ५॥

यदिदमवसायानुच्छ्वस्य उत्तरामारभत इति तत् प्राणसन्ततं भवतीति विज्ञायते श्रूयत इत्यर्थः॥

उत्तरमग्निमनुव्रजन्नुत्तराः॥ ६॥

अनुब्रूयादिति शेषः। द्वयोः प्रणीयमानत्वादुत्तरमिति विशेष्यते। अग्निद्वित्वेऽप्याहवनीयद्वित्वाभावान्मन्त्राणामूहो नास्ति॥

इमं महे विदथ्याय शूषमयमिह प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये॥ ७॥

समानजातीयत्वादेताभ्यां पाद्यः 'प्र देवं' इत्यस्या अयं राजन्यवैश्ययोर्विशेषः। अन्यत् समानं॥

पश्चादुत्तरस्या वेदेरवस्थाय ॥ ८ ॥

शेषं समापयेदिति शेषः। वेदिद्वित्वादुत्तरस्या इत्युच्यते ॥

उत्तरवेदेस्तु सोमेषु ॥ ९ ॥

पश्चादवस्थाय समापयेदिति शेषः ॥

निषित्तेऽग्नौ सीद होतः स्व उ लोके चिकित्वान्नि होता होतृषदने विद्वान इति द्वे परिधाय तस्मिन्नेवासन उपविश्य भूर्भुवः स्वरिति वाचं विसृजेत ॥ १० ॥

अत्र निषित्तेऽग्नावित्युत्तरादानस्य निमित्तं नाध्वर्युसंप्रैषः। तस्मिन्नेवेति यस्मिन्निदमनुवचनमारब्धं तस्मिन्नेवेत्यर्थः ॥

अन्यत्रापि यत्रानुब्रुवन्ननुप्रजेत् ॥ ११ ॥

तत्राप्येवं कर्त्तव्यमिति शेषः। अनुब्रुवन्निति वचनं अनुवचने एव एतत् स्यान्नाभिष्टवनादिष्वित्येवमर्थं ॥

तिष्ठत्संप्रैषेषु तथैव वाग्विसर्गः ॥ १२ ॥

तिष्ठतः संप्रैषेषु तिष्ठत एव वाग्विसर्गो भवति ॥

अग्निमन्थनादिसमाना वैश्वदेव्या ॥ १३ ॥

इयमिष्टिर्वैश्वदेव्या समाना भवति। द्वयोरपि मथ्यमान-योरग्निद्वित्वं नास्ति। एकस्यैवायमग्नेर्विभाग इति कृत्वा अनूहेनाहवनीयाभिधायिनां प्रयोगसिद्ध्यर्थमग्निमन्थनादिस-मानावचनं ॥

हविषान्तु स्थाने षष्ठप्रभृतीनामिन्द्राग्नी मरुतो वरुणः कः ॥ १४ ॥

अयमत्र विशेषः। षष्ठ्याद्यास्तिस्र उद्धृत्य ऐन्द्राग्न्यादयः चतस्रः कर्तव्या इति ॥

इन्द्राग्नी अवसा गतं अयथवृत्रमुत सनोति वाजं मरुतो यस्य हि क्षयेऽराइवेदं चरमा अहेवेमं मे वरुण श्रुधि तत्त्वायामि ब्रह्मणा वन्दमानः कयानश्चित्र आभुवद्धिरण्यगर्भः समव-र्त्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः ॥ १५ ॥

उपहवयाचनेऽयं तृतीयो भवति। भक्षणे चतुर्थः। उपहव-याचनं होत्रादि यजमानान्तं। होतुरध्वर्य्वादि, यजमान-स्याग्नीदन्तं। भक्षणन्तु होत्रादि यजमानान्तमेव। वैश्वदेव्या-मप्येवमेव ॥

संस्थितायामवभृथं व्रजन्ति ॥ १६ ॥

संस्थितायामिष्टौ अवभृथकर्मार्थमुदकं गच्छन्त्यध्वर्यव इत्यर्थः ॥

तत्रावभृथेष्टिः कृताऽकृता ॥ १७ ॥

कृतिरेव कृतं। कृतञ्चाकृतञ्च यस्याः सा कृताकृता, अनित्येत्यर्थः। इष्ट्यभावे यदन्यदप्यवधानादि तत् सर्वं भवति ॥

तामुपरिष्टाद्व्याख्यास्यामो द्वयोर्मासयोरैन्द्राग्नः पशुः ॥ ॥ १८ ॥ ॥ १७ ॥

वरुणप्रघासपौर्णमासीमारभ्य तृतीयस्यां पौर्णमास्यामित्यर्थः। अनेन चातुर्मास्याङ्गत्वेन पश्वन्तरं विधीयते, नानेन निरूढकालो विधीयते। अतो निरूढोऽपि स्वकाले कर्त्तव्य एव ॥

इति द्वितीये सप्तदशी कण्डिका ॥ * ॥

तथा ततः साकमेधाः ॥ १ ॥

यथा वरुणप्रघासेभ्य ऐन्द्राग्नः तथा ऐन्द्राग्नात् साकमेधाः। द्वयोर्मासयोरित्यर्थः। अनीकवदादीनामादित्यान्तानां साकमेधा इति नाम ॥

पूर्वेद्युस्तिस्र इष्टयोऽनुसवनं ॥ २ ॥

यस्यां पौर्णमास्यां साकमेधा यष्टव्याः तस्याः पूर्वेद्युः सवने सवने एकैकेष्टिः कार्या ॥

प्रथमायामग्निरनीकवान्। अनीकवन्तमूतयेऽग्निं गीर्भिर्हवामहे। स नः पर्षदतिद्विषः। सैनानीकेन सुविदत्रो अस्मे इति उत्तरस्यां वृधन्वन्तौ। मरुतः सान्तपनाः। सान्तपना इदं हविर्यो नो मरुतो अभिदुर्हृणायुरिति मरुद्भ्यो गृहमेधेभ्य उत्तरा आज्यभागप्रभृतीडान्ता ॥ ३ ॥

मरुतो गृहमेधा देवताः। आज्यभागप्रभृतिस्तासां इडान्ता चेति आज्यभागप्रभृतीडान्ता ॥

गृहमेधास आगत प्रबुध्ना व ईरते महांऽसीति ॥ ४ ॥

आम्नातत्वादेते एव गृहमेधेभ्यो भवतः ॥

पुष्टिमन्तौ विराजौ संयाज्ये अनिगदे ॥ ५ ॥

इह विराजौ संयाज्ये इत्युक्तं। ते संयाज्ये अनिगदे निगद-रहिते भवत इत्यर्थः। निगद इति 'अयाडग्निः' इत्यादि 'जुषतां हविः' इत्येवमन्तमुच्यते ॥

अन्यत्राऽप्यनावाहने ॥ ६ ॥

गृहमेधीयादन्यत्रापि यत्रावाहनं नास्ति तत्राप्यनिगदे संयाज्ये भवतः। अन्यत्रापीति योगविभागार्थमुच्यते। तस्य प्रयोजनं अन्यत्रानावाहनेऽनिगदे भवतः, इह त्वावाहने अनावाहने वा अनिगदे एवेत्येवमर्थं। अत एवात्र पक्षे आ-वाहनमप्यस्तीति ज्ञापितं भवतीति गम्यते। पूर्वसूत्रे संया-ज्याग्रहणस्येदं प्रयोजनं। इदमनिगदत्वविधानं संयाज्यामा-त्रस्य न विराज एवेति ज्ञापनार्थं ॥

आवाहनेऽपि पित्र्यायां पत्नौ च ॥ ७ ॥

अनयोरावाहने सत्यपि अनिगदे एव भवतः ॥

बहु चैतस्यां रात्र्यामन्नं प्रसुवीरन् ॥ ८ ॥

प्रसुवीरन्निति बहुवचनं लोके यष्टारो बहव इति। प्रसु-वीरन् दद्युरित्यर्थः। एतस्यां रात्र्यामितिवचनाद्रात्रावेवेष्टिः परिसमाप्यत इति गम्यत इति ॥

तस्या विवासे पौर्णदर्वं जुहुयुः ॥ ९ ॥

विवासो रात्र्याः पश्चाद्भागः। पौर्णदर्वमिति कर्मनाम। तत् तस्मिन् काले कर्त्तव्यं ॥

ऋषभे रवाणे ॥ १० ॥

ऋषभे रुवति ॥

स्तनयित्नौ वा ॥ ११ ॥

मेघे वा रुवति ॥

आग्नीध्रं हैके रावयन्ति ब्रह्मपुत्रं वदन्तः ॥ १२ ॥

तस्याप्यभावे। ब्रह्मपुत्रशब्देनाग्नीध्रं सम्बोध्य रावयन्ति ब्रह्मपुत्र रोरवीत्येवं॥

यदि होतारञ्चोदयेयुस्तस्य याज्यानुवाक्ये। पूर्णादर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्ज्जं शतक्रतो। देहि मे ददामि ते नि मे धेहि नि ते दधे। अपामित्यमिव सम्भरक्षोऽम्बा ददते ददिति ॥ १३ ॥

एतत् कुर्वन्तोऽध्वर्यवो यदि होतारमपि चोदयेयुः अनुब्रूहि यजेति तदेते याज्यानुवाक्ये भवतः। शतक्रतुलिङ्गाच्चास्मिन्नरे ऐन्द्रं पौर्णदर्वं इत्याम्नानाच्च इन्द्रोऽस्य देवता भवति॥

मरुद्भ्यः क्रीडिभ्य उत्तरा ॥ १४ ॥

इष्टिरित्यर्थः ॥

उत ब्रुवन्तु जन्तवोऽयं क्षानुरगृभीत इति परोक्षवार्त्रघ्नौ ॥ ॥ १५ ॥

आज्यभागौ परोक्षवार्त्रघ्नौ भवतः ॥

क्रीडं वः शर्द्धो मारुतमत्यासो न ये मरुतः स्वञ्चः ॥ १६ ॥

क्रीडिनामेते आम्नाते, अक्रीडिनामप्येते याज्यानुवाक्ये भवतः ॥

जुष्टोदमूना अग्ने शर्ध महते सौभागायेति संयाज्ये। वाजिनावभृथवर्जं माहेन्द्युक्ता वरुणप्रघासैः॥ १७ ॥

माहेन्द्रीतीष्टिनाम। आमिक्षाभावादेव वाजिनाभावे सिद्धे वाजिनप्रतिषेधं कुर्वन् वाजिनस्य प्रधानसम्बन्धं दर्शयति। तेन वाजिनस्य मध्यमः स्वरः साधितो भवति ॥

हविषान्तु सप्तमादीनां स्थान इन्द्रो वृत्रहेन्द्रो महेन्द्रो वा विश्वकर्मा ॥ १८ ॥

वृत्रहाशब्द इन्द्रस्य गुणः। आद्यास्तिस्रो विकल्पन्ते। विश्वकर्मान्त्यः। अतोऽष्टावत्र देवताः ॥

आदुन इन्द्र वृत्रहन्ननु ते दायिमत इन्द्रियाय विश्वकर्मन् हविषा वावृधानो या ते धामानि परमाणि यावमेति ॥ १९ ॥ ॥ १८ ॥

इति द्वितीयेऽष्टादशी कण्डिका ॥ * ॥

---

दक्षिणाग्नेरग्निमतिप्रणीय पित्र्या ॥ १ ॥

दक्षिणाग्नेरग्निमानीयातीत्य तं देशमन्यत्र निधाय तस्मिन्नग्नौ पित्र्यानाम कर्म कर्त्तव्यं। अतिप्रणीय पित्र्येतिवचनात् तस्मिन्नेव पित्र्या भवेत्। नैमित्तिकत्वादाहवनीयादिष्वेव। आहवनीयोऽप्यत्र विहरणीयः, उत्तरत्रोपस्थानदर्शनात् ॥

सा शंय्वन्ता ॥ २ ॥

सावचनं योगविभागार्थं। योगविभागप्रयोजनं अनतिप्रणीतपर्यायामपि शंय्वन्तादिधर्मप्रापणार्थं ॥

लुप्तजपा होतारमवृथा वषट्कारानुमन्त्रणाभिहिङ्कारवर्जं ॥ ३ ॥

अपशब्देनात्र न केवलो जप एव गृह्यते, किन्तु अनुमन्त्रणादिप्रतिषेधाज्जपादीनां सर्वासामुपलक्षणार्थमिति गम्यते।

नान्यस्योपांशुप्रयोज्यस्यापि। तेन इडानिगदस्यालोपः सिद्धो भवति। लुप्तो जपो यस्याः सा लुप्तजपा। होतारमनुयाहृत्यस्य निगदैकदेशस्य उपांशुत्वसिद्ध्यर्थं न जपेदितिवचनेन जपशङ्कया लोपशङ्कानिवृत्त्यर्थं। तद्दर्शनवचनं इतरयोः प्राप्तस्य प्रतिप्रसव एव॥

तस्यां प्राञ्चि कर्माणि दक्षिणा॥ ४॥

तस्यामितिवचनं कृत्स्नप्राप्त्यर्थं। प्रकृत्यात ऊर्ध्वमित्यत्रापि प्रापणार्थं। यानि प्रकृतौ प्राञ्चि कर्माणि, प्राङ्मुखानीत्यर्थः, तान्यस्यां दक्षिणमुखानि कर्त्तव्यानीत्यर्थः॥

इतराणि तथान्वयं॥ ५॥

यानीतरदिङ्मुखानि प्रकृतौ तान्यस्यां निर्दिष्टदिक्कानि अनिर्दिष्टदिक्कानि च तथान्वयं कर्त्तव्यानि। दक्षिणां दिशं प्राचीं कृत्वा तदनुसारेणान्यदिङ्मुखानि कर्त्तव्यानीत्यर्थः॥

उशन्तस्त्वा निधीमहीत्येतां त्रिरनवानन्त्याः सामिधेन्यः॥ ॥ ६॥

एतामृचं त्रिरनुच्छ्वसन्ननुब्रूयात्। ताइतिवचनात् ता एव सामिधेन्यो न पुनरभ्यसितव्या इत्यवगम्यते॥

तासामुत्तमेन प्रणवेनावह देवान् पितॄन् यजमानायेति प्रतिपत्तिः ॥ ७ ॥

तासां सामिधेनीनां उत्तमेन प्रणवेनावह देवान् पितॄन् यजमानायेति प्रतिपत्तिरेव सन्धेया। 'तेनाग्ने महान्' इत्यादि 'परिभूरसि' इत्यन्तं लुप्यते। प्रतिपत्तिश्चैवंरूपा भवति, पित्र्यायां प्रकृतौ देवा इज्यन्त इतरेषां सङ्कीर्त्तनं कृतं, इह च देवाश्च पितरश्चेज्यन्त इति पितृशब्दोऽपि प्रयोक्तव्य इति। सर्वत्र देवशब्दवति मन्त्रे पितृशब्दे प्रयोज्यत्वेन प्राप्ते स्वार्थ एव देवशब्दः प्रयोक्तव्यः न परार्थ इति कृत्वाऽऽचार्योऽन्यत्र परार्थत्वादप्रयोगं मन्यमानः तत्सहितं प्रतिपत्तिवाक्यं पठितवान्। तेनान्यत्र पितृशब्दो न प्रयोक्तव्य इति सिद्धं। प्रतिपत्तिवाक्यमुक्त्वा ततो वक्ष्यमाणदेवता आवाहयेत् ॥

अग्निं होत्रायावह स्वं महिमानमावहेत्येतस्य स्थानेऽग्निं कव्यवाहनमावाहयेत् ॥ ८ ॥

आज्यपान्तदेवता आवाह्य प्राकृतस्य स्विष्टकृतावाहनस्योद्धारं कृत्वा तत्स्थाने अग्निं कव्यवाहनमावाहयेत् ॥

उत्तमे चैनं प्रयाजे प्रागाज्यपेभ्यो निगमयेत् ॥ ९ ॥

उत्तमे च प्रयाजे प्रागाज्यपेभ्यः अग्निं कव्यवाहनं निगमयेत् ॥

सूक्तवाके चाग्निर्होत्रेणेत्येतस्य स्थाने ॥ १० ॥

निगमयेदिति वर्त्तते ॥

नेष्ट प्रादेशः ॥ ११ ॥

कार्यार्थत्वान्मन्त्राणां मन्त्रलोपेऽपि कार्यस्यालोप इति कृत्वा कार्यस्यापि प्रतिषेधः क्रियते ॥

न बर्हिष्मन्तौ प्रयाजानुयाजौ। नेडायां भक्षभक्षणं ॥ १२ ॥

भक्षेषु प्राणभक्षमिति प्राप्ते इडायां भक्षणमेव नास्ति। कः प्रसङ्गः प्राणभक्षस्येत्यर्थः। भक्षवचनं प्रकृताववान्तरेडा-भक्षादन्य इडाभक्षोऽस्तीतिज्ञापनार्थं। इडायामिति सप्तमी-निर्देशादिडाविषयं तद्भक्षणमिति गम्यते नेडाया एव भक्ष इति। तेनाऽवान्तरेडाभक्षणमिडाभक्षणञ्च नास्तीति गम्यते ॥

न मार्जनं ॥ १३ ॥

इडाभक्षणाङ्गत्वादेव मार्जनाभावे सिद्धे तदभाववचनं तदङ्गत्वज्ञापनार्थं ॥

न सूक्तवाके नामादेशः ॥ १४ ॥

सूक्तवाके यद्यजमाननाम तन्नादेष्टव्यं। सूक्तवाकवचनं सुगादापनादिष्वध्वर्य्वादिशब्दप्रसङ्गनिवृत्त्यर्थं ॥

ईक्षितः सीद होतरिति वोक्त उपविशेत्॥ १५॥

उत्तरस्योपवेशनस्येदं निमित्तद्वयं विधीयते। प्रादेशकरणाद्यर्थत्वात् पूर्वस्य तदभावेऽभावः। प्रादेशस्याभाव उक्तः। अनुमन्त्रणमप्यत्र नास्ति। अनुमन्त्रणाप्यायनोपस्थानानां मन्त्राकृढरूपत्वात् क्रियायां मन्त्राभावे क्रियाया अप्यभाव इति। तस्मादत्र पूर्वमुपवेशनं नास्ति। मानुषशब्दप्रत्याम्नाय ईक्षणादि, तज्ज्ञात्वोपविशेदित्युक्तत्वादभिक्रमणादि सर्वं न भवति। निरसनोपवेशनबर्हिरुपस्पर्शनानि मन्त्ररहितानि कुर्यादेव॥

*जीवानुमन्त्रौ सव्योत्तर्युपस्थाः प्राचीनावीतिनो हविर्भिश्चरन्ति॥ १६॥

उपस्थविधानं येषां तदङ्गं तेषामेव। हविर्ग्रहणं प्रधानेष्वयं धर्म इतिज्ञापनार्थं। तेन प्रधानमध्येऽपि यत् प्रायश्चित्तत्वेन प्राप्तं तस्यायं धर्मो न भवतीति गम्यते॥

दक्षिण आग्नीध्र उत्तरोऽध्वर्युः। द्वे द्वे अनुवाक्ये। अध्यधीमनवानं॥ १७॥

अत्रानुवाक्याकार्यस्यैकत्वात् मध्ये प्रणवो नास्ति॥

---

*जीवानुमन्त्रौ सव्योत्तर्युपविश्य्जीवानुमन्त्रौ० इति पाठः सो० म० पु०।

ओं स्वधेत्याश्रावणं । अस्तुस्वधेति प्रत्याश्रावणं । अनुस्वधा-स्वधेति सम्प्रैषः ॥ १८ ॥

द्वावेतौ सम्प्रैषौ । अनुस्वधा इत्येके । स्वधेत्यपरे । एक-वचनं जात्यभिप्रायं । अनुस्वधास्वधेति दीर्घः पठितव्यः ॥

ये स्वधेत्यागूर्य स्वधा मह इति वा । स्वधा नम इति वषट्-कारः ॥ १९ ॥

अत्र ओंस्वधेत्यादयः स्वधाशब्दाः दीर्घान्ता एव प्रयो-क्तव्याः । अध्वर्युसम्प्रैषया प्रयोजनं तदेव श्रुत्वास्य कार्यक-रणार्थं ॥

नित्याः स्तुतयः ॥ २० ॥

उक्ताः स्तुतयः प्रकृतावाद्ये द्वितीये उपान्त्ये वा यद्वचरस्था स्तुतिः एतेष्वपि तद्वचरस्यैव कार्येत्यर्थः ॥

पितरः सोमवन्तः सोमो वा पितृमान् पितरो बर्हिषदः पितरोऽग्निष्वात्ता यमः ॥ २१ ॥

पितॄणां सोमवन्तो गुणः । सोमस्य पितृमत्ता गुणः । बर्हि-षदोऽग्निष्वात्ता इति च पितॄणामेव गुणः । आद्ये वैकल्पिके ॥

उदीरतामवर उत्परासस्त्वया हि नः पितरः सोमपूर्व उपहूताः पितरः सोम्यासस्त्वं सोम प्रचिकितो मनीषा सोमो धेनुं सोमो अर्वन्तमाशुं त्वं सोम पितृभिः संविदानो बर्हिषदः पितर ऊत्यार्वागाहं पितॄन् सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्याग्निष्वात्ताः पितर एह गच्छत ये चेह पितरो ये च नेह ये अग्निदग्धा ये अनग्निदग्धा इमं यमप्रस्तरमा हि सीदेति द्वे परेयिवांसम्प्रवतो महीरनु ॥ २२ ॥

पञ्चानां तिस्रस्तिस्र ऋचः ॥

वैवस्वताय चेन्मध्यमा याज्या ॥ २३ ॥

यदि यमो वैवस्वतो देवता तत उत्तमे त्रिके मध्यमा ऋग्याज्या भवति। प्रथमोत्तमे अनुवाक्ये इति ॥

येतातृषुर्देवत्रा जेहमानास्त्वदग्ने काव्या त्वन्मनीषाः सप्रत्नया सहसा जायमान इति ॥ २४ ॥

स्विष्टकृत इति शेषः ॥

अग्निः स्विष्टकृत् कव्यवाहनः ॥ २५ ॥

प्रकृतौ योऽग्निः स्विष्टकृत इह तत्कार्यकरोऽग्निः कव्यवाहन इत्यर्थः। तेनात्र स्विष्टकृच्छब्दो न प्रयोक्तव्यः ॥

प्रकृत्यात ऊर्ध्वं ॥ २६ ॥

स्विष्टकृत ऊर्ध्वं प्रकृत्या भवति। सव्योत्तर्युपस्तातादयो न भवन्तीत्यर्थः। वचनमिदं स्विष्टकृत्यपि प्रापणार्थं, अकृत्वादेव उत्तरत्र प्राप्त्यभावात् ॥

वषट्कारक्रियायां चोर्ध्वमाज्यभागाभ्यामन्यन्मन्त्रलोपात् ॥ २७ ॥

मन्त्रलोपशब्देन पूर्वोक्ताः सर्वे विकारा लक्ष्यन्ते। तेभ्योऽन्येषां सव्योत्तर्युपस्तातादीनामभावाय प्रकृतिभावो विधीयते, प्रधानेषु स्विष्टकृति च स्वधाकारं वर्जयित्वा वषट्कारेण क्रिया चेत्। ऊर्ध्वमाज्यभागाभ्यामिति वषट्कारक्रियास्थानलक्षणार्थं। तेमाज्यभागाभ्यामूर्ध्वं स्विष्टकृत्पर्यन्ते स्थाने वषट्कारक्रियायां प्रकृत्या भवतीति गम्यते। तत्र मन्त्रलोपादिः पूर्वो विकारः सर्वप्रकारायां पित्र्यायामासमाप्तेर्भवत्येव ॥

एकैका चानुवाक्या ॥ २८ ॥

प्रकृतिभावादेव एकत्वे सिद्धे एकवचनमिदं तयोरेकैकस्यावरणार्थं ॥

यो अग्निः क्रव्यवाहनस्त्वमग्न ईडितो जातवेद इति संयाज्ये ॥ २९ ॥

वषट्कारक्रियायामेव ॥

भक्षेषु प्राणभक्षान् भक्षयित्वा बर्हिष्यनुप्रहरेयुः संस्थितायां प्राग्वानुयाजाभ्यां दक्षिणावृतो दक्षिणाग्निमुपतिष्ठन्ते ॥ ३० ॥

उभयतो विहारादनियमे प्राप्ते नियमार्थं दक्षिणाद्वचनं ॥

अनावृत्यानतिप्रणीतचर्यायां ॥ ३१ ॥

अनतिप्रणीतचर्यायां पित्र्यायां आवर्त्तनमकृत्वैवोपतिष्ठन्ते। तथैवाभिमुखत्वसम्भवात् ॥

अयाविष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः। स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत्तनूं तन्वामैरयतेति ॥ ३२ ॥

अयं दक्षिणाग्नेरुपस्थानमन्त्रः ॥

आवृत्य त्वेवेतरौ ॥ ३३ ॥

अतिप्रणीतचर्यायां दक्षिणाद्दक्षिणाग्नेरुपस्थानमुक्तं। अनतिप्रणीतचर्यायामनावृत्य तस्यैवोपस्थानमुक्तं। इदानीं गार्हपत्याहवनीयोरुपस्थानमुच्यते। तुशब्दो विशेषविध्यर्थः। एवशब्दोऽवधारणार्थः। अतिप्रणीतचर्यायामनतिप्रणीतचर्यायाञ्च गार्हपत्याहवनीययोः आवृत्यैवोपस्थानमिति ॥

आहवनीयं सुसन्दृशं त्वेति पंक्त्या ॥ ३४ ॥

पंक्तिवचनं प्रतीकसन्देहनिवृत्त्यर्थं ॥

गार्हपत्यमग्निं तमग्न्य इत्येकयर्चा न सूक्तेन ॥ ३५ ॥

उत्तरत्र सूक्तवचनात् ॥

अथैनमभिसमायन्ति मा प्रमा माग्ने त्वन्न इति जपन्तः ॥ ३६ ॥

एते सूक्ते जपन्तः एनं गार्हपत्यमभितः समायन्ति प्रादक्षिण्येन ॥

पूर्वेण गार्हपत्यसूक्ते समाप्य सव्यावृतस्त्र्यम्बकान् व्रजन्ति ॥
॥ ३७ ॥

गार्हपत्यस्य पुरस्ताद्यो देशस्तस्मिन् देशे यथा सूक्ते समाप्येते तथा समापयन्ति । सूक्तग्रहणं 'अग्निं तमग्न्यः' इत्यत्र ऋग्ग्रहणार्थं । यदीष्टिं समाप्योपतिष्ठन्ते तदा ततस्त्र्यम्बकान् व्रजन्ति । यदानूयाज्याभ्यां प्राक् तदा समाप्येष्टिस्त्र्यम्बकार्थं व्रजेयुः । त्र्यम्बका नाम कर्मविशेषाः ॥

तत्राध्वर्यवः कर्म्माधीयते ॥ ३८ ॥

तत्र यदध्वर्युणोक्तं तदस्मदीयैरपि कर्त्तव्यमित्यर्थः ॥

प्रत्येत्यादित्यया चरन्ति ॥ ३९ ॥

अदितिरत्र देवता, नादित्यः, आदित्यानां याज्यानुवाक्यानामाम्नानात् ॥

पुष्टिमन्तौ धाय्ये विराजौ ॥ ४० ॥ ॥ १९ ॥

इति द्वितीये एकोनविंशतितमा कण्डिका ॥ ※ ॥

पञ्चम्यां पौर्णमास्यां शुनासीरीयया ॥ १ ॥

साकमेधकालमारभ्य या पञ्चमी पौर्णमासी तस्यां शुना-सीरीया कर्त्तव्या। शुनासीरीयेति कर्मनाम ॥

अर्वाग्यथोपपत्ति वा ॥ २ ॥

पञ्चम्याः पौर्णमास्या अर्वागपि यत्र काले कर्तुं सम्भवति तत्र वेत्यर्थः। ततो द्वादशे अहे इति शाखान्तरोक्त इत्यर्थः ॥

वाजिनवर्ज्जं समाना वैश्वदेव्या। हविषान्तु स्थाने षष्ठप्रभृ-तीनां वायुर्नियुत्वान् वायुर्वा शुनासीराविन्द्रो वा शुनासीर इन्द्रो वा शुनः सूर्य्य उत्तमः ॥ ३ ॥

नियुत्वानिति वायोर्गुणः। शुनासीरः शुनश्च इन्द्रस्य गुणौ। प्रथमद्वितीयौ वैकल्पिकौ। पुनस्तयोऽपि विकल्पन्ते। सूर्यस्योत्तमत्वम् देवतान्तरप्रवेशेऽपि सूर्य उत्तम एवान्यत्र क्रमान्तरं भवतीत्येवमर्थं ॥

आ वायो भूष शुचिपा उप नः प्रयाभिर्यासिदाश्वांसमच्छ-स त्वन्नो देव मनसा वायो मनसेशानाय प्रहुतिं यस्त आनट् शुनासीरा-विमां वाचं जुषेथां शुनन्नः फाला विकृषन्तु भूमिमिन्द्र वयं शुनासीर मेऽस्मिन् पक्षे हवामहे। स वाजेषु प्रनोविषत्। अश्वायन्तो गव्यन्तो वाजयन्तः शुनं हुवेम मघवानमिन्द्रम-श्वायन्तो गव्यन्तो वाजयन्तस्तरणिर्विश्वदर्शतश्चित्रं देवाना-मुदगादनीकमिति याज्यानुवाक्याः ॥ ४ ॥

याज्यानुवाक्याग्रहणं या अस्मिन् प्रकरणे आम्नाता याज्यानुवाक्यास्ता एव एतत्प्रकरणसम्बन्धिनीनां देवतानां शाखान्तरादागतानामपि कथञ्चिदपि सम्भवे ग्रहीतव्याः नान्या इत्येवमर्थं ॥

समाप्य सोमेन यजेताग्नी पशुना ॥ ५ ॥

चातुर्मास्यानामेतावङ्गभूतौ पशुसोमौ निरूढज्योतिष्टोमप्रकृतिकौ, समाप्तिनिमित्तत्वादनयोः ॥

चातुर्मास्यानि वा पुनश्चातुर्मास्यानि वा पुनः ॥ ६ ॥ ॥ २० ॥

चातुर्मास्यैरिति वक्तव्ये अन्यथावचनं नेमानि तदङ्गभूतानीति ज्ञापयितुं। तेन पुनरपि तान्येवाभ्यसितव्यानीति गम्यते। अभ्यासपक्षे समाप्तावपि नैव पशुसोमौ कर्त्तव्यौ, तस्य पक्षस्य पूर्वाभ्यां सह वैकल्पिकत्वात्। वरुणप्रघासेषूह उच्यते। अग्निहिलाभावादग्निवाचिनामनूहः। 'घृतवतीम्' इत्यत्र 'अध्वर्यू आस्थेथां विश्ववारा' इत्यूहः। 'वेदोऽसि' इत्यत्र वेदविषयाणां पदानामूहः। अन्यदप्येवंरूपमस्ति चेत् तदन्वेषणीयं॥

इति द्वितीये विंशतितमा कण्डिका ॥ * ॥

इत्याश्वलायनसूत्रवृत्तौ नारायणीयायां द्वितीयोऽध्यायः ॥*॥

॥ ॐ ॥

पशौ ॥ १ ॥

अधिकारोऽयं। प्राक् प्रायश्चित्ताधिकारात् पशुगुणकं कर्म पशुरित्युच्यते ॥

इष्टिरुभयतोऽन्यतरतो वा ॥ २ ॥

तस्य पशोरुभयतः अन्यतरतो वा इष्टिः कर्त्तव्या ॥

आग्नेयी वा ॥ ३ ॥

याऽसाविष्टिः पशोरुभयतोऽन्यतरतो वा कर्तव्यत्वेन चोदिता साऽग्निदेवत्या वा भवेदित्येकोऽर्थः। अपरस्त्वर्थो वाशब्दाल्लभ्यते, येयमाग्नेयीष्टिः पशोरुभयतोऽन्यतरतो वा अङ्गत्वेन विहिता सा न भवेद्वेति। तेनेयमिष्टिरनित्येत्यवगन्तव्या। अतः सिद्धं स्वतन्त्रेषु पशुषु कर्तव्या अङ्गभूतेषु न कर्तव्येति ॥

आग्नावैष्णवो वा ॥ ४ ॥

इष्टेः करणपक्षे देवताविकल्पोऽनेन विधीयते।

उभे वा ॥ ५ ॥

आग्नेयी चाग्नावैष्णवी च एकस्मिन् पशुप्रयोगे द्वे वा इष्टी भवेतां ॥

अन्यतरा पुरस्तात् ॥ ६ ॥

यदा उभे स्यातां तदा एका पुरस्तात्, इतरोपरिष्टादित्येवं भवतः, नोभे संहत उभयतोऽन्यतरतो वा भवेतामिति सूत्रार्थः ॥

उक्तमग्निप्रणयनं ॥ ७ ॥

उक्तग्रहणं वारुणप्राघासिकस्य सविधिकस्य ग्रहणार्थं ॥

पश्चात् पाशुबन्धिकाया वेदेरुपविश्य प्रेषितो यूपायाज्यमानायाञ्जन्ति त्वामध्वरे देवयन्त इत्युत्तमेन वचनेनार्द्धर्च्च आरमेत् ॥ ८ ॥

वेद्यन्तरस्याभावेऽपि पाशुबन्धिकाया इति विशेषः। तत्स्थाने तद्वदुपचारसिद्ध्यर्थं प्रेषितवचनं बहुयूपके कर्मणि अञ्जनादीनां पदार्थानुसमये क्रियमाणे प्रेषितः प्रेषितोऽनुब्रूयादित्येवमर्थं। यूपायाज्यमानायेति यूपमज्यमानमभिधातुमेतामृचमनुब्रूयादित्यर्थः। तस्या उत्तमेन वचनेनेति सम्बन्धः ॥

उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्तादूर्ध्व ऊषु ण ऊतय इति द्वे जातो जायते सुदिनत्वे अह्नामित्यर्द्धर्च आरमेत्। युवा सुवासाः परिवीत आगादिति परिदध्यात् ॥ ९ ॥

परिदध्यादितिवचनं पदार्थानुसमये प्रतिपदार्थानुवचनस्य भेद इति ज्ञापनार्थं ॥

यत्रैकतन्त्रे बहवः सपशवोऽन्त्यं परिधाय संस्तुयादनभिहिङ्कृत्य यान्वो नरो देवयन्तो निमिम्युरिति षड्भिः ॥ १० ॥

यस्मिन् कर्मणि एकस्मिन्नेव पशुतन्त्रे बहवो यूपाः सपशवस्तु तस्मान्त्यमनुवचनं परिधाय संस्तुयाद्यूपान्। काण्डानुसमयाभिप्रायेणेदमुच्यते। अन्त्यमिति तदनुवचनस्य भिन्नत्वात् पदार्थानुसमये लोकमेवानुवचनं भवति। एकतन्त्र इतिवचनं एककर्ममात्रनिवृत्त्यर्थं। बहव इति द्वयोर्निवृत्त्यर्थं। पशव इति अपशुकबहुत्वनिवृत्त्यर्थं ॥

पञ्चभिर्वा। अनभ्यासमेके ॥ ११ ॥

प्रथमोत्तमयोरनभ्यासमित्यर्थः ॥

उक्तमग्निमन्थनं तथा धाय्ये कृताकृतावाज्यभागौ। आवाहने पशुदेवताभ्यो वनस्पतिमनन्तरं ॥ १२ ॥

आवाहयेदिति शेषः। आवाहनग्रहणं आवाहनादिस्वि-

ष्टिकेष्वेव निगमेषु निगमनं वनस्पतेर्न पाशुकेष्वित्येवमर्थं। अतः सूक्तवाकप्रैषे निगमनं न कर्त्तव्यं भवति ॥

सम्मार्गैः सम्मृज्य प्रवृताहुतीर्जुहुयात् ॥ १३ ॥

सम्मार्गैः सम्मृज्य उदकं स्पृष्ट्वा प्रवृताहुतीर्जुहुयात्। प्रवृताहुतीरिति कर्मनाम न गुणविधिः ॥

जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्तमं तस्मिन्माधाः सरस्वत्यै वाचे स्वाहा। पनरादाय पञ्चविग्राह्यं स्वाहा वाचे स्वाहा वाचस्पतये स्वाहा सरस्वत्यै स्वाहा सरस्वते महोभ्यः संमहेभ्यः स्वाहेति ॥ १४ ॥

सकृद्गृहीतैकां हुत्वा पुनः सकृद्गृहीता पञ्चाहुतीर्जुहुयात्। आहुतिसङ्ख्याभेदादेव द्रव्यभेदे सिद्धे विग्राह्यवचनं मन्त्रविग्रहणार्थं ॥

सोम एवैके ॥ १५ ॥

सोमशब्देन सौत्यमहरुच्यते। सौत्य एवाहनि अयं होमो नान्यस्मिन्नित्येके।

प्रशास्तारं तीर्थेन प्रपाद्य दण्डमस्मै प्रयच्छेद्दक्षिणोत्तराभ्यां पाणिभ्यां मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामीति ॥ १६ ॥

विहारप्रपदनस्य तीर्थेनैव सिद्धत्वात् तीर्थेनेतिवचनं प्रशास्त्रोस्तीर्थेन प्रपद्यस्वेतिसम्प्रैषलाभार्थं। प्रदानमन्त्रो मित्रावरुणयोरित्यादिः ॥

तथायुक्ताभ्यामेवेतरो मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रतिगृह्णाम्यवक्रो विथुरो भूयासमिति ॥ १७ ॥

प्रतिगृह्णीयादिति शेषः। तथायुक्ताभ्यामिति दक्षिणोत्तराभ्यां पाणिभ्यामित्यर्थः ॥

प्रतिगृह्योत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेन्न चानेन संस्पृशेदात्मानं वान्यं वा प्रैषवचनात् ॥ १८ ॥

अनेन दण्डेन आत्मानमन्यं वा न संस्पृशेत्, आप्रैषवचनात्। यावत् प्रैषोच्चारणं नास्ति तावदयं नियमः, आरब्धे प्रथमप्रैषे नायं नियमः ॥

अन्यान्यपि यज्ञाङ्गान्युपयुक्तानि न विहारेण व्यवेयात्॥ ॥१९॥

अन्यान्यपीतिवचनात् यत् पूर्वोक्तमुत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेदिति तदपि व्यवायपरिहारार्थमेवेति गम्यते। तेनैतद्दर्शितं भवति, हवींषि चाग्नयोऽन्तरतमाः, हविःषु च प्रधानाप्रधानविशेषोऽस्ति, तत्र स्रुगादीनि साधनानि, तेषु च विशेषोऽन्वेषणीयः। ततः कर्तारस्तेषु च स्वामी मुख्यो द्वितीयतृतीयचतुर्थेषु विशेष इति। एवं बध्वा एतेषूपचारे कृते यज्ञाङ्गानि विहारेणाव्यवेयानि भवन्ति। उपयुक्तवचनमनपवृत्तकर्मणामेव ग्रहणार्थं। सर्वार्थञ्चेदं सूत्रं, व्यवायप्रतिषेधपरत्वात्॥

दक्षिणो होतृषदनात् प्रह्वोऽवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात् प्रैषांश्चादेशं॥ २०॥

वेदिश्रोण्यां बहिर्वेदि होतृषदनं, तस्य दक्षिणतो बहिर्वेदि स्वयमवस्थाय अन्तर्वेदि दण्डमवष्टभ्य ब्रूयात् प्रैषानादेशं, आप्रैषं प्रेषणमित्यर्थः। यावन्ति प्रैषार्थानि प्रेषणानि सन्ति तावत्सु प्रेषणेषु प्रैषान् ब्रूयादिति। एतदुक्तं भवति। प्रैषाम्नायपरिपठितान् सर्वान् प्रैषान् मैत्रावरुण एव प्रेषितः प्रेषितोऽनुब्रूयादित्यर्थः, चशब्दो मैत्रावरुणानुकर्षणार्थः, तेन ज्ञायते व्यवायप्रतिषेधस्त्वं सर्वार्थमिति॥

अनुवाक्याश्च सम्प्रैषे। पूर्वा प्रैषात्॥ २१॥

अनुवाक्यां ब्रूयादिति शेषः॥

*पर्यग्निस्तोकमनोतोन्नीयमानसूक्तानि च॥ २२॥

एवम्भूतमैत्रावरुणानुकर्षणार्थश्चशब्दः॥

सोम आसीनोऽन्यत्॥ २३॥　॥ १॥

उक्तेभ्यो यदन्यन्मैत्रावरुणस्य सोमे कर्मास्ति तदासीनो ब्रूयात्। सोमेऽप्येतानि तिष्ठन्नेव ब्रूयादित्यर्थः॥

इति तृतीये प्रथमा कण्डिका॥ *॥

---

एकादश प्रयाजाः॥ १॥

पशावेकादश प्रयाजा इति नियम्यते सर्वत्र सर्वेषां॥

तेषां प्रैषाः॥ २॥

तेषां प्रयाजानां प्रैषा अपि भवन्ति, ते चैते इत्याह॥

---

* पर्य्यग्निस्तोकमनोतो॰ इति सं॰ मू॰।

प्रथमं प्रैषसूक्तं। उक्तं द्वितीये ॥ ३ ॥

यदुक्तं प्रकृतौ वा वसिष्ठादीनां नराशंसः इतरेषां तनूनपादिति तदप्राकृतेषु प्रैषेष्वपि स्यादित्येवमर्थं सूत्रं ॥

अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति। प्रैषैर्होतारं ॥ ४ ॥

एवं सति होता नाध्वर्योः प्रैष आकाङ्क्षणीय इत्यर्थः ॥

होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः ॥ ५ ॥

होतृग्रहणं मैत्रावरुणाधिकारात् प्रैषसलिङ्गाभिरित्याप्रीष्वपि तनूनपान्नराशंसविवेकः कर्त्तव्य इत्यर्थः ॥

समिद्धो अग्निरिति शुनकानां जुषस्व नः समिधमिति वसिष्ठानां समिद्धो अद्येति सर्वेषां ॥ ६ ॥

वसिष्ठशुनकानामुक्त्वा विधीयमानत्वात् तद्वर्जानां सर्वेषामिति गम्यते। जामदग्न्यमिदं त्वाप्रीसूक्तं, नागस्त्यं। आम्नायक्रमानुगुण्यादावसिष्ठविध्युत्तरकालिकत्वाच्चास्य विधेः। तत्राप्यादीनां नाराशंस्येव वासिष्ठी आवर्त्तव्या, प्रैषसलिङ्गाभिरित्युक्तत्वात्। एवं प्राजापत्येऽपि पशौ वसिष्ठादीनां नाराशंस्येव ॥

*यथाऋषि वा ॥ ७॥

यो यस्य ऋषिस्तदानुगुण्यं यथर्षिशब्देनोच्यते तथा वाऽऽप्री-सूक्तं ग्रहीतव्यं। स्वयं ऋषिनामधेयस्यानुगुणा आप्र्यः कर्त्तव्या इत्यर्थः। तत्र भगवता शौनकेन यथाऋषिपक्षे आप्रीविवेकार्थमेव श्लोक उक्तः।

'कण्वाङ्गिराऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च।
वसिष्ठः कश्यपो वाध्र्यश्वो जमदग्निर्यथोत्तमः'॥

तत्र दशानां सूक्तानां प्रथमं कण्वानां 'सुसमिद्धो न आवह' इति। द्वितीयं तद्वर्जितानामङ्गिरसां, 'समिद्धो अग्न आवह' इति। तृतीयमगस्त्यानां, 'समिद्धो अद्य राजसि' इति। चतुर्थं शुनकानां, 'समिद्धो अग्निर्निहितः' इति। पञ्चमं विश्वामित्राणां, 'समित्समित्सुमनाः' इति। षष्ठमत्रीणां, 'सुसमिद्धाय शोचिषे' इति। सप्तमं वसिष्ठानां, 'जुषस्व नः समिधं' इति। अष्टमं कश्यपानां, 'समिद्धो विश्वतस्पतिः' इति। नवमं वाध्र्यश्वानां, 'इमां मे अग्ने समिधं जुषस्वेड' इति। शुनकवाध्र्यश्ववर्जितानां भृगूणां दशमं, 'समिद्धो अद्य मनुषो दुरोणः' इति। यथर्षिपक्षे विवेकोऽयं॥

प्राजापत्ये तु जामदग्न्यः सर्वेषां ॥ ८॥

तुशब्देनात्र वसिष्ठशुनकसहितानामिति विशेषो लभ्यते॥

---

* यथऋषि वेति पाठः प्रायशः सर्वत्र।

दशसूक्तेषु प्रेषितो मैत्रावरुणोऽग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह ॥ ९ ॥

कालोपदेशादप्रेषितोऽपि ब्रूयादिति प्रेषितवचनं। मैत्रावरुणग्रहणमुत्तरार्थं। पर्यग्नय इति परितः क्रियमाणमग्निमभिधातुमित्यर्थः ॥

अध्रिगवे प्रेष्योपप्रेष्य होतरिति वोक्तोऽजैदग्निरसनदाजमिति प्रैषमुक्त्वान्तर्वेदि दण्डं निदध्यात् ॥ १० ॥

मैत्रावरुणग्रहणं द्वितीयेऽपि सम्प्रैषे मैत्रावरुण एव ब्रूयादित्येवमर्थं। प्रैषपाठस्तु होतृलिङ्गेनाविज्ञातत्वात्। पूर्वस्य तु पाठः परिसङ्ख्याभयात्। प्रैषवचनं प्रैषमित्येकवचनविवक्षार्थं, न द्विवचनविवक्षया। प्रैषैक्यसिद्धिद्वारेणानवानमस्य साधितं भवति। इदानीं दण्डनिधानवचनान्न पूर्वं निधातव्य इति गम्यते ॥

अध्रिगुर्होतोहन्नङ्गानि दैवतं पशुमिति यथार्थं ॥ ११ ॥

अध्रिगुरिति 'दैव्याः शमितार आरभध्वम' इत्यस्य मन्त्रस्य नाम। मैत्रावरुणाधिकाराद्धोतृग्रहणं। ऊहन्नित्यभिधेयवशेन वचनानि सन्नमयन्नित्यर्थः। अङ्गानीतिवचनं अध्रिगौ अङ्गादीनां शब्दा एवोह्यन्ते, नान्ये बर्हिर्मातृपितृशब्दादय इतिज्ञापनार्थं। यथार्थमिति यो यस्य शब्दस्यार्थः तन्तयो-

वम् ब्रूयादित्यर्थः । ऊहन्नित्यनेनैवास्मिन्नर्थे सिद्धे यथार्थमिति वचनं संव्यवहारार्थेयमूहसंज्ञेतिज्ञापनार्थं ॥

पुंवन्मिथुने ॥ १२ ॥

मिथुनमिति स्त्रीपुंसयोः समाहार उच्यते । अस्मिन् समाहारे पुंलिङ्गेनैवोहः कर्त्तव्य इति नियम्यते ॥

मेधपतौ ॥ १३ ॥

अयं शब्दो देवतावाची । तस्य स्त्रीप्रत्ययान्तस्यायं निर्देशः कृतः । तेनायमपि पदार्थो देवतावाचिनः स्त्रीप्रत्ययसम्बन्धादस्मिन् सूत्रे लभ्यते स्त्रीदेवतेति । स च स्त्रीदेवतेति पदार्थोऽस्मिन् सूत्रे, पुंवद्वचनस्य विधीयमानत्वात्, स्त्रीदेवतायामभिधेयायामित्यर्थात् कल्प्यते । मेधपतिशब्दप्रातिपदिकस्य पुंवद्वचनस्य विषयत्वेनेत्येवंसम्प्रदायाविच्छेदादवगम्यते । अत एवं सूत्रार्थः । स्त्रीदेवतायां मेधपतिशब्दं पुंवद्ब्रूयादिति । एवं व्याख्यायमानेऽस्मद्ब्राह्मणमनुसृतं भवति 'अथो खल्वाहुर्यस्मै वाव कस्मै च' इत्यादि ॥

मेधायां विकल्पः ॥ १४ ॥

मेधशब्दात् पशुवाचिनः परः स्त्रीप्रत्ययः पूर्ववत् स्त्रीपशाविति निगमयति । तेन स्त्रीपशौ मेधशब्दं पुंवद्वा स्त्रीवद्वा ब्रूयादिति विकल्पोऽत्र विधीयते ॥

यथार्थमूर्द्धमध्रिगोरन्यन्मिथुनेभ्यः ॥ १५ ॥

अध्रिगोरूर्द्ध्वं यथार्थमूहो भवति। मिथुने तु सर्वत्राध्रिगुवदेव। एतदुक्तं भवति, अध्रिगोरूर्द्ध्वमङ्गादिशब्दा अन्ये चार्थवशेनोह्यन्ते न नियमेनाङ्गादिशब्दा एवेति, मिथुनं तु सर्वत्र पुंवदेवाभिधेयमिति ॥

सर्वेषु यजुर्निगदेषु ॥ १६ ॥

न केवलमयं विधिः पशावेव, कथन्तर्हि सर्वेषु यजुःषु निगदेषु चार्थवशेनोहः कार्यः। यजूंष्येवोच्चैः प्रयोगार्हाः निगदा उच्यन्ते ॥

प्रकृतौ समर्थनिगमेषु ॥ १७ ॥

प्रकृताविति यस्मिन् कर्मणि अर्थाभिधानार्थो यो मन्त्र उत्पद्यते तस्य मन्त्रस्य तत् कर्म प्रकृतिः। समर्थो नाम यथार्थाभिधायी शब्दः। निगमा नाम मन्त्राः। उत्पत्तिस्थाने ये मन्त्राः यथार्थाभिधायिशब्दवन्तः तेषु विकृतिषूहो भवति। ये तु पुनः प्रकृतावेवायथार्थाभिधायिशब्दवन्तः तेषु विकृतावपि न भवत्यूह इति प्रकृतावसमर्थनिगमसम्भवानुज्ञानात्र प्रकृतावूहो विद्यत इति गम्यते। उपपन्नमेवेदं, तदर्थाभिधानार्थमेव तस्य मन्त्रस्य प्रत्यचाम्नानात्। तत्र लक्षणया गौण्या वाऽभिधानं कल्पनीयं, तस्याः कल्पनायाः विकृता-

वचनविशेषात् तेषां विकृतावप्यूह एवेति युक्तमुक्तं 'प्रकृतौ समर्थनिगमेषु' इति ॥

प्राकृतास्त्वेव मन्त्राणां शब्दाः ॥ १८ ॥

ऊहे क्रियमाणे मन्त्राणां प्राकृता एव शब्दा भवेयुः। एतदुक्तं भवति। यदि प्रकृतौ छान्दसं प्रातिपदिकं स्यात् तदा तस्मादेव विभक्त्यूहः कर्त्तव्यो न प्रातिपदिकसंस्कार इति। तुशब्देन न्यायविरुद्धोऽयमर्थ इति दर्शयति। ऊहस्यास्मदायत्तप्रयोगत्वात् पारिभाषिकत्वमेवेति न्यायविरुद्धमपि असमर्थेष्वनूहवचनं छान्दसस्यापि प्राकृतस्यैव शब्दस्य ग्रहणमित्युभयं ग्रहीतव्यमेवेत्येवमर्थं तुशब्दं प्रयुक्तवान् स्वयमेवाचार्यः ॥

प्रतिनिधिष्वपि ॥ १९ ॥

प्राकृता एव शब्दा इत्यनुवर्त्तते ॥

नाभिरूपमा मेऽद्रो हविरित्यनूह्यानि ॥ २० ॥ ॥ २ ॥

यथाकथञ्चित्प्राप्तानां प्रतिषेधोऽयं। उपमेत्युपमार्थाः श्येनादयः शब्दा गृह्यन्ते ॥

इति तृतीये द्वितीया कण्डिका ॥ • ॥

---

दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधं। प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनुसखा सयूथ्यः। उदीचीनां अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयतात् वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरं। एकधाऽस्य त्वचमाच्छ्यतात् पुरा नाभ्या अपि शसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात्। श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपे वांसाच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता षड्विंशतिरस्य वंक्रयस्ता अनुष्ठ्योच्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात्। ऊवध्य गोहम्पार्थिवं खनतात्। अस्ना रक्षः संसृजतात्। *वनिष्ठुमस्य माराविष्टोरूकम्मन्यमानानेदस्तोके तनये रविनारवच्छमितारः। अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३उ अपाप ॥ १ ॥

अयमध्रिगुः। अत्रोह्यानि पदानि वक्ष्यन्ते। मेधपतये मेधपतिभ्यां मेधपतिभ्यः। मेधं मेधौ मेधान्। मेधां मेधे मेधाः। एवं वा। अस्मै आभ्यां एभ्यः। अस्यै आभ्यां आभ्यः। एनं एनौ एनान्। एनां एने एनाः। अस्य अनयोः एषां। अस्याः अनयोः आसां। शरीरं शरीरे शरीराणि। त्वचं त्वचौ त्वचः। वपां वपे वपाः। वक्षः वक्षसी वक्षांसि। प्रशसा प्रशसः।

---

* वनिष्ठुमिति मू०माचपु०।

बाहू बाहून्। दोषणी दोषाणि। अंसौ अंसान्। अच्छिद्रे अच्छिद्राः। श्रोणी श्रोणीः। ऊरू ऊरून्। अष्ठीवन्ता अष्ठीवतः। वनिष्ठुं वनिष्ठू वनिष्ठून्। इत्येवमूहः। मेधं। मयूय्यः। शरीरं। वारयध्वात्। अनूनं कृणुतात्। खनतात्। सृजतात्। शमितारः। अध्रिगाश्‍ उ अपाप। इत्येतान्यव्रमानानि। अत्र श्लोकः।

'मेधं मयूय्यश्च शरीरयध्वादनूनपूर्वं कृणुतात् ततास्च।
ततान्मितारोऽध्रिगा उ अपाप एतेऽध्रिगौ मध्यविरामदेशाः' ॥

अस्ना रक्षः संसृजताच्छमितारोऽपापेत्युपांशु ॥ २ ॥

एते त्रयः शब्दाः स्वे स्वे स्थाने उपांशु प्रयोक्तव्याः। शमितार इतीतरयोर्मध्ये पाठात् तन्मध्यगत एवोपांशु भवति, नान्यः ॥

एकधा षड्विंशतिरिति द्विर्द्विबहूनां ॥ ३ ॥

द्विबहूनां पशूनां सम्बन्धिनावेतौ शब्दौ द्विर्ब्रूयात्। विभक्त्यूहनमस्य वचननिवृत्त्यर्थं, षड्विंशतिशब्दस्याभ्यासो नियम्यते ॥

पुरास्तरिति चैके। अध्रिग्वादि त्रिरुक्ता शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तदिति जपित्वा दक्षिणावृदावर्त्तते ॥ ४ ॥

'अध्रिगो शमीध्वम्' इत्यादि अपापाक्तं चिकत्वा शमितार इत्यादि च जपित्वा दक्षिणावृदावर्त्तते। दक्षिणावृद्वचनं विहाराद्व्यावृत्तिरिति प्राप्तमनूद्यते। एतं मन्त्रं जपित्वा इदमेव कुर्यात्, नान्यत् किञ्चित्। दक्षिणावृदित्येवमर्थं उक्तेन प्रकारेणावृत्य पृष्ठतः कृत्वा आसीत॥

मैत्रावरुणश्च॥५॥

मैत्रावरुणस्यैवमावृत्य पृष्ठतः कुर्यात्॥

सव्यावृतौ ब्रह्मयजमानौ। संज्ञप्ते पशावावर्त्तेरन्॥६॥
॥३॥

पुनरावर्त्तनकालोऽयं। तस्मादेतावन्तं कालं पराञ्च एवासीरन्॥

इति तृतीये तृतीया कण्डिका॥०॥

वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्योऽन्वाह जुष सप्रथस्तममिमं नो यज्ञमिति ॥ १ ॥

वपायां श्रप्यमाणायामितिवचनं श्रप्यमाणवपासम्बन्धिस्तोकाभिधानानुवचनेन वपैव संस्क्रियतइतिज्ञापनार्थं। प्रेषितवचनं प्रैष• एवास्यानुवचनस्य निमित्तं नावसरविशेषइत्येवमर्थं ॥

उक्तमादापनं स्वाहाकृतिभ्यः ॥ २ ॥

स्वाहाकृत्यर्थमत्र स्रुगादापनं कर्त्तव्यं। तेन माध्यन्दिने सवने प्राजापत्येषु स्तोकानन्तरं स्वाहाकृत्यभावात् आदापनं न कर्त्तव्यं भवति। एतदप्यत्रावगम्यते स्रुगादापनं प्रयाजार्थमेवेति। तेनाज्यभागप्रभृतिषु हविराहुतिप्रभृतिषु चैतन्न स्यात् ॥

होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदस इति प्रष उक्तमाऽऽप्रीयाज्या ॥ ३ ॥

द्वयस्तोकेष्वितिवचनादुक्तमप्रैषोऽवशिष्टः स्वाहाकृत्यर्थः, तदर्थमेवाप्री चावशिष्टा, किमित्यत्रोभयोर्वचनं। आप्रीवचनस्येदं प्रयोजनं उक्तमेवाऽऽप्रीयाज्या नात्र देवता स्वाहाऽमुं स्वाहाऽमुमिति प्रकृताऽभिगन्तव्येति। प्रैषवचनं विस्पष्टार्थं ॥

'अग्निर्गो अमीध्वम्' इत्यादि अपापाम्नं चिद्ध्वा अभितार इत्यादि च जपित्वा दक्षिणावृदावर्त्तते। दक्षिणावृद्वचनं विशाराद्व्यावृत्तिरिति प्राप्तमनूद्यते। एतं मन्त्रं जपित्वा इदमेव कुर्यात्, नान्यत् किञ्चित्। दक्षिणावृदित्येवमर्थं उक्तेन प्रकारेणावृत्य पृष्ठतः कृत्वा आसीत॥

मैत्रावरुणश्च॥ ५॥

मैत्रावरुणश्चैवमावृत्य पृष्ठतः कुर्यात्॥

सव्यावृतौ ब्रह्मयजमानौ। संज्ञप्ते पश्चावावर्त्तेरन्॥ ६॥

॥ ३॥

पुनरावर्त्तनकालोऽयं। तस्मादेतावन्तं कालं पराञ्च एवासीरन्॥

इति तृतीये तृतीया कण्डिका॥ ०॥

---

वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्योऽन्वाह जुष सप्रथस्तममिमं नो यज्ञमिति ॥ १ ॥

वपायां श्रप्यमाणायामितिवचनं श्रप्यमाणवपासम्बन्धिस्तोकाभिधानानुवचनेन वपैव संस्क्रियतइतिज्ञापनार्थं। प्रेषितवचनं प्रैष॰ एवास्यानुवचनस्य निमित्तं नावसरविशेषइत्येवमर्थं ॥

उक्तमादापनं स्वाहाकृतिभ्यः ॥ २ ॥

स्वाहाकृत्यर्थमत्र स्रुगादापनं कर्त्तव्यं। तेन माध्यन्दिने सवने प्राजापत्येषु स्तोकानन्तरं स्वाहाकृत्यभावात् आदापनं न कर्त्तव्यं भवति। एतदप्यत्रावगम्यते स्रुगादापनं प्रयाजार्थमेवेति। तेनाज्यभागप्रभृतिषु हविराहुतिप्रभृतिषु चैतन्न स्यात् ॥

होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदस इति प्रैष उक्तमाऽऽप्रीयाज्या ॥ ३ ॥

इत्यसूक्तेष्वितिवचनादुक्तप्रैषोऽवशिष्टः स्वाहाकृत्यर्थः, तदर्थमेवाप्री चावशिष्टा, किमित्युभयोर्वचनं। आप्रीवचनस्येदं प्रयोजनं उक्तमेवाऽऽप्रीयाज्या नात्र देवता स्वाहाऽमुं स्वाहाऽमुमिति प्रकृताऽभिगन्तव्येति। प्रैषवचनं विस्पष्टार्थं ॥

वपा पुरोडाशो हविरिति पशोः प्रदानानि ॥ ४ ॥

प्रदानानीति यागा इत्यर्थः। पशावेतद्द्रव्यसम्बन्धिनस्त्रयो यागाः कर्त्तव्या इत्यर्थः, तेषां प्रदानानीति संज्ञा। पशावित्यधिकारे पशोर्वचनं पशोः पशोरिति वीप्सार्थं। तेनैकदैवत्येषु बहुषु पशुषु प्रतिपशु वपाहविर्भेदवत् पुरोडाशभेदः सिद्धो भवति॥

तानि पृथङ्नानादेवतेषु ॥ ५ ॥

एकदेवत्ये एकस्मिन्नपि पशौ वपापुरोडाशहविषां प्रैषयाज्यानुवाक्याभेदात् पृथग्भावाः सिद्धाः परस्परं। तथा नानादेवतेषु पशुषु वपायागवत् पृथग्भावः सिद्धो याज्यानुवाक्याभेदादेव तथा पुरोडाशानां हविषामपीति पृथग्भावस्याविधेयत्वादेकदेवतेषु वपानां सकृद्यागः। तथा पुरोडाशानां हविषामपीति व्यतिरेक एवात्र विधातव्यः। तानीतिवचनं योगविभागार्थं। तेन एकदेवतेष्वपि वपादीनां प्रदानत्वं भवति। एकयोगत्वे नानादेवतेष्वेतेषां पृथक्प्रचारवत् पृथक्प्रदानत्वमपि स्यात्। योगविभागे सति पूर्वेण सर्वेषां प्रदानत्वं, उत्तरेणैकदेवतेषु सहप्रचार इति युक्तं॥

मनोताञ्च ॥ ६ ॥

अवदानमात्रहविरर्थत्वान्मनोताया नानादेवतेषु पृथक्-

प्रचारे सत्यवदानस्य यागव्यवधानात् प्रतिपशु मनोतामन्त्र-मावर्त्तयेत् ॥

न मनोताऽऽवर्त्तेतेत्येके ॥ ७ ॥

एके आचार्याः मनोता नावर्त्तयितव्येत्याहुः। मनोता देत्येतावता विकल्पे सिद्धे गुरुसूत्रकरणं न्यायविकल्पोऽयमिति-प्रदर्शनार्थं। तत्रैके मन्यन्ते, आग्नेयत्वान्मन्त्रस्य। 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोताशब्दस्याग्नौ प्रवृत्तिदर्शनात्। 'अग्निर्वै देवानां मनोता' इति च श्रुतेः। सम्प्रैषे च हविःशब्दस्य मनोता-काललक्षणार्थत्वेनापि सम्भवादनुवचनस्याग्न्यर्थत्वं। अग्न्यर्थ-त्वे च यागावृत्तावप्याहवनीयाख्यस्याग्नेरभेदेनानावृत्तिरेवेति। आचार्यस्तु, 'पशोर्वा आलब्धस्य मनोऽपक्रामति मनोतायै हविषोऽवदीयमानस्यानुब्रूहि' इत्याह। 'मन एवास्यावरुन्धे' इति श्रुतिः। तस्या अयमर्थः। पशोरालब्धस्य संज्ञपनकाले जीवो-ऽपक्रामति स एव मनःशब्देनोच्यते, 'यत्ते यमं वैवस्वतं मनो जगाम दूरकम्' इत्यादिषु जीवे मनःशब्ददर्शनात्। जीवेऽग्नि-शब्दस्य दृश्यते।

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधं'॥

इति भगवद्गीतासु दर्शनात्। अग्निजीवमनसामेकार्थत्वञ्च दृश्यते 'अयं होता प्रथमः पश्यतेमं' इति ऋचे। अतोऽवदीयमानहविषा मनोताया अनुब्रूहीत्युक्ते अग्निजीवाख्यस्य मनसा हविःसम्बन्धा-

र्थमनुभूयेत्युक्तं भवति। अतोऽग्निं प्रकाशयदनुवचनं हविषो जीवमेव प्रकाशयति इति हविरर्थमेवेति गम्यते। तेन यागात्पत्ती अवदानस्य पदार्थान्तरव्यवधानात् प्रतिहविर्मनोतानुवृत्तिं मन्यते। अत्र न काचिल्लक्षणाऽस्तीति तमेव पक्षं परिगृहीतवानाचार्यः॥

तेषां सलिङ्गाः प्रैषाः॥ ८॥

तेषां प्रदानानां समानलिङ्गाः प्रैषाः प्रैषसमाम्नाय एव पठिताः तदर्थत्वेनैव समानलिङ्गाः समानदेवता इत्यर्थः। तेनैतत् साधितं भवति यद्दैवत्यः पशुस्तद्दैवत्यः पुरोडाशो भवतीति। तेषामितिवचनं तेषामेव सप्रैषत्वं नाज्यभागयोरित्येवमर्थं। प्रैषसमाम्नायस्य क्रत्वर्थत्वात् तत्र चाज्यभागयोः सम्प्रैषस्यानाम्नानात् अप्रैषावेवेति मन्यमानस्तेषामित्युक्तवानाचार्यः। यद्यध्वर्यवः सम्प्रैषौ कुर्युस्तदा 'होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज, होता यक्षत् सोममाज्यस्य जुषतां हविर्होतर्यज, इत्येतौ प्रैषौ भवतस्तदाज्यभागयोः॥

तेष्वग्नीषोमयोः स्थाने या या पशुदेवता॥ ९॥

तेषु प्रदानप्रैषेषु पश्वन्तरेष्वतिदेशात् प्राप्तेषु यास्तास्तु विकृतिषु देवतास्तासामेकैकामेवाग्नीषोमस्थाने निर्दिश्य यष्टव्यं, न सर्वदेवताः सकृदेव निर्देष्टव्याः। यावत्यस्तत्र देवतास्तावत्-

स्थानः प्रैषोऽभ्युषितव्य इत्यर्थः। एतदर्थमेव या या पशुदेवतेति-वीप्सावचनमुक्तं। अयमर्थोऽस्मिन् सूत्रे सम्यग्व्युत्पादितोऽग्नीषोमयोः स्थान इति ब्रुवताऽऽचार्येणाग्नीषोमीयः पशूनां प्रकृतिः पाशुके विध्यन्ते ग्टह्यमाण इति॥

छागस्थान उस्रो गौर्मेषोऽविर्वा द्वयोऽश्वोऽन्वादेशे व्यक्त-चोदनां॥१०॥

गोमेषद्वयानामेकैकस्या जातेर्द्वौ द्वौ शब्दौ नियम्येते वैकल्पिकौ। एतदुक्तं भवति। गोजातिश्चेत् पशुश्छागस्थाने, गो-शब्दमुस्रशब्दं वा प्रयुञ्जीत। एवमितरयोरपि जात्योः। प्रायिकोऽयं विधिः। कुतः, अन्वादेशे व्यक्तचोदनां। औपदेशिकस्य मन्त्रस्य प्रकृतौ प्रयोग आदेशः, तस्यैवातिदेशप्राप्तस्य विकृतौ प्रयोगोऽन्वादेशः। व्यक्तचोदना प्रकृतिप्राप्तस्य मन्त्रस्य विकृतौ संकृत्य पुनः पाठः। यथा 'प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्य' इत्येवमादि। तत्र तमनुसृत्यैव मन्त्राः प्रयोक्तव्याः। एतदुक्तं भवति, आतिदेशिकमन्त्रप्रयोगे यस्माद्विकृत्युपदेशमनुसृत्यैव मन्त्रः प्रयोक्तुं युज्यते तस्माद्विकृत्युपदेशे सति स एव भवति। तदभावे गोशब्दः उस्रशब्दो वेत्येवं द्रष्टव्य॥

एवं वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु॥११॥

यथा प्रदानप्रैषेषु देवताशब्दस्य स्थाने पशुशब्दस्य च स्थाने एकैकं देवताशब्दं पशुशब्दञ्च कृत्वा प्रयोग उक्तः।

एवं वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु प्रयोगः कर्त्तव्यः। तत्रायं विशेषः। नानादेवतेष्वपि पशुषु 'यत्राग्नेः' इत्यादेः 'प्रिया धामानि' इत्यन्तस्य 'अयाड्ग्नि' आदेस्तदन्तस्य 'बध्नन्नमुष्मा अमुं' इत्यस्य च त्रिषु प्रैषेषु अभ्यासो न सर्वस्य प्रैषस्येति॥

प्राजापत्ये त्वग्निचित्या संयुक्ते वायव्यं पशुपुरोडाशं। एके वायव्ये प्राजापत्यं। तेन पशुदेवता वर्धत इत्याचार्याः पुरोडाशतत्प्रधानत्वात्॥ १२॥

अयमभिप्रायः। प्रकृतावग्नीषोमीये पशौ समानदेवतत्वात् पुरोडाशयागस्य पशुदेवताप्रत्यभिज्ञानात् तत्संस्कारद्वारेण तदर्थता युक्ता। अत्र पुनर्भिन्नदेवतत्वात् तदर्थता न युक्ता। ततश्च सूक्तवाकप्रैषेषु पुरोडाशेन पशुदेवतावर्धनमयुक्तमित्याशङ्का नैव कर्त्तव्या। प्राजापत्येऽपि पशौ प्राकृतकार्यार्थतयैव पुरोडाशयागोऽपि प्राप्त एव। एवं पशुयागार्थतया प्राप्तस्य देवतान्तरं विधीयमानं प्राकृतदेवताकार्यकरत्वेनैव विधीयते। तत्र यच्छब्दभेदादप्रत्यभिज्ञानमाशङ्क्यते, तदपि नैवाशङ्कनीयं। तदर्थ एवायं शब्दः प्रयुक्त इत्यवगम्यते। ऐन्द्रागार्हपत्यमितिवच्छक्ष्यतीति। तेन पशुदेवता वर्धत इत्याचार्याः पुरोडाशतत्प्रधानत्वादिति वदतः सूत्रकारस्यैत्ययमेवार्थः श्रुतौ चोद्योत्तरभङ्ग्योपपादितः। तदाहुः 'यदन्यदेवत्य उत पशुर्भवति' इत्येवमादिना 'पवमानः प्रजापतिः' इत्येवमन्तेन॥

पुरोडाशनिगमेषु पुरोडाशवद्धवींष्याज्यवर्जं येषां तेन समवत्तहोमः ॥ १३ ॥

यस्मिन्ननेकपशुके पशुतन्त्रे पुरोडाशस्य स्थाने पुरोडाशचर्वाज्यधानाः करम्भपरिवापामिक्षादयो विहिताः, तत्र स्विष्टकृति तेषां सर्वेषां समवदाय प्रचारो विहितश्च। तत्र पशुपुरोडाशस्विष्टकृत्प्रैषे सूक्तवाकप्रैषे च पशुपुरोडाशो न देवतावर्धने कर्त्तव्ये सति प्रकृतौ पुरोडाशस्य पुरोडाशत्वात्तेनैव शब्देन वर्धनं कृतं। इह तु नानारूपत्वाद्धविषां स्वेन स्वेनैव शब्देन निगमने प्राप्ते पुरोडाशशब्देनैव चर्वादीनां निगमनं विधीयते। सवनीयानां स्विष्टकृत्प्रैषे सौमिके सूक्तवाकप्रैषे चास्य क्वचिन्न्यायस्य दृष्टत्वादेवमुक्तं। आज्यभागस्य तु तत्राभावाददृष्टः प्रयोग इति तस्य स्वशब्देनैव निगमनं भवति। आज्यस्य तु पुरोडाशत्वसम्भावनैव सन्दिग्धा। यद्यसम्भवस्तदाज्यवर्जमित्ययमभावानुवादः। यदि सम्भवति तदा स्वशब्देनैव निगमनमाज्यपुरोडाशानामाज्यपुरोडाशैरिति॥

मेधो रभीयानिति पश्वभिधाने ॥ १४ ॥

मेधो रभीयानित्येते पदे पश्वभिधाने, पशोरभिधायके इत्यर्थः। मेधपदस्य विधानं प्रथमप्रयुक्तत्वादग्ने एनमित्येवमादीनां प्रदर्शनार्थं। रभीयानित्यस्योपमार्थत्वशङ्कानिवृ-

र्थ्यर्थं। पद्यभिधाने आदद्घसदिति पाठः कर्त्तव्यः। प्रत्य-क्षत्वादस्य पदस्य॥

आदद्घसत् करञ्जुषतामघदग्रभीद्वीवृधतेति देवतानां ॥१५॥ ॥४॥

एतेषां पाठो द्विवचनान्तानामाम्नायसिद्धत्वादेकवचनबहु-वचनयोरिष्टलकारपरिग्रहार्थं। आदत्। आदन्। घसत्। घसन्। करत्। करन्। जुषतां। जुषन्तां। अघत्। अघन्। अग्रभीत्। अग्रभीषुः। अवीवृधत। अवीवृधन्त॥

इति तृतीये चतुर्थी कण्डिका॥ ॥

---

कृतायां वपायां सब्रह्मकाश्चात्वाले मार्जयन्ते निधाय दण्डं मैत्रावरुणः॥१॥

अस्मिन्नवसरे चात्वाले मार्जयन्ते। बहुवचनेनैव सर्वेषां मार्जने सिद्धे सब्रह्मकवचनमस्मदीयाः सर्वे सहमार्जयेयुः न पृथक् पृथगित्येवमर्थं। दण्डनिधानवचनं लोकानुवचनार्थं-मात्मस्य दण्डस्यात्रैव निधानं न प्रागित्येवमर्थं॥

इदमापः प्रवहत सुमित्या न आप ओषधयः सन्तु दुर्मित्यास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति॥२॥

'इदमापः प्रवहत' इत्यनयर्चा यजुषा च उभाभ्यां मार्जनं कर्त्तव्यं॥

एतावन्मार्जनं पशौ॥३॥

एतावदेव मार्जनं, नातिदेशिकं कर्त्तव्यमित्यर्थः। पश्वधिकारे पुनः पशाविति वचनं पश्वङ्गभूतायामिष्टौ आतिदेशिकस्य मार्जनस्य प्रवृत्त्यर्थं॥

तीर्थेन *निष्क्रम्यासीता-ऽऽपुरोडाशश्रपणात्॥४॥

अस्मिन्नवसरे नियमेनैतत् कर्त्तव्यं॥

तेन चरित्वा स्विष्टकृता चरेयुः॥५॥

चरित्वेति प्रकृते चरेयुरितिवचनं प्रधानस्विष्टकृतोर्भेदप्रतिपत्त्यर्थं। अतोऽन्वायात्यानां प्रवेशे सति तयोरेव मध्ये प्रवेशः सिद्धो भवति॥

यदि त्वन्वायात्यानि तैरग्रे चरेयुः॥६॥

यद्यस्मिन्नवसरे आगन्तवो यागा उत्पद्यन्ते तैः पशुपुरोडाशस्विष्टकृतोऽग्रे चरेयुः। तेषामन्वायात्यानीतिसंज्ञा। एत-

* निष्क्रम्यासीतामापुरो॰ इति पु॰ द॰।

दुक्तं भवति। यदि पुरोडाशस्विष्टकृतोऽये यैः कैश्चन यागैश्चरेयुः तान्यन्वायात्यानीति तेषामियं संज्ञा विधीयते। चरेयुरिति पुनर्वचनं चरणमेव एषां कर्त्तव्यं, नान्यन्निगमनादीनीतिसूचनार्थं। तदेवोत्तरेण सूत्रेण विस्पष्टयति ॥

न तु तेषां निगमेष्वनुवृत्तिः ॥ ७ ॥

अन्वायात्यदेवतानां हविषां च आवाहनादिषु निगमेष्वनुवृत्तिर्नास्तीत्यर्थः ॥

नान्येषामूर्द्धमावाहनादुत्पन्नानां ॥ ८ ॥

अन्वायात्येभ्योऽन्येषामपि आवाहनकालादूर्द्धं हविरादि यद्यदुत्पद्यते येषान्तेषामपि निगमेष्वनुवृत्तिर्नास्तीत्यर्थः ॥

इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे इति इडामग्ने पुरुदंसं सनिं गोहोता यक्षदग्निं पुरोडाशस्य स्वदस्व हव्यासमिषो दिदीहीति पुरोडाशस्विष्टकृतः ॥ ९ ॥

पुरोडाशानामिति हविर्भेदे प्रैष ऊह्यः ॥

ऊर्ध्वमिडायाः ॥ १० ॥ ॥ ५ ॥

इति तृतीये पञ्चमी कण्डिका ॥ * ॥

मनोतायै सम्प्रेषितस्त्वं ह्यग्ने प्रथम इत्यन्वाह ॥ १ ॥

अत्रेडामुपहूय मनोतामन्वाह। प्रेषितवचनमुक्तप्रयोजनं ॥

हविषा चरन्ति ॥ २ ॥

तेषां स्वलिङ्गाः प्रेषाः। प्रेष उक्तः ॥

तत्र प्रैषेकतर एवाग्नीषोमावेवमित्यैतरेयिणः ॥ ३ ॥

तत्र *हविःप्रैषेकतर एवाग्नीषोमावित्याम्नातं। तस्यैव-शब्दस्य स्थाने एवमित्यैतरेयिण आचार्याः वक्तव्यमित्याहुः, किमपि विशेषेण नेत्युच्यते ॥

अन्यत्र द्विदेवतान्मैत्रावरुणदेवते च ॥ ४ ॥

अन्यत्र द्विदेवतात् पशोरेकदेवते बहुदेवते च पशावित्यर्थः। द्विदेवते च मैत्रावरुणदेवते एवमिति वदन्ति। मित्रावरुणौ देवता यस्य पशोः स मैत्रावरुणः पशुः। अत्र मैत्रावरुण-शब्दस्य मुख्यया वृत्त्या देवताप्रतिपादनासम्भवाल्लक्षणया प्रति-पादयति। अतस्तेन शब्देन व्यञ्जनात् द्विदेवत्यः पशुर्लक्ष्यते, तस्मिंश्चेत्यर्थः। एतल्लक्षणग्रहणं शास्त्रान्तरदर्शनाल्लभ्यत इत्यु-क्तं भाष्यकारेण। अत्र कारणमाह ॥

---

* हविः प्रैषेकतर इति मु॰ पु॰।

तथा दृष्टत्वात् ॥ ५ ॥

प्रैषेष्वेकदेवतेषु बहुदेवतेषु च व्यञ्जनादि द्विदैवते च तथा-दर्शनात् ते मन्यन्त इत्यर्थः ॥

प्रकृत्या गाणगारिः ॥ ६ ॥

तत्र हेतुमाह ॥

उत्पन्नानां सुत आम्नायेऽनर्थभेदे निरर्थो विकारः ॥ ७ ॥

सम्प्रदायविच्छेदेनाभ्यस्यमाने आम्नाये दृश्यमानानां पदा-नामर्थवशेन अनूह्यानां सतां विकार इत्येतत् निःप्रयोजन-मित्यर्थः। उपन्यासप्रयोजनं एवंविधानां सामान्यतोदृष्ट्या भ्रान्तिः क्वचिदपि न कर्त्तव्येति ॥

याज्याया अन्तरार्धर्चे वसाहोम आरभेत् ॥ ८ ॥

वसाहोमार्थं तत्रावसानोत्तरमाददीत, अवसानस्य तद-र्थत्वात् तस्मिन् हुते समापयेत् ॥

वनस्पतिना चरन्ति। प्रैषमभितो याज्यानुवाक्ये ॥ ९ ॥

प्रैषसमाम्नाये यो वनस्पतिप्रैषस्तमभितो ये ऋचावाम्ना-ते ते वनस्पतेर्याज्यानुवाक्ये भवतः। प्रैषसमाम्नाये पठितापि याज्येति समाख्यातत्वाद्धोत्रैव वक्तव्या ॥

यत्राग्नेराज्यस्य हविष इत्यत्राज्यभागौ ॥ १० ॥

यत्राज्यभागौ क्रियेते तदा तस्मिन् प्रैषे प्रधानदेवतावदेतौ निगमयेदित्यर्थः। एतं। एतौ। एतान्। एतां। एते। एताः। एभीयांसं। एभीयांसौ एभीयसः। एभीयसीं। एभीयस्यौ। एभीयसीः ॥

अथाऽग्निरग्नेराज्यस्य हविष इति स्विष्टकृति। इडामुपह्वयानुयाजैश्चरन्ति ॥ ११ ॥

इडामुपह्वयेतिवचनमानन्तर्यार्थं। तेन प्रकृतिप्राप्तं दक्षिणाप्रतिग्रहाद्यत्र नाप्नोति गम्यते ॥

तेषां प्रैषास्तृतीयं प्रैषसूक्तमेकादशैव ॥ १२ ॥

इह एकादशानुयाजाः न त्रयः ॥

प्रागुत्तमा द्वावावपेत। देवो वनस्पतिर्वसुवने वसुधेयस्य वेतु। देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेत्विति ॥ १३ ॥

एकादशानुयाजा इत्युक्त्वा द्वयोरेव याज्ययोः पाठात् प्रकृतीभ्योऽन्याः वैश्वदेव्या आहर्त्तव्याः ॥

अनवानं प्रेष्यति। अनवानं यजति ॥ १४ ॥

पुनरनवानग्रहणमुत्तरसूत्रे प्रैषाधिकारनिवृत्त्यर्थं ॥

उक्तमुत्तमे ॥ १५ ॥

यदुक्तं 'अनवानं यजति प्रकृत्या वा' इति तद्याज्याया एव न प्रैषस्येत्येवमर्थं। पूर्वसूत्रे पुनरनवानग्रहणमिति व्याख्यातं ॥

सूक्तवाकप्रैषे पूर्वस्मिन्निगमे गृह्णन्नित्यत्राज्यभागौ ॥ १६ ॥

निगमद्वित्वात् पूर्वस्मिन्निति विशेषणं। अत्रेतिवचनं प्रधानदेवतावदाज्यभागयोरपि निगमनार्थं। गृह्णन्निति बध्नच्छब्दस्य प्रत्याम्नायः ॥

बध्नन्नमुष्मा अमुम्बध्नन्नमुष्मा अमुमिति पशूंश्च देवताश्च ॥ ॥ १७ ॥

नानादेवतानानाजातीयपशुके पशुतन्त्रे पदत्रयस्याभ्यासलाभार्थं पठितस्यापि पुनरभ्यासपाठः ॥

देवताश्चैवैकपशुकाः ॥ १८ ॥

एकपशुका एकजातीयपशुका इत्यर्थः। एकव्यक्तिपशु-

त्वे देवताइतिबहुवचनं नोपपद्यते। देवता देवतेति तत्रैकशेषः, नत्वेकः पशुर्बह्वीभिर्देवताभिः सम्बध्यते। न तु वैश्वदेवाग्निमारुतइत्यादिपशुरस्ति। सत्यं। अन्त्याश्रयभेदः न तु देवताभेदः। एवं तत्र विग्रहः, विश्वेदेवा देवता यस्य स वैश्वदेव इति, अतो जात्यभिप्राय एवैकशब्दः। यत्रैकजातीयपशुका अनेका देवतास्तत्र देवताशब्दमेवाभ्यसेत्, न बभ्रुन्पशुशब्दौ। पशुशब्दस्य यावद्द्रव्यं विभक्त्यूहः कर्त्तव्यः। बभ्रुशब्दस्य इन्द्राग्निभ्यां छागाविति॥

पशूंश्चैवैकदेवतान्॥ १९ ॥

अत्र पशुशब्दानेवावर्त्तयेत्, नान्यौ। यथा 'बभ्रुन् प्रजापतयेऽश्वमजस्तूपरश्चोऽम्लगम्' इत्युभयोरेकजातित्वे 'बभ्रुन् प्रजापतये छागौ' इति न किञ्चिदभ्यसितव्यं॥

उत्तर आज्येनेत्याज्यभागौ। अमुष्मा अमुनेति पूर्वेणोक्तं॥ २०॥

पुरोडाशं पुरोडाशौ पुरोडाशान्। तं, तौ, तान्। तां, ते, ताः। पुरोडाशेन पुरोडाशाभ्यां पुरोडाशैः॥

समाप्य प्रैषमग्नौ दण्डमनुप्रहरेदनवभृथे॥ २१ ॥

अवभृथरहिते कर्मणि सूक्तवाकप्रैषं समाप्यानन्तरमेवाहवनीये दण्डमनुप्रहरेत्॥

अवभृथेऽन्यत्र ॥ २२ ॥

अन्यत्रेति सावभृथे कर्मणि इत्यर्थः। तत्रावभृथेऽनुप्रहरे-दित्यर्थः ॥

कृताकृतं वेदस्तरणं। तीर्थेन निष्क्रम्याग्निपशुकेतनान्यव्य-वयन्तो हृदयशूलमुपेयमानमनुमन्त्रयेरन् शुगसि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमभिशोचेति ॥ २३ ॥

संस्राजपात् प्राक् तीर्थेन निष्क्रम्याग्निपशुकेतनान्यव्यवयन्तो हृदयशूलमुदस्यमानं 'शुगसि' इत्यनेन मन्त्रेणानुमन्त्रयेरन् सर्वे कर्त्तारः ॥

तस्योपरिष्टादप उपस्पृशन्ति। दीपे राज्ञो वरुणस्य गृहो मितो हिरण्मयः। स नो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु। धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च। यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च। मैवापो मोषधीर्हिंसीरतो विश्वव्यचा अभूस्त्वेतो वरुण नो मुञ्च। सुमित्र्या न आप ओषधयः सन्त्विति च ॥ २४ ॥

चशब्दः सुमित्र्या न इत्यस्य कृत्स्नस्य ग्रहणार्थः। तस्मो-द्दस्यमानस्योपरिष्टादप उपस्पृशन्ति 'दीपे राज्ञः' इत्यादिभि-र्मन्त्रैः ॥

अस्पृष्ट्वाऽनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तः समिधः कुर्वते तिस्रस्तिस्र एकैकः ॥ २५ ॥

अस्पृष्ट्वा हृदयशूलं, अनवेक्षमाणास्तमेव, असंस्पृशन्तः परस्परं, प्रत्यायन्तः प्रत्याव्रजन्तः सर्वे तिस्रस्तिस्रः समिधो गृह्णीयुः। एकैकइति क्रमेण ग्रहणार्थं। तेन सर्वे न युगपद्गृह्णीयुः ॥

अग्नेः समिदसि तेजोऽसि तेजो मे देहीति प्रथमां। एधोऽस्येधिषीमहीति द्वितीयां। समिदसि समेधिषीमहीति तृतीयां ॥ २६ ॥

प्रथमद्वितीयतृतीयग्रहणानि अभ्याधाने प्रथमगृहीतानां प्रथममभ्यादध्यादेवं द्वितीयां तृतीयामित्येवमर्थानि ॥

एत्योपतिष्ठन्त आपो अद्यान्वचारिषमिति। ततः समिधोऽभ्यादधति यथागृहीतमग्नेः समिदसि तेजोऽसि तेजो मेऽदाः स्वाहा। सोमस्य समिदसि दुरिष्टेर्मा पाहि स्वाहा। पितॄणां समिदसि मृत्योर्मा पाहि स्वाहेति ॥ २७ ॥

'ततः संस्थाजपः' इति सर्वेषामुपस्थाने परिसमाप्ते पश्चादभ्याधानारम्भार्थं। यथागृहीतमितिग्रहणं। यो यः पूर्वं गृह्णीयात् स स पूर्वमभ्यादध्यात्, न सर्वे युगपदभ्यादध्युरिति ॥

ततः संस्थाजप इति पशुतन्त्रं ॥ २८ ॥ ॥ ६ ॥

पशुमात्रस्यैतत् तन्त्रं न पशुविशेषस्येत्यर्थः ॥

इति तृतीये षष्ठी कण्डिका ॥ • ॥

प्रदानानामुक्ताः प्रैषाः ॥ १ ॥

सर्वत्र प्रदानानामुक्ता एव प्रैषा भवन्ति नान्या इति, अतिदेशप्राप्तानां पुनर्वचनं क्वचित् पशुविशेषे तदर्थतया प्रैषान्तरं याज्यानुवाक्यान्तरं चास्ति तत्रापि प्रदानप्रैषा एते एव प्रणेतव्या इत्येवमर्थं ॥

तेषां याज्यानुवाक्याः ॥ २ ॥

याज्यानुवाक्या इत्येतावतैव प्रदानानामेवेति सिद्धे तेषामितिवचनं 'इति पशवः' इत्यस्मिन् सूत्रे पशून् विधास्यति येषां पशूनां यानि प्रदानानि तेषां पशूनां याज्यानुवाक्या वक्ष्यन्त इत्येवमर्थं ॥

सर्वेषामग्रेऽग्रेऽनुवाक्यास्ततो याज्याः ॥ ३ ॥

ततो याज्या इत्यनेन विनापि शिष्टा याज्या एव भवन्ति । वचनप्रयोजनं सर्वत्र पूर्वं प्रोक्ता अनुवाक्याः उत्तरा याज्या इतिज्ञापनार्थं । तत्र याज्यायाः पूर्वनिपातोऽल्पाच्तरत्वादित्यवगन्तव्यं ॥

दैवतेन पशुनानात्वं ॥ ४ ॥

याज्यानुवाक्यालिङ्गितदैवतेन वक्ष्यमाणानां पशूनां नानात्वमित्यवगन्तव्यं ॥

अग्ने नय सुपथा राये अस्मानिति द्वे पाहि नो अग्ने पायुभिरजस्रैः प्र वः शुक्राय भानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिः प्र कारवो मनना वक्ष्यमानाः ॥ ५ ॥

अग्नेरेताः । अथ सरस्वत्याः ॥

एका चेतत् सरस्वती नदीनामुस्या नः सरस्वती जुषाणा सरस्वत्यभि नो नेषिवस्यः प्र क्षोदसा धायसा सस्र एषा पावीरवी कन्या चित्रायुर्यस्ते स्तनः शशयो यो मयोभूः ॥ ६ ॥

अथ सौम्याः ॥

त्वं सोम प्रचिकितो मनीषेति द्वे त्वन्नः सोम विश्वतो वयो-
धा या ते धामानि दिवि या पृथिव्यामषाल्हं युत्सु पृतनासु
पप्रिं या ते धामानि हविषा यजन्ति ॥ ७॥

अथ पूष्णः ॥

यास्ते पूषन्नावो अन्तःसमुद्र इति द्वे पूषेमा आशा अनुवेद
सर्वाः शुक्रन्ते अन्यद्यजतन्ते अन्यत् प्र पथे पथामजनिष्ट पूषा
पथस्पथः परि पतिं वचस्या ॥ ८ ॥

अथ बृहस्पतेः ॥

बृहस्पते या परमा परावदिति द्वे बृहस्पते अतियदर्यो
अर्हात् तम्हविया उप वाचः सचन्ते संयंस्तुभोऽवनयो नय-
न्त्येवापित्रे विश्वदेवाय वृष्णे ॥ ९ ॥

अथ विश्वेषां देवानां ॥

विश्वे अद्य मरुतो विश्वऊत्या नो देवानामुपवेतु शंस
आ नो विश्व आस्क्रागमन्तु देवा विश्वेदेवाः शृणुतेमं हवं
मे ये के च ज्यामहिनो अहिमाया अग्ने याहि दूत्यं मारि-
षण्यः ॥ १० ॥

अथेन्द्रस्य ॥

इन्द्रं नरो नेमधिता हवन्त इति तिस्र उरुं नो लोकम-
नुनेषि विद्वान् प्रससाहिषे पुरुहूत शत्रून् स्वस्तये वाजिभिश्च
प्रणेतः ॥ ११ ॥

अथ मरुतां ॥

प्रत्यञ्ची वो हव्या मरुतः प्रतीचीनां *नूस्थिरं मरुतो वीरवन्तमा
वो होता जोहवीति †सत्तः प्र चित्रमर्कं गृणते तुरायाराद्-
वेद्‌चरमा अहेव या वः शर्म शशमानाय सन्ति ॥ १२ ॥

अथेन्द्राग्न्योः ॥

आ वृत्रहणा वृत्रहभिः शुष्मैराभरतं शिक्षतं वज्रबाहू उभा
वामिन्द्राग्नी आहुवध्यै प्रचिन्न् स्तोमन्नवजातमद्य गीर्भिर्विप्र
प्रमतिमिच्छमानः प्रचर्षणिभ्यः पृतना हवेषु ॥ १३ ॥

अथ सवितुः ॥

आ देवो यातु सविता सुरत्नः सघानो देवः सविता सहा-
वेति द्वे उदीरय कवितमं कवीनां भगन्धियं वाजयन्तः पुरन्धि-
मिति द्वे ॥ १४ ॥

अथ वरुणस्य ॥

---

*नुस्थिरमिति सो० मू०। †सन्त इति सो० मू०।

अव सिन्धुं वरुणो द्यौरिव स्थादयं सु तुभ्यं वरुण स्वधाव एवा वन्दस्व वरुणं बृहन्तं तत्त्वायामि ब्रह्मणा वन्दमान इति द्वे अस्तभ्नात् द्यामसुरो विश्ववेदा इत्यैकादशिनाः ॥ ॥१५॥ ॥७॥

'अग्ने नय' इत्यादयः 'अस्तभ्नात् द्यामसुरः' इत्येवमन्ता अग्न्यादिदैवत्या एकादश ऋच आम्नाताः। ते एकादश पशवो विहिता भवन्ति। तेषां समाहार एकादशिनीत्युच्यते। तस्यां भवाः ऐकादशिना इत्युक्ताः ॥

इति तृतीये सप्तमी कण्डिका ॥ * ॥

---

अग्नीषोमाविमं सु मे युवमेतानि दिवि रोचनानीति तृचाव्, आवां मित्रावरुणा हव्यजुष्टिमायातं मित्रावरुणा सुशस्त्या आ नो मित्रावरुणा हव्यजुष्टिं *युव वस्त्राणि पीवसा वसाथे प्र बाहवा सिसृतं जीवसे नो यद्वंहिष्ठं नातिविधे सुदानू, हिरण्यगर्भः समवर्त्तताग्र इति षट् प्राजापत्याश्चित्रं देवानामुद्गादनीकमिति पञ्च शन्नो भव चक्षसा शन्नो अह्ना, वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिरध्वरं पीवो अन्नाꣳ रयिवृधः सुमेधा रायेऽनु यं जज्ञतू रोदसी मे प्र वायुमच्छा बृहती मनीषा, तव वायवृतस्य

---

*युर्वमिति सा० मू०।

मे त्वां हि सुप्तरस्तममिति द्वे कुविदङ्ग नमसा ये वृधास ईशानाय प्र स्तुतिं यस्त आनट् प्र वो वायुं रथयुजं कृणुध्वं, उत त्वामदिते महन्नेचो न उरुव्रजेऽदितिर्द्योरजनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसं महीमूषु मातरं सुव्रतानामदितिर्द्यौर- दितिरन्तरिक्षं, न ते विष्णो जायमानो न जातस्त्वं विष्णो सुमतिं विश्वजन्यां विचक्रमे पृथिवीमेष एतान्त्रिर्देवः पृथिवीमेष एतां परोमात्रया तन्वा वृधानेरावती धेनुमती हि भूतं, विश्वकर्मन् हविषा वावृधान इति द्वे विश्वकर्मा विमना आद्विहायाः किं- स्विदासीदधिष्ठानं यो नः पिता जनिता यो विधाता या ते धामानि परमाणि यावं, आ य इमे द्यावापृथिवी जनित्री तत्न- स्तुरीयमथ* पोषयित्नु देवस्त्वष्टा सविता विश्वरूपो देव त्वष्टर्यद्ध चारुत्वमानट् पिशङ्गरूपः सुभरो वयोधाः प्रथमभाजं यशसं व- योधां, सोमापूषणा जनना रयीणामिति सूक्तं, आदित्यानाम- वसा नूतनेनेमा गिर आदित्येभ्यो घृतस्नूस्त आदित्यास उर- वो गभीरा इमं स्तोमं सक्रतवो मे अद्य तिस्रो भूमीर्धारय- न्त्रीरुत द्यून दक्षिणा विचिकितेन सव्या, मही द्यावापृथिवी इह ज्येष्ठे ऋतं दिवे तदवोचं पृथिव्या इति द्वे प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्वे प्र द्यावायज्ञैः पृथिवी ऋतावृधा, मृडानो रुद्रो तनोमयस्कृधीति द्वे आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीचे इति तिस्रः, आ पश्चातान्नासत्या पुरस्तादा-

---

*पोतयित्नु इति सो॰ मू॰।

गोमता नासत्या रथेनेति चमसो हिरण्यत्वङ्मधुवर्णो घृतस्नुः अभि क्रत्वेन्द्र भूरध ज्मन्त्वं महाँ इन्द्र तुभ्यं *दृषाः समुद्राणं दाधृषिं तुम्रमिन्द्रं सद्दानु पुरुहूत क्षियन्तं सुत इन्द्रो मघवा यद्ध वृत्रेवावस इन्द्रः सत्यः सम्राड् यद्वाग्वदन्त्यविचेतनानि पतङ्गो वाचं मनसा बिभर्ति चत्वारि वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन्निति द्वे देवीं वाचमजनयन्त देवाः, अनीयन्तोऽन्वग्रव इति तिस्रो दिव्यं सुपर्णं वायसं बृहन्तं स वावृधेनयाँ योषणास्तु यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः। यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे हुवेम ॥ १ ॥

अत्राष्टादश ऋच आम्नाताः। तैरष्टादश पशवो विहिता भवन्ति। तत्रान्यलिङ्गत्वात् प्राजापत्या इत्युक्तं ॥

इति पशवः ॥ २ ॥

इति एते याज्यानुवाक्यालिङ्गकल्पितदेवत्याः पशवोऽस्मिन् सूत्रे विधीयन्ते। एते एकोनत्रिंशत् पशवः। 'निर्मित ऐन्द्राग्नः' इत्यस्मिंश्चैको विधास्यते। तेन च सह त्रिंशत् पशवोऽस्मिन्नध्याये विहिताः। तत्रैकादशिनानां गणात्मकत्वाद्गण एवाम्नातो नैकैकः पशुस्तेषां। एतदुक्तं भवति। एकादशिनी गणरूपेणाम्नाता। अग्नीषोमीयादयस्तु एकैकश आम्नाताः। निरूढश्चाम्नातः। अन्ये च केचन अस्मिन् शास्त्रे पशव आम्नाता-

* दृषा इति सटी० पु० द०।

स्तेषु सर्वेषु पौर्णमासमेव तन्त्रं। असमाम्नातेष्वर्थात् कल्पनीयं तन्त्रं ॥

सौम्याश्च निर्मिताश्च ॥ ३ ॥

सौम्याः सोमाङ्गभूता इत्यर्थः। निर्मिताः स्वतन्त्रा इत्यर्थः। अस्मिन् खण्डद्वये पश्व आम्नातास्तेषां केचित् सोमाङ्गभूताः केचित् स्वतन्त्रा इत्यर्थः ॥

निर्मित ऐन्द्राग्नः ॥ ४ ॥

ऐन्द्राग्नो निरूढो नाम पशुः कर्त्तव्यः। अयमपि पशूनां प्रकृतिः। तेनाङ्गभूतानामग्नीषोमीयः प्रकृतिः। स्वतन्त्राणां निरूढः प्रकृतिरिति तेष्वेव पश्विष्टि' नाङ्गभूतेष्वित्येवमर्थं निरूढप्रकृतित्वाम्नानं ॥

षाण्मास्यः सांवत्सरो वा ॥ ५ ॥

सोऽयं निरूढः पशुः षट्सु षट्सु मासेषु कर्त्तव्यः, संवत्सरे संवत्सरे वा। अतोऽयं वीप्सावचनान्नित्योऽयं पशुरिति गम्यते ॥

प्राजापत्य उपांशु सावित्रसौर्यवैष्णववैश्वकर्मणाश्चैतेषां तन्त्रोपांशुयाजविकारान् वक्ष्यामः ॥ ६ ॥

ऐष्टिकेषूक्तो विकारः। पाशुकेषु तस्येष्विदानीं विकार उच्यते।

प्रैषादिरागुरस्थाने ॥ ७ ॥

आगुरो यत् स्वरस्थानमुच्चैष्ट्वं नाम तत् प्रैषादेरपि भवति। उच्चैरिति वक्तव्ये आगुरस्थानइतिवचनं आगुःपरिमाणो द्विपद एव प्रैषादिशब्दवाच्य इतिज्ञापनार्थं ॥

आदद्वसत्करदिति चैतानि यथास्थानमुपांशु ॥ ८ ॥
॥ ८ ॥

एतानीतिवचनमाददादीनां सप्तानां ग्रहणार्थं। यथास्थानवचनं सर्वप्रैषपरिग्रहार्थं। चशब्दो विकारसमुच्चयार्थः। कस्यचिदुच्चैष्ट्वविधानात् कस्यचिदुपांशुत्वविधानादन्यस्य तन्त्रस्वरत्वं भवति। तेन प्रधानोपांशुषु आददादेरन्यदुच्चैर्भवति। तन्त्रोपांशुषु प्रैषादेरन्यदुपांशु भवतीति सिद्धं ॥

इति तृतीयेऽष्टमी कण्डिका ॥ ० ॥

## सौत्रामण्यां ॥ १ ॥

सौत्रामणीति कर्मनाम, तस्यां विधिर्विंद्यत इति सम्बन्धः ॥

आश्विनसारस्वतैन्द्राः पशवः। बार्हस्पत्यो वा चतुर्थः। ऐन्द्रसावित्रवारुणाः पशुपुरोडाशाः ॥ २ ॥

आश्विनसारस्वतैन्द्राणां एते ऐन्द्रादयः पशुपुरोडाशाः यथासङ्ख्येन भवन्ति। बार्हस्पत्यस्य तु स्वदैवत एव, अन्यस्याविधानात् ॥

मार्जयित्वा युवं सुराममश्विनेति ग्रहाणां पुरोनुवाक्या। होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणं सोमानां सुराम्णाञ्जुषन्तां व्यन्तु पिवन्तु मदन्तु सोमान् सुराम्णो होत र्यजेति प्रैषः। पुत्रमिव पितरावश्विनोभेति याज्या ॥ ३ ॥

मार्जनं चात्वालमार्जनं, तत् कृत्वा ग्रहैः प्रचरेयुः। ते चाश्विनसारस्वतैन्द्राः, तेषामेषाऽनुवाक्या। प्रैषयाज्ये उक्ते। याज्यादीनां देवताभिव्रूलात्तैः सह प्रचारः ॥

अग्ने वीहीत्यनुवषट्कारः सुरासुतस्याग्ने वीहीति वा। नाना हि वां देवहितं सदस्कृतं मासं स्यृक्षाथां परमे व्योमनि। सुरा त्वमसि *शुष्मिणीति सुरामवेक्ष्याधो बाहू सोम एष इति सोमं ॥ ४ ॥

अवेक्षेत इति शेषः। नाना हि वामिति कुम्भीस्थां सुरामवेक्ष्य ततो बाहू अधोमुखौ कृत्वा ग्रहपात्रस्थां सुरामवेक्षेत 'सोम एषः' इत्यनेन मन्त्रेण। क्रयणचिरात्रवासनद्रवीकरणपावनश्रयणोर्ध्वपात्रसम्बन्धात् सुरैव सोमशब्देनोक्ता ॥

यदत्र रिप्तं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः। इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति भक्षजपः ॥ ५ ॥

भक्षयेदिति वक्तव्ये भक्षजपइतिवचनं पयोग्रहेष्वपि अस्य मन्त्रस्य प्रापणार्थ ॥

प्राणभक्षोऽत्र ॥ ६ ॥ ॥ ९ ॥

अत्रेतिवचनं सुराग्रहेष्वेव प्राणभक्षो भवति पयोग्रहेषु प्रत्यक्षभक्षएवेतिप्रदर्शनार्थं। अस्मिन कर्मणि केषाञ्चित् पशुपुरोडाशा न सन्ति ग्रहा एव पशुपुरोडाशकार्यं भवन्ति,

* शुष्मिणीतीत्यन्तेतिशब्दः सो॰ पु॰ नास्ति।

अस्मिन् कर्मणि केषाञ्चित् प्रैषा न सन्ति तत्रापि मैत्रावरुण एवानुवाक्यां ब्रूयात्। यावद्वचनमपोद्यत इति तत् प्रकृतिप्राप्तमेवावतिष्ठते। आदेशस्तु कर्त्तव्य एव। प्रैषे सति तत्रैवादेशस्य कृतत्वाद्याज्यायामादेशप्रतिषेधः कृतः। असति तस्मिन् याज्यायामादेशः कर्त्तव्य एव। कौकिल्यान्तु सौत्रामण्यां प्रयाजादीनां प्रैषादयः केचन तदर्थतयैवाम्नाताः। तत्रापि यावदाम्नातं तत एव ग्रहीतव्यं, इतरत् सर्वं प्रकृतिप्राप्तमेवेति सिद्धं॥

इति तृतीये नवमी कण्डिका॥ * ॥

---

## विध्यपराधे प्रायश्चित्तिः॥ १॥

प्रायश्चित्तिरित्यधिकारोऽयं, आऽध्यायपरिसमाप्तेः। विधिशब्देन विहितमुच्यते। अपराधोऽन्यथाभावः, अभावो वा। विहितस्याकरणे अन्यथाकरणे च प्रायश्चित्तिः कर्त्तव्या। प्रायो विनाशः, चित्तिः सन्धानं। विनष्टसन्धानं प्रायश्चित्तिरित्युक्तं भवति। विध्यपराधे प्रायश्चित्तिरितिवचनादपराधे सति तदर्थतया विहितमस्ति चेत् तदेव कर्त्तव्यं। तत्रा-

स्ति चेद्व्याहृतिहोमः कर्त्तव्यः। तस्मादेषैव यज्ञे प्रायश्चित्तिः *कर्त्तव्येति। विध्यपराधइतिवचनाद्विधिसम्पादने प्रायश्चित्तिर्नास्ति। यथा यदि वाग्निहोत्र उपवसन् इत्याद्यन्तरागमननिषेधावसरे यजमानस्यान्तरागमनं विहितं तस्मिन् गमन इत्यर्थः। कालस्य प्रायश्चित्तानां नैमित्तिकत्वान्निमित्तानन्तरं, कर्त्तव्यानीत्युत्सर्गः॥

## शिष्टाभावे प्रतिनिधिः॥ २॥

शिष्टं विहितमित्यर्थः। तस्याभावे प्रतिनिधिरुपादातव्यः। अभावइत्येतावतैव सिद्धे शिष्टग्रहणं यत्कार्यार्थतया यच्छिष्टं तस्य स्वरूपसत्तायामपि तत्कार्याशक्तौ प्रतिनिधिरुपादातव्यएवेत्येवमर्थं। अर्थद्रव्ययोर्विरोधे अर्थो बलीयानित्ययमपि न्यायोऽर्थादत्र व्युत्पादितो भवति। इदञ्चापरं कार्यसामर्थ्ये सति न गुणसम्पादनार्थं उपादातव्य इति व्यतिरेकाल्लभ्यते। अत्रापि न्यायान्तरं व्युत्पादितं भवति, द्रव्यगुणविरोधे द्रव्यं बलीय इति। प्रतिनिधीयत इति प्रतिनिधिः। एतदुक्तं भवति। यत्कार्यार्थतया यद्विहितं तस्य तत्कार्याशक्तौ तस्य यत् प्रतिरूपं तत् तत्कार्यकरणायोपादातव्यमिति। अनेन प्रकारेण सदृशप्रतिनिधिरुक्तो भवति। न्यायादेवायमर्थो लभ्यते, शिष्टाभावे प्रतिनिधिरिति। वचनस्येदं प्रयोजनं, प्रतिनिधिप्रयोगेऽपि विहितस्वरूपापचारादिध्यपराधशङ्कानिवृत्त्य-

*कर्त्तव्येति वचनादिति एकस्मिन् सटी॰ पु॰ पाठः।

र्थं। अतस्तत्र प्रायश्चित्तिर्न कर्त्तव्या, विधिशक्तिरेव तत्रैवंरूपा विपरिणमते, नात्र विध्यपराधोऽस्तीत्येवमर्थं सूत्रप्रणयनं ॥

अन्वाहिताग्नेः प्रयाणोपपत्तौ पृथगग्नीन्नयेयुः ॥ ३ ॥

अन्वाहिता अग्नयो यस्य सोऽयमन्वाहिताग्निः, इष्टिमध्य इत्यर्थः। तस्य प्रयाणोपपत्तौ अग्नीन् पृथङ्नयेयुः, प्रत्यक्षं च। पृथग्ग्रहणमसंसर्गार्थं। उपपत्तिवचनमनात्माधीनगमनसूचनार्थं। चौरव्याघ्रादिभयात् क्षणमप्यत्र वस्तुमशक्यमिति यदि गमनमापद्येत तदेष्टिमध्येऽप्यनेन प्रकारेण अग्नीन् गृहीत्वा गन्तव्यं, अन्यथा कर्ममध्ये न गन्तव्यमित्येवमर्थमुपपत्तिवचनं ॥

तुभ्यन्ता अङ्गिरस्तमेति वाऽऽज्याहुतिं हुत्वा समारोपयत् ॥ ४ ॥

एतामाहुतिं हुत्वा समारोप्य गन्तव्यमित्यर्थः। प्रत्यक्षनयने आहुतिहोमो नास्ति। समारोपणस्वरूपमाह ॥

अयं ते योनिर्ऋत्वियत्यरणी गार्हपत्ये प्रतितपेत् ॥ ५ ॥

पूर्वे एव द्वे अरणी गार्हपत्ये प्रतितपेत्, नाग्न्यन्तरे। यदि दक्षिणाग्निर्भिन्नयोनिस्तदा तस्यारण्यन्तरे तेनैव मन्त्रेण समारोपणं भवति ॥

पाणी वायाते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम च्छावसूनि कृण्वन्नस्मे नर्यापुरूणि। यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमान इति ॥ ६ ॥

द्वौ पाणी गार्हपत्ये सकृदेव प्रतितपेत्। द्वयोरपि समारोपणं यजमान एव कुर्यात्। पूर्वमन्त्रस्थं प्रत्यगाग्नोस्त्वात्, उत्तरस्य चात्मानमितिलिंगात्, कर्त्रन्तरविधानाभावाच्च ॥

एवमनन्वाहिताग्निरकृत्वा ॥ ७ ॥

समारोप्य गमनप्राप्तौ गच्छेदिति शेषः। अतोऽनन्वाहिताग्नेः प्रत्यचनयनं नास्ति। प्रयाणकाले विहारदेशेऽपि यत्र क्वापि सञ्चारयितव्ये अनुक्रमता सञ्चारयितव्यः। अविहृतस्य गार्हपत्यस्यैव नियमः विहृतानामपि सर्वेषां युगपन्नयनेऽपि भवति, नैकैकस्य नयने। अनसा नयने क्वचिदप्यनुक्रामनियमो नास्ति। अनेनैव प्रकारेणाग्नीन् सर्वदा नयेत्, अन्यथानयनेऽग्नीनां लौकिकत्वाशङ्का स्यात् ॥

यदि पाण्योररणी संस्पृश्य मन्थयेत् प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्। प्रजां पुष्टिं रयिमस्मासु धेह्यथाभव यजमानाय शंयोरिति ॥ ८ ॥

अरण्योर्हस्तयोर्वा समारोपणमुक्तं। तत्रावरोहणकाले यजमानः 'प्रत्यवरोह जातवेदः' इत्येतं मन्त्रमुक्का मन्त्रान्ते तयोररण्योरग्निं मन्थयेत्, स्वयं वा मन्थेत्। एवमरणीसमारोपणे। यदि हस्तयोः समारोपणं स्यात् तदा एतेन मन्त्रेणारणी संस्पृश्य मन्थयेत्। यजमानो मन्थनकाले यावदग्नेर्जन्म तावदरणी संस्पृशन्नेवास्ते। मथ्यमानेऽग्नौ यद्युत्पादनसमर्थः प्रयत्नो निष्फलः स्यात् तदा पुनरारम्भावसरे मन्त्र आवर्तयितव्यः। एवं व्यर्थे व्यर्थे पुनः पुनरावर्त्तयेत्। अग्न्यवरोहणार्थमरणी मन्थयेदित्येकोऽर्थः। यदि पाण्योः समारोपणं तदेवमवरोहयेत, 'पाणिभ्यामरणी' अनेन मन्त्रेण संस्पृश्य मन्थयेदित्यपरोऽर्थः ॥

**आहवनीयमवदीप्यमानमर्वाक् शम्यापरासादिदन्त एकम्पर ऊत एकमिति संवपेत् ॥ ९ ॥**

आहवनीयस्यैकदेशः समस्तो वा यद्यायतनादुत्सृप्य अर्वाक् शम्यापरासाद्देदेर्बहिर्गच्छेत् तदा तं 'इदन्त एकं' इत्यायतने संवपेत्। ततः समस्ताभिर्व्याहृतीभिर्होमः कर्त्तव्यः। अग्नीनां सर्ववेदसम्बन्धित्वात् सर्वत्र विनष्टसन्धानं द्विविधं। आयतनादवगतस्य पुनःप्रक्षेपात्मेन्द्रियं सन्धानं तत्रैव व्याहृतिभिर्होमादतीन्द्रियं। अतो यत्र यागो होमो जपो दानं दक्षिणारूपश्चास्ति तत्र तैरेवातीन्द्रियसन्धानांशः सिध्यति।

यत्र तेषामन्यतमं नास्ति तत्र व्याहृतिहोमेनातीन्द्रियाग्निस-
न्धानं कर्त्तव्यं। आहवनीयग्रहणादन्यन्तरे नैतत् प्रायश्चित्तं।
तत्र तूष्णीं प्रक्षिप्य व्याहृतिहोमः कर्त्तव्यः, तस्य च विध्यप-
राधत्वात्। दीप्यमानवचनं यावत्प्रायश्चित्तकालं जीवत एवै-
तत् प्रायश्चित्तं भवति न विस्फुलिङ्गमात्रस्येत्येवमर्थं॥

यदि त्वतीयाद्यद्यमावास्यां पौर्णमासीं वातीयाद्यदि वा ऽन्यस्याग्निषु यजेत यदि वास्यान्योऽग्निषु यजेत यदि वास्यान्योऽग्निरग्नीन् व्यवेयाद्यदि वास्याग्निहोत्र उपसन्ने हविषि वा निरुप्ते चक्रीवच्छ्वा पुरुषो वा विहारमन्तरियाद्यदि वाध्वे प्रमीयेतेष्टिः॥१०॥

उक्तं प्रस्थापरामदेशमनतिक्रान्तस्य। अतिक्रान्तस्येदमुच्यते। यदि त्वतीयात् प्रस्थापरामदेशमित्यर्थः। यद्यमावास्यां पौर्ण-मासीं वा स्वकालेऽकृत्वाऽतीयात्। अन्यस्याग्निषु यागं कुर्यात्। अस्याग्निषु अन्यो वा यजेत्। अस्याऽग्नीनन्यो वा ऽग्निर्व्यवेयात्। यद्यग्निहोत्रद्रव्ये कुम्भपूपमादिते दर्शपूर्णमासादिषु वा हविषि निरुप्ते चक्रीवद्रथशकटादिवत् श्वा पुरुषो मनुष्यजातिः स वा अग्नीनां मध्ये नातिक्रामेत्। यदि वा यजमानोऽध्वनि प्रमी-येत, यस्मिन् ग्रामे अग्नय आसते तस्माद्ग्रामान्तरे म्रियेतेत्य-र्थः। एतेषु निमित्तेषु इष्टिं कुर्यात्॥

अग्निः पथिकृत् ॥ ११ ॥

तस्यामियं देवता। अग्निः पथिकृद्गुणकः ॥

वेत्था हि वेधो अध्वन आदेवानामपि पन्थामगन्मेति। अनड्वान् दक्षिणा ॥ १२ ॥

शकटवहनसमर्थो बलीवर्दोऽनड्वान् दक्षिणा ॥

व्यवाये त्वनग्निना प्रागिष्टेर्गामन्तरेणातिक्रमयेत् ॥ १३ ॥

अग्निचक्रीवच्छूद्रपुरुषैर्व्यवाये इष्टिरुक्ता। तत्राग्निवर्जितैरन्यैर्व्यवाये गवातिक्रमणे भस्मराज्युदककराजिभ्यां सन्तानमनुगमयित्वा प्रणयनमुपस्थानमिति विशेषः। अव्यवाये त्वयमपरो विशेषः, 'भस्मना शुनः पदं प्रतिवपेत्' इति। एते पदार्था निमित्तानन्तरमेव कर्त्तव्याः, ततो वर्त्तमानं कर्म समाप्येष्टिः कर्त्तव्या। दर्विहोममध्ये एष विधिः। इष्टिमध्ये तु तदेव तन्त्रमुपजीव्य तत्रैव पाथिकृती कार्या। प्रागिष्टेरितिवचनं पूर्वोक्ताया अपीष्टेः प्रागेवैते पदार्थाः कार्या इत्येवमर्थं ॥

भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्विचक्रम इति ॥ १४ ॥

शुनो यानि पदानि तानि भस्मना प्रतिवपेत् पूरयेदित्यर्थः। प्रतिपदं मन्त्रावृत्तिः ॥

गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या च स-न्तनुयात्तन्तुं तन्वन्रजसो भानुमन्विहीति ॥ १५ ॥

प्रतिराजिं मन्त्रावृत्तिः ॥

अनुगमयित्वा चाहवनीयम्पुनः प्रणीयोपतिष्ठेत। यदग्ने पूर्वं प्रहितं पदं हि ते सूर्यस्य रश्मीनन्वाततान। तत्र रयिष्ठाम-नुसम्भवतां सं नः सृज सुमत्या वाजवत्या। त्वमग्ने सप्रथा असीति च ॥ १६ ॥

राजिभ्यां सन्तानं कृत्वा आहवनीयमनुगमयेत्। ततः प्रणीयोपतिष्ठेत 'यदग्ने पूर्वं त्वमग्ने सप्रथा असि' इति च द्वाभ्यां। चशब्दः पूर्वान्तः इतिकाराभावात् 'त्वमग्ने सप्रथा असि' इत्यस्य पूर्वमन्त्रशेषाशङ्कानिवृत्त्यर्थः। इष्टेरपि स एव विहारः। प्राय-श्चित्त उत्पन्ने पूर्वप्रवृत्ता अग्नयो नापवृज्यन्त इत्यस्यार्थस्य साधनार्थमुत्तरत्र वक्ष्यति 'अनुगमयित्वा चाहवनीयं पुनः प्रणयेत्' इति ॥

अध्वे प्रमीतस्याभिवान्यवत्सायाः पयसाऽग्निहोत्रं तूष्णीं स-र्वंहुतं जुहुयुरासमवायात् ॥ १७ ॥

पथिकृतं कृत्वा तस्मिन्नेव विहारे तूष्णींधर्मकं अग्निहोत्रं

नाम कर्मान्तरमनेन विधीयते, तत् सर्वमग्निहोत्रवत् कर्त्तव्यं। सर्वंहुतत्वन्तु विशेषः। अतो नात्र भक्षोऽस्ति। कालस्तु सायं प्रातरेव। साङ्गं प्रधानं। तूष्णीं प्रधाने प्रजापतिध्यानं कर्त्तव्यं। अभिवान्यवत्सा नाम अन्यवत्सेन दोहनीया। अभिवान्यो वत्सो यस्याः सा अभिवान्यवत्सा। अभिवान्योऽभिजननीय इत्यर्थः। आसमवायादिति, अग्न्यशरीरस्याग्निसम्बन्धादित्यर्थः॥

यद्याहिताग्निरपरपक्षे प्रमीयेताहुतिभिरेनं पूर्वपक्षं नयेयुः॥ ॥१८॥

यद्याहिताग्नेरपरपक्षे मरणशङ्का स्यात् तदा तस्य पक्षस्य अवशिष्टा आहुतीः पक्षहोमन्यायेन हुत्वा अमावास्यां च हुत्वा कर्मभिरेवमेनं पूर्वपक्षं नयेयुः। आहिताग्निग्रहणमन्या अप्यनाहिताग्नेरपरपक्षाग्नि... याः नित्याहुतयः ताः सर्वा होतव्या इत्येवमर्थं। एष पूर्वाधि... नां कालापकर्षो विधीयते। तेन जीवत एव मरणशङ्कायामेतदिति गम्यते। मृतस्यानधिकारात्। अतएव पूर्वसूत्रे अग्निहोत्रनामकं कर्मान्तरमित्युक्तं॥

हविषां व्यापत्ता आल्हास्तु देवतास्ताज्येनेष्टिं समाप्य पुनरिज्या॥ १९॥

आवाहनादूर्द्धं प्रधानयागादर्वाक् यदि हविर्व्यापद्येत तस्य

प्रधानयागादि सर्वमाज्येन समापयेत्। अव्यापन्नानि च यथा-पूर्वं समापयेत्। एवं समाप्य ततो व्यापन्नहविर्भाचश्चैवाग्न्यन्वा-धानादिः पुनर्यागः कर्त्तव्यः। एवं द्वयोर्बहूनां व्यापत्तौ क-र्त्तव्यं। हविषामितिबहुवचनमविवक्षितं। ब्राह्मणे च सर्व-शब्दोऽस्य प्रायश्चित्तस्य सर्वहविःषु प्रापणार्थः, नैकस्मिन् द्व-योर्वा प्रतिषेधार्थः। इष्टिग्रहणं प्रधानयागे कृते शेषकार्ये चाऽकृते हविषि व्यापन्ने आज्येन समापनं कुर्यादित्येवमर्थं। तत्र पुनर्यागो न भवति॥

व्यापन्नानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैः॥ ॥ २० ॥

अन्यैर्वा बीभत्सैरितिवचनात् केशादिभिरपि बीभत्सैरेवेति गम्यते। तेनाच्युतकेशनखसंसर्गो न दोषाय भवति। तथा कीटपतङ्गैरेवाप्यमेध्यनिवासिभिः संसर्गः। अन्यैर्वा बीभत्सैरित्य-नेन वमनादीन्युच्यन्ते। एतैः संसर्गे हवींषि व्यापन्नानीत्यर्थः। बीभत्सैरित्येतावतैवास्मिन्नर्थे सिद्धे केशादीनां पृथक्ग्रहणं केशादिसंसर्गे स्मृत्युक्तः शुद्ध्युपायो यः स हविषि न भवती-त्येवमर्थं॥

भिन्नसिक्तानि च॥ २१॥

भिन्नानि च सिक्तानि च हवींषि दुष्टानि भवन्ति कठि-नेषु भेदनं द्रवेषु चरणमिति॥

**अपोऽभ्यवहरेयुः ॥ २२ ॥**

दृष्टानि हवींषि अप्सु प्रक्षिपेदित्यर्थः। एतेषां प्रतिपत्तिः ॥

**प्रजापते न त्वदेतान्यन्य इति च वल्मीकवपायां वा सान्नाय्यं मध्यमेन पलाशपर्णेन जुहुयात् ॥ २३ ॥**

सान्नाय्यं दुष्टं मध्यमेन पलाशपर्णेन 'प्रजापते न त्वद्' इत्यृचा स्वाहाकारन्तया वल्मीकद्वारे प्रतिषिञ्चेत् अप्सु वा तूष्णीमिति विकल्पः। मध्यमग्रहणं द्विपर्णस्य माभूदित्येवमर्थं ॥

**विष्यन्दमानं मही द्यौः पृथिवी च न इत्यन्तः परिधिदेशे निर्वपेयुः ॥ २४ ॥**

द्विविधं विष्यन्दनं सिक्तमसिक्तञ्च। सिक्तं दुष्टं भवति। अन्यददुष्टं। यद्विष्यन्दमानं कुम्भीमतीत्याग्निं पृथिवीं वा प्राप्नुयात् तत्सिक्तं भवति, दुष्टञ्च तदेव। यत् कुम्भ्यां बहिर्गमनमात्रेण विष्यन्दते तदसिक्तमदुष्टञ्च। यद्विष्यन्दनेन दुष्टं तदेवं प्रतिपादयेत्। 'मही द्यौर्' इत्यनयर्चान्तःपरिधिदेशे निषिञ्चेत्। देशग्रहणं परिध्यभावेऽपि तस्मिन् देशे नियमनार्थं ॥

अन्यतरादोषे व्यासिच्य प्रचरेयुः ॥ २५ ॥

अदुष्टे प्रातर्दोह एतद्भवति। तत् प्रातर्दोहं व्यासिच्य द्वयोः पात्रयोः कृत्वा तयोरन्यतरत् दधिभावायातच्य ताभ्यां दधिपयोभ्यां प्रचरेयुरित्यर्थः। अत एवादुष्टे प्रातर्दोह इत्युक्तं ॥

पुरोडाशं वा तत्स्थाने ॥ २६ ॥

पयसि दुष्टे एतदेव भवति, पूर्वोक्तस्यासम्भवात्। तेन व्यवस्थितविभाषेयं ॥

उभयदोष ऐन्द्राग्नं पञ्चशरावमोदनं ॥ २७ ॥

सान्नाय्यद्वये दुष्टे पञ्चशरावपरिमितान् व्रीहीन् निर्वपेत् इन्द्राग्निदैवत्योदनसिद्ध्यर्थं ॥

तयोः पृथक् प्रचर्या ॥ २८ ॥

तयोरिन्द्राग्न्योर्हविरुत्पत्तौ सहोद्दिष्टयोरपि प्रचारकाले तस्मादेव हविषस्तयोः पृथगेव यागः कर्त्तव्य इत्यर्थः। तत्र 'अग्निदेवतानां प्रथमं यजेद्' इति श्रुतेः अग्निमिष्ट्वेन्द्रं यजेत्॥

ऐन्द्रमेवेत्येके ॥ २९ ॥

एके ऐन्द्रमेव पञ्चशरावमुत्पाद्य प्रचारे इन्द्राग्न्योः पृथक् पृथक् प्रचारमाहुः। अत्राप्यग्निरेव प्रथममेष्टव्यः। अस्य पक्षस्येयं श्रुतिर्मूलं, 'यस्योभयं हविरार्त्तिमार्च्छति ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् अग्निं देवतानां प्रथमं यजेत्' इति। अस्यां श्रुतावग्नियागस्यानुवादत्वेनापि मन्त्रवादैन्द्रमेव निरुप्य इन्द्रायैव यष्टव्यमिति केचित् सूत्रार्थं वर्णयन्ति॥

वत्सानाधाने वायवे यवागूं॥ ३० ॥

सान्नाय्यार्थमपाकृतानां वत्सानां पाने वायुदेवत्यां यवागूं निरुप्य तया यष्टव्यमित्यर्थः। सर्वपाने एतत् प्रायश्चित्तं। पीतशिष्टमेव हविषः पय आप्तं चेत् व्याहृतिहोम एव न यवागूः, यवाग्वा यागं कृत्वा पुनर्यागः कर्त्तव्यः॥

अग्निहोत्रमधिश्रितं स्रवदभिमन्त्रयेत। गर्भं स्रवन्तमगदमकर्माग्निर्होता पृथिव्यन्तरिक्षं यतश्चुतदग्नावेव तन्नाभिप्राप्नोति निर्ऋतिम्परस्तादिति॥ ३१ ॥ ॥ १० ॥

अधिश्रितमग्निहोत्रद्रव्यं स्थालीमूलेन यदि स्रवति तदनेनाभिमन्त्रयेत गर्भमिति॥

इति तृतीये दशमी कण्डिका॥ * ॥

यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्तामभिमन्त्रयेत। यस्माद्भीषा निषीदसि ततो नो अभयं कृधि। पशून्नः सर्वान् गोपाय नमो रुद्राय मीढुष इति॥ १॥

उपावसृष्टा दुह्यमाना इत्युभयं विशेषणं वत्ससंसर्गाद्यादोहनपरिसमाप्तेरेतस्य प्रापणार्थं। यस्येति ब्राह्मणानुवादः॥

अथैनामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात्। इन्द्राय कृण्वती भागं मित्राय वरुणाय चेति॥ २॥

अथेति समन्त्रार्थं योऽभिमन्त्रयते स एवोत्थापनमपि कुर्यात् यजमान एवोभयं कुर्यात् होमकर्त्ता वेत्येवमर्थं॥

अथास्या ऊधसि च मुखे चोदपात्रमुपोह्य दुग्ध्वा ब्राह्मणं पाययेद्यस्याभोक्ष्यन्त्स्याद्यावज्जीवं संवत्सरं वा॥ ३॥

ऊधः स्तनप्रदेशः। अग्निहोत्र्या ऊधसि च मुखे च समीपे उदपात्रमुपोह्य, ततस्तां दुग्ध्वा, तत् पयो ब्राह्मणं पाययेत्। यस्यान्नं यावज्जीवं न भोक्ष्यमाणो भवेत् स एतत् पयः पिबति तस्यान्नं यावज्जीवं नाश्नीयादित्यर्थः। संवत्सरं वा नाश्नीयात्। अत्र कालानाम्नानाद्यावज्जीवमित्युक्तवानाचार्यः। संवत्सरं व्रतं नात्येतीति सामान्यानुवादात् संवत्सरवचनं। अथशब्दः पूर्ववत्॥

वाश्यमानायै यवसं प्रयच्छेत् सूयवसाद्भगवती हि भूया इति ॥ ४ ॥

एतदप्युपावसर्गादि दोहनपर्यन्तमेव। वाश्यमानायै शब्दयन्त्यै, यवसो भक्षः ॥

शोणितं दुग्धं गार्हपत्ये संक्षाप्यान्येन जुहुयात् ॥ ५ ॥

संक्षाप्येति यावत्तं निरवशेषं भवति तावद्दाहयित्वाऽन्येन द्रव्येण जुहुयात्। अत्रान्यवचनात् पूर्वत्र तां अन्यां वा पुनर्दुग्ध्वा पयसैव जुहुयात्। तत्रैवं ब्राह्मणं। 'अथैनां ब्राह्मणाय दद्यात्' इति। तद्दानं पूर्वोक्तेन पयसः पानेन विकल्प्यते। दानपक्षेऽन्यामेव दुग्ध्वा जुहुयात् ॥

भिन्नं सिक्तं वाऽभिमन्त्रयेत। समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत। अरिष्टा अस्माकं वीरा मयि गावः सन्तु गोपताविति ॥ ६ ॥

स्थालीभेदेन विक्षिप्तं द्रव्यं भिन्नमित्युच्यते। विक्षेपात् तत् दुष्टं भवति। सिक्तमिति स्कन्नमुच्यते। स्कन्दनं च यावत् स्कन्नं तावन्मात्रं दुष्टं भवति न पात्रगतं। भिन्नसिक्तानि चेति वचनात् तद्भिन्नं सिक्तञ्च समुद्रमित्यनेनाभिमन्त्रयेत। ततः

अपोऽभ्यवहरेयुः। 'अपोऽभ्यवहरेयुः' इत्यस्य वचनस्य प्रकरणविशेषाभावाद्व्यापन्नहविर्मात्रमेवास्य विषय इति भेदने इदमेवास्मिन् प्रकरणे सर्वावस्थे पयसि अन्येषु द्रव्येषु च। स्कन्ने पुनः पयसि वक्ष्यमाणत्वादिदमभिमन्त्रणं द्रव्यान्तरेष्वेवेति स्थितं॥

यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत सा यत् तत्र स्कन्दयेत् तदभिमृश्य जपेत् यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः। पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति॥ ७॥

दोहनावस्थायां पयसि स्कन्ने 'यदद्य' इत्यनेन स्कन्नमभिमन्त्रयेत्,'समुद्रं वः' इत्यनेनास्य तुल्यकार्यत्वात्। अत एव 'समुद्रं वः' इत्यत्राप्यभिमर्शनं कर्त्तव्यं, स्कन्नमभिमन्त्रयेत दोहनावस्थायां स्कन्ने एतद्भवतीत्येतावदत्र विवक्षितं। इतरद्ब्राह्मणानुवादः, पयोलिङ्गत्वात् पयस्येवेदं भवति॥

तत्र यत् परिशिष्टं स्यात् तेन जुहुयात्॥ ८॥

अर्थप्राप्तस्य विधानं शेषकार्यस्यापर्याप्तावपि तेनैव होमः कर्त्तव्यः। शेषकार्यस्य भक्षादेर्लोप एव स्यात्, अप्रयोजकत्वात् द्रव्यस्येति॥

अन्येन वाभ्यानीय ॥ ९ ॥

जुहुयादिति शेषः। होमस्यापर्याप्ताविदं भवति ॥

एतद्दोहनाद्याप्राचीनहरणात् ॥ १० ॥

मर्यादायामयमाकारः, उत्तरत्र तत्रेतिवचनात्। दोहनवचनं पूर्वसूत्रे स्कन्दननिमित्तविशेषस्याविवक्षितत्वसूचनार्थं। आदित्यहणमधिश्रितेऽपि पयसि स्कन्ने एतदेव प्रायश्चित्तं, न ब्राह्मणोक्तं 'अधिश्रितं स्कन्दति वा विष्यन्दते वा' इति। इदं तु द्रव्यान्तरेषु भवति। विष्यन्दने तु पयस्येवेदमेव भवति, विष्यन्दनेऽधिश्रिते अन्यस्यानाम्नानात्। तत्र यत् परिशिष्टमित्यादि द्रव्यान्तरेष्वपि साधारणं, अन्यस्यानाम्नानात्। उन्नीयाहवनीयं प्रतिहरणं प्राचीनहरणमित्युच्यते ॥

प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नाभिमर्शनं ॥ ॥ ११ ॥

इदमपि पयस्येव, पूर्वेण सम्बन्धित्वात्। तत्रेति प्राचीनहरण इत्यर्थः ॥

शेषेण जुहुयात् ॥ १२ ॥

अन्तरेणापि वचनं सर्वस्य वा प्रधानमात्रस्यैव वा पर्याप्ते

शेषेणैव होमो युक्तः, उक्तत्वात् द्रव्यस्य। वचनमिदानीं किमर्थं। अयमभिप्रायः, अस्ति चेच्छेषः होमद्वयस्य पर्याप्तः तथापि शेषेणैव माचार्षीनेनापि जुहुयादिति वचनं॥

पुनरुन्नीयाशेषे॥ १३॥

स्रुग्गतस्याऽशेषे पुनरुन्नीय जुहुयात्। पुनरुन्नयनेऽयं विशेषः। आप्राचीनहरणं यावति गते स्कन्नं भवति तावत्येवाध्वनि उपविश्य स्थालीमन्येन प्राचीं नीत्वा तत्रैवोपविष्ट उन्नयेत्, न स्वयं स्रुग्वा प्रत्यग्गच्छेत्॥

आज्यमशेषे॥ १४॥

स्थाल्यामपि यदा नास्ति तदा आज्यं गृहीत्वा तस्य यथासम्भवं संस्कारं कृत्वा उन्नीय तेन जुहुयात्॥

एतदाहोमात्॥ १५॥

द्वयोरपि होमयोः प्रधानत्वाद्धोमद्वयपर्यन्तमेतदेव प्रायश्चित्तं भवति॥

वारुणीं जपित्वा वारुण्या जुहुयात्॥ १६॥

विशेषाभावाद्ये केचन वारुण्यौ भवतः। पूर्वहोमे प्राकृतस्य मन्त्रस्यापवादो वारुणी॥

अनशनमाऽन्यस्माद्धोमकालात् ॥ १७ ॥

यजमानस्येदं न होमकर्त्तुः। वारुणीजपो वारुणीहोमः अनशनमित्येतत् त्रयं प्रैषेण जुहुयादित्यत्र मात्रापचारहोमे पुनराधेय होमे आज्यहोमे च भवति ॥

पुनर्होमश्च गाणगारिः ॥ १८ ॥

एतेष्वेव त्रिषु पक्षेषु गाणगारिः पुनर्होममिच्छति। आचार्यग्रहणं विकल्पार्थं। पुनर्होमे पूर्वं समाप्य पुनर्विहरणादि सर्वं क्रियते, निमित्त प्रयोगावृत्तिविधानात् ॥

अग्निहोत्रं शरशरायत् समोषामुमिति होष्टारमुदाहरेत् ॥
॥ १९ ॥

अधिश्रितमग्निहोत्रद्रव्यं यदि शब्दयेत् तदा तद्द्रव्यं समोषामुमिति अभिमन्त्रयेत। अमुमित्यस्य स्थाने यजमानद्वेष्टुर्नाम निर्दिशेत्, अधिश्रितविशेषणं तत्रैव, अस्य मन्त्रवाच्छास्त्रान्तरदर्शनाच्च ॥

विष्यन्दमानं मह्यो द्यौः पृथिवी च न इत्याहवनीयस्य भस्मान्ते निनयेत् ॥ २० ॥

उद्वासिते विष्यन्दने एतद्भवति। अधिश्रिते तु ब्राह्मणोक्तमेव ॥

सान्नाय्यवद्धोमस्ते ॥ २१ ॥

'प्रजापते' इत्यनया मध्यमेन पलाशपर्णेन वल्मीके जुहुयादित्यर्थः ॥

अभिवृष्टे मित्रो जनान्यातयति ब्रुवाण इति समिदाधानं ॥ ॥ २२ ॥

अधिकेयं समित्, उत्तराहुत्यर्थस्यापि अभिवर्षणसम्भवात्। अतः पूर्वाहुत्याः प्रागपि अस्मिन्निमित्ते सति निमित्तान्तरं समिदन्तरमाधेयमेव ॥

यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कन्दने ॥ २३ ॥ ॥ ११ ॥

समिदाधानमिति शेषः ॥

इति तृतीये एकादशी कण्डिका ॥ ० ॥

प्रदोषान्तो होमकालः ॥ १ ॥

प्रदोषो नाम रात्रेः पूर्वश्चतुर्थो भागः। प्रदोषस्यान्तः प्रदोषान्तः। प्रदोषान्तोऽन्तो यस्य सः प्रदोषान्तान्तः, प्रदोषान्त इत्यर्थः। स सायंहोमस्य कालः केषाञ्चित्। पञ्चमीषष्ठ्यौ नाडिके प्रदोषशब्देनोच्यते, तदन्तो वाऽयं होमकालः॥

सङ्गवान्तः प्रातः ॥ २ ॥

यस्मिन् काले गावो वत्सैः सह आसते स सङ्गवः कालः। तावत्पर्यन्तं प्रातर्होमकालः। केचिदह्नस्तृतीयो भागः सङ्गव इत्याहुः, तदन्तः सङ्गवान्तः, दश नाडिका इत्यर्थः। अस्तमित उदिते च विहितो होम एतावति काले क्रियमाणेऽतीतकालो न भवतीति पुनः कालविधिः॥

तमतिनीय चतुर्गृहीतमाज्यं जुहुयात् ॥ ३ ॥

कस्मिन् काले केन मन्त्रेणेत्यत आह॥

यदि सायं दोषा वस्तर्नमः स्वाहेति। यदि प्रातः प्रातर्वस्तर्नमः स्वाहेति। अग्निहोत्रमुपसाद्य भूर्भुवः स्वरिति जपित्वा वरं दत्त्वा जुहुयात् ॥ ४ ॥

उपसादनवचनं क्रमार्थं। उपसाद्य अपस्य वरदानञ्च कृत्वा। समिदाधानादि पूर्ववत्। वरदानं याजमानं। वरशब्देन गोजातिरुच्यते। तं वरं दत्त्वा जुहुयादिति पूर्वकालतामात्रं विवक्षितं, नाव्यवधानं कर्त्तव्यञ्च॥

इष्टिश्च वारुणी॥ ५॥

कर्त्तव्येत्यर्थः। समाप्तेऽग्निहोत्रहोमे तेष्वेवाग्निष्वियमिष्टिः कार्या, उत्तरत्रानुगमनविधानात्॥

हुत्वा प्रातर्वरदानं॥ ६॥

प्रातःकालातिपत्तौ विशेषो वक्ष्यते। होमोत्तरकालं वृष्ट्यन्ते वरदानं कर्त्तव्यं॥

अनुगमयित्वा चाहवनीयं पुनः प्रणयेदिहैव क्षेम्य एधि मा प्रहासीरमुमामुष्यायणमिति॥ ७॥

समाप्तेऽग्निहोत्रहोमे आहवनीयस्यानुगमनं कृत्वा पुनस्तमेवोद्धरेत् 'इहैव क्षेम्य एधि' इतिमन्त्रेण। 'मा प्रहासीरमुमामुष्यायणं' इति पाठः कर्त्तव्यः। अमुमित्यस्य स्थाने यजमाननाम द्वितीयया निर्दिशेत्। अमुष्यायणशब्दस्य स्थाने गोत्रनाम,

प्रहासीदेवदत्तं मां भरद्वाजमिति पित्रादौ जीवति भरद्वाजायनमिति वदेत्। दक्षिणाग्निस्त्वाग्निहोत्रिक एव, आहवनीयस्यैवानुगमनविधानात्। इदमनुगमनं कस्याहवनीयस्येति न विद्मः। आग्निहोत्रिकस्येत्, न, असमाप्तेऽग्निहोत्रे तस्य लौकिकत्वादनाहवनीयत्वं। होमे कृते असमाप्ते च प्रयोगे अनुगमनमिति चेत्, तथा सति पुनःप्रणयनमदृष्टार्थं स्यात्। अत्रायमभिप्रायः इष्ट्यर्थं विहृतस्येति। तदा पुनः प्रणयेत् तत इष्टिरिति समन्वयो नोपपद्यते। अत्रायमभिप्रायः। समाप्तेऽग्निहोत्रे लौकिकस्य सतोऽनुगमनमेव कर्त्तव्यं नायतनाद्बहिस्त्याग इति, तदाहवनीयशब्दो नोपपद्यते। अत एवं वदतः सूत्रकारस्यायमभिप्राय इति वर्णनीयं। यस्य कस्यचित् कर्मणोऽर्थाय विहृतेष्वग्निषु यत्किंचिदग्निसाध्यनैमित्तिकमुत्पद्यते। तस्य नैमित्तिकसहितस्य तएवाग्नयो भवेयुः, न पुनः पुनर्विहर्त्तव्य इति॥

तत इष्टिर्मित्रः सूर्यः॥ ८॥

एते देवते॥

अभि यो *महिनां दिवं प्र स मित्रमर्त्तो अस्तु प्रयस्वानिति संस्थितायां पत्न्या सह वाग्यतोऽग्नीन् ज्वलतोऽहरनस्मन्नुपासीत॥ ९॥

समाप्तायामिष्टौ पत्नीयजमानौ यतवाचौ भूत्वा ताने-

*महिनादिना दिव इति सो० मू०।

वाऽग्नीन् व्यवस्थाप्य तावन्तः प्रवासे यथास्थानं समुपासीयातां। उप आसीत पत्न्या सहैवं कुर्वन्नग्नीना समीप आसीतेत्यर्थः॥

द्वयोर्दुग्धेन वासेऽग्निहोत्रं जुहुयात्॥१०॥

वासो रात्रेः पूर्वश्चतुर्थभागः, द्वयोर्गवोः दुग्धेन पयसा सायमग्निहोत्रं स्वकाले जुहुयादित्यर्थः॥

अधिश्रितेऽन्यस्मिन् द्वितीयमवनयेत्॥११॥

अयमत्र विशेषः। एकस्या गोर्दुग्धं पयोऽधिश्रित्य तस्मिन्नेव पयसि द्वितीयं गोर्दुग्धं अवनयेत्। तेन पयसा होमः, ततोऽग्न्योरपवर्गः॥

प्रातरिष्टिः॥१२॥

... श्वो भूते पूर्वाह्णे इष्टिः कार्या। इयमपि प्रातःकालातिपत्ति... मित्तैव। प्रातरितिकालविधानात् प्रयोगभेदः। ततो विहरणभेदोऽपराग्न्योरपि भवति॥

अग्निर्व्रतभृत्॥१३॥

व्रतभृद्गुणकोऽग्निर्देवता॥

त्वमग्ने व्रतभृच्छुचिरग्ने देवाँ इहावह। उप यज्ञं हविश्च नः। व्रतानि बिभ्रद्व्रतपा अदब्धो यजानो देवाँ अजरः सुवीरः। दधद्रत्नानि सुम्लीको अग्ने गोपायनो जीवसे जातवेद इति ॥ १४ ॥

एतत् प्रायश्चित्तं स्वकाल एव प्रणीतेष्वग्निषु होमकालातिपत्तौ भवति। अप्रणीतेषु उक्तकालातिपत्तावत्यन्तापदि अनुद्धृतप्रायश्चित्तं कृत्वा होमं कुर्यात्। अनापदि मनस्वतीहोमेन अनुद्धृतप्रायश्चित्तेन च सहितो होमः कार्यः। विहृतेष्वेवाग्निषु अहुतेषु होमान्तरकालप्राप्तौ उपक्रान्तमेव होमं कालातिपत्तिप्रायश्चित्तसहितं कृत्वा वर्त्तमानकालोमनुद्धृतप्रायश्चित्तसहितं कुर्यात्। अविहृतेषु कालान्तरप्राप्तौ मनस्वतीहोमं कृत्वा, अतिपन्नस्य प्रतिहोमञ्च कृत्वा, अनुद्धृतप्रायश्चित्तादि पूर्ववत्। एवमनेककालातिपत्तावपि द्रष्टव्यं। विहृतेष्वविहृतेषु वाऽनेककालातिपत्तौ मनस्वतीहोमं प्रतिहोमं चावश्यं कुर्यात् विहृतेषु तेष्वेवाग्निषु। अविहृतेषु तु मनस्वत्यादि कृत्वा प्राप्तकालस्य विहरणादि क्रियेत। एवमत्र विचार्य यद् युक्तं तत् कर्त्तव्यं। विचारस्थानदमात्रमत्र लिखितमिति मन्तव्यं॥

एषैवार्त्त्याश्रुपाते ॥ १५ ॥

आर्त्त्याऽश्रुपाते दुःखेनाऽश्रुपाते, न धूमादिनेत्यर्थः। एत-

दर्शपूर्णमासयोस्तत्प्रकृतिषु च भवति। ब्राह्मणे 'उपवसथे ऽग्नु कुर्वीत' इतिदर्शनात्॥

यद्याहवनीयमप्रणीतमभ्यस्तमियाद्बहुविद्ब्राह्मणोऽग्निं प्रणयेत् दर्भैर्हिरण्येऽग्रतो ह्रियमाणे॥ १६॥

अग्निहोत्रार्थं विधिनाऽनुद्धृतमाहवनीयं यद्यस्तमियात् तदा तदानीमेवानेतुं शक्येषु ब्राह्मणेषु यो बहु वेत्ति तमानीयतेनोद्धरणादि निधानान्तमाहवनीयस्य कारयेत्। अग्नेः प्रणीयमानस्य अग्रतो हिरण्यं दर्भैरेव नयेत्। ब्राह्मणग्रहणं बहुविद्यत्वेऽपि जात्यन्तरनिवृत्त्यर्थं॥

अभ्युदिते* चतुर्गृहीतमाज्यं रजतञ्च हिरण्यवदग्रतो हरेयुः॥ १७॥

अनुद्धृतमभ्युदिते सति बहुविदग्निं प्रणयेत्। तस्याग्रतश्चतुर्गृहीतमाज्यं नेतव्यं, रजतञ्च। यदि हिरण्यवद्वचनेन रजतस्याग्रतो हरणं प्राप्येत तदा दर्भैर्हिरण्यमपि प्राप्नुयादाज्यस्याग्रतोहरणञ्च न प्राप्नुयात्। अतो दर्भनिवृत्त्यर्थमाज्यस्य प्रापणार्थञ्चाग्रतइतिवचनं। एवञ्चेत् हिरण्यवचनं पूर्वोक्तस्य बहुविद्ब्राह्मणाभ्युद्धरणस्य प्रापणार्थं॥

अथैतदाज्यं जुहुयात् पुरस्तात् प्रत्यङ्मुख उपविश्योपाः केतुना जुषतां स्वाहेति॥ १८॥

* अभ्युदिते वेति सो॰ मू॰॥

हिरण्यरजतयोरग्रतो हरणमेव कार्यं। आज्यस्य कार्यान्तरमुच्यते। निहितेऽग्नावाहवनीयस्य पुरस्तात् प्रत्यङ्मुख उपविश्य 'उषाः केतुना' इति तदाज्यं जुहुयात्॥

कालात्ययेन शेषः॥१९॥

उभयोः कालयोः अनुद्धृतप्रायश्चित्तशेषः कालात्ययप्रायश्चित्ताभ्यामेवोक्तः स्वेन स्वेन कालात्ययप्रायश्चित्तेन अग्निहोत्रमुपसाद्येत्यादि वारुण्यन्तं सायङ्काले भवति। प्रातःकालेऽपि तदाद्येव व्रातपत्यन्तं भवति॥

न त्विहाग्निरनुगम्यः॥२०॥

प्रातःकालेऽयं विशेषः। अनुगमयित्वा चाहवनीयमित्येतत् न भवति। तेनाग्निहोत्रार्थेष्वेवाग्निषु सायंहोमान्तं भवति॥

आहवनीये चेद्ध्रियमाणे गार्हपत्योऽनुगच्छेत् स्वेभ्य एनमवक्षामेभ्यो मन्थेयुरनुगमयेत्त्वितरं॥२१॥

विद्यमान आहवनीये गार्हपत्यो यद्यनुगच्छेत् तदा स्वेभ्योऽवक्षामेभ्य एनं गार्हपत्यं मन्थेयुः। तत इतरमनुगमयेत्, आहवनीयमित्यर्थः। गार्हपत्यशब्दादेव गार्हपत्यप्रत्यये सिद्धे

तत्प्रत्ययार्थमेनमितिवचनं सर्वावस्थस्य गार्हपत्यस्याऽनुगमने मन्थनेनैवोत्पत्तिः एवंरूपा च मेतिज्ञापनार्थं। तुशब्दादयमर्थो द्योत्यते। गार्हपत्यमनुगतं मन्थनेनैवोत्पादयेत्। ध्रियमाण आहवनीयेऽयं विशेषः, तस्यानुगमयेदिति। अवक्षामाणि मन्थनसमर्थानि काष्ठानि॥

क्षामाभावे भस्मनाऽरणी संस्पृश्य मन्थयेदितो जज्ञे प्रथममेभ्यो योनिभ्यो अधिजातवेदाः। स गायत्र्या त्रिष्टुभा जगत्याऽनुष्टुभा च देवेभ्यो हव्यं वह नः प्रजानन्निति॥ २२॥

मथनसमर्थक्षामाभावे भस्मनाऽरणी संस्पृश्य लेपयित्वा ततो मन्थयेत् 'इतो जज्ञे' इतिमन्त्रेण। मन्थयेदिति णिच्प्रयोगात् प्रकृते कर्मणि यः कर्त्ता स एव मन्त्रं ब्रूयात्। ये केचन समर्थाः मन्थयेयुरित्येवमवगम्यते। अरणीमन्थन एवायं मन्त्रो नावक्षाममन्थने। यद्युभयोरभिप्रेतः स्यात् पूर्वत्रैव मन्त्रं ब्रूयात्। अनुगमयेच्चितरवत्। तथा च न कृतं। तेन पूर्वस्मिन् मन्थने मन्त्रो नास्तीति सिद्धं। अवरोहणमन्त्रस्तूभयोरपि भवति, अरणीगतावरोहणस्यापि तस्मिन्नेव सूत्रे विधातुमिष्टत्वात्॥

मथित्वा प्रणीयाहवनीयमुपतिष्ठेताग्ने सम्राडिषे राये रमस्व सहसे द्युम्नायोर्जेऽपत्याय। सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावतामन्नादं त्वान्नपत्यायादध इति॥ २३॥

मथितेतिवचनं 'इतो जज्ञे' इत्यस्य प्रणयनमन्त्रत्वशङ्का-निवृत्त्यर्थं ॥

अत एवैके प्रणयन्त्यन्वाहृत्य दक्षिणं ॥ २४ ॥

अत्रैव विषये अयं द्वितीयः कल्पः। ध्रियमाण आहव-नीये गार्हपत्यानुगमने सति अतएवाहवनीयादाहवनीयं प्रण-यन्त्येके। तथा सति दक्षिणाग्निरप्यनुहर्त्तव्यः ॥

सहभस्मानं वा गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीय-मुद्धरेत् ॥ २५ ॥

इदमपि कल्पान्तरं। आहवनीयमुद्धरेदित्येतावतैव सिद्धे प्राञ्चमितिवचनं आहवनीयात् प्रत्यञ्चं गार्हपत्यं प्रणीयापि विहारसिद्धिरितिशब्दमपि कल्पान्तरमितिज्ञापनार्थं। एते चत्वारः पक्षाः ब्राह्मणे समुद्दिष्टाः। तत्र निन्दा विध्यन्तरस्तुत्य-र्था। अतः सर्वेषां क्वचिच्छास्त्रान्तरे विधानमस्तीति तान् सर्वान् कर्त्तव्यतया सूचितवानाचार्यः। सहभस्मानमित्यस्मिन् पक्षे दक्षिणेन विहारं नीत्वा गार्हपत्यायतने निधानं ॥

तत इष्टिरग्निस्तपस्वान् जनद्वान् पावकवान् ॥ २६ ॥

एका च देवता, स चाग्निस्त्रिभिर्गुणैर्युक्तः ॥

आयाहि तपसा जनेष्वग्ने पावको अर्चिषा। उपेमां सुष्टुतिं मम। आ नो याहि तपसा जनेष्वग्ने पावक दीद्यत्। हव्या देवेषु नो दधदिति। प्रणीतेऽनुगते प्राग्घोमादिष्टिः॥ २७॥

अग्निहोत्रार्थं प्रणीत आहवनीयेऽनुगतप्रायश्चित्तत्वेनेयमिष्टिः कर्त्तव्या। प्राक् पूर्वाहुतिप्रक्षेपादेषैवेष्टिः प्रायश्चित्तिर्भवति। उत्पत्तिस्तु ब्राह्मणोक्ता भवति, 'तदाहुर्यस्याग्निमनुद्धृतमादित्योऽभ्युदियादाभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येदित्यादि हिरण्यं पुरस्कृत्य सायमुद्धरेत् रजतमन्तर्धाय प्रातरुद्धरेत्' इत्यत्रोक्ता। इयमेवोत्पत्तिरस्मिन्नवसरे प्रणीतो वा प्राग्घोमादुपशाम्येदितिवचनात्, अग्नावनुगतेऽन्तराहुती इति वक्ष्यति। उत्तराहुत्यां हुतायां अस्युत्पत्तेः प्रयोजनं नास्ति। एवमग्निहोत्रे निर्वाहः इत्यस्मिन् सूत्रानुसारेण मन्यामहे॥

अग्निर्ज्योतिष्मान् वरुणः॥ २८॥

द्वे देवते। ज्योतिष्मानित्यग्नेर्गुणः॥

उदग्ने शुचयस्तवाग्ने बृहन्नुषसामूर्ध्वो अस्थादिति। सर्वांश्चेदनुगतानादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वाग्न्याधेयं पुनराधेयं वा॥ २९॥

यदि सर्वेष्वग्निष्वनुगतेषु आदित्योऽस्तमुदयं वा गच्छेत् त-

दाऽग्न्याधेयं पुनराधेयं वा प्रायश्चित्तं भवेत्। अनयोरेव कालयोः शास्त्रान्तरे गार्हपत्याहवनीययोर्द्वयोरेवानुगतावेतत् प्रायश्चित्तमुक्तं। तस्मिंश्चकाले दक्षिणाग्निर्भिन्नयोनिः। अतएवं विनिवेशः, एकयोनित्वे सर्वानुगमने भवति, भिन्नयोनित्वे द्वयोरेवानुगमने इति। अत्राग्न्याधेयपुनराधेयाभ्यां सेष्टिके ते गृह्येते, अग्न्युत्पादकत्वसामान्यात्। एतदर्थमेवाधानाद्दादशरात्रमित्यत्र सेष्टिकेऽग्न्याधाने आधानशब्दप्रयोगः संव्यवहारार्थं कृतः। तस्मिन् काले सर्वदा सर्व एवाग्नयो विहृता एव प्रायेणासते। तत्र केवलगार्हपत्यानुगमने मन्थनेनोत्पाद्य तपस्वती कार्येत्युक्तं। दक्षिणाग्न्यनुगमनेऽपि स्वयोनितो विहृत्य सैवेष्टिः कार्या। आहवनीयानुगमनेऽपि प्रायश्चित्तविशेष उक्तः। द्वयोर्द्वयोरनुगमने तान्येव यथासम्भवं कर्त्तव्यानि। अतः सर्वानुगमने इदमवशिष्यते। अतः सर्वशब्दविवक्षायामपि नैमित्तिकस्य स्वभावपर्यालोचनया सर्वानुगतावेव एतद्भवतीति मन्तव्यं। एकयोनित्वे भिन्नयोनित्वे उक्तो विनिवेशः। उभयोरनुगमनेऽपि विधीयमानस्याग्न्याधेयस्य सर्वोत्पादकस्वभावत्यागात् तद्विधानसामर्थ्याद्वानष्टोऽपि दक्षिणाग्निर्नष्ट इति गम्यते। विहृतेष्वेवं भवति, अविहृतेष्वपि किं गार्हपत्यानुगमने सर्वानुगमोऽस्ति न वा। अस्तीति ब्रूयात्। तत्र हि सर्वेऽग्नयः समवेता इति गम्यते। ततो विहरणदर्शनात् कथं तत्र समवायः। अङ्गारसमवायस्तावन्नास्ति। कर्मार्थं पृथक् कृतानां कर्मसमाप्तौ तत्रैवानुगमनदर्शनात्। अथायमभि-

प्राय:। अङ्गाराश्च, यो यो दक्षिणाग्न्याहवनीयाख्यः शास्त्रग-
म्यः स कर्मसमाप्तौ गार्हपत्याङ्गारानर्नुप्रविशति। अन्यथा तत
उद्धरणविधानं नोपपद्यते। ततसंसर्गे संसर्गदोषश्च नास्ति।
अङ्गारसंसर्गो हि सः। तथाच शास्त्रान्तरे वचनं। 'यदि पूर्वो-
ऽनुगतः संवर्ध्य पश्चाद्धि स तर्हि गत' इत्येवमपि न युज्यते।
अविहृतावस्थायां गार्हपत्ये 'गार्हपत्यं प्रज्वल्य' इतिसूत्रप्रयो-
गात्। तथा च शास्त्रान्तरे सूत्रकारप्रयोगः मन्त्रवर्णश्च दृ-
श्यते, 'गार्हपत्यमभिमन्त्रयते सुगार्हपत्यः' इति। तेनावगम्यते
तत्रानुप्रवेशोऽन्यन्तरस्य नास्तीति। 'यत् पुनः पश्चाद्धि स तर्हि
गतः' इति तदप्यन्यपरं। यदि हि सर्वदाऽनुगतस्याहवनीयस्य
गार्हपत्यात् प्रणयनेनैवोत्पत्तिः स्यात् तदैवैतल्लिङ्गमनुप्रवेशस्य।
तत्र हि शास्त्रे मन्थनादप्युत्पत्तिरुक्ता। अतोऽस्यायमर्थः। य-
स्मिन्ननुगमने गार्हपत्यात् प्रणयनेनोत्पत्तिरुक्ता तदाऽनुगते-
ऽन्तराधचरणमविरुद्धं मन्थनेनोत्पाद्येऽनुगतेऽप्यन्तरा न सञ्चरित-
व्यमिति। अतोऽन्यपरत्वादेवास्य वाक्यस्यानुप्रवेशे लिङ्गं न भ-
वितुमर्हति। अतस्तत्र समवायः प्रत्यक्षेण शास्त्रेण वा लक्ष-
यितुं न शक्यते। कथन्तर्हि तत उद्धृत आहवनीयादिर्भवति।
वचनगम्यो हि सः। वचनमेवं भवति। गार्हपत्यं प्रज्वल्य
ततो दक्षिणाग्निमुद्धृत्य गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेदि-
ति, तेनाधिकृतेन पुरुषेण तन्नियुक्तेन वाऽग्निहोत्राचार्यं स्वका-
ले यथोक्तेन विधिना य उद्ध्रियते स एवाहवनीयादिर्भवति,
नान्यथा। अन्यथा चेदुद्ध्रियते तदा समीप्य तमग्निं विक्षेपप्राय-

श्चित्तं कर्त्तव्यं, नान्यत् अभ्युदितेष्टौ तु वचनात् मथ्योद्धृतोऽप्याहवनीयादिर्भवति। एवं तर्हि कर्मान्तरालकाले क्वाग्नि तिष्ठति। वयमपि न जानीमः क्वाग्नि तिष्ठतीति। एतावद्त्रावगन्तुं शक्यते। सर्वकर्मार्थमग्नय आहिताः, तत्र गार्हपत्यो यावज्जीवं धार्यते, वचनात्, इतरौ तु कर्मणि कर्मण्युद्ध्रियेते। गतश्रियः सर्वे धार्यन्ते। वचनादेव नान्यदतोऽवगन्तुं शक्यते। एवं सति कर्मापूर्ववत्तिष्ठति। यथा यागादिजनितान्यपूर्वाणि यावत्फलभोगसम्बन्धं तिष्ठति तथाहवनीयादिरपि तिष्ठतीति। अतोऽनुद्धृतेषु गार्हपत्यानुगमने सर्वानुगमनं नास्तीति। तत्राग्न्याधेयं पुनराधेयं वा न कर्त्तव्यमिति सिद्धं॥

समारूढेषु चारणीनाशे॥ ३०॥　　॥ १२॥

अग्निष्वरण्योः समारूढेषु सत्सु अरण्योर्नाशेऽग्न्याधेयं पुनराधेयं वा कर्त्तव्यं। अन्यतरारणीनाशेऽपि भवत्येतत् प्रायश्चित्तं। तयोरेकैकस्या एव कार्यविशेषे नियमाज्जायापतिसंस्तुतत्वाच्च। नन्वरणीनाश इतिशब्द एकस्यामप्यनष्टायां न प्रवर्त्तत इति। सत्यमसौ शब्दो न प्रवर्त्तते तथापि मन्थनपदार्थो नैकया सम्पादितुं शक्यत इति, अनष्टापि नष्टैवेति कृत्वोक्तं। यदि परमनष्टामेव द्विधा कृत्वा मन्थनसिद्धिरिति, तथापि नैवं वक्तुं शक्यते उपादानकाले अरणी आहरेदिति। इयोरुपादा-

नमदृष्टार्थं स्यात् इति युक्तं, कार्यभेददर्शनादिति। एवं सति उर्वशीपुरूरवसोः संस्तुतिरधरोत्तरयोररण्योः श्रूयमाणा चोपपन्ना भवतीति युक्तं॥

इति तृतीये द्वादशी कण्डिका॥ * ॥

## अथाग्नेय्य इष्टयः॥ १॥

अथानन्तरं या वक्ष्यन्ते ता अग्निदेवत्या इष्टय इति वेदितव्यमित्यस्य सूत्रस्यार्थः। यान्यत्र चतुर्थ्यन्तानि पदानि तान्यग्नेर्गुणवाचकानीत्यर्थः। एतेनावगम्यते सर्वत्र चोदितैव देवता चोदनायां सत्यां, असत्यान्तु चोदनायां याज्यानुवाक्यालिङ्गादवगन्तव्या। देवतागुणस्तु चोदनात एवावगन्तव्यः। कथन्तर्हि वैश्वानरपार्जन्यायां वैश्वानरशब्दोऽग्नेर्गुणः। तयोरेव याज्यानुवाक्ययोस्तत्र प्रवेशात्। अत्र हि वैश्वानरशब्दस्याग्निगुणत्वं चोदितमेवेति॥

## व्रतातिपत्तौ व्रतपतये॥ २॥

यस्मिन् कर्मणि यानि चोद्यन्ते व्रतशब्देन धर्मशब्देन वा तत्र तेषामतिपत्तौ एषेष्टिः कार्या॥

साग्नावग्निप्रणयनेऽग्निवते ॥ ३ ॥

निवृत्तकर्मणाऽनिवृत्तकर्मणा वाऽग्निना सहितः आहवनीयायतने यद्यन्योऽग्निराहवनीयार्थमुद्ध्रियेत तमग्निमनिधायैव स्मरति चेदायतनस्थमुद्धृत्य इदानीमुद्धृतं निरादध्यात्। तथासतीष्टिर्न भवति। एतस्मिन्नपि पक्षे यद्यनपवृत्तकर्मोद्धृतेत तदा व्याहृतिहोमः कर्त्तव्यः। अपवृत्तकर्मा चेन्न किञ्चिदपि प्रायश्चित्तं विद्यते। यद्यस्मृत्वैव तस्मिन् पूर्वप्रणीते निदध्यात् तदा इयमिष्टिः कार्या ॥

क्षामायागारदाहे। शुचये* संसर्जनेऽग्निनान्येन ॥ ४ ॥

अन्य इति शवाग्निरुच्यते ॥

मिथश्चेद्विविचये ॥ ५ ॥

गार्हपत्यादयः सर्वे द्वौ वा परस्परं यदि संसृज्येरन् तदा विविचये इष्टिः कार्या ॥

गार्हपत्याहवनीययोर्वीतये ॥ ६ ॥

पूर्वस्यायमपवादः ॥

ग्राम्येण संवर्गाय ॥ ७ ॥

ग्राम्यः पचनाग्निः ॥

---

* संसर्जनने इति पु० टू०

वैद्युतेऽप्सुमते। वैश्वानराय विमतानामन्नभोजने ॥ ८ ॥

विमता विमनस्काः शत्रव इत्यर्थः। द्विषदन्नं यद्याहिताग्निर्भुञ्जीत तदा वैश्वानरायेष्टिः कार्या ॥

एषैव कपाले नष्टेऽनुद्वासिते ॥ ९ ॥

केषाञ्चिदध्वर्यूणां पुरोडाशश्रपणानन्तरमेव कपालोद्वासनं विहितं केषाञ्चित् कर्मसमाप्तौ, केषाञ्चिदनुद्वासनमेव। तत्र पूर्वयोः पक्षयोरनुद्वासिते नष्टे च एषेष्टिर्भवति। अनुद्वासनपक्षेऽपि प्रयोगमध्ये भवति, प्रयोगसमाप्तौ न भवति विध्यपराधाभावात् ॥

अभ्याश्राविते वा ॥ १० ॥

येषां श्रपणानन्तरमुद्वासनं तेषामनुद्वासिते कपाले सत्याश्रावणे कृतेऽप्येषेष्टिः कर्त्तव्या ॥

सुरभय एव यस्मिञ्जीवे मृतशब्दः ॥ ११ ॥

यस्मिन्नाहिताग्नौ जीवत्येव मृत इति यदि शब्दः सञ्जायेत तदा इयमिष्टिः कार्या। एवशब्दो गुणनियमार्थः। सुरभय एव न सुरभिमत इति। तेन अन्यत्र गुणान्तरसम्बन्धोऽप्यभ्युपगतो भवति, यथा क्षामाय क्षामवते वेत्येवमादि ॥

त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतान्यग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निनाग्ने त्वमस्मद्युयोध्यमीवा अक्रन्दद-ग्निस्तनयन्निव द्यौर्वि ते विष्वग्वात जूतासो अग्ने त्वामग्ने मानु-षीरीडते विशोऽग्न आयाहि वीतये यो अग्निं देववीतये कुवित्सु नो गविष्टये मा नो अस्मिन् महाधनेऽप्स्वग्ने सधिष्टव यदग्ने दिविजा अस्यग्निर्होता न्यसीदद्यजीयात् साध्वीमकर्देववी-तिन्नो अद्येति। यस्य भार्या गौर्वा यमौ जनयेदिष्टिर्मरुतः॥ ॥ १२ ॥

मरुतोऽस्यामिष्टौ देवता॥

सान्नाय्ये पुरस्ताच्चन्द्रमसाभ्युदितेऽग्निर्दातेन्द्रः प्रदाता वि-ष्णुः शिपिविष्टः॥ १३॥

सान्नाय्यशब्देन आमावास्यं कर्मोच्यते। तस्मिन्नारब्धे सति चन्द्रमा यदि पुरस्तादभ्युदियात् तदा एतामिष्टिं कुर्यात्। अस्या अमावास्याविकारत्वात् प्रायश्चित्तेष्टीनां यो धर्म उपांशुत्वं वार्त्रघ्नाज्यभागता च स न भवति, एकदेशविकृतमन-न्यवद्भवतीति वृधन्वन्तावित्यादयोऽमावास्याधर्मा एव भ-वन्ति। एतदुक्तं भवति। अकालेऽमावास्याकर्मण्यारब्धे सति अकालोऽयमिति ज्ञाने तामेवामावास्यां देवताभिर्विकृतां

समापयेत्। अत्र काले प्राप्ते पुनर्यागोऽस्ति नास्तीत्यध्वर्युभिः सह निश्चयः कार्यः। होताऽग्नेगुणः। प्रहातेऽस्य। शिपिविष्टो विष्णोः॥

अग्नेदा दाशुषे रयिं सयन्ता विप्र एषां दीर्घस्ते अस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी वषट् ते विष्णवास आकृणोमि प्र तत्ते अद्य शिपिविष्टनामेति। अपि वा प्रायश्चित्तेष्टीनां स्थाने तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायते॥१४॥

प्रायश्चित्तप्रकरणे या इष्टय इष्टिशब्देनैव चोद्यन्ते, याश्च ब्राह्मणोक्तास्तासामयं वैकल्पिको विधिरुच्यते। यास्तासामिष्टीनां देवतास्तासामेकैकस्यै देवतायै एकैकां पूर्णाहुतिं जुहुयात्। द्वादशगृहीतेन स्रुचं पूरयित्वा यद्धूयते सा पूर्णाहुतिरित्युच्यते। अयं पुनरनुपक्रान्तदर्शपूर्णमासस्य भवति, हविर्होममध्ये च, नान्यत्र भवति॥

हविषां स्कन्नमभिमृश्येद्देवा जनमगन् यज्ञस्तस्य मामीरवतु वर्धतां। भूतिर्घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहसः। भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा। यज्ञस्य त्वा प्र मयोन्मयाऽभि मया प्रति मया हर्षस्व स्कन्देति॥१५॥

देवा जनमित्यादिना स्कन्देत्यन्तेन स्कन्नहविरभिमृशेत्॥

आहुतिश्चेद्बहिष्परिध्याग्नीध्र एनां जुहुयात्॥ १६॥

यदि हूयमानाहुतिर्बहिष्परिधि स्कन्देत् तदा तस्याः स्कन्नाभिमर्शने कृते तत आग्नीध्रस्तामादाय तूष्णीमेव जुहुयात्॥

हुतवते पूर्णपात्रं दद्यात्॥ १७॥

होमं कृतवते आग्नीध्राय तदानीमेव येन केनचिद्धान्यरसादिना पूर्णपात्रं दद्यात्॥

देवते अनुवाक्ये याज्ये वा विपरिहृत्याज्ये अवदाने हविषी वा यद्वो देवा अतिपातयानि वाचा च प्रयुतो देवहेडनं। अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहेत्याज्याहुतिं हुत्वा मुख्यं धनं दद्यात्॥ १८॥

देवताविपर्यास आवाहनादिषु व्युत्क्रमः। अनुवाक्याविर्यासोऽन्यदीयामन्यस्यानुब्रूयात्। एवं याज्याविपर्यासः। आज्यविपर्यासो जौहवऔपभृतयोरित्यादि। अवदानविपर्यासः पूर्वार्द्धात् पूर्वमित्यादि। हविर्विपर्यासो निर्वापणादिषु व्युत्क्रमः। यागे चान्यदीयस्यान्येन यागः। एतेषु

'यद्वो देवा अतिपातयानि' इत्याहुतिं हुत्वा स्वगृह्ये यत् प्रधानभूतं द्रव्यं तद्धोमकर्त्रे ब्रह्मणे दद्याद्यजमानः। हुत्वेत्यत्र समानकर्तृकत्वमविवक्षितं। याज्यानुवाक्ययोस्तु तस्मिन् कर्मण्यविहितयोस्तद्देवत्ययोरन्यदेवत्ययोर्वा विपर्यासे सति यागात् प्रागेव भ्रेषज्ञाने सति प्रायश्चित्तं हुत्वा पुनर्विहिते वाऽनूच्य यष्टव्यं। हुते तु यागे अनुवाक्याविपर्यासज्ञाने प्रायश्चित्तमेव, न पुनर्यागाभ्यासः। याज्यायामप्यविहितायां तद्देवत्यायां विहितदेवतादेशं हुत्वा विहितामेव देवतां ध्यायन् यदि वषट् कुर्यात् तदापि नाभ्यासः। अन्यदेवत्यायामपि आदेशध्याने विहितविषये स्यातां चेत् तदापि नाभ्यासः। अतोऽन्यथा चेद्यागावृत्तिः कार्या। यागविषयेऽपि हविर्विपर्यासे यागावृत्तिशङ्का नैव कर्त्तव्या, कृतत्वाद्यागस्य। एतद्विलक्षणं यागस्य देवतोद्देशेन स्वद्रव्यत्यागो याग इति। देवता तावद्विहिते चास्मिन् कर्मणि द्रव्यमपि स्वमेव। अथायमभिप्रायः। अन्यस्यै सङ्कल्पितत्वात् स्वत्वमपगच्छतीति। एवञ्चेत् तस्या अपि देवतायै यष्टुं न शक्यते स्वत्वाभावात्। अथ सङ्कल्पनकाल एव यागः क्रियत इति, सुतरां विपर्यासे यागो नावर्त्तयितव्यः, यागस्यावैगुण्यात्। तस्माद् यथासङ्कल्पकरणमेवात्रापराधो न यागसिद्धिरिति। यदि पुनराग्नेयेनाग्नीषोमीययागे हुते भ्रेषो ज्ञायेत तदाग्नीषोमीयेणाग्नेययागः कर्त्तव्यः, सन्निहितत्वात् तस्य द्रव्यस्य, कार्यान्तरस्य चाभावात्। तस्मिन् सन्निहिते सति स्वद्रव्ये द्रव्यान्तरोपादानमशक्यमिति, तस्माद्

कृत्वा प्रायश्चित्तमेव कुर्यात्। अत्र व्याहृतिहोमस्य कार्यः। एतद्विपर्यासेऽन्तरित इत्यत्रैवोक्तं॥

**स्थानिनीमनावाह्य देवतामुपोत्थायावाहयेत्॥ १९॥**

यदि कस्मिंश्चित् कर्मणि यष्टव्यां देवतामनावाह्यैव उत्तरं कर्म कुर्यात् तदा यावति गते स्मरति तदैवोत्थाय आवाहयेत्। वर्त्तमानावधिस्वरेण, न मन्त्रेण। यदि मन्त्रेणैव स्यादुपोत्थानं न विदध्यात्, तस्याप्यावाहनधर्मत्वात्, तस्मादुपोत्थानविधानान्न मन्त्रत्वनियमः, अवधिस्वर एवेति सिद्धं॥

**मनसेत्येके। आज्येनास्थानिनीं यजेत्॥ २०॥　　॥१३॥**

यद्यस्थानिनीं प्रमादादावाहयेत् तदा तस्मिन्नेव क्रमे तां यजेत्, निगमेषु च निगमयेत्। यजेदितिवचनं यद्देवत्यो याग एवायं नाहुतिहोमइत्येवमर्थं॥

इति तृतीये त्रयोदशी कण्डिका॥ ० ॥

हविषि दुःशृते चतुःशरावमोदनं ब्राह्मणान् भोजयेत् ॥ ॥१॥

यदा हविरपक्कं भवति तदा तेनैव हविषा तत् कर्म समाप्य चतुःशरावपरिमितव्रीहिभिरोदनं पक्का चतुरो ब्राह्मणान् भोजयेत् ॥

क्षामे शिष्टेनेष्ट्वा पुनर्यजेत ॥ २ ॥

एकदेशक्षामस्याशक्यपरिहारत्वात् प्रायश्चित्तं न भवति। यदा पुनरदग्ध किञ्चिदस्यवदानेभ्यो न पर्याप्तञ्च तदा एतत् प्रायश्चित्तं भवति ॥

अशेषे पुनरावृत्तिः ॥ ३ ॥

हविष्यशेषे दग्धे पुनरावृत्तिः कार्या। पुनर्यागपुनरावृत्त्योरयं विशेषः। वर्त्तमानं प्रयोगं समाप्य पुनरग्न्यादित एवारभ्याम्नात् क्रिया पुनर्यागः। पुनरावृत्तिस्तु वर्त्तमान एव प्रयोगे नष्टस्य हविषः पुनरुत्पादनमिति। पुनरावृत्तौ तु पुनरुत्पादितेन हविषा स एव प्रयोगः समापयितव्यः। अयमनयोर्विशेषः ॥

प्रागावाहनाच्च दोषे ॥ ४ ॥

पुनरावृत्तिप्रसङ्गात् सूत्रत्रयमारब्धं। आवाहनात् प्राक् हविर्दोषे सति पुनरावृत्तिरेव ॥

अप्यत्यन्तं गुणभूतानां ॥ ५ ॥

गुणभूतानामत्यन्तमपि पुनरावृत्तिरेव। अत्यन्तमित्याकर्मपरिसमाप्तेरित्यर्थः ॥

प्राक् स्विष्टकृत उक्तं प्रधानभूतानां ॥ ६ ॥

यत् पुनर्हविषां व्यापत्तावित्युक्तं तत् प्रधानहविषामेव, स्विष्टकृतस्य प्रागेवेति चोभयमनेन नियम्यते। तेन अत्राप्यङ्गानां पुनरावृत्तिरेव ॥

अवदानदोषे पुनरायतनादवदानं ॥ ७ ॥

प्रसक्तानुप्रसक्तमिदं। मध्यात् पूर्वार्धाद्गृहीतस्यावदानस्य दोषे सति तस्य हविषो मध्यपूर्वार्धाभावात् सदप्यसदेवेति मन्यमानः प्रधानहविषश्चेदाज्येनेष्टिमित्यादि कर्त्तव्यं। अङ्गहविषश्चेत् पुनरावृत्तिरेव। मध्यपूर्वार्धयोरेव साधनत्वेनोपसंहारादिति यो व्यवतिष्ठते तस्योत्तरमिदं सूत्रं। अवदानदोषे पुनरप्यवदानायतनान्मध्यात् पूर्वार्धादेवावदातव्यं। आपेक्षिकत्वात् तयोः शब्दयोरिति। चतुर्मुष्ट्यादिभिः व्रीहिभिः सम्पादितं हविः सर्वं यागार्थमेव। तत्र ह्यवदानेन यागनि-

द्वौ सत्यां तादर्थ्यं तत्रोपसंहृतं भवेत् नान्यथा। यत्कार्यार्थं यदुपादीयते तस्य तत्कार्याकरणे तत् प्रति तादर्थ्यं नापैति। अतस्तादर्थ्यानपायात्तेनैव हविषा यष्टव्यमिति सिद्धं॥

द्वेष्ये त्विह दक्षिणां दद्यात्॥ ८॥

प्रकृतमनुसृतं। 'क्षामे भिष्टेनेष्ट्वा' इत्येतस्मिन् प्रयोगे या दक्षिणा सा द्वेष्ये दातव्या नर्त्विग्भ्य इत्यर्थः॥

दक्षिणादान उर्वरां दद्यात्॥ ९॥

सर्वार्थमिदं सूत्रं। सर्वेषु कर्मविहितदक्षिणादाने उर्वरां दद्यात्। सस्यसम्पन्ना भूमिरुर्वरेत्युच्यते॥

कपालं भिन्नमनपवृत्तकर्मे गायत्र्या त्वा शताक्षरया सन्दधामीति सन्धायापोऽभ्यवहरेयुरभिन्नो घर्मो जीरदानुर्यत आर्त्तस्तदगन् पुनः। इध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसन्तरन्तु। त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये यजन्ते। तेऽभिच्छिद्रं प्रतिदध्मो यजत्र स्वाहा यज्ञो अप्येतु देवानिति॥ १०॥

अनपवृत्तकर्मवचनात् पुरोडाशश्रपणादूर्ध्वं न प्रायश्चित्तमिति गम्यते॥

एवमवलीढाभिन्निन्नेषु ॥ ११ ॥

अवलीढानि श्वादिभिरभिन्निन्नानि तद्दर्शनादिभिः अन्यथा वाऽशुचित्वमन्यानि कपालान्यभिन्नानि अप्येवं कुर्यात्। भेदाभावात् मन्त्रानमर्थलुप्तं। तेनाभिन्न इत्यादिना अपोऽभ्यवहरेयुः ॥

अप एवान्यानि *मृण्मयानि भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥ १२ ॥

कपालेभ्योऽन्यानि मृण्मयानि भिन्नान्यभिन्नानि च 'भूमिर्भूमि' इति मन्त्रेण अप एवाभ्यवहरेत्, न सन्दध्यादित्यर्थः ॥

यदि पुरोडाशः स्फुटेद्वोत्पतेत वा बर्हिष्येनं निधायाभिमन्त्रयेत किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि। अघोरो यज्ञियो भूत्वासीद सदनं स्वमासीद सदनं स्वमिति। मा हिंसीर्देवप्रेरित आज्येन तेजसाऽऽज्यस्वमानः किञ्चन रीरिषः। योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषीति ॥ १३ ॥

स्फुटेत् भिन्द्यादित्यर्थः। उत्पतेत उद्गच्छेदित्यर्थः। पूर्वो निधानमन्त्रः उत्तराभिमन्त्रणार्थः, आनन्तर्ययोगात् ॥

---

* मृन्मयानीति सर्वत्र।

अग्निहोत्राय कालेऽग्नावजायमानेऽप्यन्यमानीय जुहुयुः ॥ ॥१४॥

अग्निहोत्रहोमार्थं प्रणयनकाले समारूढोऽग्निर्मथ्यमानो यदि न जायेत तदाऽन्यं लौकिकमग्निमानीय प्रणीय तत्रैव होमः कार्यः। एतदनुगतेन भवति। अनुगते तु मन्थनादि तपस्वतीष्ट्यन्तं तत्र प्रायश्चित्तं। तत्राग्निसन्धानमेव मन्थनप्रवृत्तौ निमित्तं, नाग्निहोत्रहोमः। समारूढे तु नैमित्तिकस्याभावात् अग्निहोत्रायैव मन्थनस्य निमित्तं नान्यत्। अतः समारूढ एवेति युक्तमुक्तं। तेनानुगतावजायमानेऽपि यावज्जन्म तावन्मथितव्यमेवेति। ततस्तपस्वतीष्टिः। तत्राग्निहोत्रहोमोऽनुद्भूतप्रायश्चित्तेन सह यदि होमकालोऽतिपन्नस्तदा मनस्वतीहोमस्य कार्यः। अप्यन्यमिति अन्यशब्दाल्लौकिकमग्निमानीय जुहुयुः। अपिशब्दाद्ब्राह्मणपाण्यादि वक्ष्यमाणमपि गम्यते॥

पूर्वालाभ उत्तरोत्तरं॥१५॥

अग्न्यादीनां पृथिव्यन्तानां पूर्वपूर्वालाभे उत्तरोत्तरं गृह्णीयुः। पूर्वालाभ इत्यलाभवचनादलाभे वचनान्तरविधिरयं न प्रतिनिधिनियम इत्यध्यवसीयते। तेन दृष्टार्थानामङ्गानां मध्ये यस्य कार्यमस्ति तदेव कार्यं, नान्यत्॥

ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु, काष्ठेषु पृथिव्यां ॥ १६ ॥

अग्नौ सर्वधर्मसम्भवात् तस्य पृथग्योगभावः। पाण्यादीनां चतुर्णां इन्धनादि अपणादि वर्जयित्वाऽन्यत् सर्वं सम्भवतीति पृथग्भावः। काष्ठानामबभावे विधानादुदककार्याण्यपि न स्यु-रिति तेषां पृथग्भावः। पाण्यादिषु पञ्चसु आकृतिधारणा-र्था समिद्भवति, इन्धनार्थास्तु न भवन्त्येव समिधः। पृथिव्यां तु धारणार्थापि समिन्न भवति, काष्ठाभावे तस्या विधा-नात्। एवमन्यदपि विचार्य वक्तव्यं ॥

हुत्वा त्वपि मन्थनं ॥ १७ ॥

होमं हुत्वाऽनन्तरमेव मन्थनमपि भवति। अपिशब्दात् कालान्तरेऽपि मन्थनं भवति। अत्र विनिवेशः। यदा प्रयाण-काले प्रयाणं परिसमाप्तं तदा होमानन्तरमेव मन्थनं भवति। यदा त्वपरिसमाप्तं प्रयाणं तदा पुनरपि होमकाल एव मन्थ-नमिति। तुशब्दोऽवधारणार्थः। हुत्वा मन्थनमेव भवति न पुनर्होम इति ॥

पाणौ चेद्वासेऽनवरोधः ॥ १८ ॥

यदि पाणौ जुहुयात् तदा ब्राह्मणस्य वासार्थिनः नाव-रोधः कार्यः ॥

कर्णे चेन्मांसवर्जनं ॥ १९ ॥

अत्राजमांसवर्जनं भवति ॥

स्तम्बे चेन्नाधिशयीत ॥ २० ॥

अत्र दर्भाणामनधिशयनं ॥

अप्सु चेदविवेकः ॥ २१ ॥

अत्राविवेकोऽपां इमा भोजनीया इमा अभोजनीया इत्येवंरूपाः ॥

एतत् सांवत्सरं व्रतं यावज्जीविकं वा ॥ २२ ॥

पूर्ववद्विकल्पप्रतिभासहेतुर्द्रष्टव्यः ॥

अग्नावनुगतेऽन्तराहुती। हिरण्य उत्तरां जुहुयाद्धिरण्य उत्तरां जुहुयात् ॥ २३ ॥ ॥ १४ ॥

आहुत्योरन्तराऽग्नावनुगते सति हिरण्यं निधाय तस्मिन् द्वितीयामाहुतिं जुहुयात्। हिरण्य एव यथासम्भवं शेषकार्याणि कुर्यात्, न पुनरग्निरुद्धर्त्तव्यः। अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति तृतीये चतुर्दशी कण्डिका ॥ ० ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां तृतीयोऽध्यायः ॥ * ॥

॥ ॐ ॥

दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन ॥ १ ॥

उक्ता हविर्यज्ञास्तेषु च प्रायश्चित्तमुक्तं। इदानीं सर्वसोमानां प्रकृतिभूतं ज्योतिष्टोमं वक्तुकामः तदधिकारिविशेषणार्थं केषाञ्चित् कर्मणामनुष्ठानक्रममुक्तवानाचार्यः। इष्टिराग्रयणेष्टिः। पशुर्निरूढः। आधानानन्तरं दर्शपूर्णमासयोरारम्भ उक्तः। तदारम्भोत्तरकालं इष्टिपशुचातुर्मास्यैरिष्ट्वा सोमेन यष्टव्यं। अथशब्दः सोमेन सम्बध्यते, स चाधिकारार्थः। सोमगुणकं कर्म्म सोम इत्युच्यते, तच्च ज्योतिष्टोमाख्यं। एतदुक्तं भवति। अग्न्याधेयानन्तरमनेन क्रमेण दर्शपूर्णमासादिभिरिष्ट्वा ज्योतिष्टोमाख्येन सोमेन यष्टव्यं। इत उत्तरमाषष्ठाध्यायपरिसमाप्तेस्तमेवाधिकृत्य सर्वमुच्यत इति ॥

ऊर्द्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके। प्रागपि सोमेनैके ॥ ॥ २ ॥

'सोमेन यक्ष्यमाणः' इत्यस्मिन् सूत्रे वसन्तादिकालेभ्यः कालान्तरविशिष्टाधानविधिपरे वाक्ये सोमाधानयोरानन्तर्य-

मप्युक्तं भवति, अतस्तस्यार्थस्यावक्तव्यत्वादिदमन्यदाम्नानार्थमित्यवगम्यते। तत्राधानं कृत्वाग्निहोत्रहोमं कुर्वतः प्रागेव दर्शपूर्णमासयोरारम्भात् सोमेन यष्टुं यद्युपपद्यते तथा तस्मिन्नपि काले यष्टव्यमिति सूत्रार्थः॥

तस्यर्त्विजः॥ ३॥

वक्ष्यन्त इति शेषः। ऋत्विजः कर्त्तार इत्यर्थः। त एवंरूपा इत्याह॥

चत्वारस्त्रिपुरुषाः॥ ४॥

त्रयः पुरुषा येषां ते त्रिपुरुषाः। तेष्वृत्विक्षु वक्ष्यमाणेषु चत्वारः पुरुषवन्तः। तेभ्यश्चतुर्भ्योऽन्ये तेषाञ्चतुर्णामेव पुरुषा इति वेदितव्याः। अनेन प्रकारेण चतुर्णां मुख्यत्वं, इतरेषाममुख्यत्वमित्यवगतं भवति। एते मुख्या एतेषां पुरुषा इत्याह॥

तस्य तस्योत्तरे त्रयः॥ ५॥

अस्मिन् ऋत्विजामनुक्रमणे यस्य यस्योत्तरे त्रयस्त्रयः सन्ति स मुख्यः। उत्तरे च ये त्रयस्त्रयस्ते तस्य तस्य पुरुषा इति प्रतिपत्तव्याः॥

होता मैत्रावरुणोऽच्छावाको ग्रावस्तुदध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोतोद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति॥ ६॥

परकर्त्तृनिर्द्देशः सर्वपुरुषव्यापिपदार्थानुष्ठाने अयमेव क्रम इतिज्ञापनार्थः॥

एते हीनैकाहैर्याजयन्ति॥ ७॥

एते याजयन्तीतिवचनादहीनैकाहैः षोडशैव पुरुषा याजयन्ति, न सदस्यशमितृचमसाध्वर्यव इति ज्ञापितं भवति। अतः सत्यपि वरणे तेषामृत्विक्त्वं न भवति। अहीनैकाहैरितिवचनं सत्रेष्वेतेषामपि वरणनिवृत्त्यर्थं। याजयन्तीतिवचनं स्वद्रव्यत्यागात्मकत्वाद्यागपदार्थस्य ऋत्विग्भिः स कर्त्तुं न शक्यतइतिज्ञापनार्थं। अतः स्वामिकर्तृक एव यागपदार्थो भवतीति सिद्धं॥

एत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समोप्याग्नींस्तन्मुखाः सत्राण्यासते॥ ८॥

एत एवेत्यवधारणात् सदस्यादिवर्जिताः पूर्वोक्ता एव षोडशपदार्थसम्बन्धिनः पुरुषा अग्नीनाधाय प्रथमयज्ञेनेष्ट्वा गृहपतिसंज्ञकेन केवलयजमानपदार्थकारिणा सप्तदशेन पुरुषेण सहिताः सन्तः स्वान् स्वानग्नीन् सर्वान्निश्रयित्वा सर्वे च दीक्षित्वा गृहपतिमुखाः सत्राण्यासते सत्रैर्यजन्त इत्यर्थः। इष्टप्रथमयज्ञा इत्याहिताग्निविशेषणं। यद्याहिताग्नयः तदेष्टप्रथमयज्ञा भवेयुरिति। तेनानाहिताग्नीनामपि स-

चासनमस्तीति गम्यते। तन्मुखाः गृहपतिप्रधानाः गृहपत्यभिप्रेतवैकल्पिकपदार्थकारिणः तथा विरुद्धधर्मसमवाये च गृहपतेरविरोधेन कर्त्तव्यमित्यर्थः॥

तेषां समावापादि यथार्थमभिधानमैष्टिके तन्त्रे॥९॥

तेषामिति सत्रिणः पुरुषा उच्यन्ते। समावापइति यस्मिन् कर्मण्यग्नयः समोप्यन्ते तत् कर्म समावापशब्देनोच्यते। साग्नीनामनग्नीनाञ्च सत्रासनमुक्तं। तत्र साग्नीनां सत्रिणां समावापादि यथार्थमूहः कर्त्तव्यः। ऐष्टिके तन्त्रे, नाऽनैष्टिकेन पाशुक इत्यर्थः। तन्त्रग्रहणं ऐष्टिकसम्बन्धेऽपि तन्त्रशब्दवाच्यएव भवति नान्यत्रेत्येवमर्थं। तेन प्रथमाध्यायविहिते प्रायश्चित्तेऽपि भवति, तस्मिन्नध्याये तन्त्राधिकारात् न तृतीयाध्यायविहिते इति तन्त्रवचनं॥

दीक्षणाद्यनग्नीनां॥१०॥

साग्नीनां समावापप्रभृति यथार्थमभिधानमुक्तं। इदानीमनग्नीनां दीक्षणीयाप्रभृत्येव यथार्थमभिधानमैष्टिके तन्त्र इत्युच्यते। सत्राणामग्निसाध्यत्वादग्नीनां साग्निभिः सहैव सत्रासनं भवति। तत्र दीक्षणात् प्राक्तनेषु एकश्चेत् साग्निरेकवचनेन, द्वौ चेद्द्विवचनेन, बहवश्चेद्बहुवचनेन इत्येवं भवति। सत्रेष्वग्निबहुत्वे च सति सर्वेषु यजुर्निगदेश्विति यथार्थमूह

प्राप्ते 'समावापादि' इत्यनेन सूत्रेण यजमानाभिधायिनामेवेति नियम्यते, ऐष्टिके तन्त्र इत्यपि च। तत् उत्तरसूत्रेण तावेव नियमावनग्नीनां दीक्षणीयायेत्र न प्राग्भाविन्युखासम्भरणादाविति विधीयते॥

अग्निर्मुखमिति च याज्यानुवाक्ययोः॥ ११॥

ऋक्त्वादप्राप्त ऊहो विधीयते॥

दण्डप्रदाने॥ १२॥

अनैष्टिकत्वादस्य मन्त्रस्योहविधानं। अस्मिन् मन्त्रे यजमानविषयस्य पदस्याभावेऽप्यूहविधानसामर्थ्याद्दण्डविषयस्यैवायमूहविधिरिति कल्पनीयं। अत्र बहवो दण्डाः सन्तीति दीक्षितबहुत्वाद् दीक्षितदण्डस्य च। प्रकृतौ मैत्रावरुणदण्डत्वमवगतं। अत्र च ते बहवः सन्निहिताः सन्ति, तेषाञ्च सर्वेषां सहप्रदानं प्राप्तं। एवं प्राप्ते ऊहो विधीयते मैत्रावरुणस्य, सर्वान् दण्डान् गृहीत्वा एकेन दण्डेन दण्डित्वसिद्धेः। तेषामेकेनाभिमतेन सहितः स्वपदार्थान् कुर्यात्, इत्येवमत्र कल्पयितव्यं॥

प्रैषेषु निर्वित्सु॥ १३॥

अप्राप्तो विधीयते॥

घृतयाज्यायां ॥ १४ ॥

अनैष्टिकत्वादुक्थ्याप्राप्तविधिः ॥

कुक्षाच्च ॥ १५ ॥

चक्रादप्राप्तिः ॥

अच्छावाकनिगदोपहवप्रत्युपहवे च ॥ १६ ॥

निगदश्च उपहवश्च प्रत्युपहवश्च निगदोपहवप्रत्युपहव-मिति द्वन्द्वैकवद्भावः। पुनश्चाच्छावाकशब्देन षष्ठीसमासः। 'अच्छावाकस्य निगदे यजमानहोतरध्वर्यव:' इत्यत्र, उपहव-प्रत्युपहवे प्रत्येता सुन्वन्नित्यत्र ॥

आपयाणि गृहपतेः प्रवरित्वात्मादीनां मुख्यानां ॥ १७ ॥

आर्षेयवरणे गृहपतेः प्रथमं वरित्वा आत्मादीनां मुख्यानां प्रवृणीत। गृहपतेः पृथग्वचनं 'यावन्तोऽमन्त्रिताः' इत्यत्रापि पृथग्वरणार्थं। आत्मादिवचनं दीक्षाक्रमनिवृत्त्यर्थं। तेन सूक्तवाकादौ नामादेशे दीक्षाक्रमस्यास्य च विकल्पः सर्वत्र सिद्धो भवति ॥

एवं द्वितीयतृतीयचतुर्थानां ॥ १८ ॥

सर्वात्मवर्गादित्वमस्मत्सूत्रोक्त एव क्रमश्च ॥

यावन्तोऽनन्तर्हिताः समानगोत्रास्तावतां सकृत् ॥ १९ ॥

समानगोत्राः समानार्षेया इत्यर्थः। सगोत्राणामपि भिन्नार्षेयत्वसम्भवात् समानार्षेयत्वमेव तन्त्रसिद्धौ निमित्तमिति लक्षणार्थत्वमत्राश्रितं, समानगोत्रशब्दस्यार्षेयवरणस्याहवनीयसंस्कारत्वे सति आहवनीयभेदे च सत्यार्षेयसैक्याद्वरणकालैक्याच्च वरणोच्चारणे विशेषाग्रहणात् तन्त्रानुष्ठानमुक्तवानाचार्यः ॥

आवर्त्तयेद्वा द्रव्यान्वयाः संस्काराः ॥ २० ॥

वाशब्दः पक्षं व्यावर्त्तयति। आवृत्तिरेवात्र कर्त्तव्या। द्रव्यान्वयाः संस्काराः, यतः द्रव्ये अन्वयो येषां ते द्रव्यान्वयाः, संस्काराणां द्रव्यवशवर्त्तित्वादित्यर्थः। प्रतिप्रधानं गुणा आवर्त्तन्त इति प्रसिद्धो न्यायः। यत् पुनर्विशेषाग्रहणादनावृत्तिरिति, तदपि न। एकवचनान्तस्यार्षेयस्य बहुष्वनभिधानादिति। एवञ्चद्वचनोहः किमिति न क्रियते, 'तेषां समावापादि' इत्यत्र यजमानवाचिनामेवोहनियमात्, अत आवृत्तिरेवात्र युक्ता ॥

साग्निचित्येषु क्रतुषूखासम्भरणीयामिष्टिमेके ॥ २१ ॥

अग्निचयनमग्निचित्या, तया सह वर्त्तन्त इति साग्निचित्याः क्रतवः, तेषूखासम्भरणीयं नाम ऐष्टिकमेके शाखिनः आमनन्ति। उखासम्भरणप्रयोजना उखासम्भरणीया ॥

अग्निर्ब्रह्मण्वानग्निः क्षत्रवानग्निः क्षत्रभृत् ॥ २२ ॥

ब्रह्मण्वान् क्षत्रवान् क्षत्रभृच्छब्दाः अग्नेर्गुणास्तिस्रो देवताः ॥

एतेनाग्ने ब्रह्मणा वावृधस्व ब्रह्म च ते जातवेदो नमश्च पुरू-ण्यग्ने पुरुधा त्वाय सचित्र चित्रञ्चितयन्तमस्मे अग्निरीशे बृहतः क्षत्रियस्याचामिते सुमतिङ्काम्यर्वागिति। इदम्प्रभृतिकर्मणां शनैस्तरामुत्तरोत्तरं ॥ २३ ॥

इदम्प्रभृतिर्येषान्तानीदम्प्रभृतीनि। इदम्प्रभृतीनि च तानि कर्माणि च इदम्प्रभृतिकर्माणि, तेषामुत्तरोत्तरं शनैस्तरां भवति ॥

एतत्त्वपि पौर्णमासात् ॥ २४ ॥

एतदप्युखासम्भरणीयं पौर्णमासात् शनैस्तरां भवति। अत एतत् सिद्धं भवति मन्द्रादिषु त्रिषु स्थानेषु षष्ठेन यमेन

दर्शपूर्णमासयोर्मन्त्राणां प्रयोगः सप्तमेन वषट्कार इति। एवं पञ्चमचतुर्थतृतीयद्वितीयप्रथमैरुत्तरास्मारणीयाप्राजापत्यादीचणीयाप्रायणीयातिथ्याः प्रयोक्तव्याः। तस्मात् तस्मादुत्तरोत्तरेण वषट्कारः॥

प्रायणीयावत् सोमप्रवहणं॥ २५॥

मन्द्रस्य द्वितीयेन यमेनेत्यर्थः॥

ऊर्ध्वं प्रथमाया अग्निप्रणयनीयाया औपवसथ्येऽनियमः॥ ॥ २६॥

औपवसथ्ये यदग्निप्रणयनं तस्य प्रथमाया ऊर्ध्वं स्वरेष्वनियमो भवति मन्द्रो वा मध्यमो वा उत्तमो वा सर्वो वा। सर्वप्रयोगपक्षे मन्द्रादीनुत्तमपर्यन्तानामारोहणेरेव प्रयुञ्जीत। एकस्वरप्रयोगेऽपि यमानेवारोहयेत्॥

मध्यमादि घर्मे॥ २७॥ ॥ १॥

घर्मे मध्यमोत्तमयोरेवाऽनियमः, न मन्द्रस्य तत्र प्रवेश इत्यर्थः। अत्रापि स्वरयोर्यमानाञ्चारोहित्वमेव स्यात्॥

इति चतुर्थे प्रथमा कण्डिका॥ ०॥

दीक्षणीयायां धाय्ये विराजौ ॥ १ ॥

दीक्षाप्रयोजना इष्टिर्दीक्षणीया सा कर्त्तव्या। तस्यां धाय्ये विराजौ भवतः ॥

अग्नाविष्णू ॥ २ ॥

अस्यामियं देवता ॥

अग्निर्मुखं प्रथमो देवतानां सङ्गतानामुत्तमो विष्णुरासीत्। यजमानाय परिगृह्य देवान् दीक्षयेदं हविरागच्छतं नः। अग्निश्च विष्णो तप उत्तमं महो दीक्षापालाय वनतं हि शक्रा। विश्वैर्देवैर्यज्ञियैः संविदानौ दीक्षामस्मै यजमानाय धत्तमिति। साग्निचित्ये त्रीण्यन्यानि ॥ ३ ॥

हवींषीति शेषः ॥

वैश्वानर आदित्याः सरस्वत्यदितिर्वा ॥ ४ ॥

अन्त्ययोर्विकल्पः। त्रीण्यन्यानीत्युभयविशेषणात् आग्नावैष्णवादधिकानि त्रीणीति गम्यते ॥

धारयन्त आदित्यासो जगत्स्था इति द्वे एते एव भुवद्वद्भ्यो भवनपतिभ्यो वा ॥ ५ ॥

एते एवर्चौ आदित्येभ्यो भुवद्वद्भ्यः आदित्येभ्यो भुवनपतिभ्यश्च याज्यानुवाक्ये भवतः। भुवनपतिलिङ्गयोरेव भुवनपतीनां विधानादेतद्गम्यते। सगुणे अपि निर्गुणाय विहिते वचनादृते सगुणायास्ते न भवत इति ॥

नेदमादिषु मार्जनमर्वागुदयनीयायाः ॥ ६ ॥

इदमादिषु कर्मसु प्रागुदयनीयायाः न मार्जनं भवति। द्विविधश्चेह मार्जनं गृह्यते, चोदितं लैङ्गिकञ्च। परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते सम्राडाकाश्वालाले मार्जयन्त इति चोदितं। प्राच्यान्दिशि देवा ऋत्विजो मार्जयन्तामिति लैङ्गिकं, तदुभयं प्रतिषिध्यते। शास्त्रान्तरे च स्पष्टं वचनमस्ति। दीक्षणीयादिषु याज्ञविमोकादि न भवतीति। तेन उभयप्रतिषेधोऽवगम्यते। एवं सति दर्शनादग्नीषोमीयसवनीययोश्चात्वालमार्जनं न प्रतिषिध्यते। कुतः चात्वाले मार्जयित्वाऽध्वर्युपथ उपतिष्ठन्त इति सवनीये दर्शनं। अग्नीषोमीयेणाचात्वालमार्जनादिति सिद्धवदनुवादादग्नीषोमीयेऽप्यस्तीति गम्यते। एवं सत्यनयोर्न प्रतिषेध इति सिद्धं ॥

इदमादीडायां सूक्तवाके *चागूराशिःस्थाने ॥ ७ ॥

इडायां सूक्तवाके च या आशिषः तासां स्थाने आगूर्नाम मन्त्रः प्रयोक्तव्यः । आगुरं प्रक्षिप्याशिष उद्धृत्य यथा तौ प्रयुज्येते इडासूक्तवाकौ तथा पाठेनैव दर्शयति ॥

उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेति तस्मिन्नुपहूतः ॥ ८ ॥

एवमिडानिगद इत्यर्थः । 'उपहूतोऽयं यजमानः' इत्यस्मादुपरिष्टात्तस्मिन्नुपहूत इत्यस्मात् पुरस्तात् यः पदसमुदायस्ता आशिषः पठ्यन्ते । तत्स्थाने यः पदसमुदाय इदानीं पठ्यते असावागूरित्युच्यते । एवमिडानिगदः ॥

आशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्ते ॥ ९ ॥

इत्येवं सूक्तवाक इत्यर्थः। आशास्तेऽयं यजमान इत्यस्मादुपरिष्टात् आशास्ते यदनेन हविषेत्यस्मात् पुरस्तात् यः पदसमुदायः ता आशिषः । तत् स्थाने यः पदसमुदाय इदानीं पठ्यते साचागूः । एवं सूक्तवाकनिगदः । 'अस्य यज्ञस्यागुर उदृचमशीय'

---

* चागूराशीःस्थाने इति पु० द्र० ।

इत्युभयथाऽऽगूः। अस्यायमर्थः। अस्य यज्ञस्य प्रारब्धस्य समाप्तिं प्राप्नुयामिति तस्मिन् उपहूत इतीडायां प्राप्नुयामिति आशास्ते इति सूक्तवाके, अत इयमप्याशीरेव। आगूरित्यस्य उद्गामाशंसनरूपलादागूरित्युच्यते ॥

न चात्र नामादेशः ॥ १० ॥

पाठादेव नामादेशाभावे सिद्धे पुनः प्रतिषेधवचनं अन्यत् सर्वं प्रकृतिवदेवेतिज्ञापनार्थं ॥

प्रकृत्याऽन्त्य ऊर्ध्वं पश्विडायाः ॥ ११ ॥

सवनीयपश्विडात्र गृह्यते, तच्छब्दचोदितत्वात्। अन्त्य इतिवचनादहर्गणेष्वन्त्येऽहनि पश्विडा गृह्यते। एकाहेषु तदेवाद्यमन्त्यञ्च भवति ॥

दीक्षितानां सञ्चरो गार्हपत्याहवनीयावन्तराग्नेः प्रणयनात् ॥ १२ ॥

सञ्चरशब्द आसनशयनादीनां प्रदर्शनार्थः। तेनास्मिन्नवधौ तयोरेवाग्न्योर्मध्ये समीपे यजमाना आवर्त्तेरन्। अग्निप्रणयनोत्तरकालं सञ्चरदेशः शास्त्रान्तरादवगन्तव्यः ॥

दीक्षणादिरात्रिसङ्ख्यानेन दीक्षा अपरिमिताः ॥ १३ ॥

प्रकृतेरिदं दीक्षाविधानं, यस्मिन्नहोरात्रे दीक्षणं क्रियते तदेवारभ्य रात्रीरेव सङ्ख्यायापरिमिता दीक्षाः कर्त्तव्याः। तस्मात् 'दीक्षितो द्वादशाहं भृतिं वन्वीत' इति प्रकृतौ नित्यवदाम्नातं। तथा माससंवत्सरं यदा वा कृशः स्यादिति परिमिताः। ये अपरिमिताश्च दीक्षाकल्पाः शास्त्रान्तरे आम्नाताः तेषां प्रदर्शनार्थमपरिमितवचनं। अध्वर्युप्रत्ययत्वाद् दीक्षानियतेः, तत्सूचनमात्रमत्रोक्तवानाचार्यः। सत्राणां दीक्षाविधानमत्रोच्यते॥

एकाहप्रभृत्यासंवत्सरात्। संवत्सरन्त्वेव सत्रे॥ १४ ॥

महाव्रतसहिते सत्रेऽयं विशेषः संवत्सरमेवेति॥

द्वादशाहतापश्चितेषु यथासुत्योपसदः ॥ १५ ॥

तेषु सत्रेषु यथासुत्योपसदः तथा दीक्षा अपि कर्त्तव्याः। उपसत्सङ्ख्याया अन्यत्र विहितत्वादत्रैव विधिः कल्प्यते। यत्सङ्ख्याः सुत्या उपसदश्च तत्सङ्ख्या दीक्षा एवेति। एतदुक्तं भवति; द्वादशाहतापश्चितेषु यत्सङ्ख्याः सुत्यास्तत्सङ्ख्या एवोपसदश्च दीक्षाश्च भवन्तीति॥

कर्माचारस्त्वेकाहानां ॥ १६ ॥

आचीर्यतेऽस्मिन्नित्याचारः कालः । कर्मण आचारः कर्माचारः । एकाहानां प्रयोगकालो वक्ष्यत इत्यर्थः । एकाहशब्देनाच विकृत्येकाहा उच्यन्ते, बहुवचनसम्बन्धात्, प्रकृतौ दीक्षाणां विहितत्वाच । तुशब्दो विशेषविध्यर्थः । अस्मिन् प्रकरणे दीक्षाकाल एव विधातव्ये दीक्षोपसत्सहितानामेकाहानां प्रयोगकालो विधीयत इति विशेषः ॥

एका तिस्रो वा दीक्षास्तिस्र उपसदः सुत्यमहरुत्तमं ॥ ॥ १७ ॥

उत्तमग्रहणं प्रातरनुवाकाद्युदवसानीयान्तमेकमेवाहः स्यात् तच सुत्यशब्देनोच्यत इत्येवमर्थं। दीक्षाकाले विधातव्ये उपसत्सुत्यानामपि विधानं त्वप्रकाराणामेव सौमिकत्वसिद्ध्यर्थं। तेन दीक्षणीयायाः प्राग्भाविन उखासम्भरणीयादेः सौमिकधर्म उपांशुत्वादिर्न भवतीति सिद्धं ॥

दीक्षान्ते राजक्रयः ॥ १८ ॥	॥ २ ॥

दीक्षाहःसु परिसमाप्तेषु अनन्तरं यदहः तस्मिन्नहनि राजक्रयः कर्त्तव्यः, सोमः क्रेतव्य इत्यर्थः ॥

इति चतुर्थे द्वितीया कण्डिका ॥ * ॥

---

तदहः प्रायणीयेष्टिः ॥ १ ॥

यस्मिन्नहनि सोमः क्रेष्यते तदहः प्रायणीया नामेष्टिः कार्या। 'दीक्षान्ते राजक्रयः' इत्युक्त्वा तदहरितिवचनाद्दीक्षान्ते यदहस्तस्य राजक्रय इति संज्ञाऽर्थात् कृता भवतीति गम्यते। तेनायमर्थः। तदहरिति यद्राजक्रयसंज्ञमहस्तस्मिन्नित्यर्थः ॥

पथ्या स्वस्तिरग्निः सोमः सविताऽदितिः स्वस्ति नः पथ्यासु धन्वस्विति द्वे अग्ने नय सुपथा राये अस्मानादेवानामपि पन्थामगन्म त्वं सोम प्रचिकिते मनीषा या ते धामानि दिवि या पृथिव्यामाविश्वदेवं सत्पतिं य इमा विश्वा जातानि सुत्रामाणं पृथिवीं द्यामनेहसं महीमूषु मातरं सुव्रतानां सेदग्निरग्नींरत्यस्त्वन्यानिति द्वे संयाज्ये। शंय्वन्तेयं ॥ २ ॥

इयमितिवचनादियमेव शंय्वन्ता, नोदयनीयेत्यर्थः ॥

अनाज्यभागा ॥ ३ ॥

चशब्दोऽध्याहर्त्तव्यः। अनाज्यभागा चेयमेव भवति, नोदयनीया ॥

संस्थितायां ॥ ४ ॥ ॥ ३ ॥

संस्थितायामितिवचनं प्रायणीयया राजक्रयस्यासमन्वा-

र्थं। तेनाहर्गणेषु प्रायणीयावद्राजक्रयो नाभ्यावर्त्तयितव्यः, सकृदेव कर्त्तव्य इत्यर्थः॥

इति चतुर्थे तृतीया कण्डिका॥ ३॥

राजानं क्रीणन्ति॥ १॥

क्रीणन्तीतिवचनं सोमप्रवहणे यदस्माकं कर्म विहितं तत् क्रयोत्तरकालवर्त्तिन्येव प्रवहणे भवति नान्यत्कालीने इत्येवमर्थं॥

तं प्रवक्ष्यत्सु पश्चादनसश्लिपदमात्रेऽन्तरेण वर्त्मनी अवस्थाय प्रेषितोऽग्ने ऽभिहिंकारात् त्वं विप्रस्त्वं कविस्त्वं विश्वानि धारयन्। अप जन्यं भयं नुदेत्यस्यन्दयन् पार्ष्णी प्रपदेन दक्षिणापार्श्वं श्लिष्टदुप्यानुब्रूयाद्भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु। अथेमवस्यवर आपृथिव्या आ रे शत्रून् कृणुहि सर्ववीर इति तिष्ठन्॥ २॥

तं क्रीतं सोमं राजानं प्राग्वंशसमीपं नेष्यत्स्वध्वर्य्युषु पश्चादनसश्लिपदमात्रेऽतीते चक्रयोर्ये वर्त्मनी तयोश्च मध्यदेश-

स्यार्जवेन यो देशस्तस्मिन्नवस्थाय प्रेषित: सन्नभिहिंकारात् प्राक् पार्ष्णीं प्रचालयन् प्रपदेन दक्षिणस्यां दिशि पांसूनित्थ-मुद्वपेत्, 'त्वं विप्रः' इतिमन्त्रेण। ततस्तस्मिन्नेव मार्गे स्थित्वा-ऽभिहिंकृत्यानुब्रूयात्। तिष्ठन्नितिवचनं प्रव्रजत्स्वप्यध्वर्युषु प्रथमामसमाप्य न व्रजेदित्येवमर्थं॥

अनुव्रजन्नुत्तरा अन्तरेणैव वर्त्मनी॥३॥

अन्तरेणैव वर्त्मनी, अनेन यथाऽनुव्रजन्नुत्तरा अनुब्रूया-दित्यर्थः। व्रजन्नेवानुब्रूयान्न व्रजनविक्षेपे इत्येवमर्थं व्रजति-ग्रहणं॥

सोम यास्ते मयोभुव इति तिस्रः सर्वे नन्दन्ति यशसाऽऽगते-नागन्देव क्रतुभिर्वर्धतु क्षयमित्यर्धर्चे आरभेत। अवस्थिते-ऽनसि दक्षिणात् पश्चादभिक्रम्य राजानमभिमुखोऽवतिष्ठते॥ ॥४॥

अनस्यवस्थिते तस्य दक्षिणपार्श्वेन राजसमीपङ्गत्वा तं ईक्ष-माणस्तत्रैव तिष्ठेत्॥

प्रपाद्यमाने राजन्यग्रेणानोऽनुसंव्रजेत्॥५॥

'अनुव्रजन्नुत्तरा' इति सर्वास्वृक्षु अनुव्रजतोऽनुवचनमिद्धौ

सत्यां अनुव्रजेदितिवचनं सम्यक् राज्ञोऽनन्तरमेवानुव्रजेन्न व्यवायमेषं कुर्यादित्येवमर्थं। अतोऽग्रेणाहवनीयं गतस्यानुव्रजनं क्षतं भवति॥

या ते धामानि हविषा यजन्तीमां धियं शिक्षमाणस्य देवेति निश्चिते परिदध्याद्राजानमुपस्पृशन्॥ ६॥

निश्चित इति व्रजनसमाप्तिदर्शनात् तिष्ठन्नेव परिदध्यात्॥

वसनेंऽशुषु वा॥ ७॥ ॥ ४॥

उपस्पर्शनविषयस्य विकल्पोऽयं। मन्त्रेण बद्धस्य विस्रंसने बन्धनशास्त्रविरोधः, वसनोपस्पर्शने च राजोपस्पर्शनशास्त्रस्य विरोधः, तत्रान्यतरस्य लक्षणाश्रयणे सति उपस्पर्शनस्यैव लक्षणाश्रयणं युक्तं। बन्धनोत्तरकाले विहितत्वादिति वसन इत्युक्तं। वचनाद्बद्धस्य वचनादेव विस्रंसनेन दोष इति मत्वा अंशुषु वेत्युक्तं। वाशब्दः पक्षव्यावृत्त्यर्थः। बद्धो वसतीतिवचनात् पुनरपि बन्धनं कर्त्तव्यं॥

इति चतुर्थे चतुर्थी कण्डिका॥ ❋ ॥

अथातिथ्येडान्ता ॥ १ ॥

आतिथ्या नाम इष्टिरनन्तरं कर्त्तव्या ॥

तस्या अग्निमन्थनं ॥ २ ॥

तस्या इतिवचनं तदङ्गतासिद्ध्यर्थं। तेनास्मिन्नग्निमन्थने मन्त्रस्य प्रथमयमः साधितो भवति ॥

धाय्ये अतिथिमन्तौ। समिधाग्निं दुवस्यताप्यायस्व समेतु त इति विष्णुरिदं विष्णुर्विचक्रमे तदस्य प्रियमभिपाथो अग्न्यां होतारं चित्ररथमध्वरस्य प्र प्रायमग्निर्भरतस्य शृण्व इति संयाज्ये। संस्थितायामाज्यन्तानूनप्त्रं करिष्यन्तोऽभिमृशन्ति। अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपाः। अनभिशस्त्यञ्जसा सत्यमुपगेषं स्विते माधा इति ॥ ३ ॥

संस्थित इतिवचनं अहर्गणेषु तानूनप्त्रस्यानावृत्त्यर्थं। तानूनप्त्रमित्याज्यविशेषस्य नाम। करिष्यन्त इत्यार्त्विज्यं करिष्यन्तः। करिष्यद्ग्रहणं सर्वे स्वयमेवाभिमृशेरन् नान्योन्यस्य प्रातिनिध्येनेत्येवमर्थं ॥

स्पृष्ट्वोदकं राजानमाप्याययन्ति ॥ ४ ॥

आप्यायनस्वरूपमुक्तं, अद्भिः संस्पर्शनाधिक्यादिति ॥

इदमादि मदन्तीरवर्थ उपसृज ॥ ५ ॥

इतः प्रभृत्युपसृज यदुदकोपसर्जनं क्रियते तत्र मदन्तीरेव गृह्णीयात् । मदन्त्यो नाम तप्ता आपः । उपसर्जनसंनिधावुक्तत्वादुपसर्जन एवायं नियमो नाचमनादावपीति गम्यते । अर्थग्रहणमर्थप्राप्तेऽप्युपसर्जने भवतीत्येवमर्थं ॥

अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्याययास्मान्त्सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति॥ ६ ॥

आप्यायनमन्त्रोऽयं ॥

स्पृष्टोदकं निह्नवन्ते प्रस्तरे पाणीन्निधायोत्तानान् दक्षिणान्त्सव्यान्नीच एष्टा राय एष्टा वामानि प्रेषे भगाय। ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति॥ ७ ॥   ॥ ५ ॥

निह्नवो नाम नमस्कारः, 'द्यावापृथिवीभ्यामेव तन्नमस्कुर्वन्ति' इति दर्शनात् । तेन पाणिनिधानं नमस्काराञ्जलिरूपेण कर्त्तव्यं ॥

इति चतुर्थे पञ्चमी कण्डिका ॥ ५ ॥

स्पृष्टोदकं प्रवर्ग्येण चरिष्यत्सूत्तरेण खरं परिक्रम्य पश्चादस्योपविश्य प्रेषितोऽभिष्टुयाद्गावानं ॥ १ ॥

एतान्युदकोपस्पर्शनान्युत्तराङ्गानि, आप्यायननिह्नवप्रवर्ग्याणामङ्गानीत्यर्थः। प्रवर्ग्यशब्दः कर्मविशेषवचनः। तेन चरिष्यत्विति वचनं होतुरभिष्टवनकालविधानार्थं। तेन कालान्तरे यद्यध्वर्यवश्चरन्ति तदाप्यभिष्टुयादेव। खरो नाम यत्र महावीरः संसाद्यते स देशः। एतदुक्तं भवति। अध्वर्य्वादिषु प्रवर्ग्येण चरिष्यत्सु होता तीर्थेन प्रपद्य खरमुत्तरेण परिक्रम्य तस्य पश्चादुपविश्य ततः प्रेषितः सन्नभिष्टुयाद्गावानं। गावानलक्षणमाह ॥

ऋचमृचमनवानमुक्त्वा प्रणुत्यावस्येत् ॥ २ ॥

अस्य विधानस्य गावानमितिसंज्ञेतिप्रदर्शनार्थं पूर्वसूत्रे गावानशब्दप्रयोगः। अवसानमुच्छ्वासार्थमित्युक्तं। तेनार्धर्चाः संहितया वक्तव्याः। तत्रार्धर्चान्तसन्धाने भाषिकैव संहिता स्यान्न छान्दसीति मन्तव्यं ॥

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आ वः। स बुध्न्या उप मा अस्य विष्ठाः सतश्च योनिमसतश्च विवः। इयं पित्रे राष्ट्र्येत्वग्रे प्रथमाय जनुषे भूमनेष्ठाः। तस्मा एतं सुरुचं

क्षारमह्यं घर्मं श्रीणन्ति प्रथमस्य धासेः । महान्महो अस्तभायद्विजातो द्यां पिता सद्म पार्थिवञ्च रजः । सबुध्नादाष्ट जनुषाऽभ्युग्रं बृहस्पतिर्देवता तस्य सम्राट् । अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभिप्रियं मतिङ्कविम् । ऊर्ध्वा यस्या मतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वस्तृपा स्वरिति वा । संसीदस्व महाएँ असीति संसाद्यमाने । अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमाने । पतङ्गमक्तमसुरस्य मायया यो नः स नुत्यो अभिदासदग्ने भवा नो अग्ने सुमना उपेताविति तृचाः । कृणुष्व पाजः प्रसितिं न पृथ्वीमिति पञ्च परि त्वा गिर्वणो गिरोऽधि द्वयोरदधा उक्थं वचः शुक्रन्ते अन्यद्यजतन्ते अन्यदपश्यङ्गोपामनिपद्यमानं स्रक्के द्रप्सस्यायं वेनश्चोदयत् पृश्निगर्भाः पवित्रन्ते विततं ब्रह्मणस्पत इति द्वे वियत् पवित्रं धिषणा अतन्वत घर्मं शोचन्त प्रणवेषु बिभ्रतः । समुद्रे अन्तराय वो विचक्षणन्त्रिरक्षो नाम सूर्यस्य मन्वत । गणानां त्वा प्रथस्व यस्याऽपश्यं त्वेत्येतस्याद्यया यजमानमीक्षते द्वितीयया पत्नीं तृतीययाऽऽत्मानं काराधङ्गोऽत्राश्विना वामिति वा भात्यग्निर्ग्रावाणेवेडे द्यावापृथिवी इति प्रागुत्तमाया अहरहरुचदुषसः ।अरग्निय इत्यावपेतोत्तरेणार्धर्चेन पत्नीमीक्षेतोत्तमया परिक्षिते समुत्थायैनानध्वर्यवो वाचयन्तीति तु पूर्वं पटलं ॥ ३ ॥　　॥ ६ ॥

एतावत्पूर्वमभिष्टवनं। अत्र मध्ये यद्व्याख्येयं वचनं तदेव व्याख्यायते। द्रुपा स्वस्तृपा स्वरिति वा। अनवयवभूतयोः द्रुपाद्रपाशब्दयोः प्रयोगविकल्पोऽयं। सं सीदस्व० साद्यमाने। सम्यक् साद्यमान इत्यर्थः। अञ्जन्ति० अज्यमाने। अभिपूर्यमाणे। उत्तरास्वप्याभिरूप्यं यथाशक्ति सम्पाद्य पठनीयः। अपश्यन्त्वे० यजमानमीक्षते। द्विती० पत्नीं। तृती० स्वात्मानं। प्राग्० वपेत। उत्तरे० मीक्षेत। अत्र क्रियान्तरसंबन्धाया ऋचः, तासामप्यभिष्टवनमेव कार्यं। अभिष्टवनं नाम घर्मस्य संस्कारोऽभिधानरूपः। एतच्च 'घर्ममभिष्टुहि' इति सम्प्रैषादवगतं। तत्र यत् क्रियान्तरमीक्षमाणादि तदानुषङ्गिकं, तदपि वचनात् कर्त्तव्यमेव। तत् क्रियमाणमेवं क्रियते यजमानादीनीक्षमाण एताभिरभिष्टुयादिति। अरूरुचदित्यस्यामृच्युत्तरमेवार्धर्चमीक्षमाणो ब्रूयात्, उत्तरेतिवचनात्। अस्मादेव वचनात् पूर्वास्वप्यारम्भोऽवगतः। उत्तमया० वाचयन्ति। परिधानीयानन्तरं अध्वर्युभिर्यदुक्तं तदस्मदीयैरपि कर्त्तव्यमित्यर्थः। उत्थाप्य वाचयन्तीत्यध्वर्युशास्त्रोक्तस्य होत्रादिभिरनुष्ठेयत्वं सूचयति। इति तु० टलं। भद्मा जज्ञानमित्यादि यदिदमुक्तं तत पूर्वमभिष्टवनमित्यर्थः। इतिकारः समाप्तिसूचकः। तुशब्द उत्तरविवक्षासूचनार्थः॥

इति चतुर्थे षष्ठी कण्डिका॥ ❀ ॥

---

अथोत्तरं ॥ १ ॥

अथशब्दः सम्बन्धार्थः । पूर्वोत्तरयोः पटलयोः सम्बन्धप्रयोजनं उत्तरेऽपि पटले स्वगावानादिधर्मप्रापणार्थं । उत्तरमितिवचनं याज्याव्यवधाने सत्यप्येकाभिष्टवनलक्षणार्थं ॥

उपविष्टेष्वध्वर्युर्घर्मदुघामाह्वयति स सम्प्रैष उत्तरस्य ॥ २॥

उपविष्टेषु होत्रादिषु यदध्वर्युर्घर्मदुघामाह्वयति 'अध्वावेशमाविश' इति तदेवोत्तरस्यारम्भे निमित्तमित्यर्थः । उपविष्टेष्वितिवचनं यद्यध्वर्यवो नोत्थापयन्ति तदाप्युत्थाय स्वयमेव कुर्युरित्यस्यार्थस्य सूचनार्थं ॥

अनभिहिंकृत्य ॥ ३ ॥

उत्तरमभिष्टुयादिति शेषः ॥

उपह्वय सुदुघां धेनुमेतामिति द्वे अभि त्वा देव सवितः स्वर्गों वत्सं न मातृभिः सं वत्स इव मातृभिर्यस्ते स्तनः शशयो यो मयोभूर्गौरमीमेदनु वत्सं मिषन्तं नमसेदुपसीदत सञ्जानाना उपसीदन्नभिज्ञ्वा दशभिर्विवस्वतो दुहन्ति सप्तैकां समिद्धो अग्निरश्विना तप्तो वां घर्म आगतं । दुह्यन्ते गावो

वृषणेव धेनवो दस्रा मदन्ति कारवः। समिद्धो अग्निर्वृषणा र-
तिर्दिवस्तप्तो घर्मो दुह्यते वामिषे मधु। वयं हि वां पुरुतमा-
सो अश्विना हवामहे सधमादेषु कारवः। तदु प्रयक्षतममस्य
कर्मात्मन्वन्नभो. दुह्यते घृतमपय उत्तिष्ठ ब्रह्मणस्पत इत्येनामु-
त्क्राऽवतिष्ठते दुग्धायामधुक्षत्पिप्युषीमिषमित्याह्रियमाण उप-
द्रव पयसा गोधुमा घर्मे सिञ्च पय उस्रियायाः। वि नाक-
मख्यत्सविता वरेण्यो नु द्यावापृथिवी सुप्रणीतिरित्यासिच्य-
मान आ नूनमश्विनोर्ऋषिरिति गव्य आ सुते सिञ्चत श्रिय-
मित्याज आसिक्तयोः समुत्ये महतोरप इति महावीरमादायो-
त्तिष्ठत्युदुष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठेत् प्रैतु ब्रह्मणस्प-
तिरित्यनुव्रजेद्गन्धर्व इत्यापदमस्य रक्षतीति खरमवेक्ष्य नमति-
क्रम्य नाके सुपर्णमुप यत्पतन्तमिति समाप्य प्रणवेनोपविशेद्द-
निरस्य तृणं प्रेषितो यजति। तप्तो वां घर्मो नक्षति. स्वहोता प्र
वामध्वर्युश्चरति प्रयस्वान्। मधोर्दुग्धस्याश्विना तनाया वीत-
म्पातं पयस उस्रियायाः। उभा पिबतमश्विनेति चोभाभ्या-
मनवानमग्ने वीहीत्यनुवषट्कारो घर्मस्याग्ने वीहीति वा।
ब्रह्मा वषट्कृते जपत्यनुवषट्कृते च विश्वा आशा दक्षिणसा-
द्विश्वान्देवानयाडिह। स्वाहाकृतस्य घर्मस्य मध्वः पिबतम-
श्विनेत्येवमेवापराह्णिके। यदुस्रियास्वाहुतं घृतं पयोऽयं स
वामश्विना भाग आगतं। माध्वी धर्त्तारा विदथस्य सत्पती
तप्तङ्घर्मं पिबतं सोम्यं मधु। अस्य पिबतमश्विनेति चाप्रेषितो

होताऽनुवषट्कृते स्वाहाकृतः शुचिर्देवेषु घर्मो यो अश्विनोश्चमसो देवपानः। तमो विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति। समुद्रादूर्मिमुदियर्त्ति वेनो द्रप्सः समुद्रमभि यज्जिगाति सखे सखायमभ्याववृत्स्वोर्ध्व ऊषण ऊतय इति द्वे तद्वे मित्या नमस्विन इति प्रागाथौ पूर्वाह्णे काण्वीमपराह्णेऽन्यतरां वात्यन्तं काण्वीन्त्वेवोत्तमे पावक शोचे तव हि क्षयं परीत्युक्त्वा भक्षमाकाङ्क्षेद्*वाजिनेन भक्षोपायो हुतं हविर्मधु हविरिन्द्रतमेऽग्नावश्याम ते देव घर्म। मधुमतः पितुमतो वाजवतोऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिंसीरिति भक्षजपः कर्मिणो घर्मं भक्षयेयुः सर्वे तु दीक्षिताः सर्वेषु दीक्षितेषु गृहपतेस्तुतीयोत्तमौ भक्षौ सम्प्रेषितः श्येनो न योनिं सदनन्धिया-कृतमा यस्मिन् सप्त वासवा रोहन्तु पूर्व्यारुहः। ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः। हृयवसाद्भगवती हि भूया इति परिदध्यात्॥ ४॥

एतावदुत्तरपटलं। तन्मध्यगतानि व्याख्येयानि व्याख्यायन्ते। उत्तिष्ठ॰ तिष्ठते। दुग्धायामित्युत्तरादाननिमित्तदर्शनादेवावस्थाने सिद्धे अवतिष्ठतइतिवचनमचैवावतिष्ठते न पूर्वासु तिष्ठापेक्षा कर्त्तव्येत्येवमर्थं। दुग्धायामिति। आह्रियमाणे॰ णीतिरिति। आसि॰ आनून॰, गव्ये। आ सुते॰ आज्ये। आसिच्यमाने इत्यनुषज्यते, गव्य आज इतिवचनात्

* वाजिनेयामिति सो॰।

पयोविपर्यासे ऋग्विपर्यासः। आश्विनयो०रप इति। इयोः पयसोरासेचनपर्यवसाने सति 'समुद्रे मध्वतीरपः' इति ब्रूयात्। महावीरं०नूत्तिष्ठेत्। एतयाऽभिष्टवनं कृत्वाऽनन्तरमनूत्तिष्ठेत्। प्रेतु०नुव्रजेत्। तिष्ठन्नेवोक्त्वानुव्रजेत्। गन्धर्व०हणं, खरावेक्षणं तस्य पश्चात् प्राङ्मुखस्य तिष्ठतः पुनस्तमतिक्रम्यानुव्रजेत्। व्रजित्वा श्रोणिदेशं प्राप्य 'नाके सुपर्णम्' इत्यस्या ऋचः प्रणवोच्चारणेन सह तत्रैवोपविशेत्। वाचोऽन्यत्र आप्लुतत्वाग्निरसनोपवेशनमन्त्रोच्चारणं न सम्भवति। प्रतिषेधस्तु निरसनक्रियायाः प्रतिषेधार्थः। प्रेषितो०भ्यामनवानं। अत्रैवावसरे यजेति प्रेषित एताभ्यामृग्भ्यां यजति। ऋचोरेवात्र द्वित्वं न याज्यायाः। तेन सकृदागूर्वषट्कारौ कर्त्तव्यौ। अग्ने वीही०कारः। घर्म०ति वा। अनु०श्विनेति। प्रतिवषट्कारं जपावृत्तिः। एवमे०ह्निके। आपराह्निकप्रवर्ग्ये एवमेव सर्वं भवति। तत्र विशेषमाह। यदुस्रि०पिबतमश्विनेति च। एतौ ऋचौ याज्या भवति। अप्रेषि०हुते। उत्तरां ब्रूयादिति शेषः, अप्रेषितवचनं पूर्वसूत्रे 'प्रेषितो यजति' इत्यस्यानुवृत्तिसूचनार्थं। तेन यदुस्रियास्वाहुतमित्यस्य पिबतमित्येताभ्यामापराह्निके प्रेषितो यजतीति गम्यते। होतृग्रहणं ब्रह्माधिकारनिवृत्त्यर्थं। तेनापराह्निकेऽपि प्रवर्ग्ये वषट्कारानुवषट्कारयोः मन्त्रजपोऽस्तीति गम्यते। तस्मै०र्यौ पूर्वाह्णे। काण्वी०राह्णे। अन्य०त्यन्तं। अनयोरन्यतरामेव वा सर्वेषु प्रवर्ग्येषु ब्रूयादित्यर्थः। काण्वीं ले • त्तमे। अन्यतरपक्षेऽप्ययं विशेषः।

उत्तमे प्रवर्ग्ये काव्यमेव ब्रूयादिति। अनयोर्व्वाक्ययोर्विशिष्टकाल-निर्देशादन्यत् सर्वं साधारणमिति गम्यते। पावक०येत्। एतामृचमुक्त्वा भक्षार्थमाकांक्षेत्। अत्रावसाय भक्षणं कर्त्तव्य-मित्यर्थः। वाजि०पायः। उक्त इति शेषः। उपायवचनमि-डामिव प्रतिगृह्णीत्येवमादेर्धर्मस्य प्रापणार्थं। हुतं चमपः। 'यन्मे रेतः' इत्यस्यापवादः। अत्रापि प्राणभक्ष एव यजमानं वर्ज-यित्वा। कर्मि०येयुः। वाजिनस्य वैश्वदेव्यामुत्पन्नत्वात् तत्र च प्रतिप्रस्थातुरभावाच्च प्रतिप्रस्थातुरुपहवलाभार्थं कर्मि-णां भक्षणविधानं। क्रमस्तु वारुणप्रघासिक एव, तस्य न्या-यलभ्यत्वात्। सर्वे तु दीक्षिताः, भक्षयेयुरिति शेषः। यज-मानत्वादेव सर्वेषां भक्षणे प्राप्ते वचनमिदं मैत्रावरुणादीना-मस्मदीयानामस्मच्छास्त्रविहितोपायेनैव भक्षणं भवतीत्येव-मर्थं। सर्वेषु०मौ भक्षौ। सर्वाधिकारे पुनः सर्वसंग्रहार्थं सर्वेषु दीक्षितेष्वितिवचनमसत्रेष्वपि यजमानो गृहपतिशब्देनोच्यत इतिज्ञापनार्थं। तेन होताऽध्वर्युगृहपतिभ्यामित्यादौ यज-मानसम्प्रत्ययः सिद्धो भवति। गृहपतेस्तृतीयोत्तमभक्ष-विधानमुपहवे क्रमविधानार्थं। तेन होत्रादिशब्दैरेवेतरेषां उपहवयाचनं भवति गृहपतिशब्देन यजमानशब्देन वा गृहपतेः। एवं सत्यस्य सूत्रस्यार्थवत्ता भवतीति। सम्प्रेषितः, उत्तरां ब्रूयादितिशेषः। सूयवसा०दध्यात्। परिदध्यादिति-वचनं विस्पष्टार्थं॥

उत्तमे प्रागुत्तमाया *हविर्हव्यो महि सद्म दैव्यमित्यावपेत ॥ ५ ॥ ॥ ७ ॥

उत्तमे प्रवर्ग्य इत्यर्थः ॥

इति चतुर्थे सप्तमी कण्डिका ॥ ० ॥

अथोपसत् ॥ १ ॥

अथशब्दः सम्बन्धार्थः प्रवर्ग्योपसदोः। तेन सप्रवर्ग्यायामुपसदि स्नानाचमनप्रपदनानि न भवन्ति। प्रवर्ग्यार्थं प्रपन्न एवोपसदमपि कुर्यात्। अतः अप्रवर्ग्यायामुपसदि स्नानाचमनादीनि भवन्त्येव ॥

तस्यां पित्र्यया जपाः ॥ २ ॥

उक्ता इति शेषः, लुप्यन्त इत्यर्थः ॥

प्रादेशोपवेशने च ॥ ३ ॥

* हविर्हविष्मो इति सो०।

*पित्र्यथैव व्याख्याते नेह प्रादेश इष्यतः सीद होतरिति वोक्त उपविशेदित्येवं व्याख्याते इत्यर्थः ॥

प्रकृत्ये चोपस्थः ॥ ४ ॥

पित्र्यथोपवेशमातिदेशात् सव्योत्तर्युपस्थताप्रसक्तौ दक्षिणोत्तर्युपस्थताऽत्र विधीयते ॥

उपसद्यायमीढुष इति तिस्र एकैकान्त्रिरनवानन्नाः सामिधेन्यः ॥ ५ ॥

'उपसद्यायमीढुषे' इत्येतासान्तिसृणामृचां मध्ये एकैकामेवर्चन्त्रिरनवानमनुब्रूयात्। ता एव नवर्चः सामिधेन्यो भवन्ति। एकैकामितिवचनात् तिसृणां न परस्परं सन्तानः कार्यः। स्वावृत्तौ तु परस्परं सन्तानोऽस्त्येव। आसु सर्वे प्रणवास्त्रिमात्रा एव, अवसानविध्यभावात्। यद्यावसानद्वयमस्ति तच्चार्थप्राप्तं, सर्वार्थ एकैकामिति पृथक्करणं। तस्मादृच चतुर्मात्रताऽवसाने नास्तीति सिद्धं। नवस्वृत्तु प्रणवोऽस्ति 'नव सामिधेनीरन्वाह' इति सर्वासां सामिधेनीत्वात् ॥

तासामुत्तमेन प्रणवेनाग्निं सोमं विष्णुमित्यावाह्योपविशेत्॥ ६ ॥

प्रकृतावुत्तमेन प्रणवेन निगदसन्धानमुक्तं। अत्र तु तेना-

* पित्र्ये वेति सं॰ पु॰ दूये।

न्यादिदेवतावाहनस्य सन्धानविधानात् 'अग्ने महान्' इत्यादे-राज्यभागदेवतावाहनपर्यन्तस्य मन्त्रस्य लोपो भवति। ता दे-वता आवाह्योपविशेदेव, न निगदशेषं ब्रूयादित्येवमर्थं आ-वाह्योपविशेदित्युक्तं। आज्यपस्विष्टकृदावाहनमर्थलुप्तमेवेति॥

नावाहयेदित्येके। अनावाहनेऽप्येता एव देवताः॥ ७॥

आवाहनं नाम यष्टव्यानां सङ्कल्परूपः संस्कारः। तत्रावा-हनप्रतिषेधे सति देवताभावोऽप्याशङ्क्येत, तदाशङ्कानिवृत्त्यर्थं वचनं॥

अग्निर्वृत्राणि जङ्घनद्य उग्र इव शर्यहा त्वं सोमासि स-त्पतिर्गयस्फानो अमीवहेदं विष्णुर्विचक्रमे त्रीणि पदा विच-क्रम इति स्विष्टकृदादि लुप्यते। प्रयाजा आज्यभागौ च॥ ८॥

लुप्यन्त इत्यर्थः॥

नित्यमाप्यायनं निह्नवस्य॥ ९॥

चक्र इत्यर्थः॥

एषैवापराह्णे॥ १०॥

एषोपसदपराह्णेऽपि कर्त्तव्या। तस्यां विशेषाभाव॥

इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः। विपर्यासो याज्यानुवाक्यानां। पाण्योश्व निह्नव इत्युपसदः ॥ ११ ॥

इत्थमुपसदः पौर्वाह्निक्य आपराह्निक्यश्च कर्त्तव्याः। बहुवचनं वक्ष्यमाणबहुत्वापेक्षं ॥

सुपूर्वाह्णे स्वपराह्णे च ॥ १२ ॥

याः पौर्वाह्निक्यः ताः सुपूर्वाह्णे कर्त्तव्याः। या आपराह्निक्यस्ताः स्वपराह्ण इति ॥

राजक्रयाद्यहःसंख्यानेनैकाहानान्तिस्रः ॥ १३ ॥

यस्मिन्नहनि राजक्रयः कृतस्तदाद्यहान्येव सङ्ख्याय एकाहानां तिस्र उपसदो भवन्ति। पूर्वाह्निक्यापराह्निक्यावेकीकृत्य एकोपसद्व्यवहारः। सैवंविधोपसत् त्र्यहःसु कर्त्तव्येत्यर्थः। तान्यहान्युपसद इत्युच्यन्त इत्यर्थः। अत्रैकाहशब्दः प्रकृतिविकृत्योः साधारणः, बहुवचनसम्बन्धात् प्रकृत्यर्थत्वेन विध्यन्तराभावाच्च। विकृत्येकाहार्थत्वेन चात्रैव विहितानां प्रयोगकाले परिज्ञानार्थं 'कर्मचारस्त्वेकाहान्' इत्यत्र सङ्कीर्त्तनं ॥

षड्वा ॥ १४ ॥

शाखान्तरव्यानिश्चयः ॥

अहीनानां द्वादश चतुर्विंशतिः संवत्सर इति सत्राणां ॥
॥ १५ ॥

इतिकारः प्रदर्शनार्थः। तेनाध्वर्युप्रत्ययादुपसन्निस्वय इत्युक्तं भवति ॥

प्रथमयज्ञेनैके घर्मं ॥ १६ ॥

ज्योतिष्टोमस्य प्रथमप्रयोगे घर्ममेके शाखिनो नेच्छन्ति, द्वितीयादावभ्यासमिच्छन्त्येव। अभ्यासस्तु 'वसन्ते वसन्ते ज्योतिष्टोमः' इत्यतो वचनाल्लभ्यते। अभ्यासत एव प्रथमयज्ञत्वं न स्वरूपत इति न्यायसिद्धोऽयमर्थः ॥

औपवसथ्य उभे पूर्वाह्णे ॥ १७ ॥

औपवसथ्येऽहनि ये उपसदौ ते पूर्वाह्ण एव कर्त्तव्ये। उपसदोऽपकर्षे प्रवर्ग्यावप्यपकृष्येते ॥

प्रथमस्यामुपसदि वृत्तायां प्रेषितः पुरीष्यचितयेऽन्वाह होता दीक्षितश्चेत् ॥ १८ ॥

औपवसथ्येऽहनि या प्रथमोपसत् तस्यां समाप्तायां प्रेषितः पुरीष्यचित्यर्थमन्वाह होता दीक्षितश्चेत् ॥

यजमानोऽदीक्षिते ॥ १९ ॥

अदीक्षिते होतरि यजमान एवानुब्रूयात्। यजमानो दीक्षित इत्येतावतैव सिद्धे यद्धोता दीक्षितश्चेदिति वचनं तज्ज्ञापयति, अन्यदपि दीक्षितस्य होतुर्विहितमदीक्षिते होतरि यजमानेन कर्त्तव्यमिति ॥

पश्चात्पदमात्रेऽवस्थायाभिहिंकृत्य पुरीष्यासो अग्नय इति त्रिरुपांशु समप्रणवां ॥ २० ॥

समानप्रणवां सर्वे त्रिमात्राः प्रणवा इत्यर्थः ॥

अपि वा सुमन्द्रं ॥ २१ ॥

सुमन्द्रशब्देन मन्द्रस्य आद्यो द्वितीयो वा यम उच्यते, तेनेवाम्बाह्नेनोपांश्विति ॥

व्रजत्स्वनुव्रजेत् ॥ २२ ॥

व्रजत्स्वध्वर्युषु अनुब्रुवन्ननुव्रजेत् ॥

तिष्ठत्सु विसृष्टवाक् प्रणयतेति ब्रूयात् ॥ २३ ॥

तेषु तिष्ठत्सु अनुवचनारम्भस्थाने स्थित्वा भूर्भुवः स्वरिति वाचं विसृज्य ततः प्रणयतेति सम्प्रैषं ब्रूयात् ॥

अथाग्निं सञ्चितमनुगीतमनुशंसेत्॥ २४॥

अथेति पूर्वेणास्य सम्बन्धार्थः। तेन पूर्वस्मिन् होता दीक्षितश्चेदित्येष धर्मोऽत्रापि भवति। सञ्चितमग्निं प्रस्तोताऽनुगीतमनुशंसेत्। शंसतिरयं संस्कारकर्मैव, अग्निमिति द्वितीयानिर्देशात्॥

पश्चादग्निपुच्छस्योपविश्याभिहिंकृत्याग्निरस्मि जन्मना जातवेदा इति त्रिर्मध्यमया वाचा॥ २५॥

वाग्ग्रहणं स्वरस्य वृत्तेश्च मध्यमत्वसिद्ध्यर्थं॥

एतस्मिन्नेवासने वैश्वानरीयस्य यजति॥ २६॥

पश्चाद्भागेऽग्निपुच्छस्येत्यर्थः॥

त्रयमेतत् साग्निचित्ये॥ २७॥

पुरीष्यचितिः, अनुशंसनं, वैश्वानरीयमित्येतत् त्रयं साग्निचित्येषु क्रतुषु भवति। पुरीष्यचितिरिति नामधेयात् पूर्वस्य अग्निमनुशंसतीतिवचनात् मध्यमस्य उत्तमस्य च एतस्मिन्नेवासन इति पुच्छसंबन्धादेवास्यार्थस्य सिद्धौ सत्यां सूत्रप्रयोजनमपृष्ठा अप्यग्नयः सन्ति तेष्वप्येतत् त्रयं कर्त्तव्यमितिज्ञापनार्थं॥

ब्रह्माऽप्रतिरथं जपित्वा दक्षिणतोऽग्नेर्बर्हिर्वेद्यास्त औदुम्बर्यभिहवनात् ॥ २८ ॥

ब्रह्मणोऽयं नियम उच्यते। य उक्तोऽग्निप्रणयनेऽप्रतिरथजपस्तं समाप्योपविशेत्। चित्यस्याग्नेर्दक्षिणतो बर्हिर्वेद्यास्ते आ औदुम्बर्याभिहवनात्। औदुम्बर्या आभिहवनं औदुम्बर्याभिहवनं। आङभीत्यत्रोपसर्गो ॥

उक्तमग्निप्रणयनं ॥ २९ ॥

यदुक्तमग्निप्रणयनन्तदिदानीं कर्त्तव्यं ॥

दीक्षितस्तु वसोर्धारामुपसर्पेत् ॥ ३० ॥ ॥ ८ ॥

यदि दीक्षितो ब्रह्मा तदा वसोर्धाराहोमकाले तां प्रति गच्छेत्। तुशब्दो दीक्षितस्य ब्रह्मणोऽयं विशेष इति दर्शयति। तेनेदं सूत्रं 'ब्रह्माऽप्रतिरथं' इत्यस्मात् सूत्रादर्थतोऽनन्तरं द्रष्टव्यं। ब्रह्माऽप्रतिरथमित्यस्य सूत्रस्य चयमित्यस्मादनन्तरं वचनं साग्निचित्ये एव बर्हिर्वेद्यासनमिति ज्ञापनार्थं। तेनान्यत्र वेद्यां बर्हिर्वेदि वा नात्र नियमः। एतदुक्तं भवति। सर्वत्र सौमिकेऽग्निप्रणयनेऽप्रतिरथं समाप्य दक्षिणत उपविश्यास्ते औदुम्बर्याभिहवनात्, साग्निचित्ये तु बर्हिर्वेद्युपविश्यास्ते वसोर्धाराहोमं गच्छेदिति ॥

इति चतुर्थेऽष्टमी कण्डिका ॥ ० ॥

हविर्धाने प्रवर्त्तयन्ति ॥ १ ॥

हविर्धाने शकटे, ते अस्मिन् काले प्रवर्त्तयन्त्यध्वर्यवः ॥

तदुक्तं सोमप्रवहणेन ॥ २ ॥

तत्र यत् कर्त्तव्यं तत् सोमप्रवहणेनोक्तं ॥

दक्षिणस्य तु हविर्धानस्योत्तरस्य चक्रस्यान्तरा वर्त्म पादयोः ॥ ३ ॥

तत्रैकं शकटं। अत्र तु द्वे। अत्र विशेषविधानार्थस्तुशब्दः, अयमत्र विशेषः। दक्षिणस्य शकटस्य तदुत्तरस्य चक्रस्य यद्वर्त्म तत्पादयोर्मध्ये यथा भवति तथा पश्चादनसस्तिष्ठदमाचेऽतोते यो देशस्तत्र स्थित्वा पूर्ववत् कृत्वाऽनुब्रूयादित्यर्थः ॥

युजे वां ब्रह्म पूर्व्यं नमोभिः प्रेतां यज्ञस्य शम्भुवा युवां यमे इव यतमाने यदैतमधिद्वयोरदधा उक्थं वच इत्यर्धर्च आरमेदव्यवस्था चेद्रराटी ॥ ४ ॥

यदि रराटी अव्यवस्था अबद्धा भवेत् तदा अधिद्वयोरदधा उक्थं वच इत्यस्या अर्द्धर्च आरमेत् ॥

विश्वा रूपाणि प्रतिमुञ्चते कविरिति व्यवस्तायां ॥ ५ ॥

व्यवस्तायां तस्यान्तामोच्यमाणो विश्वा रूपाणीत्यनुब्रूयात्। तस्या अर्द्धर्च आरमेत्। यदि मेथ्यौ न निहते स्यातां ॥

मेथ्योरुपनिहतयोः परि त्वा गिर्वणो गिर इति परिदध्यात् ॥ ६ ॥ ॥ ९ ॥

मेथ्योरुपनिहतयोरेतया परिदध्यात्। अत्र केचिदध्वर्यवः पूर्वं मेथीनिहननं कृत्वा ततो रराटीबन्धनं ततः परिश्रयणं कुर्वन्ति। तत्रापि मेथ्योरुपनिहतयोरिति भूतकालाविशिष्टत्वेन तयोः श्रवणान्न कश्चिद्दोषः। क्रमविपर्यासशङ्का न कर्त्तव्या। यथासूत्रमेवेदमनुवचनं वक्तव्यमिति सिद्धं ॥

इति चतुर्थे नवमी कण्डिका ॥ ९ ॥

---

अग्नीषोमौ प्रणेष्यन्तु तीर्थेन प्रपद्योत्तरेणाग्नीध्रीयायतनं सदस्य पूर्वया द्वारा पत्नीशाला प्रपद्योत्तरेण शालामुखीयमतिव्रज्य पश्चादस्योपविश्य प्रेषितोऽनुब्रूयात्। सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै। अथास्मभ्यं सवितः सर्वताता दिवे दिव आसुवा भूरिपश्व इत्यासीनः ॥१॥

तीर्थेन प्रपदनवचनं प्रपन्नस्याप्यत्र नियमेन प्रपदनार्थं। पश्चादस्योपविश्येतिशालामुखीयस्येत्यर्थः। उपविष्टस्यैवासीनइतिवचनं व्रजत्स्वध्वर्युषु प्रथमाममनाप्य न व्रजनाय उत्तिष्ठेदित्येवमर्थं॥

अनुव्रजन्नुत्तराः ॥ २ ॥

अनुब्रूयादिति शेषः॥

प्रैतु ब्रह्मणस्पतिर्होता देवो अमर्त्यः पुरस्तादुप त्वाग्ने दिवे दिवे दोषावस्तरुपप्रियं पनिप्नतमित्यर्धर्च आरमेत्। आग्नीध्रीये निहितेऽभिह्रयमानेऽग्ने जुषस्व प्रतिहर्य तद्वच इति समाप्य प्रणवेनोपरमेत् ॥ ३ ॥

प्रणवेनोपरमेदित्युक्ते अधिकेन प्रणवेनेत्याशङ्क्येत, अथ

समाप्योपरमेदित्युच्यते, तदा प्रणवनिषेधाशङ्का स्यात्। तस्माद्-भयविशेषणं कृतं ॥

उत्तरेणाग्नीध्रीयमतिव्रजत्स्वतिव्रज्य सोमो जिगाति गातु-विद्देवानां तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चं आरमेत् ॥ ४ ॥

आग्नीध्रीयमतिव्रजत्स्वध्वर्युषु उत्तरेण तमतिव्रज्य 'सोमो जिगाति' इत्येता अनुब्रूयात्। 'तमस्य राजा' इत्यस्या अर्धर्चं आरमेत् ॥

प्रपद्यमानं राजानमनुप्रपद्येत। अन्तश्च प्रागा अदितिर्भ-वासि श्येनो न योनिं सदनं धिया कृतमस्तभ्नाद् द्यामसुरो विश्ववेदा इति परिदध्यात्। उत्तरया वा क्षेमाचारे ॥ ५ ॥

क्षेमाय आचारः क्षेमाचारः। आचरणमाचारः। वा-शब्दोऽवधारणार्थः। अस्यामवस्थायां क्षेमार्थं भयप्रतीकारे कर्त्तव्ये सति उत्तरयैव परिदध्यात। एवं व्याख्यायमाने प्रत्य-क्षश्रुतिरनुकूला भवति ॥

अह्नैवमेव प्रपद्यापरेण वेदिमतिव्रज्य दक्षिणतः शालामु-खीयस्योपविशेत् ॥ ६ ॥

उत्तरेण शालामुखीयस्येत्येवमन्तं समानं। ततोऽपरेण वेदिं दक्षिणतः शालामुखीयस्योपविशेत्॥

स होतारमनूत्थाय यथेतमग्रतो व्रजेद्यदि राजानं प्रणयेत्॥ ७॥

स ब्रह्मा होतारमुत्थितमनूत्थाय यथेतं प्रत्येत्य अग्रतो गच्छेद्यदि ब्रह्मा राजानं प्रणयेत्। यदिशब्दसम्बन्धात् ब्रह्मणः सोमप्रणयनं पाक्षिकमिति गम्यते। प्रणयने एवं भवति॥

उक्तमप्रणयतः॥ ८॥

यदुक्तं दक्षिणतो व्रजन् 'आशुः शिशान' इति सूक्तं जपित्वा ततोऽग्रेणाहवनीयं परीत्य तस्य दक्षिणतो निरसनोपवेशने कृत्वा तत्रैवासीतेति, तदप्रणयतो ब्रह्मणो भवति। प्रणयतस्त्विदानीमुच्यमानं भवति। तत्र प्रणयनं अग्रे गमनं गृहपतये प्रदाय ततो हविर्धाने अग्रेणापरेण वाऽतिव्रज्य दक्षिणत आहवनीयस्योपविशेत्। यद्यग्रेण प्रपन्नः स्यात् तदा प्रपाद्यमाने राजनि प्रत्येत्य पुनरपरेणैवातिव्रज्य पूर्वासनएवोपविशेदित्येवमुभयोः पक्षयोरनुष्ठानविशेषः॥

प्राप्य हविर्धाने गृहपतये राजानं प्रदाय हविर्धाने अग्रेणापरेण वाऽतिव्रज्य दक्षिणत आहवनीयस्योपविशेत्॥ ९॥

हविर्धाने प्राप्य गृहपतये राजानं प्रदाय हविर्धाने सोमं वाऽग्रेणापरेण वाऽतिव्रज्य दक्षिणत आहवनीयस्योपविशेत्। अथवा द्वितीयहविर्धानग्रहणे राज्ञ एवाग्रेणापरेण अतिव्रजेत्, अति तु तस्मिंस्तयोरप्यग्रेणापरेण वा गमनं भवतीति पुनस्तद्वचनं॥

अग्निपुच्छस्य साग्निचित्यायां॥ १०॥

साग्निचित्यायां सोमयागक्रियायां अग्निपुच्छस्य दक्षिणत उपविशेत्। एतत् प्रणयतोऽप्रणयतश्च साधारणमुपवेशनस्थानं॥

एतद्ब्रह्मासनं पशौ॥ ११॥

एतदासनं ब्रह्मणोऽग्नीषोमीये पशौ भवति। इष्टिषु लैष्टिकमेव। इष्टिपशुभ्यामन्यद्यत् घर्मादि, तत्र तस्यैव दक्षिणत आसनं नाहवनीयस्येति सिद्धं॥

प्रातश्चावपाहोमात्॥ १२॥

सौत्ये चाहनि वपाहोमपर्यन्तमाहवनीयस्य दक्षिणत आसीत। सदःप्रवेशोत्तरकालं सदस्येवासीत वचनादन्यथेति॥

यदि त्वग्रेण प्रत्येयात् प्रपाद्यमाने ॥ १३ ॥ ॥ १० ॥

गृहपतये राजानं प्रदाय यदि राजानं हविर्धाने चाग्रेण गतः स्यात् तदा प्रपाद्यमाने राजन्यासादनार्थं पुनः प्रत्येयात्। व्यवायपरिहारार्थं तत्र तदानीमेव प्रत्येतव्ये सति किमित्यग्रेण वाऽपरेण वा पूर्वमतिप्रज्ञ गच्छेत्। तत्र गमने प्रयोजनमस्ति। वैसर्जनहोमो नाम त्रिष्वग्निषु क्रियते। तत्राहवनीये हूयमाने तस्य दक्षिणत आसनार्थं तदा दक्षिणतो गतः स्यात्। तत्र यदाऽपरेण राजानं हविर्धाने च गतः स्यात् तदा तत्रैवासीत न प्रत्येयात्, व्यवायाभावात् ॥

इति चतुर्थे दशमी कण्डिका ॥ ० ॥

---

अथाग्नीषोमीयेण चरन्ति ॥ १ ॥

पशुनेति शेषः ॥

उत्तरवेद्यामादण्डप्रदानात् ॥ २ ॥

'दण्डं प्रदाय' इत्युत्तरसूत्रे दण्डप्रदानोत्तरकालमेव सदः-प्रवेशविधानादेतावन्तः पदार्था उत्तरवेदिसमीपे कर्त्तव्या इति

प्राप्ते वचनमिदमग्नीषोमीयातिदिष्टधर्मिकायामनूबन्ध्यायां सदसि कर्त्तव्यायामपि एतावन्तः पदार्था उत्तरवेदिसमीपे कर्त्तव्या इत्येवमर्थं ॥

दण्डं प्रदाय मैत्रावरुणमग्रतः कृत्वोत्तरेण हविर्धाने अतिव्रज्य पूर्वया द्वारा सदः प्रपद्योत्तरेण यथास्वन्धिष्ण्यावतिव्रज्य पश्चात् स्वस्य धिष्ण्यस्योपविशति होता ॥ ३ ॥

उत्तरेण धिष्ण्यावतिव्रज्येत्युच्यमाने द्वावुत्तरेणेत्याशङ्का स्यात् तन्निवृत्त्यर्थं यथास्वमित्युच्यते। यो यस्य स्वः स्वः यथास्वं। स्वं स्वन्धिष्ण्यमुत्तरेणातिव्रज्य न द्वावुत्तरेणेत्यर्थः। पश्चात् स्वस्येत्येतावता सिद्धे धिष्ण्यस्येतिवचनमागन्तुका अपीष्टयोऽस्मिन्नवसरेऽन्वैवोपविशता कर्त्तव्याः न वेदिश्रोण्यामित्येवमर्थं ॥

अवतिष्ठत इतरः ॥ ४ ॥

स्वस्य धिष्ण्यस्य पश्चादवतिष्ठते मैत्रावरुण इत्यर्थः ॥

यदि देवपत्नीर्हवींष्यन्वायातयेयुरग्निर्गृहपतिः सोमो वनस्पतिः सविता सत्यप्रसवो बृहस्पतिर्वाचस्पतिरिन्द्रो ज्येष्ठो मित्रः सत्यो वरुणो धर्मपती रुद्रः पशुमान् पशुपतिर्वा ॥ ५ ॥

यदि शब्दसंयोगादनित्यत्वमेषामवगम्यते। तत्राध्वर्युवशा-द्विशेषज्ञानं। देवसूनां हवींषीत्येषा संज्ञा। अष्टावत्र देवताः सर्वाः सगुणा एव पशुमान् पशुपतिरिति रुद्रस्य गुणविकल्पः॥

त्वमग्ने बृहद्वयो हव्यवाडग्निरजरः पिता नस्त्वञ्च सोम नो वशो ब्रह्मा देवानां पदवीः कवीनामाविश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तद्बृहस्पते प्रथमं वाचो अग्रं हंसैरिव सखिभिर्वावदद्भिः प्रससाहिषे पुरुहूत शत्रून् भुवस्त्वमिन्द्र ब्रह्मणा महानननमीवास इडया मदन्तः प्रसमित्र मर्त्तो अस्तु प्रयस्वांस्त्वान्नष्टवान् महिमाय पृक्तते त्वया बद्धो मुमुक्तते। त्वं विश्वस्माद्भुवनात् पासि धर्मणा सूर्यात् पासि धर्मणा। यत् किञ्चेदं वरुण दैव्ये जन उप ते स्तोमान् पशुपा इवाकरमि-ति द्वे॥ ६॥ ॥ ११॥

इति चतुर्थे एकादशी कण्डिका॥ ❋ ॥

---

यद्यु वै सर्वपृष्ठान्यग्निर्गायत्रस्त्रिवृद्राथन्तरो वासन्तिक इन्द्रस्त्रैष्टुभः पञ्चदशो बार्हतो ग्रैष्मो विश्वेदेवा जागताः सप्तदशा वैरूपा वार्षिका मित्रावरुणावानुष्टुभावेकविंशौ वैराजौ शारदौ बृहस्पतिः पांक्तस्त्रिणवः शाक्करो हैमन्तिकः सविताऽतिच्छन्दास्त्रयस्त्रिंशो रैवतः शैशिरोऽदितिर्विष्णुपत्न्यनुमतिः ॥ १ ॥

उ वै इति निपातौ पक्षान्तरविवक्षायां भवतः । सर्वपृष्ठानीति वक्ष्यमाणानां हविषां संज्ञा । एतानि चाम्नायात्यानि । अम्नायात्यानां देवतोपदेशो ध्यानार्थः । अष्टावत्र देवताः, तत्रादितः षण्णामग्न्यादीनामेकैकस्या एव चत्वारश्चत्वारो गुणशब्दाः । ततोऽदितिर्विष्णुपत्नीत्येका । ततश्चानुमतिः ॥

समिद्दिशामाशया नः स्वर्विन्मधुरेतो माधवः पात्वस्मान् । अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रं रक्षतु पात्वस्मान् । रथन्तरं सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा । त्रिवृन्नो विष्ठया स्तोमो अह्नां समुद्रो वात इदमोजः पिपर्तु । उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रेऽहन्योजसीना । इन्द्राधिपतिः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदं । बृहत्साम क्षत्रभृद्दृद्धवृष्ण्यं त्रिष्टुभौजः शुभितमुग्रवीरं । इन्द्रस्तो-

मेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष। प्राची दिशां सहयशा यशस्वती विश्वेदेवाः प्रावृषाह्ना स्वर्वती। इदं क्षत्रं दुष्टरमस्त्वोजो नाधृष्यं सहस्रं सहस्वत्। वैरूपे सामन्निह तच्छकेयं जगत्येनं विक्ष्वावेशयानि। विश्वेदेवाः सप्तदशेन वर्च इदं क्षत्रं सलिलवातमुग्रं। धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाशानां मित्रवदस्त्वोजः। मित्रावरुणा शरदाह्ना चिकित्वमस्मै राष्ट्राय महि शर्म यच्छतं। वैराजे सामन्नधि मे मनीषानुष्टुभा सम्भृतं वीर्यं सहः। इदं क्षत्रं मित्रवदार्द्रदातुं मित्रावरुणा रक्षतमाधिपत्ये। सम्राड्दिशां *सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्त्तु। अवस्यु वाता बृहती तु शक्वरीमं यज्ञमवतु नो घृताची। स्वर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची। त्वङ्गोपाः पुर एतात पश्चाद्बृहस्पते याम्यां युङ्धि वाचं। ऊर्ध्वा दिशां रन्तिराशौषधीनां संवत्सरेण सविता नो अह्ना। †रेवत्सामातिछन्दा उच्छन्दोऽजातशत्रुः स्योना नो अस्तु। स्तोम त्रयस्त्रिंशे भुवनस्य पत्नि विवस्वद्वाते अभि नो गृणीहि। घृतवती सवितराधिपत्ये पयस्वती रन्तिराशा नो अस्तु। ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना सहसो याम नोता। बृहस्पतिर्मातरिश्वोत वायुः सन्ध्वाना वाता अभि नो गृणन्तु। विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो वि-

---

* सहस्राम्नीति से॰ † रैवदिति से॰।

ष्णुपत्नी। व्यचस्वतीषयन्तो सुभूतिः शिवा नो अस्त्वदिते-रुपस्थे। अनुनोऽद्यानुमतिर्यज्ञं देवेषु मन्यतां। अग्निश्च ह-व्यवाहनो भवतं दाशुषे मयः। अन्विदनुमते त्वं मन्यासै शञ्च नस्कृधि। क्रत्वेदत्तायनो हिनु प्र ण आयूंषि तारिष-दिति। वैश्वानरीयं नवमं कायं दशमं॥ २॥

नवमदशमशब्दावेतयोरपि सर्वदृष्टान्तभावार्थौ॥

को अद्य युंक्ते धुरि गा ऋतस्येति द्वे। औपयजैरङ्गारै-रनभिपरिहारे प्रयतेरन्॥ ३॥

उपयड्ढोमार्था औपयजाः, तैरङ्गारैर्व्यवायपरिहारे यत्नः कर्त्तव्य इत्यर्थः॥

आग्नीध्रीयाच्चेदुत्तरेण होतारं॥ ४॥

तेषामाग्नीध्रीयोदाहरणे क्रियमाणे उत्तरेण होतारं प-श्चान्नीत्वा तमेव दक्षिणेन हृत्वा होत्रीये निधानं कर्त्तव्यं॥

शामित्राच्चेद्दक्षिणेन मैत्रावरुणं॥ ५॥

शामित्रोदाहरणे अन्तरा यूपमाहवनीयञ्च दक्षिणातिहृ-त्य दक्षिणेन विहारं पश्चान्नीत्वा मैत्रावरुणस्य तस्योत्तरतो

त्वा होत्रीय एव निधानं भवति। उपायोपदेशादेवास्मि-न्नर्थे सिद्धे पूर्वसूत्रं व्यवायपरिहारार्थमेवायमुपाय उपदि-श्यते नादृष्टार्थमितिज्ञापनार्थं। तेन यत्रैवं कृते व्यवा-यो नास्ति तत्रैवं कर्त्तव्यं। यत्र पुनरेवं कृते व्यवाय एव स्यात् तत्रैवं न कर्त्तव्यं, यथा सवनीयादौ। तत्र ह्युत्तरेणाग्नीध्रीयं परिव्रज्य सदः प्रसृप्तमिति॥

उपोत्थानमग्रे कृत्वा निष्क्रम्य वेदं गृह्णीयात्॥ ६॥

निष्क्रम्य वेदं गृह्णीयादित्येतावता सिद्धे उपोत्थानवचनं प-दार्थव्यत्यासेऽपि प्राकृतमेवेदमुपोत्थानमितिज्ञापनार्थं। तेनास्य समन्त्रत्वं साधितं भवति। अग्र इतिवचनमन्यत्रापि पूर्व-काले क्रियमाणेनोपोत्थानेन पत्नीसंयाजार्थं गमनसिद्धौ त-स्मिन्नेवोपोत्थाने मन्त्रप्रापणार्थं। तेन यथा प्रसृप्तमित्यत्र चोदायुषेत्युत्तिष्ठेत्। वेदग्रहणं तु सद्योविसर्जनोत्तरकालमेवे-ति सिद्धं॥

नेदमादिषु हृदयशूलमर्वागनूबन्ध्यायाः॥ ७॥

हृदयशूलोद्वासनमित्यर्थः॥

संस्थिते वसतीवरीः परिहरन्ति दीक्षिता अभिपरिहारयेरन् ॥ ८ ॥ ॥ १२ ॥

वसतीवरीणां परिहारे क्रियमाणे दीक्षिता अन्तर्भवेयुः अदीक्षिता बहिः स्युरित्येवमर्थं वचनं ॥

इति चतुर्थे द्वादशी कण्डिका ॥ ० ॥

---

अथैतस्या रात्रेर्विवासकाले प्राग्वयसां प्रवादात् प्रातरनुवाकायामन्त्रितो वाग्यतस्तीर्थेन प्रपद्याग्नीध्रीये आज्यस्याहुतिं जुहुयात्। आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्यै स्वाहेति ॥ १ ॥

एतस्या रात्रेरितिवचनाद्रात्रावेवायं पशुः समापनीय इति गम्यते। यस्यां रात्रौ पशोः समाप्तिस्तस्या एतस्या विवासकालेऽन्त्ये चतुर्थभागे प्राक् पक्षिणां प्रवदनात् प्रातरनुवाकायामन्त्रितो वाग्यतस्तीर्थेन प्रपद्याग्नीध्रीये आज्यस्याहुतिं जुहुयादासन्यान्मा मन्त्रादित्यनेन। वाग्यतस्तीर्थेनेतिवचनं

प्रपदनकालादारभ्य वाग्यमनमित्यस्यार्थं। आकृतिमितिवचनं आग्नीध्रीये जात्वाप्येकामाज्याकृतिं जुहुयादाहवनीये द्वे इति-ज्ञापनार्थं। तेनोत्तरयोरप्याकृत्योर्जात्वाप्येति सिद्धं भवति। प्रातरनुवाकायामन्त्रितस्य विधानादस्य सर्वस्य विधेः प्रात-रनुवाकाङ्गत्वं भवति। अतस्तस्यावृत्तावावृत्तिर्भवति॥

आहवनीये वागग्रेगा अग्र एतु सरस्वत्यै वाचे स्वाहा। वाचं देवीं मनसैत्वा विराजमुग्रां जैत्रीमुत्तमामेह भर्त्रां। तामादित्या नावमिवारुहेमानुमतां पथिभिः पारयन्तीं स्वा-हेति द्वितीया॥ २॥

द्वितीयाग्रहणमाकृतिमित्येकवचनस्य प्रकृतत्वादत्राप्येकैवा-कृतिर्माभूदित्येवमर्थं॥

आतः समानं ब्रह्मणश्च॥ ३॥

चशब्दो होतुरनुकर्षणार्थः। ब्रह्मणश्च होतुश्चायं विधिः समान इत्यर्थः। होतुरर्थतया विहितस्यानुकर्षणात् प्रापण-स्येदं प्रयोजनं ब्रह्मणः प्रथमं प्रपदनं पश्चाद्धोतुरिति॥

प्राप्य हविर्धाने रराटीमभिमृशत्यूर्व्यन्तरिक्षं वीहीति॥ ४॥

हविर्धानशब्देन हविर्धानसमीपमुच्यते। यस्यां शाला-यां हविर्धाने तिष्ठतस्तस्याः शालायाः पूर्वस्मिन् द्वारे रराटी

नाम रज्जुर्बद्धा, तामभिमृशति। 'प्राप्य हविर्धाने' हविर्धानयोः समीपवर्त्तिशालायाः पूर्वद्वारं प्राप्येत्यर्थः ॥

द्वार्ये स्थूणे देवी द्वारौ मामासन्ताप्तं लोकं मे लोककृतौ कृणुतमिति ॥ ५ ॥

द्वारिभवे द्वार्ये। दक्षिणेन पाणिना पर्यायेणाभिमर्शनं। मन्त्रस्तु सकृदेव, द्विवचनलिङ्गत्वात् ॥

प्रपद्यान्तरेण युगधरा उपविश्य प्रेषितः प्रातरनुवाकमनुब्रूयान्मन्द्रेण ॥ ६ ॥

हविर्धानयोर्मध्यदेशं प्रपद्य युगधुरावन्तरेणोपविशेत्। तत्रोपविश्य प्रेषितः सन् प्रातरनुवाकमनुब्रूयात् मन्द्रेण स्वरेण। प्रेषितवचनमन्यत्र व्यापृते सति होतरि अन्योऽपि प्रेषितोऽनुब्रूयात् प्रातरनुवाकमित्येवमर्थं। अप्राप्तोऽयं मन्द्रस्वरो विधीयते। तेन ज्ञायते कार्यसमन्वानामेवातिदेशेन प्राप्तिर्नाविधिसमन्वानामिति ॥

आपो रेवतीः क्षयथा हि वस्व उ प्र प्रयन्तु इति सूक्ते अग्ना नो अग्न इति षडग्निमीडेऽग्निं दूतं वसिष्वाहीति सूक्तयोरुत्तमामु-

द्धरेत् त्वमग्ने व्रतपा इत्युत्तमामुद्धरेत् त्वन्नो अग्ने मह्योभिरिति नवेमे विप्रस्येतिसूक्ते युक्ष्वा हि प्रेष्ठं वसुमग्ने बृहद्वय इत्यष्टाद-शार्चन्तम्त्वेतिसूक्ते अग्ने पावक दूतं व इतिसूक्ते अग्निर्होता नो अध्वर इति तिस्रोऽग्निर्होतारम इडेति चतस्रः प्र वो वाजा उप-स्थाय त्वमग्ने यज्ञानामिति तिस्र उत्तमा उद्धरेदग्ने हंस्यग्निं हिन्वन्तु नः प्राग्नये वाचमितिसूक्ते इमां मे अग्ने समिधमिमा-मिति त्रयाणामुत्तमामुद्धरेदिति गायत्रं त्वमग्ने वसूंस्त्वं हि क्षैतवद्ग्नायो होताऽजनिष्ट प्र वो देवायाग्ने कदा त इति पञ्च सखायः सं वस्त्वामग्ने हविष्मन्त इति सूक्ते बृहद्वय इति दशानां चतुर्थनवमे उद्धरेदुत्तमामुत्तमाञ्चादितस्त्रयाणामि-त्यानुष्टुभमबोध्यग्निः समिधेति चत्वारि प्राग्नये बृहते प्र वेधसे कवये त्वन्नो अग्ने वरुणस्य विद्वानित्येतत्प्रभृतीनि चत्वार्यूर्ध्व ऊषुणः सखस्ययदितेति पञ्च भद्रन्ते अग्न इति सूक्ते सोमस्य मातवसं प्रत्यग्निरुषस इति त्रीण्याहोतेति दशानां तृतीयाष्टमे उद्धरेद्दिवस्परीतिसूक्तयोः पूर्वस्योत्तमामुद्धरेत् त्वं ह्यग्ने प्रथम इति षण्णां द्वितीयमुद्धरेत् पुरो वो मन्द्रमिति चत्वा-रि तं सुप्रतीकमिति षट् ऊवे वः सुद्योत्मानं नि होता होतृ-षदन इतिसूक्ते त्रिमूर्द्धानमिति त्रीणि वह्निं यशसमुपप्रजिन्व-न्निति त्रीणि का त उपेतिरितिसूक्ते हिरण्यकेश इति तिस्रोऽ-पश्यमस्य महत इतिसूक्ते द्वे विरूपे इतिसूक्ते अग्ने नयाग्ने वृषन्नित्यष्टानामुत्तमादुत्तमास्तिस्र उद्धरेत् त्वमग्ने सुहवो

रण्व सं ह्रगिनि पञ्चाग्निं वो देवमिति दशानां तृतीयचतुर्थे उद्धरेदिति त्रैष्टुभं मे नावो अग्निं प्र वो यज्ञमग्ने विवस्वत्सखा यस्त्वायमग्निरग्न आयाह्यच्छा नः शीरशोचिषमिति षट् अदर्शि गातुवित्तम इति सप्तेति बार्हतमग्ने वाजस्येति तिस्रः पुरु त्वा त्वमग्न ईडिष्वाच्छोत्यौष्णिहं जनस्य गोपास्त्वामग्न ऋतायव इममूषु वो अतिथिमुषर्बुधमिति नव त्वमग्ने द्युभिरिति सूक्ते त्वमग्ने प्रथमो अङ्गिरानूचिरसहोजा अमृतो नितुन्दत इति पञ्च वेदिषद इति षण्णां तृतीयमुद्धरेदिमं स्तोममर्हते संजागृवद्भिश्चित्र इच्छिशोर्वसुन्न चित्रमहसमिति जागतमग्निन्तं मन्य इति पाङ्क्तं॥ ७॥

एतदाम्नानं प्रातरनुवाकार्थं। अत्र त्रिच्छन्दसां त्रिदेवतानां चोद्धारो विधीयते। अनुष्टुप्पङ्क्तीनां त्रिच्छन्दस्त्वादुद्धारो नाभीष्टः। अत उत्तमामुत्तमाच्चादित इत्यत्र छन्दस एवादित इत्यवगन्तव्यं॥

इत्याग्नेयः क्रतुः॥ ८॥ ॥ १३॥

एतावान् समाम्नायोऽग्निदेवत्य इत्यर्थः। तेन 'ऊर्ध्व ऊषुण ऊतये' इत्यस्य प्रागुक्तस्य प्रगाथस्य यूपाभिधाने विनियुक्तस्याप्याग्नेयमध्यवर्तित्वाल्लिङ्गाविरोधाच्चाग्नेयत्वं साधितं भवति। अस्य क्रतुरिति संज्ञा भवति॥

इति चतुर्थे त्रयोदशी कण्डिका॥ ०॥

अथोषस्यः ॥ १ ॥

क्रतुरिति शेषः। आग्नेयः क्रतुरुक्तः, अथेदानीमुषस्यः क्रतुरुच्यत इत्यर्थः ॥

प्रतिष्ठाप्याश्वनरीकस्त उष इति तिस्र इति गायत्रमुषो भद्रेभिरित्यानुष्टुभमिदं श्रेष्ठं पृथूरथ इतिसूक्ते प्रत्यर्चिरित्यष्टौ च्यवनाामावमुषो वाजेनेदमुत्यदुदुस्रिय इतिसूक्ते व्युषा आ वो दिविजा इति षडिति त्रैष्टुभं प्रत्यु अदर्शि सह वामेनेति बार्हतमुषस्तच्चित्रमाभरेति तिस्र औष्णिहमेता उत्या इति चतस्रो जागतं मह्ने नो अद्येति पाङ्क्तमित्युषस्यः क्रतुः ॥ २ ॥

॥ १४ ॥

उभयत्रोषस्यवचनं अयं क्रतुः कृत्स्नः प्रयोक्तव्य इत्येवमर्थं ॥

इति चतुर्थे चतुर्दशी कण्डिका । ० ॥

---

अथाश्विनः ॥ १ ॥

क्रतुरिति शेषः ॥

एषो उषाः प्रातर्युजेति चतस्रोऽश्विना यज्वरीरिष आश्विनावश्वावत्यागोमद्रूषु नासत्येति तृचा दूरादिहेवेति तिस्र उत्तमा उद्धरेद्वाचिष्ठो वां रथानामिति चतस्र उदीराथामा मे हवमिति गायत्रं यद्यस्थ इतिसूक्ते आ नो विश्वाभिरश्विद्विमित्यानुष्टुभमाभात्यग्निरिति सूक्ते ग्रावाणेव नासत्याभ्यामिति त्रीणि धेनुः प्रत्नस्य क उ श्रवदितिसूक्ते स्तुषे नरेतिसूक्ते युवो रजांसीति पञ्चानां तृतीयमुद्धरेत् प्रति वां रथमिति सप्तानां द्वितीयमुद्धरेदिति त्रैष्टुभमिमा उ वामयं वामोत्यमह्न आ रथमिति सप्त द्युम्नी वां यत्स्थ इति बार्हतमश्विनावर्त्तिरस्मदाश्विनावेह गच्छतमिति तृचौ युवोरु पूरथं हुव इति पञ्चदशेत्यौष्णिहमबोध्यग्निर्ज्म एषस्य भानुरावां रथमभूदिदं ग्रो वां परिज्मेति त्रीणि त्रिश्चिन्नो अद्ये द्यावापृथिवी इति जागतं प्रतिप्रियतममिति पाङ्क्तं। इत्येतेषां छन्दसां पृथक् सूक्तानि प्रातरनुवाकः ॥ २ ॥

कर्त्तव्य इति शेषः। यान्येतानि त्रिषु क्रतुषु सप्त सप्त छन्दांस्यनुक्रान्तानि तेषां सर्वेषां पृथक् सूक्तानि गृह्णीयात्, न कि-

श्चिदपि छन्दः परिवर्जयेत। सर्वेषां छन्दसामेकैकं सूक्तं गृह्णीयादित्यर्थः। सूक्तग्रहणं सूक्तानामखण्डनार्थं। एवं क्रियमाणे यावानृकृसमूहः सम्पद्यते स प्रातरनुवाको भवतीत्यर्थः॥

शतप्रभृत्यपरिमितः॥ ३॥

पूर्वोक्तादन्योऽयं प्रातरनुवाकः शतप्रभृत्यपरिमित इति, शतादधिको द्विशतादर्वागनियतसङ्ख्य इत्यर्थः। अतएवास्मिन् प्रातरनुवाकेऽर्थात् सूक्तखण्डनं भवति। एवमादीनां लघूनां साद्यस्के संभवे च प्रयोगो भवति, तत्र त्वरायाश्चिकीर्षितत्वादिति॥

नान्यैराग्नेयं गायत्रमत्यावपेद्ब्राह्मणस्य॥ ४॥

अन्यैश्छन्दोभिराग्नेयं गायत्रं छन्दो नात्यावपेत्। अन्यैरिति बहुवचनस्य त्रिष्वेव चरितार्थत्वात् त्रिभिरत्यावापो न कर्त्तव्यः। त्रिभिरधिकैरत्यावापे न दोषः। एष नियमो ब्राह्मणस्य॥

न त्रैष्टुभं राजन्यस्य। न जागतं वैश्यस्य॥ ५॥

आग्नेयमित्यनुवर्त्तते, अत्यावपेदिति च॥

अध्यासवदेकपदद्विपदाः ॥ ६ ॥

उपसमस्य प्रणुयादित्यर्थः। उपसमासो नाम पूर्वस्या ऋचोऽन्ते प्रणवमकृत्वा ऋगन्तरवशेन एकपदद्विपदाः सन्धाय तासामन्ते प्रणवं कुर्यात्। अत्र तासां बहुत्वाद्बहुवचनोपदेशसामर्थ्यादन्यस्याप्ययं विधिर्भवति यावत्सोचे। अयमुपसमास एकपातिन्या एव द्विपदायाः, अनेकद्विपदासंहतौ पच्छ एव वक्तव्यः। पच्छो द्विपदां त्विरमुवचनेऽपि तथादर्शनात् ॥

यथास्थानं ध्रुवाणि माङ्गलान्यगन्म महा नारिश्मोडे द्यावापृथिवी इति ॥ ७ ॥

यथास्थानमिति यस्मिन् क्रमे एतानि विहितानि तस्मिन्नेव क्रमेऽनुवक्तव्यानीत्यर्थः। ध्रुवाणीतिवचनाच्छतकल्पेऽप्येषां खण्डनं माभूदिति गम्यते। माङ्गलानीति चैषां संज्ञा भवति। विध्यन्तरविहितत्वात् स्वस्य च्छन्दसोऽधिकान्येतानीति गम्यते ॥

सञ्ज्ञागृवह्निरिति च यः प्रेष्यत्स्वर्गकामः ॥ ८ ॥

यः पुनर्यजमानो मरिष्यदवस्थो वर्त्तते स यद्येवं कामयेत

यदि मरिष्यामि स्वर्गमाप्नुयामिति तस्यैतदपि माङ्गल्यं भवतीत्यर्थः॥

ईळेन्याबीयमावर्त्तयेदातमसोपघातात्॥ ९॥

यदा ईळेन्यावीयपर्यन्ते सूक्ते तमसोपघातो न जायते तदा तदेव सूक्तमावर्त्तयेत् यावत्तमोऽपगच्छेत्॥

काल उत्तमयोत्सृप्यासनान्मध्यमस्थानेन प्रतिप्रियतममित्युपसन्तनुयात्॥ १०॥

काले तमसोपहते इत्यर्थः। ईळेन्यावीयस्योत्तमयर्चा प्रतिप्रियतममिति सूक्तमुपसन्तनुयात्, पूर्वासनादुत्सृप्यैतत् कर्त्तव्यं। एतदुक्तं भवति। प्रातरनुवाकस्यादित आरभ्य ईळेन्यावीयपर्यन्तं मन्द्रस्वर आरोहक्रमेण सर्वः प्रयोक्तव्यः। ईळेन्यावीयस्योत्तमस्यगन्तेन मन्द्रस्योत्तमेन यमेन प्रतिप्रियतममित्येतद्विषयं मध्यमस्य प्रथमयममारभते। अस्मिन् सूक्ते उत्तमायाः प्रागेवारोहिक्रमेणैव मध्यमस्वरं सर्वं प्रयुञ्जीत। ततो मध्यमस्योत्तमेन यमेन उत्तमस्यगन्तमुत्तमस्य प्रथमं यममाददीत। आदायारोहिक्रमेणैवोत्तमं स्वरं तस्यामेवर्चि सर्वं प्रयुञ्जीत। एवं स्वरसंक्रमणेनानभ्याहतं भवति। उत्सर्पणञ्च पूर्वत्रोत्तमायाः समाप्तिचणे उत्तरत्रोपोत्तमायाः समाप्तिचण इत्यर्थः॥

पुनरुत्सृप्योत्तमयोत्तमस्थानेन परिदध्यादन्तरेण द्वार्ये स्थूणे अनभ्याचृतमाश्रावयन्निवाश्रावयन्निव ॥ ११ ॥ ॥ १५ ॥

उत्सर्पणस्वरूपमत्रैवं भवति। बद्धासन एव पूर्वस्थानात् स्थानान्तरे उत्पतन् युगधुरावन्तरेणोपविष्टः सन् प्रथममुत्सृप्य पूर्वासनात् परतः सन् प्रतिप्रियतममित्यष्टावन्वाह, ततः पुनरुत्सर्पणे द्वार्ये स्थूणे अन्तरेण सन् उत्तमया परिदध्यात्। आश्रावणस्य सिद्धवदुपदेशात् तस्यैवं स्वरो भवतीति निश्चीयते। एतदुक्तं भवति। मन्द्रादीनां मध्ये यस्मिन्नाश्रावणं प्रयुज्यते तस्य स्वरस्य सर्वोपमा आश्रावणे प्रयोक्तव्याः। प्रत्याश्रावणेऽप्येवं प्रयोगसिद्ध्यर्थमाश्रावणदृष्टान्तः कृतः। इदमनुवचनं प्रधानकर्म शंसतिवत्। ननु सर्वाण्यनुवचनान्यग्निमन्थनादीनि संस्कारकर्माणीति प्रसिद्धं। सत्यं प्रसिद्धं। तत्र संस्कार्यस्य समन्वयोऽस्त्यग्न्यादेः। नन्वत्रापि प्रातर्यावणामग्न्युषोऽश्विनां समन्वयो दृश्यते, सम्प्रेषतो मन्त्रलिङ्गाच्चेति। सत्यं समन्वयोऽस्ति। तस्य संस्कार्यत्वे प्रमाणं नास्ति, स्तौतिशंसत्यादावप्यभिधेयतया समन्वयस्य दृष्टत्वात्। यत्तु सम्प्रेषत इति तत्र प्रातर्यावदेवतासंबन्धिगुणसङ्कीर्त्तनार्थमनुब्रूहीत्येवमपि भविष्यति। एषां कार्यार्थान्तराणामत्राभिधानमित्यनवगमात्। उषःसंबन्धि तु कर्म्म ज्योतिष्टोमे क्वचिदपि न दृश्यते, अग्न्यश्विसंबन्धि त्वस्त्येव। तथापि तत् कर्मसंबन्धितारूपमत्र चिकीर्षितमित्यवगमात् प्रधानकर्मैवैत-

दिति निश्चिनुमः। यदि पुनः कर्मान्तरसम्बन्धिद्रव्यसम्बन्धमात्रादेव संस्कारत्वमभ्युपगतं स्यात्, तत्र सर्वेषां स्तोतिशंसतीनां संस्कारकर्मत्वमेव स्यात्। अत्र च अनुवचनवैधर्म्ये लिङ्गमस्ति। 'मनसा ते वाचं प्रतिगृणामि' इति प्रातरनुवाकमनुब्रुवन्तं होतारमध्वर्युराहेत्यत्र प्रतिगरः संस्तुतिलिङ्गं। तथा चास्य सन्निधौ विश्वरूपा नाम स्तुतिर्वाग्देवत्यायां ऋचि क्रियते, तस्यास्य प्रधानकर्मत्वमवगतं। तत्साहचर्याच्च प्रधानकर्मेति सिद्धं। चिन्ताप्रयोजनं स्वावसरे तदतिक्रियायामासोमप्रयोगपरिसमाप्तेर्विपर्यासप्रायश्चित्तं कृत्वा पुनस्तदपि कर्त्तव्यमेव। प्रधानकर्मत्वे संस्कारकर्मत्वे सति संस्कार्ये प्रायश्चित्तमेव न पुनः प्रयोग इति॥

इति चतुर्थे पञ्चदशी कण्डिका॥ *॥

इत्याश्वलायनसूत्रवृत्तौ नारायणीयायां चतुर्थोऽध्यायः॥०॥

॥ ॐ ॥

परिहितेऽपयिष्य होतरित्युक्तोऽनभिहिंकृत्यापोनप्त्रीया अन्वाहेषच्छनैस्तरां परिधानीयायाः ॥ १ ॥

परिधानविध्युत्तरकालमेवास्यानुवचनस्य विधानात् परिहित इत्यस्मिन्नर्थे सिद्धे यत् परिहितवचनं तत् परिधानीयापोनप्त्रीययोः संबन्धकरणार्थं। तेनानयोः कर्तृस्थानोपवेशनानामैक्यं साधितं भवति। अवधिलस्य शनैर्भावस्य परिधानीयाया एवेति साधितं भवति। सम्प्रैषपाठोऽनुवचनादिपरिज्ञानसाधनयोः सम्प्रैषशास्त्रचोदनयोर्विप्रतिपत्तौ तयोरन्यतरेणापि तदनुवचनादि सिध्यतीत्येवमर्थः। ईषदल्पमित्यर्थः। शनैस्तरान्नीचैस्तरामित्यर्थः। परिहितवचनादेव परिधानीयाया अवधित्वे सिद्धे पुनः परिधानीयावचनं परिधानीयाया अन्त्यावस्थासम्परिग्रहार्थं परिधानीयाया अपि परिधानीयाया इत्येवमर्थं। तत्र परिधानीयायामुत्तमस्वरोऽयमारोहिक्रमेण कृत्स्नः प्रयुक्तः। तत्रान्यात् यमाच्छनैस्तरां भवतीत्यर्थः। तत्रानन्तरैरनन्तरयोर्यमयोरुच्चनीचलोपलम्भनोक्रेरायन्तरयमादिषु सर्वेषु यमेषु प्राप्तेष्वपीषच्छब्देन द्व्यन्तरयम एव नियमोऽस्तीति नियम्यते। तेनोत्तमस्य चतुर्थेन यमेनानुवक्तव्यमिति सिद्धं ॥

तासान्निगदादि शनैस्तरान्ताभ्यश्चाप्रसर्पणात्॥ २॥

प्रसर्पणशब्देनेहोत्तमयानुप्रपद्येतेत्येतत् प्रपदनं गृह्यते। एतच्च तासामित्यस्य प्रसर्पणस्य विशेषणत्वाल्लभ्यते। ताभ्य इति निगदात् प्राग्भाविन्य ऋचो गृह्यन्ते। एतदुक्तं भवति। अपोनप्त्रीयाणां यत् प्रसर्पणं तस्मान्निगदादि शनैस्तरां भवतीति। अत्र ईषच्छब्दाभावात् स्वरान्तरादयो ये यमास्ते गृह्यन्ते। तेनात्र मध्यमस्वरो वेदितव्यः॥

परं मन्द्रेण॥ ३॥

प्रपदनाद्यत्परं अपोनप्त्रीयाणां तन्मन्द्रेण प्रयोक्तव्यं। एतदपोनप्त्रीयाधिकाराल्लभ्यते॥

प्रातःसवनञ्च॥ ४॥

प्रातःसवनञ्च मन्द्रस्वरेण प्रयोक्तव्यमिति। तच्चोपांशुग्रहादि अच्छावाकशस्त्रपर्यन्तं। तत्र सर्वत्र मन्द्रस्वरो भवतीत्यर्थः॥

अध्यर्धकारं प्रथमामृगावानमुत्तराः ॥ ५ ॥

अध्यर्धकारस्य उत्तरया मन्त्रानाविरोधादृगावानतायाश्च पूर्वया मन्त्रानाविरोधादत्र द्वितीयादाने पञ्चार्धर्चा अनुच्छसता वक्तव्याः ॥

वृष्टिकामस्य प्रकृत्या वा ॥ ६ ॥

उत्तरा इत्यनुवर्त्तते। सामिधेनीन्यायेनेत्यर्थः ॥

प्रकृतिभावे पूर्वस्यासामर्धर्चेषु लिङ्गानि काङ्क्षेत् ॥ ७ ॥

'प्रकृत्या वा' इत्यस्मिन् पक्षे लिङ्गाकाङ्क्षा एव भवति। यस्या ऋचो यदपेक्षणीयं लिङ्गं तस्याः पूर्वस्या ऋचो अर्धर्चे स्थिला तल्लिङ्गमाकाङ्क्षेत् ॥

प्र देवत्रा ब्रह्मणे गातुरेत्विति नव चिनोतानो अध्वरं देवयज्येति दशमीं ॥ ८ ॥

दशमीग्रहणं ब्राह्मणानुवादः ॥

आवर्त्ततीरधनुद्विधारा इत्यावृत्तास्वेकधनासु ॥ ९ ॥

अत्र द्विविधा आपः, वसतीवर्य एकधनाश्च। तत्र पूर्वेद्युरेव वसतीवर्यो गृहीताः, एकधना इदानीं गृह्यन्ते। ता गृहीताः ग्रहणदेशादेव यजनदेशं प्रति यदा वर्त्तन्ते तदेयमृगनुवक्तव्या ॥

प्रति यदापो अदृश्रमायतीरिति प्रतिदृश्यमानासु ॥ १० ॥

अत्रैवासीनस्य दृष्टिपथमागतासु ॥

आधेनवः पयसा तूर्ण्यर्था: ॥ ११ ॥

'इत्युपायतीषु' इति ब्राह्मणोक्तशेषः। समीपमागतास्वित्यर्थः ॥

समन्या यन्त्युपयन्त्यन्या इति ॥ १२ ॥

समायतीष्वित्यत्रापि शेषः। वसतीवरीभिः समागतास्वित्यर्थः। इतिशब्दो ब्राह्मणोक्तकार्य्यसूचनार्थः ॥

तीर्थदेशे होतृचमसेऽपां पूर्यमाण आपो न देवीरुपयन्ति होत्रियमिति समाप्य प्रणवेनोपरमेत् ॥ १३ ॥

प्रकृतिभावपक्षेऽपि अत्रोपरमो नित्यो विधानसामर्थ्यात् ॥

आगतमध्वर्युमवेरपोऽध्वर्यो ३ उ इति पृच्छति। उतेमनन्नमुरिति प्रत्युक्तो निगदं ब्रुवन् प्रतिनिष्क्रामेत्॥ १४॥

प्रतिवचनपाठः प्रतिवचनार्थप्रतिपादने अविस्पष्टार्थत्वादयमसौ निगद एवं वक्तव्य इत्याह॥

तास्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिन्तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावत इत्यन्तमनवानमुक्त्वोदगासाम्पथोऽवतिष्ठेत॥ १५॥

इत्यन्तवचनात् 'यस्येन्द्र' इत्यादिरप्यस्यैव निगदस्य एकदेश इति गम्यते। आसामेकधनानामागच्छन्तीनां मुखतो गत्वा ता अपरेणातीत्य उत्तरतस्तिष्ठेदित्यर्थः॥

उपातीतास्वन्वावर्त्तेत॥ १६॥

तास्वदूरेणात्मनोऽतीतास्वन्वावर्त्तेत॥

यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत् प्र सजन्यानि तारिषो ३ मम्वयो यन्त्यध्वभिरिति तिस्रः॥ १७॥

अन्वावृत्य ततो यस्येन्द्र इत्यादि ब्रुवन्ननुव्रजेत्। ऋगावानपक्षे चानेन प्रयत्नेन वक्तव्याः कर्त्तव्याः पाठसामर्थ्यात्॥

उत्तमयानुप्रपद्येत ॥ १८ ॥

तिसृणामुत्तमयेत्यर्थः ॥

एमा अग्मन्रेवतीर्जीवधन्या इति द्वे सन्नाद्युत्तरया परिधायोत्तरां द्वार्यामासाद्य राजानमभिमुख उपविशेदनिरस्य तृणं ॥ १९ ॥ ॥ १ ॥

सन्नास्वेकधनास्वित्यर्थः। तासामेवाधिकारात् आग्मन्नाप इत्यनया परिधाय ततो निष्क्रम्य पुनः पूर्वया द्वारा हविर्धानं प्रविश्य तस्यामेव द्वारि या उत्तरा स्थूणा तस्याः पश्चात् समीपे राजानमभिमुख उपविशेत् अकृत्वैव निरसनं। निरसनमन्त्रमुपवेशनमन्त्रमनुक्त्वैव ॥

इति पञ्चमे प्रथमा कण्डिका ॥ ० ॥

उपांशुं हूयमानं प्राणं यच्छ स्वाहा त्वा सुहव सूर्याय प्राणप्राणं मे यच्छेत्यनुमन्त्र्य उः इत्यनुप्राण्यात् ॥ १ ॥

उपांशुर्नाम ग्रहः, तं हूयमानमभिमुखो भूत्वाऽनेन मन्त्रेणानुमन्त्र्यानुलोम्येन प्राणनं कुर्यात्। अन्तःशरीरस्थं वायुं नासिकाद्वारेण बहिर्निर्गमयेदित्यर्थः ॥

अन्तर्याममपानं यच्छ स्वाहा त्वा सुहव सूर्यायापानापानं मे यच्छेत्यनुमन्त्र्य उं इति चाभ्यपान्यात् ॥ २ ॥

आभिमुख्येनान्तःशरीरं बहिष्ठं वायुं नासिकया प्रवेशयेत्। प्राणापानयोः स्वरूपनिदर्शनं पदार्थसंशयनिवृत्त्यर्थं। चकारो ब्राह्मणोक्तविध्यनुकर्षणार्थः। सोऽयं विधिः प्राणं यच्छ स्वाहा त्वा सुहव सूर्यायेत्युपांशुमनुमन्त्र्य तमेवाभिप्राणेदुत्तरेण भागेन। एवमन्तर्याममुत्तरस्य मन्त्रस्य पूर्वेण भागेन, अभ्यपानेदित्येवं वा प्रयोक्तव्यमिति चशब्दः ॥

उपांशुसवनं ग्रावाणं व्यानाय त्वेत्यभिमृश्य वाचं विसृजेत ॥ ३ ॥

उपांशुग्रहार्थः सोम उपांशुरित्युच्यते। सोऽभिषूयते येन ग्राव्णा स उपांशुसवनः, तं व्यानाय त्वेत्यभिमृश्य अपोनप्त्रीयारम्भकाल उपविश्य भूर्भुवः स्वरिति वाचं विसृजेत्। प्रातरनु-

वाकाप्रमन्त्रणकाल एव नियता वाक्, तत्समन्यास्वपीतन्नीया-स्वपि तद्वस्यैव वाक् स्थिता, तासु चानुप्रवदनुप्रजननमस्तीति तदन्ते विसृज्यमाना मन्त्रवत्येव विसृज्या भवेत्, सैवात्रानाज्ञ-तयोरुपांश्वन्तर्यामयोरित्युक्ताष्टा विसृज्यत इत्यवगन्तव्यं, नात्र-विचारणीयमन्यदस्ति ॥

पवमानाय सर्पणेऽन्वक् छन्दोगान्मैत्रावरुणो ब्रह्मा च नित्यौ ॥ ४ ॥

पवमानायेतिवचनं पवमानार्थमुद्गात्रादयो यत आरभ्य प्रसर्पन्ति तत एवारभ्य एतावपि प्रसर्पेतां न विप्रकृष्टामका-लोत्तरकालमेवेत्येवमर्थं। अन्वक् पृष्ठत इत्यर्थः। नित्यवचनं शतातिरात्रादौ मुख्यकर्म द्वितीयः कुर्यात् द्वितीयकर्म तृतीयः कुर्यादित्यत्रापि सर्पणे तयोर्नित्ययोरेव प्रापणार्थं, न तत् कार्यं कुर्वतोस्तद्वर्ग्यपुरुषयोः प्राप्तिरित्येवमर्थं॥

तावन्तरेणेतरे दीक्षिताश्चेत् ॥ ५ ॥

ताविति ब्रह्ममैत्रावरुणावित्यर्थः। इतर इति ताभ्याम-न्ये होतृब्रह्मवर्ग्याः पुरुषा इत्यर्थः। दीक्षिताश्चेदितिवचनाद-दीक्षितानामेतेषां सर्पणं नास्तीति गम्यते। दीक्षितानां यज-मानत्वादेव सर्पणे सिद्धे पुनर्वचनमेतेषामसञ्चालोकविधि-प्रापणार्थं। अन्तरेणेति मध्यत इत्यर्थः॥

द्रप्सश्च स्कन्देति द्वाभ्यां विप्रुड्ढोमौ हुत्वाऽध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशात्॥ ६॥

विप्रुड्ढोम इति नाम, हुत्वा सर्पन्तीति वचनात् सर्पणाङ्गो होम इति गम्यते। तेन ये ये प्रसर्पन्ति ते ते जुह्वतीति गम्यते। अध्वर्युमुखा अध्वर्यूक्तकारिण इत्यर्थः। समन्वारब्धा अविच्छेदेन परस्परं स्पृशन्त इत्यर्थः। आतीर्थदेशादितिवचनात् तावदेवाध्वर्युप्रधानत्वं तीर्थदेशं प्राप्य उपवेशनादि स्वाधीना एवेत्येवमर्थं॥

ततस्तोत्रायोपविशन्त्युद्गातारमभिमुखाः॥ ७॥

तस्य बहिष्पवमानस्य स्तोत्रं तत्स्तोत्रं, स्तुतिरित्यर्थः। बहिष्पवमानस्तुत्यर्थमुद्गातारमभिमुखा उपविशेयुः, दक्षिणतो ब्रह्मोदङ्मुखः पश्चान्मैत्रावरुणः प्राङ्मुखः। बहुवचनं सचापेक्षं॥

तान् होतानुमन्त्रयतेऽत्रैवासीनो यो देवानामिह सोमपीथो यज्ञे बर्हिषि वेद्यां। तस्यापि भक्षयामसि मुखमसि मुखं भूयासमिति॥ ८॥

तान् बहिष्पवमानार्थमुपविष्टानित्यर्थः। अत्रैवासीन इति, यत्रैवोपविश्य वाग्विसर्गं करोति तत्रैवेत्यर्थः। होतृप-

इत्थं होतैवात्रासीनोऽनुमन्त्रयते न यजमान इत्येवमर्थं। यदि यजमान एव हौत्रं करोति तदा यजमानतया सर्पणं कृत्वा तत्रस्थ एवानुमन्त्रणं कुर्यात्। तथाच वचनमस्ति 'यद्यु वै स्वयं यजमानो होता स्यात् सर्पेदेव' इति॥

दीक्षितश्चेद्व्रजेत् स्तोत्रोपस्थाराय॥ ९॥

यदि होता दीक्षितः तदानुमन्त्रणं कृत्वा पुनस्तत्र गच्छेद्याजमानं कर्त्तुं। पूर्वसूत्रे होतृग्रहणात् यजमानस्य होतृत्वे गत्वा अनुमन्त्रणमुक्तं, अत्र तु होतुर्यजमानत्वे अनुमन्त्रणं कृत्वा पश्चाद्याजमानं कर्त्तुं व्रजेदित्युक्तं। तेनेदमुक्तं भवति। एकाहाहीनेषु यजमानस्य होतृत्वे सत्रेषु गृहपतेर्होतृत्वे च गत्वानुमन्त्रणं भवति। सत्रेषु होतैवानुमन्त्रणं कृत्वा गच्छेद्याजमानकरणाय, अन्यत्रानुमन्त्रणं कृत्वापि न गन्तव्यमित्यर्थः॥

सर्पेच्चोत्तरयोः सवनयोः॥ १०॥

यदि होता दीक्षितः तदोत्तरयोः सवनयोः सर्पणमपि कुर्यात्। बहिष्पवमानेऽत्रैवासीनोऽनुमन्त्र्य पुनर्गच्छेत्। उत्तरयोः सवनयोः सर्पणादि सर्वं याजमानं कुर्यादित्यर्थः॥

ब्रह्मन् स्तोष्यामः प्रशास्तरिति स्तोत्रायातिसर्जितावतिसृजतः॥ ११॥

ब्रह्ममैत्रावरुणयोरयं विधिः, तयोरेवात्र प्रत्यतिसर्जनविधिदर्शनात्। अतिसर्जनवाक्यपाठोऽतिसर्जनवाक्ये परस्मैपदप्रयोगे सत्यपि प्रत्यतिसर्जनवाक्ये आत्मनेपदप्रयोगार्थं ॥

भूरिन्द्रवन्तः सवितृप्रसूता इति जपित्वा स्तुध्वमिति ब्रह्मा प्रातःसवने ॥ १२ ॥

प्रातःसवनग्रहणं माध्यन्दिनादिस्तोत्रनिवृत्त्यर्थं ॥

भुव इति माध्यन्दिने स्वरिति तृतीयसवने। भूर्भुवः स्वरिन्द्रवन्तः सवितृप्रसूता इत्यूर्ध्वमाग्निमारुतात् ॥ १३ ॥

इन्द्रवन्त इत्यादौ पूर्ववदधिकारे सिद्धेऽपि पुनर्वचनं व्याहृतित्रयविशिष्टस्तुर्थोऽयं मन्त्र ऊर्ध्वमाग्निमारुतात् भवति न पूर्वे त्रयो मन्त्राः संहत्य भवन्तीत्येवमर्थं। उक्थ्यादिष्विति वक्तव्ये ऊर्ध्वमग्निमारुतादितिवचनं माध्यन्दिनात्यग्निष्टोमस्तोत्रसंग्रहार्थं ॥

स्तुत देवेन सवित्रा प्रसूता ऋतञ्च सत्यञ्च वदत। आयुष्मत्य ऋचो मा गात तनूपात् साम्न ओमिति जपित्वा मैत्रावरुण स्तुध्व,मित्युच्चैः ॥ १४ ॥　　　॥ २ ॥

अपिलोपैरित्युभयवचनमस्येदं भवतीत्येवमर्थं। तेन ब्राह्मणोऽन्यापि ऊर्ध्वं वा प्रणवादित्ययमपि विधिर्भवतीति गम्यते॥

इति पञ्चमे द्वितीया कण्डिका॥ * ॥

अथ सवनीयेन पशुना चरन्ति॥ १॥

सवनेषु भवः सवनीयः। वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवने इत्येवं यष्टव्य इत्यर्थः। परिव्ययणाद्युक्तमित्येवमादिभिर्लिङ्गैः पशुत्वे सिद्धेऽपि पशुनेतिवचनं पुरोडाशानामपि सवनीयसंज्ञाप्रापणार्थं॥

यद्देवतो भवति॥ २॥

तस्य पशोर्या या देवता विहिता शाखान्तरेष्वपि विहिता तद्देवत्योऽपि पशुः कर्त्तव्यः। एतदुक्तं भवति। सवनीये पशौ देवतान्तरप्राप्तावप्यसमाम्नातत्वं नास्तीत्यर्थः॥

आग्नेयोऽग्निष्टोम ऐन्द्राग्न उक्थ्ये द्वितीय ऐन्द्रो वृष्णिः षोडशिनि तृतीयः सारस्वती मेष्यतिरात्रे चतुर्थी ॥ ३ ॥

अत्र चशब्दप्रयोगादेव समुच्चये सम्पाद्ये सत्यपि यद्द्वितीयादिभिः शब्दैः समुच्चयं विदधाति तज्ज्ञापयति प्राथिकोऽयं समुच्चय इति। वृष्णिर्मेषजातौ पुमान् ॥

इति क्रतुपशवः ॥ ४ ॥

एते चत्वारः क्रतुपशुसंज्ञा भवन्ति॥

परिव्ययणाद्युक्तमग्नीषोमीयेणाचात्वालमार्जनाद्दण्डप्रदानवर्ज ॥ ५ ॥

परिव्ययणादि यच्चात्वालमार्जनपर्यन्तं अग्नीषोमीये पशौ विहितं तदत्रापि भवति। अयमेवार्थोऽत्र विधातुमिष्टः। एवं व्याख्यायमाने उभयत्र चात्वालमार्जनस्य नेदमादिषु मार्जनमिति प्रतिषिद्धस्य प्रतिप्रसवः कृतो भवति। अग्नीषोमीयसंबन्धितया सिद्धवदुपदिश्य तस्य तस्य सवनीयसम्बन्धितया पुनर्विधानात् तदवच्छन्तर्भावाद्दण्डप्रदानमत्र प्रतिषिध्यत। तेनाप्रत्तमेवामन्त्रकमादाय पूर्ववद्धोतारं परिहृत्य तस्यापतो गमनादि पूर्ववत् कुर्यात् ॥

उपविश्याभिहिंकृत्य परिव्ययणीयान् त्रिः ॥ ६ ॥

उपविश्येतिवचनमुपविश्य परिव्ययणीयामेव ब्रूयान्न पूर्वस्या उत्तरार्द्धर्चमपीत्येवमर्थं ॥

आवह देवान् सुन्वते यजमानायेत्यावाहनादिसुन्वच्छब्दोऽग्रे यजमानशब्दादैष्टिकेषु निगमेषु ॥ ७ ॥

आवाहनादिषु सुन्वच्छब्दोऽग्रे यजमानशब्दादित्येवंलक्षणसिद्धस्य सुन्वच्छब्दस्य सुन्वते यजमानायेति पाठो यजमानशब्दादेवाग्रे सुन्वच्छब्दः कर्त्तव्यः, न तत्पर्यायात् यज्ञपतिशब्दादेरित्येवमर्थं, यजमानशब्दसमानविभक्तिप्रापणाय चेति। आवाहनादिग्रहणमस्मिन्नहनि यदा यदैष्टिकं तन्त्रं प्रवर्त्तते तदा तदा अस्य विधेः प्रापणार्थं। ऐष्टिकग्रहणमनैष्टिकनिवृत्त्यर्थं ॥

नान्त्याद्वारियोजनादूर्ध्वं ॥ ८ ॥

अहर्गणेऽन्त्यमनन्त्यं चास्तीति विशेषणं। एकाहेष्वेकत्वादहस्तदेवान्त्यवद्वर्तते। अन्त्येऽहनि यद्धारियोजनं तस्मादूर्ध्वमयं विधिर्न भवतीत्यर्थः ॥

न प्रावित्रं साधु ते यजमान देवता ओमन्वतीतेऽस्मिन् यज्ञे यजमानेति च ॥ ९ ॥

अनयोरपि विषययोरयं विधिर्न भवति॥

प्रागाज्यपेभ्यः सवनदेवता आवाहयेदिन्द्रं वसुमन्तमावहेन्द्रं रुद्रवन्तमावहेन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमावहेति॥ १०॥

सवनदेवता अनिर्द्दिष्टदेवतानां सोमानां सवने सवने देवताः, ते च सवनमुखे सवनमुखे होतुर्वषट्कारे ह्रयन्त इत्यर्थः। अपूर्वत्वात् सोमस्यावाहनप्रकारपाठोऽयमप्राप्तत्वात् कृतः॥

ताः सूक्तवाक एवानुवर्त्तयेत्॥ ११॥

अयमप्यप्राप्तविधिः, अपूर्वत्वादेव। एवकारो विस्पष्टार्थः॥

प्रवृताहुतीर्जुह्वति वषट्कर्त्तारोऽन्येऽच्छावाकात्॥ १२॥

येऽस्मिन्नहनि वषट्कारसम्बन्धिनस्तेऽस्मिन् काले प्रवृताहुतीर्जुह्वति अच्छावाकं वर्जयित्वा। अस्मादेवाच्छावाकप्रतिषेधादवगम्यते प्रवृताहुतयो न वरणनिमित्ता इति, अच्छावाकस्य वरणाभावात्, तेनाग्नीषोमीयेऽहनि वरणे कृतेऽपि होतुरन्ये तस्मिन्नहनि न जुह्वति। होतुस्तु पाक्षिको वैकल्पिकः सिद्ध एव॥

चात्वाले मार्जयित्वाध्वर्युपथ उपतिष्ठन्त आदित्यप्रभृतीन् धिष्ण्यान् १३॥

चात्वालमार्जनान्तं प्राग्गुक्तं कर्मोपदिष्टं। तच चात्वालमार्जने कृते सौमिकमुपस्थानादि कर्म कुर्युरित्यर्थः। तेन प्राग्गुक्तकर्त्तार एव मार्जनं कुर्युः। अध्वर्युपथ इत्यर्ध्वर्युपथे तिष्ठन्त इत्यर्थः। आदित्यप्रभृतीन् वक्ष्यमाणान् धिष्ण्यानुपतिष्ठन्ते। आदित्यप्रभृतिवचनमादित्यस्यापि धिष्ण्यत्वप्रतिपादनार्थं। तेनोपस्थितासेत्यादावादित्यस्यापि ग्रहणं भवति॥

आदित्यमग्रे। अध्वनामध्वपते श्रेष्ठः स्वस्त्यस्याध्वनः पारमशीयेति॥१४॥

उपतिष्ठन्त इति वर्त्तते। अग्रवचनमादित्यप्रभृतीन् धिष्ण्यानुपतिष्ठन्त इति वचनात् प्रत्युपस्थानमादित्यप्रभृतित्वे प्राप्ते तन्निवृत्त्यर्थं। तेन सकृदेवाग्र उपस्थातव्यो न यावदुपस्थानमिति॥

यूपादित्याहवनीयनिर्मन्थ्यानग्नयः सगराः सगरा अग्नय सगराः स्थ सगरेण नाम्ना। पातमाग्नयः पिपृतमाग्नयो नमो वो अस्तु मा मा हिंसिष्टेति॥१५॥

अत्राप्यादित्य उपस्थेयो यूपादिभिः सह तस्यापि निर्देशात्। निर्मन्थ्यो नाम यत्राग्निर्मथ्यते स देशः॥

सव्यावृतः शामित्रोवध्यगोहचात्वालोत्करास्तावान् ॥ १६ ॥

एवमेव शामित्रः पशुश्रपणार्थोऽग्निः। ऊवध्यगोहो नाम आन्त्रप्रच्छादनस्थानं। आस्तावो यत्र बहिष्पवमानः स्तूयते स देशः ॥

एवमेव दक्षिणावृत आग्नीध्रीयमच्छावाकस्य वादं दक्षिणं मार्जालीयं खरमिति ॥ १७ ॥

एवमेवेत्युभयत्रापि संबध्यते। तेनाग्नयः सगरा इत्ययमेवोभयत्र भवति। आग्नीध्रीयोऽग्निविशेषो य उत्तरतो निहितः। अच्छावाकस्य वादः यस्मिन् देशे आसीनोऽच्छावाकः 'अच्छावाक वदस्व' इत्युक्तो वदति स देशः। दक्षिणं मार्जालीयमिति मार्जालीय एवोच्यते। तेन उत्तरेऽपि मार्जालीयोऽस्तीति गम्यते। खरो नाम यस्मिन् देशे ग्रहचमसाः साद्यन्ते स देशः। विशेषणविशेष्यभ्रान्तिनिवृत्त्यर्थमसमासकरणं नोपस्थानभेदर्शनार्थं। तेन एतांश्चतुरः सकृदेवोपतिष्ठेरन् ॥

उत्तरेणाग्नीध्रीयं परिव्रज्य प्राप्य सदोऽभिमृशन्त्युर्व्यन्तरिक्षं वीहीति ॥ १८ ॥

आग्नीध्रीयमुत्तरेण परिव्रज्य सदसो द्वारदेशं प्राप्य सदोऽ-

भिमृशन्ति, मन्त्रेण प्राप्येतिवचनं प्राक्चेष्टानिवृत्त्यर्थं। प्राप्याभिमृशन्ति, नान्यत् सम्पादनीयमित्यर्थः ॥

द्वार्ये संमृश्यैवमपरानुपतिष्ठन्ते ॥ १९

द्वार्ये इति पूर्वस्या द्वारः स्थूणे इत्यर्थः। प्राप्य सद इति प्रकृतत्वादाहवनीयप्रदेशादागच्छतां सदःप्राप्तिः पूर्वभाग इति गम्यते। तत्र च प्राप्त्यनन्तरं द्वार्याभिमर्शनविधानात्। प्राप्तिश्च सदसो द्वारप्रदेशस्यैवेति गम्यते। अभिमृशन्तीति वर्त्तमाने संमृश्येतिवचनं, वैलक्षण्यमसन्निहितेन मन्त्रेण 'देवी द्वारा' इवत्यनेनाभिमर्शनं। एवमित्यस्यः मगरा इत्यनेनेत्यर्थः। अपरानिति सदःपूर्वद्वारप्राप्तानां विधानात् सदसोऽपरान् शालामुखीयादीनित्यर्थः। शालामुखीयादीनित्यनुक्त्वाऽपरानितिवचनात् तत्रस्था एवोपतिष्ठेरन् ॥

उपस्थितांश्चानुपस्थितांश्चाप्यपश्यन्तोऽव्यनीक्षमाणाः ॥ २० ॥

उपतिष्ठन्त इति वर्त्तते। उपस्थिता आदित्यादयः। अनुपस्थिताः सदस्याः होत्रीयादयः। चशब्द एवंशब्दानुकर्षणार्थः। अप्यपश्यन्त इतिवचनात् सर्वत्र शक्तिविषये अभिमुख एव कर्माणि कुर्यादित्यवगम्यते। न ईक्षमाणा अनीक्षमाणा विविधमनीक्षमाणा व्यनीक्षमाणाः, न व्यनीक्षमाणाः, द्वि-

प्रतिषेधत्वात् प्रकृत्यर्थप्राप्तिः, विविधवीक्षमाणा इत्यर्थः। एतदुक्तं भवति। उपस्थितामनुपस्थितांश्च सर्वान् पश्यन्तोऽपि इतस्ततः ईक्षमाणाः 'अग्नयः सगराः' इत्यनेन मन्त्रेण सकृदेव सदसः पूर्वद्वारप्रदेशस्था एवोपतिष्ठेरन्निति॥

होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टेति पूर्वया द्वारा सदः प्रसर्पन्त्युरुन्नो लोकमनुनेषि विद्वानिति जपन्तः॥ २१॥

पूर्वद्वारदेशगतत्वात् तयैव प्रसर्पणे सिद्धे यत् पूर्वग्रहणं करोति तज्ज्ञापयति सदःप्रवेशनद्वाराभिमर्शे सति पूर्वयैव प्रवेशो भवतीति। 'उरुन्नः' इत्येतामृचं सर्वे सहजपन्तः पूर्वया द्वारा प्रसर्पेयुरित्यर्थः॥

उत्तरेण सर्वान् धिष्ण्यान्त्स्वान्त्स्वानपरेण यथा स्वधिष्ण्यानां पश्चादुपविश्य जपन्ति। यो अस्य सौम्यो वधोघायनामुदीरति। विषूकुहमिव धन्वना व्यस्याः परिपन्थिनं सदसस्पतये नम इति॥ २२॥

सूत्रोक्तक्रमेण होतृप्रथमाः प्रविश्य ततो नेष्टृपोतृब्राह्मणाच्छंसिहोतृमैत्रावरुणा इत्यनेन क्रमेण उत्तरेण सर्वान् धिष्ण्यान् गत्वा स्वान् स्वानपरेण गत्वा यो यो यस्य स्वो धिष्ण्यस्तस्य तस्य पश्चादुपविशेयुः। उपविश्य यो अस्येति जपेयुः।

नेष्टुः सदसानपरेण गमनं नास्ति, असम्भवात्। एवमपरया सदसा प्रसृप्य दक्षिणपुरस्तान् मैत्रावरुणस्योपविशेत्॥

एवमित्युपस्थानादिजपान्तमतिदिश्यते। तमन्वञ्च ऋत्विजः प्रसर्पकाः॥ २३॥

ऋत्विग्ग्रहणं प्रसर्पकविशेषणं। ये प्रसर्पका ऋत्विजश्च ते ब्रह्माणं प्रसर्पन्तमनु तेनैव द्वारेण प्रसर्पेयुः। ये दशपेये वक्ष्यन्ते त एवेत्यर्थः। तेनार्थितया दिदृक्षया च प्रसृप्तानामत्र प्रसक्तो नास्तीति तेषामयं नियमो न भवतीति॥

पूर्वेणौडुम्बरीमपरेण धिष्ण्यान् यथान्तरमनूपविशन्ति॥ ॥ २४॥

इदमपि तेषां स्थानविधानं। यथान्तरं यथासन्निकृष्टमित्यर्थः। यो यस्य चमसभक्षसम्बन्धितया सन्निकृष्टः स तस्य समीप उपविशतीत्यर्थः॥

एतयाऽऽवृताऽऽग्नीध्र आग्नीध्रीयमप्याकाशं॥ २५॥

आग्नीध्रोऽप्यनेन प्रकारेणोपस्थानादिजपान्तं कुर्यात्। आग्नीध्रीयन्तु प्रविशेत्। सञ्चरादितममसञ्चरादितममपीत्येवमर्थमप्याकाशमितिवचनं॥

दक्षिणादयो धिष्ण्या उदकसंस्थाः प्रसर्पिणां ॥ २६ ॥

स्वस्य धिष्ण्यस्य पश्चादुपवेशनमुक्तं । तत्र को धिष्ण्यः कस्येत्ये-तन्निर्णयार्थमिदमुच्यते । प्रसर्पिणो होत्रादयस्तेष्वधिकृतेषु त-दधिकारार्थं पुनः सर्पिग्रहणं । अनधिकृतस्यापि प्रसर्पिणो-ऽच्छावाकस्य ग्रहणार्थं दक्षिणादय इत्येतावतैवोदक्संस्थत्वे सिद्धे यदुदक्संस्थवचनं तज्ज्ञापयति सर्वत्र दक्षिणोत्तररूपेण व्यवस्थितेषु उदक्संस्थैव क्रिया कर्त्तव्या नान्यथेत्येवमर्थं ॥

आद्यौ तु विपरीतौ ॥ २७ ॥

मैत्रावरुणस्य दक्षिणतः तस्योत्तरतो होतुरिति ॥

तेषां विसंस्थितसञ्चरा यथास्वं धिष्ण्यानुत्तरेण ॥ २८ ॥

तेषां धिष्ण्यवतां स्वस्य धिष्ण्यस्योत्तरतो यो देशः स विसंस्थितसञ्चरो नाम वेदितव्यः । विसंस्थिते असमाप्ते सवने सञ्चर्यतेऽनेनेति विसंस्थितसञ्चरः ॥

दक्षिणमधिष्ण्यानां ॥ २९ ॥　　　　॥ १ ॥

अधिष्ण्यानामृत्विजां हविर्धानधिष्ण्यमुत्तरेण विसंस्थितसञ्च-
रो भवतीत्यर्थः ॥

इति पञ्चमे तृतीया कण्डिका ॥ ३ ॥

---

अथैन्द्रैः पुरोडाशैरनुसवनं चरन्ति ॥ १ ॥

याज्यानुवाक्यालिङ्गादेव ऐन्द्रत्वे सिद्धे सत्यैन्द्रैरितिवचनं धानादीनां निर्वापकाले या देवताः संबध्यन्ते तासामपनयनार्थं। पुरोडाशैर्न सोमैरित्यर्थः। किञ्च धानादीनां पुरोडाशशब्देनैव संव्यवहारार्थं। अनुसवनं सवने सवने इत्यर्थः। पुरोडाशाद्युक्तमित्यतिदेशादेवानुसवनत्वे सिद्धे यदनुसवनवचनं तज्ज्ञापयति अनुसवनं चरन्त्येव। नान्यदावाहनाद्यपीति ॥

धानावन्तं करम्भिणमिति प्रातःसवनेऽनुवाक्या ॥ २ ॥

प्रातःसवनवचनं मध्याह्नसमये प्राप्तेऽप्यस्मिन् सवन इयमेवानुवाक्या स्यात्, नान्या कल्प्येत्येवमर्थं ॥

माध्यन्दिनस्य सवनस्य धाना इति माध्यन्दिने। तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवने। होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्त्विति प्रैषो लिङ्गैरनुसवनं॥ ३॥

प्रैष इत्येकवचनं जात्यभिप्रायं, त्रयाणां पाठसिद्धत्वात्॥

उद्धृत्यादेशपदं तेनैवेज्या॥ ४॥

अत्राप्येकवचनं पूर्ववत्। देवतादेशस्वरूपत्वादिन्द्रमिति-पदशब्द आदेशपदमित्युच्यते। तदुद्धृत्य तैरेव प्रैषैर्यष्टव्यमित्यर्थः॥

होता यक्षदसौ यज*योऽस्तु स्थान आगूर्वषट्कारौ यत्र क्व च प्रैषेण यजेत्॥ ५॥

यत्र क्व चेतिवचनात् सार्वत्रिकोऽयं विधिः। यत्र क्वचित् कर्मणि प्रैषेण यागे कर्त्तव्ये एतावुद्धृत्य तयोः स्थाने तौ कृत्वा यष्टव्यमित्यर्थः॥

* यो यक्षति सो॰ मू॰।

अथ स्विष्टकृतोऽग्ने जुषस्व नो हविर्माध्यन्दिने सवने जातवेदोऽग्ने तृतीये सवने चि कानिष इत्यनुसवनमनवाक्याः ॥ ६ ॥

अनुसवनाधिकारे पुनरनुसवनवचनं माध्यन्दिने सवने पशुपुरोडाशेन सह स्विष्टकृति क्रियमाणे तस्य मुख्यत्वे सत्यपि एता एव याज्यानुवाक्या भवेयुरित्येवमर्थं ॥

होता यक्षदग्निपुरोडाशानामिति प्रैषो हविरग्ने वीहीति याज्या एतास्वनुवाक्यासु पुरोडाशशब्दं बहुवदेके ॥ ७ ॥

एतास्वनुवाक्यासु ये पुरोडाशशब्दाः ते बहुवचनान्ताः कर्त्तव्या इत्येके आचार्या मन्यन्त इत्यर्थः। तत्सामानाधिकरण्यादेव सहशब्दादयोऽपीति। पुरोडाशशब्दस्याच छत्रिन्यायेन धानादिलक्षणार्थलाच्च बहुत्वसम्बन्धः ॥

विज्ञायते पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत् ॥ ८ ॥ ॥ ४ ॥

पूयति स्रवतीत्यर्थः। स्रवणं तावच्छन्दोवृत्तभङ्गादृक्त्वनाशः। तन्नाशे ऋचा यष्टव्यमिति साधनत्वनाशः। अनूहे पुनरनष्टे साधनत्वे कस्यचित् पदस्य लक्षणया गौण्या वाभिधानं

सम्भवतीति नातीव दोषः। तस्मादिमौ विधिप्रतिषेधौ ब्राह्मणसङ्कीर्त्तितावपि न्यायमूलावेवेति मन्तव्यौ। तेनायमनूहप्रतिषेधः सार्वत्रिक इति मत्वा सर्वेषु यजुर्निगदेष्विति, यजुःष्वेवोहमुक्तवान् भगवानाश्वलायन आचार्यः॥

इति पञ्चमे चतुर्थी कण्डिका॥ ४॥

---

द्विदेवत्यैश्चरन्ति॥ १॥

वक्ष्यमाणग्रहाद्विदेवत्यसंज्ञा भवति। तेन वाय्विन्द्रवायुदेवत्योऽपि द्विदेवत्यसंज्ञो भवति। तैश्चरन्ति। तेषां याज्याप्रैषानुवाक्या वक्ष्यन्त इति सम्बन्धः॥

वायव इन्द्रवायभ्यां। वायवायाहि दर्शतेन्द्रवायू इमे सुता इत्यनुवाक्ये अनवानं पृथक्प्रणवे॥ २॥

एते द्वे ऋचौ द्वे अनुवाक्ये भवतः। ते च सहानवानं वक्तव्ये पृथक्प्रणवे च। पृथक्प्रणववचनं अनुवाक्याद्वित्वा-

*देव प्रणवहित्वे सिद्धे पित्र्यायामृग्द्वित्वेऽपि अनुवाक्याद्वित्वा-भावात् प्रणवद्वित्वं नास्तीत्येवमर्थं ॥*

होता यक्षद्वायुमग्रेगा होता यक्षदिन्द्रवायू अर्हन्तेति प्रैषा-वनवानं ॥ ३ ॥

तत्राप्यनवानवचनं परस्परसम्बन्धार्थं ॥

अग्रं पिबा मधूनामिति याज्ये अनवानमेकागुरे पृथग्वषट्-कारे ॥ ४ ॥

अस्मिन्नेव प्रतीके द्वे ऋचौ द्वे याज्ये भवतः। ते च सहा-नवानं भवतः। तत्र याज्याद्वित्वादागुरो द्वित्वे प्राप्ते एकागुरे एवेति नियम्यते। पृथग्वषट्कारवचनं घर्माश्विनयाज्यासु ऋग्द्वित्वेऽपि याज्याद्वित्वाभावात् साधनद्वारेण एकवषट्कारतां वक्तुं। यत्र पुनर्द्वाभ्यां ऋग्भ्यामेकमेव याज्याकार्यमनुवाक्या-कार्येण साध्यते तत्र पूर्वस्या अन्ते प्रणवो न कर्त्तव्यो वषट्का-रस्य, कार्यभेदाभावात्। सामिधेनीष्वपि प्रत्यृचं प्रणवसम्ब-न्धः कार्यभेदनिमित्त एवेति मन्तव्यः ॥

इदमाद्यनवानं प्रातःसवन इज्यानुवाक्ये ॥ ५ ॥

अयं विधिः प्रातःसवने प्रयुज्यमानानामपि भवति, नो-

त्यग्राणामेव। तेन वाजिनामनुवाक्याप्यनवानं वक्तव्या। 'प्रैषौ चोत्तरयोः' इत्यस्मादेव चशब्दादुत्तरयोरपि ग्रहयोरनुवाक्ययोरप्यनवाने सिद्धे अन्याऽनुवाक्योत्पत्ता अत्र नास्तीति कृत्वा प्रैयुज्यमानविषयत्वमस्य सूत्रस्यावगम्यते॥

प्रैषौ चोत्तरयोर्ग्रहयोः॥ ६॥

प्रैषौ च याज्यानुवाक्यास्र उत्तरयोर्ग्रहयोरनवानं भवतीत्यर्थः॥

कृत्वैतद्ग्रहपात्रमाहरत्यध्वर्युः॥ ७॥

एतदिति प्रकृतं वाय्विन्द्रवायुसम्बन्धि यत् पात्रं तदित्यर्थः। गृह्यत इति ग्रहः सोमः, तस्य पात्रं। एतदुक्तं भवति। यदेतद्वाय्विन्द्रवायुसम्बन्धि ग्रहपात्रं कृत्वा तदेवाहरत्यध्वर्युरेवेति। तेनान्योऽप्यत्र ग्रहो हूयते पात्रमप्यन्यदस्तीति ज्ञायते। अध्वर्युराहरतीतिवचनात् प्रतिप्रस्थाताप्यत्र जुहोतीति गम्यते। तेनास्मिन् भक्ष्यमाणे प्रतिप्रस्थातर्युपह्वयाचनं कर्त्तव्यमित्यवगन्तव्यं॥

तद्गृह्णीयादेतुवत्तः पद्धवत्तुरिति॥ ८॥

तदितिवचनमाहृतं गृह्णीयामाह्रियमाणमित्येवमर्थं॥

प्रतिगृह्य दक्षिणमूरुमपोच्छाद्य तस्मिन् सादयित्वाऽऽकाशवतीभिरङ्गुलीभिरपिदध्यात् ॥ ९ ॥

प्रतिगृह्येतिवचनं ग्रहस्य हस्तान्तरसंक्रमणनिवृत्त्यर्थं। दक्षिणवचनमपोच्छादने सव्यस्य प्रापणार्थं। आकाशवतीभिरङ्गुलीभिरित्यम्भूतेन पाणिनाऽपिदध्यात्, अङ्गुलीभिरेवाकाशवतीभिरपिधातुमशक्यत्वात् ॥

एवमुत्तरे ॥ १० ॥

एवमुत्तरे अपि पात्रे प्रतिगृह्य *सादनपिधाने कुर्यादित्यर्थः ॥

सव्येन त्वपिधाय तयोः प्रतिग्रहो भक्षणञ्च ॥ ११ ॥

प्रतिग्रहभक्षणकाले तु सव्येन पिधानं भवतीत्यर्थः ॥

मैत्रावरुणस्यायं वां मित्रावरुणा होता यक्षन्मित्रावरुणा गृणाना जमदग्निनेत्यैतुवसुविदद्वसुरिति प्रतिगृह्य दक्षिणेनैन्द्रवायवं हृत्वाऽभ्यात्मं सादनं। आश्विनस्य प्रातर्युजा विबोधय होता यक्षदश्विना नासत्या वावृधाना शुभस्पती इति। ऐतुवसुः संयद्वसुरिति प्रतिगृह्यैवमेव हृत्वोत्तरेण शिरः परिहृत्याभ्यात्मतरं सादनं ॥ १२ ॥

---

* साधनेति सं० सटीकपुस्तकान्तरे।

एवमेवेति यथा मैत्रावरुणः पूर्वमासादितमैन्द्रवायवं दक्षिणेन हृत्वाऽभ्यात्ममासादितः, एवमाश्विनः पूर्वसादितावैन्द्र-वायवमैत्रावरुणौ दक्षिणेन हर्त्तव्य इत्यर्थः। ततस्तमुत्तरेण शिरः पश्चान्नीत्वा पुनर्दक्षिणेन शिरः पुरस्तान्नीत्वा मैत्रावरु-णादभ्यात्मतरं सादयेत्॥

अनुवचनप्रैषयाज्यास्तु नित्योऽध्वर्युतः संप्रैषः॥ १३॥

अनुवचनादिष्वध्वर्युसम्प्रैष आकाङ्क्षणीयः। अध्वर्युग्रहण-मध्वर्युपुरुषाणामपि प्रदर्शनार्थं। अतएवाध्वर्युत इत्युक्तवान्ना-ध्वर्योरिति। नित्यवचनं नित्यवचन एव प्रैष आकाङ्क्षणीयो नानित्य इत्येवमर्थं। तेन पशुसूक्तवाकप्रैषादौ न नियमेन प्रैष आकाङ्क्षणीयः॥

उन्नीयमानेभ्योऽन्वाह त्वा वहन्त्वसाविदेवमिन्द्रोपयातेत्य-नुसवनं॥ १४॥

उन्नियमानेभ्य इतिवचनं चमसेषून्नीयमानेभ्यः सोमेभ्य इत्यर्थः। अनुसवनं सवने सवने, एतेषामेकैकं सूक्तमनुब्रूया-दित्यर्थः॥

होता यक्षदिन्द्रं प्रातः प्रातः सावस्य। होता यक्षदिन्द्रं माध्यन्दिनस्य सवनस्य होता यक्षदिन्द्रं तृतीयस्य सवनस्येति प्रेषितः प्रेषितो होताऽनुसवनं प्रस्थितयाज्याभिर्यजति ॥ १५ ॥

एतैस्त्रिभिः प्रैषैर्यथालिङ्गमेव प्रेषितो होताऽनुसवनं स्वाभिः प्रस्थितयाज्याभिर्यजति। होतृग्रहणं होतुरेव प्रैषेण प्रेषणं नान्येषामित्येवमर्थं। अनुसवनं सवने सवने, प्रैषेण प्रेषितो होतैव यजेदित्यर्थः ॥

नामादेशमितरे ॥ १६ ॥

इतरे प्रशास्त्रादयो नामादेशं प्रेषिता यजेयुः, न होता। तेन यद्यप्यध्वर्यवो होतर्यजेति प्रेष्यन्ति, तथापत्र प्रशास्त्रैव यजेत्। नामादेशमिति नामादिश्यादिश्येत्यर्थः। इतरेषां क्रमस्वरूपे आह ॥

प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रः। अच्छावाकश्च ॥ १७ ॥

सूत्रभेदकरणन्त्वैवोत्तरसूत्रे विशेषविध्यर्थं ॥

उत्तरयोः सवनयोः पुराऽऽग्नीध्रात्। इदन्ते सौम्यं मध मित्रं वयं हवामह इन्द्र त्वा वृषभं वयं मरुतो यस्य हि क्षयेऽग्ने पत्नीरिहावहोक्षान्नाय वशान्नायेति प्रातःसवनिक्यः प्रस्थितयाज्याः॥ १८॥

पुनः प्रस्थितयाज्यावचनं प्रशास्त्रादिसंबन्धिनीनामपि तत्संज्ञाप्रापणार्थं। अच्छावाकस्यात्र नोच्यते, 'प्रातर्यावभिरागतमिति यजति' इति स्वावसरे वक्ष्यते॥

पिबा सोममभियमुग्रतर्द इति तिस्रोऽर्वाङेहि सोमकामं त्वाहुरयं सोमस्त्वमेह्यर्वाङिन्द्राय सोमाः प्र दिवो विदाना आ पूर्णो अस्य कलशः स्वाहेति माध्यन्दिन्यः। इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिन्द्रावरुणा सुतपाविमं सुतमिन्द्रश्च सोमं पिबतं बृहस्पत आ वो वहन्तु सप्तयो रघुष्यदो मे वनः सुहवा आहिगन्तनेन्द्राविष्णू पिबतं मध्वो अस्येमं स्तोममर्हते जातवेदस इति तार्त्तीयसवनिक्यः। सोमस्याग्ने वीहीत्यनुवषट्कारः॥ १९॥

अयमनुवषट्कारः कर्त्तव्यः। अनुवषट्कारस्य प्रवृत्तिविषयमाह॥

प्रस्थितयाज्यासु शस्त्रयाज्यासु मरुत्वतीये हारियोजने महिम्नि। आश्विने *चेतरो ग्रहो॥ २०॥

सूत्रभेदकरणं वैषम्यख्यापनार्थं। वैषम्यञ्च शस्त्रान्ते क्रियमाणापि शस्त्रयाज्या न भवतीत्येवमर्थं। तेनायाज्यमाश्विनमित्यवगतं भवति॥

तदेषाऽभि यज्ञगाथा गीयते। ऋतुयाजान् द्विदेवत्यान् यश्च पात्नीवतो ग्रहः। आदित्यग्रहसावित्रौ तान्स्म माऽनुवषट्कृथा इति॥ २१॥

एतद्यज्ञगाथात्मको वेदो यष्टारं शास्ति। गाथाशब्देन ब्राह्मणगता ऋच उच्यन्ते। यज्ञार्था गाथा यज्ञगाथा। सैषा तदनुवषट्कारविधानं प्रति उच्यत इत्यर्थः। कोटिद्वयसङ्कीर्त्तनं सानुवषट्कारा अननुवषट्कारास्चैतावन्त एवेतिज्ञापनार्थं॥

प्रतिवषट्कारं भक्षणं॥ २२॥

---

* च तेरो इति सर्वत्र।

प्रतिवषट्कारं भक्षणे प्रयत्नं कुर्यात्। नात्र भक्षो विधीयते, अन्यत्र विहितत्वात्। तेन वचनान्तरेण विहिते भक्षे तस्यावृत्तिमात्रमत्र गुणो विधीयते। यत्र द्विर्वषट्करोति तत्र भक्षोऽपि द्विरावर्त्तते। यत्र तु सकृदेव वषट्करोति तत्र तु सकृदेवेति सिद्धं॥

तूष्णीमुत्तरं॥ २३॥

उत्तरं प्राशनं तूष्णीमेव कर्त्तव्यं। वषट्कारद्वयप्रसङ्गादत्रैवेदमुक्तं॥

एत्यध्वर्युः॥ २४॥

आहवनीयप्रदेशात् सद आगच्छतीत्यर्थः।

अयाडग्नीदिति पृच्छति॥ २५॥

आगच्छन्तमध्वर्युं होता पृच्छतीत्यर्थः॥

अयाडिति प्रत्याह॥ २६॥

प्रत्याहाध्वर्युरित्यर्थः॥

स भद्रमकर्या नः सोमस्य पाययिष्यतीति होता जपति ॥ २७ ॥ ॥ ५ ॥

होतृग्रहणमध्वर्य्वधिकारात् ॥

इति पञ्चमे पञ्चमी कण्डिका ॥ ० ॥

ऐन्द्रवायवमुत्तरेऽर्धे गृहीत्वाऽध्वर्यवे प्रणामयेदेषवसुः पुरूवसुरिहवसुः पुरूवसुर्मयिवसुः पुरूवसुर्वाक्पा वाचं मे पाह्यु-पहूता वाक् सह *प्राणेनोप मां वाक् सह प्राणेन ह्वयतामुप-हूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ॥ १ ॥

इतरे पात्रे सव्येनापिधाय ऐन्द्रवायवं दक्षिणेन हस्तेनो-त्तरे भागे गृहीत्वाऽध्वर्योरपि ग्रहणाय प्रणामयेत् एषवसु-रिति मन्त्रेण ॥

अध्वर्य उपह्वयस्वेत्युक्त्वाऽवघ्राय नासिकाभ्यां वाग्देवी सोमस्य तृप्यत्विति भक्षयेत् सर्वत्र ॥ २ ॥

* प्राणेनोमां इति सं० पु० हये।

अत्रोपह्वविधानं क्रमार्थं, उत्तरत्र विहितत्वात्। नासिकाभ्यामितिवचनं नासिकाद्वयेनावघ्राणं नियमेन कर्त्तव्यं, तेनान्यत्रेन्द्रियकार्यमनियमेन कर्त्तव्यं एकेन द्वाभ्यां वेति सिद्धं। सर्वत्रेतिवचनमन्यत्राप्ययमेव सोमभक्षणमन्त्रः स्यादित्येवमर्थं॥

प्रतिभक्षितं होतृचमसे किञ्चिद्द्रवनीयानाचम्योपह्वानादि पुनः संभक्षयित्वा न सोमेनोच्छिष्टा भवन्तीत्युदाहरन्ति शेषं होतृचमस आनीयोत्सृजेत्॥ ३॥

होत्रा भक्षितमध्वर्युणा च प्रतिभक्षितं होतृचमसे किञ्चिद्द्रवनीय अनाचम्यैवोपह्वानादि पुनः सम्भक्षयित्वा शेषं होतृचमसे आनीय तत्पात्रमुत्सृजेत्, न प्रागुत्सृजेदित्यर्थः। पुनर्भक्षे प्रतिप्रस्थातर्युपह्वयाचनं कर्त्तव्यं। अस्य सूत्रस्य मध्ये भक्षणनिमित्ताशुचित्वनिर्हरणाय प्रसक्तमाचमनमकृत्वा उपह्वादि कर्त्तव्यमित्युक्तं, 'अनाचम्योपह्वानादि' इति। सोऽयमाचमनप्रतिषेधः सोमभक्षणेऽशुचित्वाभावादुक्त इति तदुपपादनार्थं तत्सूत्रमध्य एव 'न सोमेनोच्छिष्टा भवन्ति' इत्युदाहरन्तीत्युक्तवानाचार्यः। उदाहरन्तीतिवचनादिदमपि स्मृतिवचनमिति दर्शयति। सोमेनेति, सोमभक्षणेनेत्यर्थः। तेनान्यद्रव्यभक्षणेनाशुचित्वमेवेति गम्यते। सोमाधिकारे पुनः सोमग्रहणं सर्वसोमभक्षणप्रापणार्थं॥

एवमुत्तरे ॥ ४ ॥

एवमुत्तरे अपि ग्रहपात्रे भक्षयेत्। तत्र विशेषमाह ॥

न त्वेनयोः पुनर्भक्षः ॥ ५ ॥

अनयोरपि प्रतिप्रस्थातर्युपहवयाचनमस्ति ॥

न कञ्चन द्विदेवत्यानामनवनीतमवसृजेत् ॥ ६ ॥

द्विदेवत्यानां मध्ये कञ्चन ग्रहं होत्रचमसे अनवनीतं नोत्सृजेदित्यर्थः ॥

मैत्रावरुणमेषवसुर्विदद्वसुरिद्धवसुर्विदद्वसुर्मयिवसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाह्युपहूतं चक्षुः सह मनसोप मां चक्षुः सह मनसा ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ॥ ७ ॥

अध्वर्यवे प्रणामयेदिति शेषः ॥

*अक्षिभ्यां त्विद्वावेक्षणं दक्षिणेनाग्रे ॥ ८ ॥

पश्चात् सव्येनेत्यर्थः ॥

सव्येन पाणिना होतृचमसमाददीतैतुवसूनां पतिर्विश्वेषां देवानां समिदिति ॥ ९ ॥

मैत्रावरुणपात्रोत्सर्गान्तं कर्म कृत्वा दक्षिणेनाश्विनमपिधाय सव्येन पाणिना होतृचमसमाददीत मन्त्रेण, पाणिग्रहणमपिधानमपि पाणिनैवाकाग्रवत्यङ्गुलियुक्तेन कुर्यात् नाङ्गुलिभिरेवेत्येवमर्थं ॥

तस्यारत्निना तस्योरोर्वसनमपोह्याद्य तस्मिंस्तादयित्वाऽऽकाग्रवतीभिरङ्गुलीभिरपिदध्यात् ॥ १० ॥

तस्येति सव्यस्येत्यर्थः। ऊरोरितिवचनमूरोरेकदेशस्य यावत्प्रयोजनमपोह्यादनं न सर्वस्येत्येवमर्थं। अपिधानमपि सव्येनाधिकृतत्वादन्यस्यान्यत्र व्यापृतत्वात् ॥

---

* अक्षीभ्यामिति सर्वत्र।

आश्विनं यथाहृतं परिहृत्य पुनः सादयित्वाऽध्वर्यवे प्रणामयेद्देषवसुः संयद्वसुरिद्ववसुः संयद्वसुर्मयिवसुः संयद्वसुः श्रोत्रपा श्रोत्रं मे पाह्युपहूतं श्रोत्रं सहात्मनोप मां श्रोत्र सहात्मना ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ॥ ११ ॥

होतृचमसं सव्येनापिधाय ततो दक्षिणेनाश्विनं गृहीत्वा ततः प्रणामादि कुर्यात् ॥

कर्णाभ्यां त्विहोपोद्यच्छेद्दक्षिणायाग्रे निधाय होतृचमसं स्पृष्ट्वोदकमिडामुपह्वयते ॥ १२ ॥

आश्विनमुत्सृज्य ततो दक्षिणेनैव पाणिना होतृचमसं निधाय स्पृष्ट्वोदकमिडामुपह्वयते ॥

उपोद्यच्छन्ति चमसान् ॥ १३ ॥

इडोपह्वानकाले चमसिनः स्वं स्वं चमसमिडासमीपे उद्यच्छन्ति चमसाध्वर्यवो वा ॥

अवान्तरेडां प्राश्याचम्य होतृचमसं भक्षयेदध्वर्य उपह्वय-स्वेत्युक्त्वा ॥ १४ ॥

अवान्तरेडाप्राशनविधानमत्र क्रमार्थं। आचमनविधानं नियमार्थं। इडोपह्वानानन्तरं अवान्तरेडाप्राशनमेव कृत्वा-ऽऽचम्य चमसमेव भक्षयेदिति, तेनेदानीमिडाभक्षणं नास्ती-ति ज्ञायते। इदमप्यनेन ज्ञायते प्रकृतावावान्तरेडाप्राशनमि-डाप्राशनञ्च कृत्वा पश्चाच्छौचार्थमाचमनं भवति न तयोर्मध्ये-ऽपीति। 'अध्वर्य उपह्वयस्व' इत्युक्त्वा 'भक्षयेत्' इत्यनेन वचनेनात्र चत्वारोऽर्थाः सूचिता भगवता सूत्रकारेण। तत्रायमेकोऽर्थः 'नानुपहूतेन सोमः पातव्यः न वै सोमपीथेन इत्वार्भुको भव-ति' इति श्रुतिवचनादुपहूतेनैव सोमो भक्षयितव्य इति। अय-मपरोऽर्थः कर्मनामधेयेन सम्बध्यते 'नोपह्वयस्व' इत्येवमेतेन वाक्येनेति। अयमप्यपरोऽर्थः, यत्र क्व च सोमे वषट्कारेण वा समाख्यया वा भक्ष्यमाणे होमाभिषवनिमित्तेन भक्षणेनैकस्मिन् पात्रे प्रतिभक्षितयोः सहभक्षो नास्ति तत्राध्वर्यावेवोपहवया-चनमिति। अयञ्चापरोऽर्थो भक्षणमपि कर्त्तव्यमिति। एतदुक्तं भवति अवान्तरेडां प्राश्य इडाभक्षणमकृत्वाऽऽचम्य होता स्व-चमसं भक्षयेत् अध्वर्यो उपहवमिष्ट्वा 'वाग्देवी' इत्यनेन मन्त्रे-णेति ॥

दीक्षितो दीक्षिता उपह्वयध्वं ॥ १५ ॥

दीक्षितश्चेद्धोता तदा 'दीक्षिता उपह्वयध्वं' इत्युक्त्वा स्वं चमसं भक्षयेत् ॥

यजमाना इति वा ॥ १६ ॥

दीक्षित इत्यनुवर्त्तते। 'यजमाना उपह्वयध्वं' इत्युक्त्वा वा भक्षयेत् ॥

मुख्यान् वा पृथग्घोत्रका उपह्वयध्वमितीतरान् ॥ १७ ॥

एवं वोपहवयाचनं दीक्षितस्य मुख्यानध्वर्य्वादीन् 'अध्वर्य उपह्वयस्व ब्रह्मन्नुपह्वयस्व उद्गातरुपह्वयस्व' इति पृथगुक्त्वा अमुख्यान् सर्वान् सकृदेव 'होत्रका उपह्वयध्वं' इत्येवमर्थः ॥

एवमितरे ॥ १८ ॥

अदीक्षितो दीक्षितस्य होता यथोक्तमुपहवयाचनं कृत्वा स्वं चमसं भक्षयेदित्युक्तं। एवं दीक्षिता अदीक्षिताश्च मैत्रावरुणादयः स्वं स्वं चमसं भक्षयेयुः। तेनैवोपहवयाचनप्रकारेण दीक्षितानामयमेवोपहवयाचनप्रकारः। सर्वत्र प्रतिभक्षणे सत्यसति वा दीक्षितानां कश्चिद्विशेषोऽस्तीत्याह ॥

यथासंभक्षं त्वदीक्षिताः ॥ १९ ॥

यो यस्य संभक्षः स यथासंभक्षः। संभक्षो नाम समानभक्षः। एतदुक्तं भवति। एकस्मिन् काले एकस्मिन् पात्रे ययोर्भक्ष उत्पद्यते तयोरन्यतरः अन्यतरं प्रति संभक्ष इत्युच्यते। स एव होमाभिषवकर्त्ता वषट्कर्त्तारं प्रति संभक्ष इत्यर्थः। तन्नैवं भवति, तत्र तमेवोपह्वय भक्षयेत् नाध्वर्युमिति। अदीक्षितानामेवायमपवादः। दीक्षितानां तु यज्ञेषु चमसेषु च 'दीक्षिता उपह्वयध्वं' इत्यादयस्त्रय एव प्रकाराः, नान्यः क्वचिदपीति ॥

मुख्यचमसाद्‌चमसाः ॥ २० ॥

होता स्वं चमसं भक्षयेदित्युक्त्वा एवमितर इत्युक्तं। तेन होतुरन्येषां सर्वेषां भक्षणं विहितमिति मन्यमानाश्चमसिनश्चमसेभ्यो भक्षयन्ति। अचमसाः पुनः प्रत्यासत्त्या स्ववर्गस्य मुख्यस्य द्वितीयस्य तृतीयस्य वाऽऽत्मनोऽन्तरतमस्य चमसवतश्चमसात् भक्षयेयुः। यस्य पुनः होमाभिषवनिमित्तं भक्षणमस्ति तस्य तदेव भवति। इतरेषां मुख्यस्य चमसादिति ये भ्रमन्ति तेषां भ्रान्तिमपनुनुत्सुरपि पूर्वपक्षेऽनुष्ठाननिर्वाहं वर्णितवानाचार्यः। एवम्प्रकारेष्वेवंन्यायोऽनुसर्त्तव्य इति प्रदर्शयितुं मुख्यशब्दोऽत्रापेक्षिको गृह्यते। प्रत्यासत्त्यानुगुण्यादेनं पक्षं दूषयति ॥

द्रोणकलशाद्वा ॥ २१ ॥

वाशब्दः पक्षं व्यावर्त्तयति। नाचाचमसानां सोमभक्षणमस्ति, विधानाभावात्। सोमभक्षस्य हि निमित्तं वषट्कारो होमाभिषवौ चमसिता च। अचमसानां तु तेषां निमित्तानामन्यतमदपि नास्ति, अतस्तेषामत्र भक्षो नास्तीति सिद्धं। द्रोणकलशात् तु भक्षणमस्ति वचनात्, 'यथा चमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्तः' इति श्रुतिवचनं। तेन द्रोणकलशे हारियोजनशेषस्य चमसिभिरचमसैश्च भक्षणं विहितं, तदनेन प्राप्तं भक्षणमयं सूत्रकारोऽवघ्राणस्वरूपेण विधास्यति। तदेवापरूपमेवानेनोच्यते न भक्षान्तरमित्यवगन्तव्यं ॥

उक्तः सोमभक्षजपः सर्वत्र ॥ २२ ॥

य उक्तः सोमभक्षणमन्त्रो 'वाग्देवी' इति स सर्वत्र सोमभक्षे भवति, न द्रव्यान्तरभक्षे। पूर्वं सर्वत्रग्रहणं द्विदेवत्येष्वेव चरितार्थमिति पुनस्तद्विधीयते। चमसानां भक्षणमुक्त्वा तत्प्रसङ्गेन सर्वत्र सोमभक्षस्य निमित्तमुक्त्वाचादिचमसभक्षयितृविचारव्याजेन दर्शयितुमाचार्यान्तरमतान्युपन्यस्यति स्म ॥

होतुर्वषट्कारे चमसा हूयन्त उद्गातुर्ब्रह्मणो यजमानस्य तेषां होताऽग्रे भक्षयेदिति गौतमो भक्षस्य वषट्कारान्वयत्वात् ॥ २३ ॥

सोमभक्षणे त्रीणि निमित्तानि श्रुतौ निर्दिष्टानि। वषट्कर्त्तुः प्रथमभक्ष इति प्राथम्यविशिष्टं भक्षणं वषट्कारनिमित्तं विदधाति। अभिषुत्य हुत्वा भक्षयतीति होमाभिषवनिमित्तं विदधाति। होतृचमस इत्यादि समाख्याबलात् सापि समाख्याभक्षणे निमित्तमिति गम्यते। तत्र होमाभिषवावस्मदीयेषु न स्त इति तन्निमित्तस्य भक्षस्यात्र विचारो न कृतः। तत्र वषट्कारनिमित्तं समाख्यानिमित्तञ्च भक्षणं विहितमेवास्तीति मन्यमानो गौतमस्तेषां होताऽग्रे भक्षयेदित्युक्तवान्। अग्रवचनसामर्थ्यादुद्गात्रादयोऽपि पश्चाद्भक्षयेयुरित्यस्याभिप्रायो गम्यत एव। होतृग्रहणं ऋत्विजाञ्चतुर्णामपि प्रदर्शनार्थं। उद्गात्रादिचमसग्रहणं च सर्वचमसानां प्रदर्शनार्थं। तथा हि। सर्वे [illegible]ः ऋत्विजां वषट्कारेषु हूयमाना हूयन्ते, किन्त्वेषान्त्रयाणां विशेषोऽस्ति सर्वदाऽपरवषट्कारेषु हूयन्त इति। भक्षस्य वषट्कारान्वयत्वादिति, वषट्कारनिमित्तत्वादित्यर्थः। एवं गौतमेनोक्ते समाख्यया भक्षो न विधातुं शक्यते इति मन्यमानस्तौल्वलिराह॥

अभक्षणमितरेषामिति तौल्वलिः कृतार्थत्वात् ॥ २४ ॥

वषट्कर्त्तुर्भक्षणेनैव शेषस्य प्रतिपत्त्यन्तरान्वेषणे नैरपेक्ष्यं भवतीति कृतार्थत्वादित्युक्तं। यदि परं समाख्यापि भक्षस्य विधायिका स्यात् तदा तस्मिन् कृतेऽप्यकृतार्थमेवावतिष्ठते। सा च न विधायिका। नामधेयतयापि तादृशानामेव पदानां समन्वयदर्शनादिति। एवमुक्ते गाणगारिर्गौतमपक्षमेव समर्थयितुमाह ॥

भक्षयेयुरिति गाणगारिरतः संस्कारत्वात् का च तच्चमसता स्यान्न चान्यः सम्बन्धः ॥ २५ ॥

उद्गात्रादयोऽपि भक्षयेयुः। वषट्कारनिमित्तभक्षणेन संस्कृतानामपि शेषाणामस्मात् समाख्याभक्षणादपि संस्कारत्वात् वचने सति संस्कृतानामपि संस्कारस्य सम्भवोऽस्तीत्यर्थः। ये तत्संस्कारत्वादिति पठन्ति तेषामयमर्थः। योऽय समाख्याभक्षात् संस्कारः स वषट्कारभक्षसंस्कारो न भवति, ततोऽन्यत्वादित्यर्थः। अन्यत्वे चाविरोधात् समुच्चय एवेत्यर्थः। ननु समाख्याभक्षणं न विदधातीत्युक्तं। सत्यं स्वरूपेण न विदधाति, कार्य्यतस्तु विदधात्येव। कथं ज्योतिष्टोमाधिकारनियोगः स्वप्रकरणाधीतसकलपदोद्बोधितपदार्थावच्छिन्नः प्रतीयमानः कार्यात्मकत्वादात्मनः स्वावच्छेदकभूतानपि कार्यतयाऽवगमयन् होतृचमसपदाद्यभिहितान् सम्बन्धविशेषान् कार्यतया च गमयतीत्येवं। स च सम्बन्धविशेषो होताऽस्मिंश्चमतीति होतृचमस

इति, एतमुक्त्वाऽन्यः स्वस्वाम्यादिलक्षणोऽत्र न सम्भवति। एव-मप्यर्थं सूत्रकारः सूचितवान् 'का च तत्र समता स्यान्न चान्यः सम्बन्धः' इति वदन्, यदा चमसिनां चमसेषु वषट्कारनिमित्तं समाख्यानिमित्तं च भक्षद्वयमागच्छति। पूर्वं वषट्काराद्भक्षयित्वा होमाभिषवभक्षणस्य कृतं ततः समाख्यातो भक्षयेत्। यत्र पुनः प्रतिभक्षयिता नास्ति तत्रोभौ भक्षौ तन्त्रेण सिध्यतः। व-षट्कारनिमित्ते भक्षे सानुवषट्कारेषु सर्वत्र द्विरावृत्तिरस्त्येव॥

भक्षयित्वाऽपाम सोमममृता अभूम शन्नो भव हृद आपीत इन्दविति मुखहृदये अभिमृशेरन्॥ २६॥

भक्षणानन्तरमेताभ्यामृग्भ्यां मुखहृदये अभिमृशेरन्। अ-द्भिर्यथासङ्ख्येनानयोराप्यायनं दर्शयिष्यति 'प्रतिप्रदाय द्रोण-कलशमात्मानमाप्याय्य' इति। आप्यायनत्वे चाद्भिः संस्पर्शनं भवत्येवेति॥

आप्यायस्व समेतु ते सन्ते पयांसि समु यन्तु वाजा इति। चमसानाप्योपायान् पूर्वयोः सवनयोः॥ २७॥

स्वं स्वं चमसं द्वाभ्यामृग्भ्यामद्भिरभिमृशेरन्। पूर्वयोः सव-नयोराद्याम् द्वितीयांश्च चमसान्॥

आद्यास्तृतीयसवने ॥ २८ ॥

तृतीयसवने आद्यानेव चमसानभिमृशेरन्। 'एतद्ध्याप्यायनं चमसमाप्याययत्यभिरूपाभ्याम्' इति फलचमसे श्रुतौ दर्शनात्॥

सर्वंचात्मानमन्यत्रैकपात्रेभ्यः ॥ २९ ॥

एकपात्राण्यूर्ध्वपात्राणि, तानि वर्जयित्वा सर्वंचात्मानमाप्याययेयुः। आत्मशब्देनात्र मुखहृदये उच्येते॥

आप्यायितांश्चमसान् सादयन्ति ते नाराशंसा भवन्ति।
॥ ३० ॥ ॥ ६ ॥

नाराशंससञ्ज्ञा भवन्ति इत्यर्थः। अन्वर्थसञ्ज्ञेयं नाराशंसानां। त्रयः पितृगणा ऊमाः और्वाः काव्याश्चेति, ते चानुसवनं यथासङ्ख्यमाप्यायितानां चमसानां देवता भवतीति नाराशंसाश्चमसा भवन्तीति॥

इति पञ्चमे षष्ठी कण्डिका ॥ ❋ ॥

एतस्मिन् काले प्रपद्याच्छावाक उत्तरेणाग्नीध्रीयं परिव्रज्य पूर्वेण सद आत्मनो धिष्ण्यदेश उपविशेत् ॥ १ ॥

अच्छावाकस्य कर्मकालत्वादेवास्मिन् काले प्रपदने सिद्धे कालोपदेशोऽच्छावाकः कर्मकाल एव प्रपद्येतेत्येवमर्थं । तेनान्ये कर्मकालात् प्रागेव प्रातरनुवाककाले प्रपद्येरन्निति सिद्धं भवति । प्रपद्येतिवचनं यजमानत्वेनान्यथा वा प्रपन्नोऽप्यच्छावाकीयत्वायास्मिन् काले नियमेन प्रपद्येतेत्येवमर्थं । स्वस्य धिष्ण्यस्य पुरस्ताददूरे सदसो बहिरुपविशेत् ॥

पुरोडाशशकलं प्रत्तमिडामिवोद्यम्याच्छावाक वदस्वेत्युक्तोऽच्छा वो अग्निमवस इति तृचमन्वाह ॥ २ ॥

शकलं खण्डमित्यर्थः । प्रत्तमध्वर्युणा । इडामिवोद्यम्यास्यसम्मितं प्राणसम्मितं वेत्यर्थः । संप्रैषपाठः स्वशास्त्रचोदनया संप्रैषस्यासंवादे सत्यप्यनुवचनसिद्ध्यर्थं ॥

अन्त्येन प्रणवेनोपसन्तनुयाद्यजमानहोतरध्वर्योऽग्नीद्ब्रह्मन् पोतर्नेष्टरुतोपवक्तरिषेषयध्वमूर्जोऽर्जयध्वं नि वोजामयोजिह्वतान् यजाम योनिः सपत्नायामनिवाधितासो जयता भीत्वरीं जयता भीत्वर्याश्रवद इन्द्रः शृणवद्वो अग्निः प्रस्थायेन्द्राग्निभ्यां सोमं वोचतोपो अस्मान् ब्राह्मणान् ब्राह्मणाह्वयध्वमिति ॥ ३ ॥

'अन्त्येन प्रणवेन' इत्येतावतैव प्रणवेन निगदस्य समाप्ते सिद्धे 'उपसमन्तनुयात्' इतिवचनं कृत्स्नस्यास्य निगदस्यानवानत्वसिद्ध्यर्थं ॥

समाप्तेऽस्मिन् निगदेऽध्वर्यु र्होतर्युपह्वं काङ्क्षते ॥ ४ ॥

एतदध्वर्योरुपह्वयाचनं अच्छावाकार्थं। समाप्तइति-वचनमुपह्वयाचनकालविधानार्थं। अस्मिन्निितिवचनमुत्तरो-ऽपि निगद एव न कृत्स्न उपह्वमन्त्र इत्येतद्दर्शयितुं। तेन 'प्रत्येता' इत्यादिः 'उपहूताः' इत्यन्तो निगद एव। उपहूत इत्येतावानेवोपह्वमन्त्र इति वेदितव्यं ॥

प्रत्येता सुन्वन् यजमानः स्वस्त्या वामायभीत्। उत प्रति-ष्ठातोपवक्तारुत नो गाव उपहूता उपहूत इत्युपह्वयते ॥ ५ ॥

उपहूता इत्युक्त्वा उपहूत इत्युपह्वयत इति मध्येऽध्याहारः कर्तव्यः। उपहूत इत्येष प्रत्युपह्वमन्त्रः। सर्वत्र चायमेव प्रत्युप-ह्वमन्त्रः, अपेक्षितत्वात्, अन्यस्य चानाम्नानात् ॥

उपहूतः प्रत्यस्मा इत्युन्नीयमानायानूच्य प्रातर्यावभिरा-गतमिति यजति ॥ ६ ॥

उपहूत इतिवचनमच्छावाकसङ्ग्रहार्थं। तेनोन्नीयमानाय

चमसाय प्रत्यस्था इत्येतत् सूक्तमच्छावाक एवानुब्रूयात्। ततः 'प्रातर्यावभिरागतमिति यजति' एषास्य प्रस्थितयाज्या ॥

निधाय पुरोडाशशकलं स्पृष्टोदकं चमसं भक्षयेत्॥ ७॥

निधायेतिवचनादेतावन्तं कालं शकलमुपस्थितमासीत ॥

नास्पृष्टोदकाः सोमेनेतराणि हवींष्यालभेरन्॥ ८॥

सोमेनेति सोमेन सम्पृक्ता इत्यर्थः। तेन सोमं स्पृष्टवन्तः उदकोपस्पर्शनमकृत्वेतराणि पुरोडाशादीनि हवींषि नालभेरन्। पुरोडाशं स्पृष्टवन्तः सोमस्पर्शने उदकोपस्पर्शनं विधाय तदुपपादनाय वक्तव्ये सति विपरीतमुक्तं। तस्यायमभिप्रायः। यथा स्पृष्टसोमस्य हविरन्तरालम्भते उदकोपस्पर्शनं तथा स्पृष्टपुरोडाशादिकस्य च सोमस्पर्शने इत्युभयथापि भवतीति। न केवलमिदं तत्स्पर्शन एव तदन्याचस्पर्शनेऽपि भवति, 'निधाय शकलं चमसं स्पृष्टोदकं' इति चमसस्पर्शनेऽपि विधानात्॥

आदायैनदादित्यप्रभृतीन् धिष्ण्यानुपस्थायापरया द्वारा सदः प्रसृप्य पश्चात् स्वस्य धिष्ण्यस्योपविश्य प्राश्नीयात्॥ ९॥

एतत् शकलमादाय तद्धस्त एव धिष्ण्योपस्थानादि सो

अश्नीत्येवमन्त्रं कृत्वा तत्रस्थ एव तत् प्राश्नीयात्। 'उपविश्य प्राश्नीयात्' इति उपविश्य जपित्वा प्राश्नीयादित्यर्थः। अपरया द्वारा प्रसर्पणविधानात् द्वार्याभिमर्शनस्य तस्यामेव सदःप्रसर्पणे कृते स्वस्यैव धिष्ण्यस्य पश्चादुपवेशने सिद्धे यत् पश्चात् स्वस्य धिष्ण्यस्योपवेशनं विदधाति तत् तत्रैव इडलप्राशनार्थं। तत्रैवोपविश्य इडलं प्राश्नीयान्न बहिर्निष्क्रम्येतीममेवार्थं शाखान्तरे चोद्योत्तरभङ्ग्या श्रुतिरेव साधयति "तदाहुर्यदन्य ऋत्विजोऽन्तःसदसि सोमं प्राश्नन्ति अथ कस्मादच्छावाको बहिःसदसि प्राश्नातीति यदेवैतदन्तःसदसि पुरोडाशइडलं प्राश्नाति तेनास्यान्तःसदसि सोमः प्राशितो भवति" इति॥

उपविष्टे ब्रह्माग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वं प्राश्नीयुः प्रागेवेतरे गता भवन्ति॥ १०॥

यदाऽच्छावाक उपविष्टस्तदा ब्रह्मा तीर्थेन निष्क्रम्य बहिर्वेद्याग्नीध्रीयं प्राप्नोति। अच्छावाकस्य इडलं प्राश्य तीर्थेन निष्क्रम्याचम्य तं देशं प्राप्नुयात्। इतरे होत्रादयोऽप्यनुपविष्ट एवाच्छावाके तं देशं प्राप्ता भवेयुः। एते सर्वे संहतास्तस्मिन् देशे हविःशेषं प्राश्नीयुः। सर्वग्रहणं पौर्णमासिककर्तृनिवृत्त्यर्थं। आग्नीध्रीयं प्राप्येतिवचनं प्राशनस्य बहिर्वेदिदेशे सिद्धेऽप्याग्नीध्रीयमण्डपबहिर्वेदिदेशप्रापणार्थं। तथार्धमन्त्रैर्वेद्यर्धं बहि-

वेदिं भवति। हविरुच्छिष्टशब्देन चात्र धानादीनां शेषमि-
डापात्रस्थमन्यदप्युच्यते ॥

प्राश्य प्रतिप्रस्थाप्य ॥ ११ ॥　　॥ ७ ॥

इति पञ्चमे सप्तमी कण्डिका ॥ * ॥

---

ऋतुयाजैश्चरन्ति ॥ १ ॥

प्राशने कृते प्राश्यवचनमन्यदप्यस्मिन्नेव काले तृप्तिहेत्वर्थं भोजनादि कुर्यात् न प्रागित्येवमर्थं। प्रतिप्रस्थाप्यवचनं सर्वेषु प्रस्थितेषु ऋतुयाजप्रचरणार्थं ॥

तेषां प्रैषाः ॥ २ ॥

तेषामृतुयाजसंज्ञानां यागानां प्रैषा अपि भवन्ति ॥

पञ्चमं प्रैषसूक्तं ॥ ३ ॥

प्रैषसमाम्नाये यत् पञ्चमं प्रैषसूक्तं तदेषां प्रैषा भवन्ति ॥

तेन तेनैव प्रेषितः प्रेषितः स स यथाप्रैषं यजति ॥ ४ ॥

प्रैषास्तावत् सर्वे मैत्रावरुणेन वक्तव्याः। अस्मिन् सूत्रे ऋतुयाजानां याज्या यष्टारश्च विधीयन्ते। येन येन प्रैषेण यथाप्रैषं यो यः प्रेषितः तेन तेनैव प्रैषेण स स एव यजति, नान्यः। तेनैतत् साधितं भवति मैत्रावरुणस्य यष्टृत्वमपैति ॥

होताऽध्वर्युगृहपतिभ्यां होतरेतद्यजेत्युक्तः ॥ ५ ॥

यजेदिति शेषः। होतरेतद्यजेत्येताभ्यामुक्तो होता यजेत् ॥

स्वयं षष्ठे पृष्ठ्याहनि ॥ ६ ॥

पार्ष्ठिके षष्ठेऽहनि स्वयमेवाध्वर्युगृहपती यजतः ॥

पश्चादुत्तरवेदेरुपविश्याध्वर्युः। पश्चाद्गार्हपत्यस्य गृहपतिः ॥ ॥ ७ ॥

अध्वर्युर्यजमानस्य निरसनं कृत्वा मन्त्रवदेव तयोः पश्चादुपविश्य यजतः। पश्चादिति प्रकृतेः पुनः पश्चादितिवचनमन्येषामुपवेशनकालात् पश्चाद्यागकाल एवोपवेशनं गृहपतेरित्येवमर्थं। अध्वर्यू यजतमिति द्विवयुक्तोऽपि संप्रैषे मुख्य एवाध्वर्युर्यजति, नान्यः ॥

अथैतदृतुपात्रमानन्तर्येण वषट्कर्तारो भक्षयन्ति ॥ ८ ॥

अथेति सर्वेष्वेवेष्टेष्वनन्तरमित्यर्थः। अत्र होता चतुर्वषट्-कारः। पोतृनेष्टारौ द्विर्वषट्कारौ। एकवषट्कारा अन्ये। तत्र सर्वेष्विष्टेषु भक्ष्यमाणे अनेकवषट्काराणामविशेषावि-भागात् कर्तृकालैक्याच्च सकृदेव भक्षणं प्राप्नोतीति तन्निवृ-त्यर्थमानन्तर्येणेत्युक्तं ॥

पृथगध्वर्युः प्रतिभक्षयेत् ॥ ९ ॥

अध्वर्युग्रहणं प्रतिप्रस्थातुरपि प्रदर्शनार्थं। अत्रापि तन्त्रा-शङ्कानिवृत्त्यर्थं पृथक्त्वमेव तन्त्रं विधीयते, इतरत्वमनूद्यते ॥

तस्मिंस्त्रैवोपह्वः ॥ १० ॥ ॥ ८ ॥

तस्मिन्नेव प्रतिभक्षयितर्युपह्वश्च भवति। अवधारणं दी-क्षिता अन्यत्र प्रतिभक्षयितारमेवोपह्वं याचेरन्, न दीक्षितान् सर्वानिति। अन्यत्र दीक्षितादीक्षितान् सर्वानेव ॥

इति पञ्चमेऽष्टमी कण्डिका ॥ ० ॥

---

पराङध्वर्यावावृत्ते सुमत्पदग्दे पिता मातरिश्वा छिद्रा-पदाधादछिद्रोक्था कवयः शंसन्। सोमो विश्वविन्नीथानि-नेषद्बृहस्पतिरुक्थामदानि शंसिषत् वागायुर्विश्वायुर्विश्व-मायुः क इदं शंसिष्यति स इदं शंसिष्यतीति जपित्वाऽनभि-हिङ्कृत्य शोꣳसावोमित्युच्चैराहूय तूष्णीं शंसं शंसेदुपांशु सप्रणवमसन्तन्वन्॥ १॥

पराङिति सप्तम्यर्थे प्रथमा युक्ता, छन्दोवत् सूत्राणि भवन्तीति। ऋतुपात्रभक्षणानन्तरमध्वर्युर्होतृमुखत आसीनः पराङावर्तते पृष्ठतः करोतीत्यर्थः। तस्मिन् पराङ् व्यावृत्ते होता सुमदिति जपित्वाऽभिहिङ्कारमकृत्वा शोꣳसावो३मित्युच्चैराहूय तूष्णीं शंसं शंसेदुपांशु सप्रणवमसन्तन्वन्। अध्वर्यावावृत्त इति शस्त्रकालोपदेशार्थं। शस्त्राङ्गमयं जपः, जपित्वेति शस्त्रेण सम्बन्धदर्शनात्। अनभिहिङ्कृत्येति प्राप्तो निषिध्यते। शोꣳसावेति शंसावेत्यर्थः। स एव प्रणवान्तः शोꣳसावो३मिति पठ्यते। तेन शब्देनाध्वर्युमाहूयाभिमुखीकृत्येत्यर्थः। अनेनाहूयेतिवचनादस्य शब्दस्याहाव इति संज्ञा भवति। उच्चैर्वचनं मन्द्रस्वरप्राप्त्यर्थं। शस्त्राङ्गत्वादाहावस्य, शस्त्रस्य च मन्द्रस्वरत्वादाहावानन्तरवर्तिनः शस्त्रैकदेशस्योपांशुत्वान्मुख्यानुग्रहन्यायेनोपांशुत्वाशङ्कायां भूयसामनुग्रह एवात्राश्रयितुं युक्त इति मन्द्रस्वरसिद्ध्यर्थमुच्चैरित्युक्तवानाचार्यः। यः पुनराहावः

शस्त्रावयवभूतस्य स्तोत्रियादेरेवाङ्कं, स तस्यैव स्वरं भजते। तेन निष्केवल्येऽनुशाह्वाणस्वरपक्षे आहावस्यापि स्वरविशेषः सिद्धो भवति। तूष्णींशंस इति नामधेयं। सप्रणवं समानप्रणवं। तूष्णींशंसे ये प्रणवास्ते पठिता अपि मन्त्रानार्थिकैर्वाचणिकैः *समानानान्निमा इत्यर्थः। असमन्त्वनित्ययमप्राप्तप्रतिषेधः, अनूगन्तत्वात् परस्य चानुक्तात्। तेन शायते पठितोऽपि प्रणवः मन्त्रानार्थायेति। तेन शस्त्रादीनामाहावेनोत्तरः मन्त्रतो वक्तव्यः। अत्र तूष्णींशंसस्याहावस्य च स्वरस्थानभेदात् प्राणमन्ततं भवति॥

**एष आहावः प्रातःसवने शस्त्रादिषु। पर्यायप्रभृतीनाञ्च। सर्वत्र चान्तःशस्त्रं॥ २॥**

एषु स्थानेषु वचनान्तरेणाह्वाने विहिते शोंसावोमित्यनेनैव शब्देनाह्वानं कुर्यात्, नान्येनेति नियम्यते। सूत्रत्रयेण शस्त्रादिषु प्राप्तिः, एवमाह्वयेतिवचनात् पुरोरुक्तात् स्तोत्रियत्वात् प्रतिपत्त्वादाश्विने अन्तःशस्त्रेऽपि स्तोत्रियानुरूपानुचरप्रगाथधाय्यातदनन्तरवर्तिपरिधानीयात्त्वद्विवचनाच्चेति माध्यन्दिने तृतीयसवने च पर्यायेभ्यः प्राक् शस्त्रादिषु वचनादध्वर्य्वादिशब्दो विधीयते। तेषु शस्त्रादिषु तयोर्विहितत्वात् तदादिभूतानां प्रतिपदादीनां तावेव भवत इति, नाह्वानान्तरं कल्प्यं॥

---

* समानान्निमा इति पु॰ द्वये।

तेन चोपसन्तानः ॥ ३ ॥

तेनाह्वानेनोत्तरस्योपसन्तानः कर्तव्यः। चशब्दात् तस्य च पूर्वेणेति गम्यते। इदमन्तःशस्त्रे विधानमसन्तानमित्यप्राप्ते सन्ताने प्राप्तवत् प्रतिषेधात्। शस्त्रादिभूतेनाह्वानेनोत्तरस्य सन्तान उक्तः ॥

शस्त्रस्वरः प्रतिगर ओथामो दैवेति ॥ ४ ॥

शस्त्रस्य स्वर इव स्वरो यस्य स शस्त्रस्वरः। उत्तरपदलोपोऽत्र द्रष्टव्यः। शस्त्रस्वरस्वर इत्यर्थः। सवनस्वरस्याविधेयत्वादन्योऽपि यो विशिष्टः स्वरो विहितः शस्त्रस्य तस्य प्रापणार्थं वचनं। 'ओथामो दैव' इत्ययं प्रतिगरसंज्ञो भवति, शस्त्रस्वरश्च भवति। प्रतिगीर्यते प्रत्युच्चार्यत इति प्रतिगरः। वक्ष्यमाणविशेषविशिष्टतया सकृदेव विधातुं शक्योऽपि सामान्यस्य पृथग्विधानं प्रतिगरशब्दव्यवहारेऽपि सामान्येनास्य ग्रहणार्थं ॥

ओथामो दैवेत्यावावे ॥ ५ ॥

प्रतिगरो भवतीति शेषः। यः पुनरयं प्रतिगरान्तरो विधीयते तज्ज्ञापयति। प्रतिगरान्तरमध्यवर्तिन्यावावेऽयं नियम्यते। तेन शस्त्रमध्येऽयमेव स्यात्। शस्त्रादावयं ब्राह्मणोक्तः ओथामो दैवोमिति वा ॥

प्लुतादिः प्रणवेऽप्लुतादिरवसाने ॥ ६ ॥

व्यवस्थितावेतौ विशेषविधी। अनन्तरस्य प्रणवावसानरूपेण विषयभेदासम्भवात्॥

प्रणवे प्रणव आह्वावोत्तरे ॥ ७ ॥

प्लुतादेरयमपवादः। आह्वावोत्तरे प्रणवे प्रणव एव प्रतिगरो भवति॥

अवसाने च ॥ ८ ॥

प्रणवः प्रतिगरो भवतीति शेषः। शस्त्रान्तरे शस्त्रमध्ये चावसानेऽयं विधिर्भवति॥

प्रणवान्तो वा ॥ ९ ॥

विषयद्वयेऽयं विकल्पः॥

यत्र यत्र चान्तःशस्त्रं प्रणवेनावस्यति। प्रणवान्त एव तत्र प्रतिगरः। शस्त्रान्ते तु प्रणवः॥ १० ॥

पूर्वोक्तस्य प्रतिगरद्वयस्य विषयव्यवस्थापनमात्रमत्र क्रियते। ननु यद्ययमर्थो विवक्षितः स्यात् तदैवं प्रणेतव्यं स्यात्।

अवसाने चेत्यादि सर्वमकृत्वा शस्त्रान्ते चान्तःशस्त्रं प्रणवान्त इति प्रणेतुं युक्तं। सत्यमेवं प्रणेतुं युक्तं, तथाच न प्रणीतवानाचार्यः, किं कुर्मः। एवं सति प्रणीतमनुसरामः। तत्र यदि पूर्वसूत्रे अवसानशब्दं समाप्तिवचनमभ्युपगम्य द्वाभ्यां सूत्राभ्यां शस्त्रान्ते विकल्प उक्तः। उत्तरेणान्तःशस्त्रे प्रणवान्तविधिरिति कल्प्येत् तदा शस्त्रान्ते तु प्रणव इत्यतिरिच्यते। अथ मतं, यत्रेत्यादिसूत्रेऽवस्यतिशब्दसम्बन्धात् कर्मचोदनायां होतारमिति होतृविषयमिदं सूत्रं, पारिशेष्यात् पूर्वोक्तविकल्पो होत्रकविषय इति। तदपि नोपपद्यते। अवस्यतीत्यत्र विधानाभावात्। कर्मविधौ सा परिभाषा न कर्मानुवाद इत्यतः पूर्वोक्त एवार्थः। यत्र यत्रेत्यादिप्रपञ्चोक्तिस्तत्रैवमेवेति सूचयति। अत्र सङ्क्षेपविस्ताररूपेण प्रपञ्चोक्तिरेवाश्रिता सूत्रकारेणेति। प्रतिगरस्य शस्त्रसमकालत्वात् आहावस्य च द्विवचनमुक्तत्वात् प्रतिगरशब्दवाच्यत्वाच्च कर्त्तन्तरमस्यान्वेषणीयं। तत्राध्वर्युरेव भवति। पराङध्वर्यावित्यस्यैवाधिकारात् सर्वत्र चाध्वर्युरेव भवति। 'शंसामो दैवोमित्यध्वर्युः प्रतिगृणाति' इति दर्शनात्। 'शंसावाध्वर्यो प्रति मे गृणीहि' इति च दर्शनात्। सवनान्तरे च 'अध्वर्यो शोऽंसावोम्' इत्याहावादिदर्शनात्। अध्वर्युशब्दः प्रतिप्रस्थातुरपि प्रदर्शनार्थः। गृह्णोम एतत् किमित्याध्वर्यवमत्र विधीयते, शस्त्राङ्गत्वात् शस्त्रस्य चर्ग्वेदविहितत्वात् तस्याप्यार्ग्वेदिकत्वमेवेति। अध्वर्युकर्तृकत्वन्तु वचनात् न समाख्यात इति सिद्धं। प्रतिगरस्वरूपमुक्त्वा शस्त्रमेवानुसरति॥

भूरग्निर्ज्योतिर्ज्योतिरग्निः । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यऽ३मिति त्रिपदस्तूष्णींशंसः । यद्यु वै षट्पदः पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येत् ॥ ११ ॥

त्रिपदः षट्पदो वायं शंसव्यः । त्रिपदपक्षे यथापठितमेव । षट्पदपक्षे त्रीणि त्रीणि वाक्यानि द्विधा कृत्वा शंसेत् । तत्र द्विधाकरणेऽवसानस्थानं पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येदिति ॥

उच्चैर्निविदं यथानिगान्तमग्निर्देवेद्ध इति ॥ १२ ॥

उच्चैर्वचनमुपांश्वधिकारनिवृत्त्यर्थं । निविदिति निविदो नामधेयं । यथानिगान्तं यथापठितं । पदे पदेऽवसायेत्यर्थः । ऐकश्रुत्यन्तु शस्त्वादेव प्राप्तं ॥

नास्या आह्वानं ॥ १३ ॥

'आह्वानश्च निविदाम्' इत्यत्र पदसमाम्नायनिवृत्त्यर्थं निविद्ग्रहणं कृतं । उत्तराधिकारश्च तत्रास्ति । तत्र निविद्ग्रहणं पदसमाम्नायनिवृत्त्यर्थं क्रियमाणमुत्तराधिकारञ्च निवर्तयितुं शक्नोतीति प्राप्तस्यायमपवादः ॥

न चोपसन्तानः ॥ १४ ॥

अस्या निविदस्तूष्णींशंसेन सहोपसन्तानस्तु न कर्तव्यः। तेनासन्तन्वन्निति प्रतिषेधस्तूष्णींशंसेषु परस्परमेव, न पूर्वापरयोरिति। अत आहावेन तूष्णींशंसस्य सन्तानः सिद्धो भवति। स तु स्वरविरोधात् प्राणसन्तान इत्युक्तः ॥

उत्तमेन पदेन प्र वो देवायेत्याज्यमुपसन्तनुयात् ॥ १५ ॥

निविद उत्तमेन पदेन सूक्तमुपसन्तनुयात्। अनूक्तादिदं विधीयते। आज्यमिति सूक्तस्यैतत्स्थानापन्नस्य नाम क्रियते ॥

एतेन निविद उत्तराः ॥ १६ ॥

अस्या निविदः शंसनप्रकारो यो विहितस्तेन सर्वा निविदः शंस्या इत्यर्थः। उत्तरवचनं पूर्वा अपि निविदः सन्तीति ज्ञापनार्थं। तेन 'देवेद्ध' इत्यादीनां चतुर्दशानां पदानां निवित्त्वं सिद्धं भवति ॥

सर्वे च पदसमाम्नायाः ॥ १७ ॥

अन्ये चैतत्प्रजापादयो ये पदस आम्नाता मन्त्रास्ते निविदद्देव शंस्याः। निविदामपि पदश आम्नाने सत्यपि निविदां

पृथग्ग्रहणं निवित्सु क्वचित् पदसमासोऽस्तीतिज्ञापनार्थं, 'प्रेदं ब्रह्म प्रेदं चत्रम्' इत्यादौ ॥

उपसन्तानस्त्वन्यत्र ॥ १८ ॥

अस्या निविदोऽन्यासु निवित्सु पदसमाम्नायेषु च पूर्ववदुपसन्तानश्च कर्तव्यः ॥

आह्वानश्च निविदां ॥ १९ ॥

निविद्ग्रहणं पदसमाम्नायनिवृत्त्यर्थं। आह्वानश्चान्यासु निवित्सु भवति ॥

आज्यायां त्रिः शंसेदर्धर्चशो विग्राहं ॥ २० ॥

इदं निर्वचनं शस्त्रादौ प्राप्तं, सूक्तादौ नियम्यते। आज्यग्रहणं सूक्ताद्यानिवृत्त्यर्थं। तेन यत्र द्वे सूक्ते त्रीणि वा आज्यकार्ये विहितानि तत्राद्यस्यैवाद्यां त्रिः शंसेत् नोत्तरस्येत्येवमर्थं। अर्धर्चश इत्यृगावानपक्षेऽप्यर्धर्चसन्तानमनिवृत्त्यर्थं। विग्राहं विगृह्य विगृह्येत्यर्थः। क्व विग्राहः कथं वा विग्राह इत्येवं निदर्शनेन दर्शयितुमाह ॥

तन्निदर्शयिष्यामः। प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै। गमद्देवेभिरासनो यजिष्ठो बर्हिरासदो३मिति॥ २१॥

विग्रहे प्राणसन्तानः कार्यः। पूर्वस्मिन्नेवार्धर्चे स विग्रहो भवति॥

ऋगावानं वैवमेव। एतेनाद्याः प्रतिपदामनृगावानं॥ २२॥

प्रतिपदां या आद्या ऋचः ता एतेन प्रकारेण शंस्तव्याः। प्रतिपद्ग्रहणे प्रतिपदामितिबहुवचनं ज्योतिष्टोमाभ्याससूचनार्थं। तथा 'प्रथमयज्ञेनैके धर्मम्' इत्यत्र प्रथमशब्दस्तमेवार्थं सूचयति। तथा शाखान्तरे स्पष्टं वचनमस्ति 'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति। तत्र वीप्सयाभ्यासोऽवगतः। तदाश्रयोऽयं बहुवचनप्रयोगः। अन्यत्र ऋगावानवर्जनमिति। प्रतिपच्छब्दोऽयं प्रतिपत्संज्ञितं तृचमेव गृह्णाति, न यौगिकं। तेनाश्विनप्रतिपद्ययं धर्मो न भवति॥

अनुब्राह्मणं वानुपूर्व्यं॥ २३॥

ब्राह्मणोक्तस्य क्रमस्य क्लृप्तत्वात् समाम्नायसिद्धस्याक्लृप्तत्वात् समाम्नायसिद्धस्य प्रयोगो न प्राप्नोतीति, तस्यापि विकल्पेन प्रयोगसिद्ध्यर्थमिदं सूत्रं॥

आहूयोत्तमया परिदधाति ॥ २४ ॥

उत्तमायाः परिधानीयात्वे सिद्धे सत्युत्तमावचनं याज्यान्तानि शस्त्राणीत्यन्यार्थमप्युच्यमानं याज्याया उत्तमत्वभ्रान्तिं जनयतीति तद्भ्रान्तिनिवृत्त्यर्थं ॥

सर्वशस्त्रपरिधानीयास्वेवं ॥ २५ ॥

सर्वासु शस्त्रपरिधानीयासु आहूय परिदध्यात्। परिधानीयास्विति बहुवचनेनैव सर्वत्वे सिद्धे सर्वग्रहणं होत्रकपरिग्रहार्थं ॥

उक्थं वाचि घोषाय त्वेति शस्त्वा जपेत्। अग्न इन्द्रश्च दाशुषो दुरोण इति याज्या। उक्थपात्रमग्रे भक्षयेत् ॥ २६ ॥

उक्थं शस्त्रं शस्त्रसम्बन्धितया कश्चिद्ग्रहो गृह्यते, शस्त्रयाज्यायां हूयते च। तच्छेषवत् यत् पात्रं तदुक्थपात्रमित्युच्यते। तस्य भक्षणं वषट्कारनिमित्तत्वादविधेयं। तदत्र क्रमार्थं विधीयतेऽग्र इति ॥

ततश्चमसांश्चमसिनः सर्वशस्त्रयाज्यान्तेषु ॥ २७ ॥

ततश्चमसांश्चमसिनो भक्षयेयुः। सर्वेषु शस्त्रयाज्यान्तेषु भक्ष-

पश्च क्रमश्चाच विधीयते। भक्षणं सकृत्, कृतेनैव समाख्यायाः प्रवृत्तिनिवृत्तिसम्भवात्। वचनादृतेऽभ्यासो नास्तीति भक्षविधानं। सर्वग्रस्तयाज्यास्विति वक्तव्ये सति अन्तवचनमाश्विनस्य ग्रहस्य याज्याभावात् तदन्ते चमसभक्षणं न प्राप्नोतीति तत्सङ्ग्रहार्थं। तेनायमर्थः, सर्वग्रस्तयाज्यासु भक्षयेयुः, सर्वग्रस्तानामन्ते चेति। सर्वग्रस्तानां याज्यानां चान्ताः सर्वग्रस्तयाज्यान्ता इति विग्रहः। नन्वप्तोर्यामे आश्विनं ग्रहमन्तो न भवति। सत्यं नान्तः, तथाप्यतिरात्रस्विहेत्यतिरात्रादेशात् तत्र चमसभक्षणं भवत्येव। सर्वग्रहणं होत्रकग्रस्तपरिग्रहार्थं। एवं सर्वत्र चमसभक्षणविधानात् यत्रोक्थ्यपात्रमस्ति तत्र तद्भक्षयित्वा चमसानां भक्षणं, अन्यत्र चमसानामेवेति गम्यते॥

वषट्कर्तैकपात्राण्यादित्यग्रहसावित्रवर्जं॥२८॥ ॥९॥

आदित्यग्रहसावित्रग्रहयोर्वषट्कर्तुर्भक्षो नास्तीत्येतावदत्र विधीयते, अन्यदनूद्यते, प्राप्तत्वात्। प्रासङ्गिकश्चेदं सूत्रं॥

इति पञ्चमे नवमी कण्डिका॥ ※ ॥

स्तोत्रमग्रे शस्त्रात्॥ १॥

भवतीति शेषः। शस्त्रकालपरिज्ञानमनेन क्रियते॥

एषेति प्रोक्त उद्गातुर्हिङ्कारे प्रातःसवन आह्वयीरन्॥ २॥

एषेति प्रोक्ते प्रस्तोत्रा य उद्गातुर्हिङ्कारस्तस्मिन् काले प्रातःसवने शस्त्रायाह्वयीरन्। बहुवचनं होत्रकशस्त्रसंग्रहार्थं। प्रातःसवनग्रहणं होत्रकपरिग्रहार्थं॥

प्रतिहार उत्तरयोः सवनयोः॥ ३॥

एषेति प्रोक्ते यः प्रतिहारः तस्मिन्नुत्तरयोः सवनयोराह्वयीरन्॥

वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात् तृचं तृचं शंसेत्॥ ४॥

एताः सप्त पुरोरुचा नाम ऋचः। तासामेकैकस्या उपरिष्टादेकैकं तृचं शंसेत्। सप्तवचनं षष्ठ्याः सप्तपदत्वसिद्ध्यर्थं॥

वायवायाहि दर्शतेति सप्त तृचाः॥ ५॥

सप्तवचनं सप्तानां तृचानां ग्रहणार्थं। इतरथा पादग्रह-

णादेकैव ऋक्, यथा सप्त ऋचो भवेयुः तथाऽभ्यसितव्याः स्युः, तस्मात् सप्तवचनं ॥

द्वितीयां प्रउगे त्रिः ॥ ६ ॥

प्रउगमित्यस्य शस्त्रस्य संज्ञा। अस्मिञ्छस्त्रे प्रकृतिप्राप्तं यद्द्वाद्यायास्त्रिर्वचनं तत् द्वितीयायां नियम्यते, न त्रिर्वचनान्तरमपूर्वं विधीयते ॥

पुरोरुगभ्य आकयीत षष्ठ्यां त्रिरवस्येदर्धर्चेऽर्धर्चे ॥ ७ ॥

विश्वान् देवानित्येषा षष्ठी। सा सप्तभिः पदैरेका न तैः सप्तभिः पदैर्द्वे अनुष्टुप्गायत्र्याविति सप्तानां पुरोरुचामित्यत्र सप्तग्रहणेनोक्तं। अतोऽर्धर्चमनर्चमिति लाक्षणिकाः। तत्र कथमर्धर्चशः शंसनमिति शंसने तन्निर्णयार्थं षष्ठ्यां त्रिरवस्येदर्धर्चेऽर्धर्च इत्युक्तं। तेनास्यामृचि अवसानत्रयविधानात् समाम्नायसिद्धा एवार्धर्चाः सूत्रकारेणार्धर्चशंसने परिगृहीता इति ज्ञायते। एतत् सर्वासां विषमपदावसानानां प्रदर्शनार्थमुक्तं ॥

उत्तमां न शंसेच्छंसन्त्येके तृच आह्वानमशंसने ॥ ८ ॥

उत्तमायाः पुरोरुचः अशंसनेऽपि उत्तमे तृचे आह्वानं कर्तव्यं ॥

माधुच्छन्दसं प्रउगमित्येतदाचक्षते ॥ ९ ॥

अत्रायं प्रउगशब्दः कृत्स्नवाच्यपि कृचापेक्षया प्रयुक्तः। एवमन्यत्रापि यत्र यत्र ऋषिच्छन्दोभ्यां प्रउगं विशेष्यते तत्र तत्र कृचापेक्षमेव न पुरोरुङ्निवृत्त्यर्थमिति द्रष्टव्यं ॥

उक्थं वाचि श्लोकाय त्वेति शस्त्वा जपेत्। विश्वेभिः सोम्यं मध्विति याज्या। प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्रकाः ॥ १० ॥

होत्रकाणां मध्ये एते शस्त्रवन्तः, एतेषां शस्त्राणि भवन्तीत्यर्थः। एते शस्त्रिण इत्युक्तं क्व, तेषां शस्त्राणि भवन्ति किंरूपाणि च तेषां शस्त्राणीत्येतदुभयं वक्तुमाह ॥

तेषां चतुराश्रावानि शस्त्राणि प्रातःसवने तृतीयसवने पर्यायेष्वतिरिक्तेषु च ॥ ११ ॥

एषु स्थानेष्वेतेषां शस्त्राणि भवन्ति। तानि चतुराश्रावाणीत्येतदुभयं विधीयते। पर्यायातिरिक्तानां तृतीयसवनत्वे सत्यपि पृथग्ग्रहणमुक्थशस्त्रेभ्योऽन्यानि तेष्वपि शस्त्राणि भवेयुरित्येवमर्थं। अतिरिक्तेष्विति बहुवचननिर्देशादप्तोर्यामातिरिक्तेष्वेव भवति, न वाजपेयातिरिक्ते, तत्रैकत्वादतिरिक्तस्येति ॥

पञ्चाहावानि माध्यन्दिने ॥ १२ ॥

अत्रापि पूर्ववदुभयं विधीयते। आहावपरिमाणवचनं निमित्ताधिक्येऽपि एतेषामेतावत्त्वसिद्ध्यर्थं। इदानीमाहावस्य निमित्तानि प्रसङ्गादुच्यन्ते ॥

स्तोत्रियानुरूपेभ्यः प्रतिपदनुचरेभ्यः प्रगाथेभ्यो धाय्याभ्य इति पृथगाह्वानं ॥ १३ ॥

एतेभ्यः सर्वेभ्य आहावः कर्तव्यः, एतेषां बहूनां सन्निपाते पृथक् पृथक् कर्तव्य इत्येतदुभयमत्र विधीयते। सर्वत्र यदर्थतया आहावो विधीयते तस्यादौ स कर्तव्यः ॥

होतुरपि ॥ १४ ॥

होत्रकाधिकाराद्धोतृग्रहणं होतुरप्येतान्याहावस्य निमित्तानि ॥

तेभ्यश्चान्यदनन्तरं ॥ १५ ॥

होतुरपीत्यत्रानुवर्तते। स्तोत्रियादिभ्योऽन्यत् तदनन्तरं प्रतीकं विधीयते, तत्राप्याहावः कर्तव्यः ॥

आदौ निविद्धानीयानां सूक्तानामनेकञ्चेत् प्रथमेष्वाहावः ॥ ॥ १६ ॥

निविद्धानीयसूक्तस्य चादौ भवति। तस्यानेकत्वे प्रथम

एवाहावः। निविद्धानकार्यमाहावस्य निमित्तं, न सूक्तस्य स्वरूपमिति॥

आपोदेवते च तृचे॥ १७॥

आपोदेवतशब्दवत्त्वमित्यर्थः। स च आग्निमारुते 'आपो हिष्ठा' इति तृच उच्यते। तत्र चाहावः कर्तव्यः॥

तेषां तृचाः स्तोत्रियानुरूपाः शस्त्रादिषु सर्वत्र॥ १८॥

तेषामधिकारे पुनस्तेषामितिवचनमस्मिन् सूत्रे सर्वार्थोऽपि कश्चिद्विधिरस्तीतिप्रदर्शनार्थं। तेन तृचाः स्तोत्रियानुरूपाः सर्वत्रेत्येकोऽर्थः सर्वार्थः। अपरश्च तेषां शस्त्रादिषु ये आदेशास्ते स्तोत्रियानुरूपाः, तेष्वाहावः कर्तव्य इति व्यवहितयोजनया भवतीत्यर्थः॥

माध्यन्दिने प्रगाथास्तृतीयाः॥ १९॥

माध्यन्दिने तेषामेव शस्त्रेषु तृतीया आदेशास्ते प्रगाथा वेदितव्याः॥

यथाग्रहणमन्यत्॥ २०॥

अतोऽन्यत् सर्वं यथाग्रहणमेव वेदितव्यं। प्रगाथ इत्युक्ते स्तोत्रियो भवति नान्यथेति॥

याज्यान्तानि शस्त्राणि ॥ २१ ॥

यत्र बहूनां मन्त्राणां मध्ये आम्नायन्ते याज्याश्च विधीयन्ते तत्र कियदेकं शस्त्रमित्येतत्संशयनिवृत्त्यर्थमेतद्वचनं । अन्यदपि प्रयोजनमस्ति, यच्छस्त्रार्थं वाग्यमनं विहितं तद्याज्यापर्यन्तमनुवर्तत इति ॥

उक्थं वाचीत्येषां शस्त्राजपः प्रातःसवने ॥ २२ ॥

प्रातःसवनवचनं विस्पष्टार्थं ॥

ऊर्द्ध्वश्च षोडशिनः सर्वेषां ॥ २३ ॥

षोडशिन ऊर्द्धं यानि शस्त्राणि तेष्वयमेव शस्त्राजपः सर्वेषां भवति। सर्ववचनं होतुरपि प्रापणार्थं ॥

उक्थं वाचीन्द्रायेति माध्यन्दिन उक्थं वाचीन्द्राय देवेभ्य इत्युक्थेषु सषोडशिकेषु ॥ २४ ॥

उक्थेषु षोडशिनि चायं भवतीत्यर्थः। उक्थानीति तृतीयसवने होत्रकशस्त्राण्युच्यन्ते ॥

अनन्तरस्य पूर्वेण ॥ २५ ॥

यत्रानेकपदार्थाः क्रमवर्तिनः स्युः एकरूपास्तत्र यदि तेषां कस्यचिद्धर्माकाङ्क्षा स्यात् तदा तेषामेवानन्तरेण पूर्वेण धर्मविधिर्वेदितव्यः। किमुदाहरणं। तृतीयसवने पुरोडाशाद्युक्तमित्युक्तं। तत्र माध्यन्दिनेन विधिर्भवति। तथा सोमातिरेकग्रस्तेऽनन्तरस्य ग्रस्तस्य यः ग्रस्ताजपः स भवतीत्येवमादि द्रष्टव्यं॥

स्तोत्रियेणानुरूपस्य छन्दःप्रमाणलिङ्गदैवतानि ॥ २६ ॥

छन्दो गायत्र्यादि। प्रमाणमेकस्मिन्नपि छन्दस्यूनाधिकाक्षरता। लिङ्गं 'आवती प्रवती' इत्येवमादि। दैवतं प्रसिद्धं। स्तोत्रियस्य यान्येतानि तान्येवानुरूपस्येत्यर्थः॥

आर्षञ्चैके ॥ २७ ॥

एके आचार्याः आर्षञ्च तदेवेच्छन्ति॥

आ नो मित्रावरुणा नो गन्तं रिशादसा प्र वो मित्राय प्रमित्रयोर्वरुणयोरिति न वायातं मित्रावरुणेति याज्या। आयाहि सुषुमाहित इति षट् स्तोत्रियानुरूपावनन्तराः सखेन्द्र त्वा वृषभमुद्धदभीति तिस्र इन्द्र क्रतुविदं सुतमिति

याज्या। इन्द्राग्नी आगतं सुतमिन्द्राग्नी अपसस्परि तोशा वृत्रहणा हुव इति तिस्र इन्द्रेन्द्राग्नी उपेयं वामस्य मन्मन इति नवेन्द्राग्नी आगतं सुतमिति याज्या॥ २८॥ ॥ १०॥

अत्र मध्ये 'आयाहि सुषुमाहित इति षट् स्तोत्रियानुरूपौ' इत्यत्र षड्ग्रहणमासामृचां यासु कासुचिद्यदि छन्दोगाः स्तुवीरन् तदा तिसृभिरेव स्तोत्रियं कृत्वा शिष्टाभिरनुरूपः कर्तव्य इत्येवमर्थं॥

इति पञ्चमे दशमी कण्डिका॥ ०॥

---

संस्थितेषु सवनेषु षोडशिनि चातिरात्रे प्रशास्तः प्रसुहीत्युक्तः सर्पतेति प्रशास्ताऽनिसृजेत्। होता दक्षिणेनौदुम्बरीमञ्जसेतरेऽपरया द्वारोत्तरां वेदिश्रोणीमभिनिःसर्पन्ति॥१॥

सवनेषु संस्थितेषु, मध्ये चातिरात्रे षोडशिनि समाप्ते, अतिरात्रविशेषणं अतिरात्रे यः षोडशी स तस्मिन्नेव समाप्ते न वाजपेयषोडशिनीत्येवमर्थं। एतेषु चतुर्षु कालेषु होता दक्षिणेनौदुम्बरीं गत्वा इतरे च स्वस्य धिष्ण्यस्याञ्जसा आर्जवेन गत्वा सर्वेऽपरया द्वारा निष्क्रम्य उत्तरां वेदिश्रोणीमभिनिःसर्पन्ति। तथा श्रोण्या बहिर्वेदि प्राप्नुयुरित्यर्थः। यत्र

यस्मिन् कालेऽध्वर्युः 'प्रशास्तः प्रसुहि' इति ब्रूयात् तदा प्रशास्ता 'सर्पत' इति ब्रूयात्। ततो निःसर्पणं कुर्युः एतेष्वेव कालेषु। यद्यन्यस्मिन् काले ब्रूयात् तदा प्रत्यतिसर्जनमेव, न निःसर्पणमस्मदीयानामिति। यद्यध्वर्युर्न ब्रूयात् प्रशास्ताऽपि नातिसृजेत्। तेष्वपि कालेषु ततोऽननिसृष्टा एव निःसर्पेयुः, सर्वथा तावदेतेषु कालेष्वतिसृष्टा अनतिसृष्टा वा अस्मदीया निःसर्पेयुरेव, नान्यस्मिन् काल इति स्थितं। इतीयसवनसमाप्तिरपि शस्त्रसमाप्ताविवास्माकं न हारियोजनान्ते पत्नीसंयाजान्त इति। पुनः सदसः प्रवेशप्रयोजनाभावात् सवनसंस्थासु निःसर्पणस्य सदःप्रवेशपर्यन्तत्वादिति॥

मृगतीर्थमित्येतदाचक्षते॥ २॥

संव्यवहाराभावेऽपि संज्ञाया नित्यत्वात् परिज्ञानार्थमुपदेशः॥

एतेन निष्क्रम्य यथार्थं न त्वेवान्यन्मूत्रेभ्यः॥ ३॥

अतीर्थेन निष्क्रान्तानां बहिःस्थानामपि प्राक्चेष्टतादयो नियमा यथासम्भवमनुवर्तन्त इत्युक्तं प्राक्। तदनेन निष्क्रान्तानां नास्तीत्येवमर्थं यथार्थवचनं। यथार्थवचनात् [illegible] कर्मण्यपि प्रसज्येरन्निति तन्निवृत्त्यर्थं न त्वेवान्यन्मूत्रेभ्य इत्युक्त[illegible]नेन यदावश्यकं तावन्मात्रमेव भवति। अतो नान्यदिति। आव-

स्वकमपि यच्छम्याप्रासादूर्द्ध्वं कर्तुं न शक्यते तदनेन निष्क्रम्य न कर्तव्यं। तीर्थेनैव निष्क्रम्य तादृशं कुर्यात्, 'अनेन निष्क्रम्य शम्याप्रासात् परस्तां न गच्छेयुः' इतिवचनात्॥

एते न निष्क्रम्य कृत्वोदकार्थं वेद्यां समस्तानुपस्थायापरया द्वारा नित्ययाऽऽवृता सदोद्वार्ये चाभिमृश्य तूष्णीं प्रतिप्रसर्पन्ति ॥ ४ ॥

एते इति निष्क्रान्ता निर्दिश्यन्ते। एतेन निष्क्रमणानन्तरं यत्किञ्चिदुदककार्यमस्ति चेत् तत्कृत्वा, नास्ति चेदकृत्वा, वेदिं प्रविश्य वेद्यां ये धिष्ण्यास्तेषां समस्तोपस्थानं कृत्वा, उपस्थितां-स्त्वानुपस्थितांश्चेत्येतत् कृत्वेत्यर्थः, अपरया द्वारा नित्यया ऽऽवृता मन्त्रेण सदोद्वार्ये चाभिमृश्य तूष्णीं प्रतिप्रसर्पन्ति। कृत्वोदकार्यमित्यत्र न विधीयते यथाप्राप्तमनूद्यते॥

एषाऽऽवृत् सर्पतेतिवचने॥ ५॥

'सर्पतेतिवचने' इत्यनेन पूर्वोक्तास्त्वत्वारः काला उच्यन्ते, तेषु तस्य वचनस्य सम्भवात्। अतस्तेषु सर्वेषु य एष उक्तः प्रयोगो निःसर्पणादिः प्रतिसर्पणान्तः स कर्तव्यः, न केवलं प्रातःसवनान्त एवेति॥

पूर्वयैव गृहपतिः ॥ ६ ॥ ॥ ११ ॥

यजमानस्तु पूर्वयैव द्वारा प्रतिप्रसर्पणं कुर्यात् एकाहाहीनेषु गृहपतिरेवेति ॥

इति पञ्चमे एकादशी कण्डिका । * ।

एतस्मिन् काले ग्रावस्तुत् प्रपद्यते ॥ १ ॥

अस्याप्यस्मिन्नेव काले प्रपदनं न प्रातरनुवाककाल इत्यच्छावाकेन तुल्यं ॥

तस्योक्तमुपस्थानं ॥ २ ॥

अस्यापि पूर्वोक्तमुपस्थानं प्रसर्पणस्य भवति। तत्र विशेषमाह ॥

पूर्वया द्वारा हविर्धाने प्रपद्य दक्षिणस्य हविर्धानस्य प्रागुदगुत्तरस्याक्षशिरसस्तृणं निरस्य राजानमभिमुखोऽवतिष्ठते ॥ ॥ ३ ॥

प्रसर्पणमेवात्र प्रपदनमित्युच्यते। असौ तु हविर्धानं पूर्वया द्वारा प्रपद्यते पूर्ववदेव। हविर्धाने इति द्विवचनं शाला-

यामेव, उपचारात्। शकटद्वयसम्बन्धादुपचारः। हविर्धान-शब्दः शालायामपि मुख्य एव, योगस्याविशिष्टत्वात्, उभयोस्तत् प्रपद्य दक्षिणस्य शकटस्य यदुत्तरमक्षशिरस्तस्य प्रागुदग् यो देशस्तस्मिन्मन्त्रेण निरसनं कृत्वा तत्र राजानमभिमुखस्तिष्ठेत्। दक्षिणामुखः प्रत्यग्दक्षिणामुखो वा ॥

नात्रोपवेशनः ॥ ४ ॥

निरसनोपवेशनयोः साहचर्यप्रदर्शनार्थमप्राप्त एवोपवेश-नमन्त्रः प्रतिषिध्यते ॥

यो अद्य सौम्य इति तु ॥ ५ ॥

उपविष्टस्य विहितत्वात् तिष्ठतो न प्राप्नोतीति विधीयते ॥

अथास्मा अध्वर्युरुष्णीषं प्रयच्छति ॥ ६ ॥

उष्णीषं शिरसो वेष्टनं वासः ॥

तदञ्जलिना प्रतिगृह्य। त्रिः प्रदक्षिणं शिरः समुखं वेष्ट-यित्वा यदा सोमांशूनभिषवाय व्यपोहन्त्यथ ग्राव्णोऽभिष्टु-यात् ॥ ७ ॥

यदा सोमलता अभिषवार्थं अध्वर्यवो व्यपोहन्ति विक्षि-पन्ति तदा ग्राव्णामभिष्टवनं कुर्यात् ॥

मध्यमस्वरेणेदं सवनं ॥ ८ ॥

इदमादीदं माध्यन्दिनं सवनं मध्यमस्वरेण प्रयोक्तव्यं। इदं यावस्तोत्रमारभ्य माध्यन्दिनं सवनं वर्तते। तत्र स्वरग्रहणं बाधकबाधनार्थं। बार्हस्पत्येष्टौ सौमिक्य इति प्रधानोपांशुत्वं प्राप्तं तस्य बाधनार्थं। तेन तस्यामिष्टौ प्रधानमपि मध्यमस्वरेण भवति ॥

अभि त्वा देव सवितर्युञ्जते मन उत युञ्जते धिय आतून इन्द्र त्वमन्तं मा चिदन्यद्विशंसत प्रैते वदन्त्वित्यर्बुदं ॥ ९ ॥

एतत्सूक्तमर्बुदनामधेयं भवति ॥

प्रागुत्तमाया आ व ऋञ्जसे प्र वो ग्रावाण इति ॥ १० ॥

सूक्ते आवपेतेति शेषः। अर्बुदस्य प्रागुत्तमाया इत्यर्थः ॥

सूक्तयोरन्तरोपरिष्टात् पुरस्ताद्वा पावमानीरोप्य यथार्थमावाग्रयद्ग्रहणाच्छिष्टया परिधाय वेद्यं यजमानस्योष्णीषं ॥ ॥ ११ ॥

सूक्तयोरुपरिष्टात् पुरस्तादेति सम्बन्धः। सूक्ते इत्यध्याहृत्य अन्तरशब्देन सम्बन्धः। तयोरन्यतमस्मिन् स्थाने पावमानी-

रावयेत्। यथार्थं यावत् प्रयोजनमित्यर्थः। यावदभिषवमिति तदारम्भे आरम्भविधानात् तत्रैव यावर्णां व्यापारसम्भवादस्य च यावत्सोचत्वादिति। आग्रहग्रहणादायावत्सोचान्तर्भावेऽपि पावमानीनां पूयमानसोमाभिधानात् सम्पूयमानसोमसावन्तं कालमनुवर्तत इति ज्ञलेदमुच्यते। शिष्टयाऽर्बुदस्योत्तमया परिधाय वेद्यं यजमानस्योष्णीषं यजमानाय दातव्यमित्यर्थः॥

आदाय यथार्थमन्त्येष्वहःसु॥ १२॥

यजमानाय दत्ते तस्यार्थप्राप्तमुच्यते। नाप्राप्तं विधीयते। अनेन सूत्रेण दानमप्यत्र हस्ताद्धस्तान्तरसङ्क्रमणमात्रं यजमानस्यैव तत् स्वमिति॥

प्रतिप्रयच्छेदितरेषु॥ १३॥

अनन्त्येष्वहःसु येनेदं दत्तं तस्मा एव पुनः प्रयच्छेदिति प्रतिशब्दसमन्वादवगम्यते॥

अथापरमभिरूपं कुर्यादिति गाणगारिः॥ १४॥

अपरमिति अपरमिदं यावत्सोचं, न पूर्वमित्यर्थः। प्रस्तावादिदं न प्रवर्तत इति भिन्नविषयत्वादपरशब्दप्रयोगो युक्तः।

कार्यविशेषे तल्लिङ्गस्य विधानादेवाभिरूपत्वे सिद्धे अभिरूपवचनं कार्यव्यत्यासवद्वचव्यत्यासप्रसिद्ध्यर्थं। गाणगारिवचनं पूजार्थं॥

आप्यायस्व समेतु त इति तिस्रो मृजन्ति त्वा दशक्षिप एतमुत्यं दशक्षिपो मृज्यमानः सुहस्त्या दशभिर्विवस्वतो दुहन्ति सप्तैकामधुक्षत् पिप्युषीमिषमा कलशेषु धावति पवित्रे परिषिच्यत इत्येका कलशेषु धावति श्येनो वर्म विगाहत इति द्वे। एतासामर्बुदस्य चतुर्थीमुद्धृत्य तृचान्तेषु तृचानवदध्यात्॥ १५॥

एताः द्वादश ऋचोऽनुक्रान्ताः, ताश्चत्वारस्तृचा भवन्ति। अर्बुदस्य चतुर्थी उद्धर्त्तव्या। उत्तमा परिधानीया। शिष्टा द्वादश। ता अपि चत्वारस्तृचा भवन्ति। एतासां पावमानीनां तृचान्तेषु अर्बुदस्य तृचानवदध्यात्, विपरीतं वा। अत्र विशेषो वक्तुं न शक्यते, दुरवगमत्वात्॥

आप्यायमाने प्रथमं॥ १६॥

आप्यायनमुदकसेकः।

मृज्यमाने द्वितीय॥ १७॥

मार्जनं चूर्णमादाय हस्ताभ्यां पेषणं॥

दुह्यमाने तृतीयं ॥ १८ ॥

दोहनं प्रसिद्धं ॥

आसिच्यमाने चतुर्थं ॥ १९ ॥

आसेचनमभिषवेण द्रवीकृतस्याधवनीये सम्भरणं ॥

हवच्छब्दे हवच्छब्दे चतुर्थीं ॥ २० ॥

निमित्तावृत्तावावृत्त्यर्थं वीप्सावचनं ॥

मा चिदन्यद्वि शंसतेति यदि ग्रावाणः संह्रादेरन् ॥ २१ ॥

संह्रादनं शब्दनं। अत्रापि निमित्तावृत्तावावृत्तिरस्ति। अस्या ऋचो निमित्ताभावेऽपि प्रयोगः स्वस्थाने चतुर्थ्या उद्धारवचनादिदमवगम्यते ॥

समानमन्यत् ॥ २२ ॥

अर्बुदपावमानीभ्योऽन्यत् सर्वं समानं भवतीत्यर्थः ॥

अर्बुदमेवेत्येके ॥ २३ ॥

अवधारणादिदमेव सूक्तं नान्यत् किञ्चित् ॥

प्र वो ग्रावाण इत्येके ॥ २४ ॥

अत्राप्यवधारणं द्रष्टव्यं ॥

उक्तं सर्पणं ॥ २५ ॥

सर्पणमत्र कर्त्तव्यमित्यर्थः ॥

स्तुते माध्यन्दिने पवमाने विहृत्याङ्गारान् ॥ २६ ॥ ॥ १२ ॥

इति पञ्चमे द्वादशी कण्डिका ॥ ० ॥

---

दधिघर्मेण चरन्ति प्रवर्ग्यवांश्चेत् ॥ १ ॥

अङ्गारविहरणवचनं तत्कालपरिज्ञाने तद्व्यवायपरिहारे यत्नकरणार्थं। दधिघर्मो नाम कर्मविशेषः, तेन चरन्ति, प्रवर्ग्यवांश्चेदयं क्रतुः। न चेन्न कर्त्तव्यो दधिघर्मः ॥

तस्योक्तमृगावानं घर्मेण ॥ २ ॥

तस्येतिवचनं योगविभागार्थं। योगविभागप्रयोजनमप्रवर्ग्येऽपि दधिघर्मस्य विधेः प्रापणमिति। घर्मेणेतिवचनमृगावानादन्यस्य घर्मेण सम्बद्धस्यैकश्रुत्यस्यापि प्रापणार्थं। तेन उत्तिष्ठतावपश्यतेत्यस्याः प्रसत्यादिचोदनाभावेऽपि ऐकश्रुत्यं भवति ॥

इज्या भक्षणञ्च ॥ ३ ॥

इज्या च घर्मेण व्याख्याता। भक्षणञ्च घर्मेणैव व्याख्यातः। भक्षिशब्दो न कर्त्तुपलक्षणार्थं प्रयुज्यते, कथन्तर्हि स्वात्मनोऽपि विधेयत्वाय। तेन भक्षस्य भक्षकर्त्तृणाञ्च घर्मवत्ता विधीयते॥

होतर्वद स्वेत्युक्त उत्तिष्ठतावपश्यतेत्याह ॥ ४ ॥

अस्या लिङ्गजनितमेव कार्यं। आहेतिवचनमस्या अनुवाक्यात्वं माभूदित्येवमर्थं। तेनोत्तरैवानुवाक्या भवति। अनयाध्वर्युप्रैषरूपमभिधानं क्रियते॥

श्रातं हविरित्युक्तः श्रातं हविरित्यन्वाह॥ ५॥

इयमनुवाक्या॥

श्रातं मन्य ऊधनि श्रातमग्नाविति यजति। अग्ने वीहीत्यनुवषट्कारः। दधिघर्मस्याग्ने वीहीति वा। मयि त्यदिन्द्रियं बृहन्मयि द्युम्नमुत क्रतुः। त्रिशुक्रो विभातु म आकूत्या मनसा सह। विराजा ज्योतिषा सह। तस्य दोहमशीय ते तस्य त इन्द्रपीतस्य त्रिष्टुप्छन्दस उपहूतस्योपहूतस्योपहूतो भक्षयामीति भक्षजपः। यं धिष्ण्यवन्तो प्राञ्चमङ्गारैरभिविहरेयुः। पश्चात् स्वस्य धिष्ण्यस्योपविश्योपहवमिष्ट्वा परि त्वाऽग्ने पुरं वयमिति जपेत्॥ ६ ॥

धिष्ण्यवतां मध्ये यं कश्चित् धिष्ण्यवन्तं धिष्ण्येभ्यः प्राञ्चं सन्तं

यथयज्ञारैरभिविहरेयुः तस्य नैमित्तिकमिदं, पश्चात् स्वस्य धिष्ण्यस्योपविश्योपह्वं यजमानादिष्ट्वा परि त्वाऽग्ने पुरं वयमिति जपेत् ॥

अनिष्ट्वा दीक्षितः ॥ ७ ॥

दीक्षितस्योपह्वयाचनप्रतिषेधाददीक्षितस्योपह्वयाचनं यजमानादिति गम्यते। अस्यैव नैमित्तिकस्य निमित्तापत्तिकालादन्यत्राम्नातं तृतीयसवनेऽप्यस्य नैमित्तिकस्य प्रापणार्थं ॥

सवनीयानां पुरस्तादुपरिष्टाद्वा पशुपुरोडाशेन चरन्ति ॥ ॥ ८ ॥

प्रकृतिप्राप्तस्य पशुपुरोडाशस्य कालविधिरयं ॥

अक्रियामेकेऽन्यत्र तदर्थवादवदनात् ॥ ९ ॥

तस्य पुरोडाशस्याऽक्रियामेके आचार्या मन्यन्ते, हेतुबलात्। सोऽयं हेतुः 'अन्यत्र तदर्थवादवदनात्' इति। तत्प्रयोजनो वादस्तदर्थवादः, तस्य वदनं तदर्थवादवदनं, तत्प्रयोजनस्य वादस्यान्यत्र वदनादित्यर्थः। अन्यत्रेति सूक्तवाकप्रैष उच्यते। तत्रावीवृधत पुरोडाशैरित्याम्नातं। पुरोडाशैरिति बहुवचनदर्शनात् सवनीयदेवतात्राभिधीयते न पशुपुरोडाशदेवतेति गम्यते। तेनात्र प्रकृतिप्राप्तमभिधानमपश्यन्तोऽकरणनिमित्तमेवेदमभिधानमिति मन्यमाना अक्रियामुक्तवन्तः ॥

क्रियामाश्मरथ्योऽन्विनाप्रतिषेधात्॥ १०॥

अतिदेशप्राप्तस्य प्रतिषेधाभावादाश्मरथ्यः पशुपुरोडाशस्य क्रियामेव मन्यते। आश्मरथ्यग्रहणं तस्य पूजनार्थं, न विकल्पार्थं। तस्मात् पशुपुरोडाशः कर्त्तव्य एव। यत् पुनरिदमन्यच्च तदर्थवादवदनादित्यनभिधानादकरणमुक्तं तदयुक्तं, प्राप्तस्य प्रतिषेधाभावात्। करणमेवेत्यनभिधानं पुनर्यत् सूक्तवाकप्रैष उक्तं तद्धेतुरेव। प्रत्यक्षपठिते मन्त्रेऽभिधानशक्तिर्नास्ति चेदनभिधानमस्तु, किं कुर्मः, यथाकथञ्चिदभिधानं वा कल्पनीयं॥

पुरोडाशाद्युक्तमानाराशंससादनात्। नत्विह द्विदेवत्या एतस्मिन् काले दक्षिणा नीयन्तेऽहीनैकाहेषु॥ ११॥

अधिकृते काले पुनः कालविधानं यत्रानुसवनं दक्षिणानयनं विहितं तत्र त्रिष्वपि सवनेषु नाराशंससादनोत्तरकालमेव दक्षिणानयनमित्येतमर्थं। अहीनैकाहग्रहणं सत्रेष्वात्मदक्षिणापि नास्तीतिसूचनार्थं॥

कृष्णाजिनानि धून्वन्तः स्वयमेव दक्षिणापथं यन्ति दीक्षिताः सत्रेष्विदमहं मां कल्याण्यै कीर्त्यै तेजसे यशसेऽमृतत्वायात्मानं दक्षिणां नयानीति जपन्तः॥ १२॥

दीक्षितवचनं पत्नीनिवृत्त्यर्थं। सत्रवचनं अपत्रेष्वस्य समु-

चयनिवृत्त्यर्थं। आत्मानं दक्षिणां नयामीति मन्त्रवादः सर्वाणामदक्षिणत्वस्तुतिपरत्वान्नात्मदक्षिणत्वं विधातुं शक्नोति॥

उन्नेष्यमाणास्वाग्नीध्रीय आहुती जुहुति॥१३॥

उन्नेष्यमानासु दक्षिणासु दक्षिणाद्रव्येष्वित्यर्थः। केनचि-त्स्थानविशेषेण दक्षिणाद्रव्याणि दक्षिणाकाले नेतव्यानि। तत्क्षणात् पूर्वक्षणे सर्वे ऋत्विज आहुती जुहुति॥

इदानीत्यग्निर्वदति वायुराह तथेति तत्। हन्तेति चन्द्रमाः सत्यमादित्यः सत्यमोमापस्तत् सत्यमाभरन्। दिशो यज्ञस्य दक्षिणा दक्षिणानां प्रियो भूयासं स्वाहा। प्राचि ह्येधि प्राची जुषाणा प्राच्याज्यस्य वेतु स्वाहेति द्वितीयां॥१४॥

द्वितीयाग्रहणं मन्त्रभेदप्रदर्शनार्थं, न द्वयोराहुत्योरे-तावानेको मन्त्र आवर्त्तयितव्य इति॥

क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृ-ह्णामि कामैतत्ते। वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रति-गृह्णात्वित्यतीतास्वनुमन्त्रयेत प्राणि॥१५॥

विहारदेशमतीत्य नीतेषु दक्षिणाद्रव्येषु तत्रापि यत् प्राणि द्रव्यं तदेतेनानुमन्त्रयते॥

अभिमृशेदप्राणि ॥ १६ ॥

तन्मध्ये यदप्राणि तदभिमृशेत् ॥

कन्याञ्च ॥ १७ ॥

अभिमृशेदिति शेषः । दैवेन विवाहप्रकारेण तदा यदि कन्या प्रदीयते तामप्यभिमृशेत्, अनेनैव मन्त्रेण । न प्राण्यादिष्विदमभिमर्शनमस्ति, क्रतुसंबन्धाभावात् ॥

सर्वत्र चैवं ॥ १८ ॥

सर्वत्र वैतानिके इष्टिपश्वादावेवं प्रतिगृह्णीयात्, न लिङ्गेवेति, प्रसङ्गाभावात् ॥

प्रतिगृह्याग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्व प्राश्नीयुः । प्राश्य प्रतिप्रयन्ति ॥ १९ ॥ ॥ १३ ॥

इति पञ्चमे त्रयोदशी कण्डिका ॥ ॥

मरुत्वतीयेन ग्रहेण चरन्ति ॥ १ ॥

मरुत्वद्देवत्यो मरुत्वतीयः। गतार्थं सूत्रद्वयं ॥

इन्द्र मरुत्व इह पाहि सोमं होता यक्षदिन्द्रं मरुत्वन्तं सजोषा इन्द्र सगणो मरुद्भिरिति। भक्षयित्वैतत् पात्रं मरुत्वतीयं शस्त्रं शंसेत् ॥ २ ॥

भक्षयित्वेतिवचनं शस्त्रकालोपदेशार्थं। मरुत्वतीयमिति शस्त्रनाम ॥

अध्वर्यो शो३सावोमिति माध्यन्दिने शस्त्रादिष्वाहावः ॥३॥

माध्यन्दिने सवने यानि शस्त्राणि होतुर्होत्रकाणाञ्च तेषामेव प्रतिरूपमाहावो विधीयते। बहुवचनं होत्रकशस्त्रपरिग्रहार्थं ॥

आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ ॥ ४ ॥

पुनर्मरुत्वतीयवचनं सर्वशस्त्राधिकारात्। प्रतिपदनुचराविति संज्ञे यथासङ्ख्येन द्वयोस्तृचयोः ॥

इन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः ॥ ५ ॥

इयमपि संज्ञा ॥

प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः ॥ ६ ॥

प्रगाथ इति शेषः। इयमपि संज्ञैव ॥

तृचाः प्रतिपदनुचरा द्वृचाः प्रगाथाः। आऽतोऽर्धर्चं सर्वं ॥७॥

शस्त्राणामादिभूतमाज्यमारभ्य आऽस्माद्ब्राह्मणस्पत्यात् सर्वमर्धर्चं भवति। आज्यमारभ्य ब्राह्मणस्पत्यपर्यन्तं सर्वमर्धर्चशस्यं भवतीत्यर्थः ॥

स्तोत्रियानुरूपाः प्रतिपदनुचराः प्रगाथाः सर्वत्र ॥ ८ ॥

एते च सर्वत्रार्धर्चशः शस्याः। प्रगाथस्यार्धर्चशंसनविधानं बृहतीकारपक्षे चतुर्थपञ्चमयोः पादयोः पुनर्द्विरभ्यस्तयोः अवसानविध्यभावात् समाम्नायप्रसिद्धार्धर्चाभावादर्धर्चावसानं न प्राप्नोतीति तत्रावसानप्राप्त्यर्थं। सर्वत्रवचनं छन्दोगप्रत्ययप्राप्तस्यापि प्रगाथस्यास्मिन् शस्यमानस्य एतदवसानं भवतीत्येवमर्थं ॥

प्राक् छन्दांसि त्रैष्टुभात् ॥ ९ ॥

गायत्र्यादीनि पङ्क्त्यन्तानि अर्धर्चशः शस्यानीत्यर्थः ॥

सर्वास्त्वेवाचतुष्पदाः ॥ १० ॥

गायत्र्यादीनाम् च सप्तानां अक्षरपरिमाणमेव प्रदर्शि-

निमित्तं, न पादविन्यासः। तत्र छन्दस्यन्यासां पादविन्या-सानपेक्षया सर्वप्रकाराणामर्धर्चशंसनमुक्तं। पंक्त्या अप्यपञ्च-पदाया अर्धर्चशंसनमेव। पञ्चपदायास्तु वक्ष्यति। तत्र पंक्त्या उत्तरेषु त्रिषु छन्दःसु या अचतुष्पदास्तासामर्धर्चशंसनम-नेन विधीयते। सर्वग्रहणं दृषाकप्यातिदिष्टेऽप्येतया महत्यर्ध-र्धर्चशंसनमेवेत्येवमर्थं॥

पङ्क्तिषु द्विरवस्येत् द्वयोर्द्वयोः पादयोः ॥ ११ ॥

अयं विधिः पञ्चपदास्वेव। 'पङ्क्तिषु द्विरवस्येत्' इत्यस्य विधेः पञ्चपदास्वेव सम्भवात्॥

अर्धर्चशो वाऽऽश्विने ॥ १२ ॥

आश्विने शस्त्रे याः पङ्क्तयस्तासामर्धर्चशंसनं पङ्क्तिशंसनञ्च भवतीति विकल्पोऽयं विधीयते। तत्रार्धर्चशस्यान्तर्गतानाम-र्धर्चशंसनं, स्वतन्त्राणां पङ्क्तिशंसनमेवेति विनियोगो युक्तः॥

पच्छःशस्यगतां तु पच्छः ॥ १३ ॥

शंसने क्रियमाणेऽयं विशेषः। सर्वत्र विषये पच्छःशस्यः, सूक्तगताया एकस्याः पङ्क्तेः पच्छःशस्यतैव, तत्र सूक्तमुखीया उदाहरणं। 'अर्वाग्रथम्' इति चैवमादि पच्छःशंसनं, 'नमो-वाकः' इत्यर्धर्चशः शस्या। स्वादाकृतस्येत्यस्याः पङ्क्तिशंसनं॥

समासमुत्तमे पदे ॥ १४ ॥

पंक्त्याः पच्छःशंसने क्रियमाणे ये उत्तमे पदे अतिरिच्येते तयोः समासं कृत्वा शंसेत्। उत्तमे पदे समस्य शंसेदिति वा योजना ॥

पच्छोऽन्यत् ॥ १५ ॥

उक्तादन्यत् पच्छः शंसेत्। यदिदमर्धर्चशंसनविधानं सामिधेन्यतिदेशप्राप्तमप्युपदिश्यते तत् पच्छःशस्यविषयनियमार्थं तत्स्वरूपविधानपरं ॥

पादैरवसायार्धर्चान्तैः सन्तानः ॥ १६ ॥

इदं पच्छःशस्यप्रकारप्रदर्शनार्थं। 'अर्धर्चान्तैः सन्तानः' इत्यर्धर्चान्ते प्रणवं कृत्वा तैः सन्तानः कर्त्तव्य इत्यर्थः ॥

अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः ॥ १७ ॥

धाय्या इति नाम ॥

प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः ॥ १८ ॥

इदमपि नाम ॥

जनिष्ठा उग्र इति ॥ १९ ॥

इदं सूक्तं ॥

एकभूयसीः शस्त्वा मरुत्वतीयां निविदन्दध्यात् सर्वत्र ॥ २० ॥

एतस्य सूक्तस्यार्धा एकाधिकाः शस्त्वा तदन्तराले 'इन्द्रो मरुत्वान्' इत्येतां निविदं दध्यात्। अर्धा इति ब्राह्मणालभ्यते, 'तस्यार्धाः शस्त्वाऽर्धाः परिशिष्य मध्ये निविदं दधाति' इति। सर्वत्रग्रहणं सूक्तमुखीयायां सत्यामपि तां मुक्त्वा सूक्तस्यैवैक-भूयसीः ऋचः शस्त्वा निविद्धेयेत्येवमर्थं ॥

एवमयुजासु माध्यन्दिने ॥ २१ ॥

सवनवचनं विस्पष्टार्थं ॥

एकां तृचे। अर्धा युग्मासु ॥ २२ ॥

शस्त्वेत्यनुवर्त्तते ॥

एकां त्रिष्टुप् तृतीयसवने ॥ २३ ॥

निविदं दध्यादित्यनुवर्त्तते ॥

अक्षिणी मृजानः परिदध्याद् ध्यायन्नेन आत्मनः ॥ २४ ॥

उभयं कुर्वन् परिदध्यात्। एतत् त्रिष्वपि वचनेषु कर्त्तव्यं, एनः पापं आत्मन इति वचनाच्च यजमानस्येति गम्यते ॥

अन्यत्राप्येतया परिदधदेवं ॥ २५ ॥

अतिदेशप्राप्तायां वचनादृतेऽपि भवति। इदं तु वचनं 'अनिष्ठा उप उग्रो जज्ञे' इति माध्यन्दिन उपदेशप्राप्तायां प्रापणार्थं ॥

उक्थ्यं वाचीन्द्राय शृण्वते त्वेति शस्त्वा जपेत्। ये त्वा हि हत्ये मघवन्नवर्धन्निति याज्या ॥ २६ ॥ ॥ १४ ॥

इति पञ्चमे चतुर्दशी कण्डिका ॥ ० ॥

निष्केवल्यस्य ॥ १ ॥

अधिकारोऽयं। निष्केवल्यमिति शस्त्रनाम ॥

अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ। यदि रथन्तरं पृष्ठं ॥ २ ॥

रथन्तरमिति सामविशेषः। पृष्ठमित्यस्मिन् स्थाने ज्योतिष्टोमाङ्गभूतं सामाभिव्यक्तं स्वगचरं सम्पाद्य स्तुतिजन्यं शास्त्रैकसमधिगम्यं कार्यमुच्यते। तत्र यदि रथन्तरं पृष्ठमित्यर्थः, यदि पृष्ठकार्ये रथन्तरं साम कुर्युः छन्दोगा इति। एवं बृहत् पृष्ठं वैरूपं पृष्ठं इत्येवमादिषु वेदितव्यं। सामानाधिकरण्यं त्वौपचारिकमिति मन्तव्यं। प्रगाथवचनं तृचग्रहणार्थं। स्तोत्रियानुरूपवचनं तृचत्वादिसिद्ध्यर्थं ॥

यद्यु वै बृहत्त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति ॥ ३ ॥

प्रगाथौ स्तोत्रियानुरूपावित्यनुवर्त्तते ॥

प्रगाथा एते भवन्ति ॥ ४ ॥

सिद्धे सत्यारम्भो नियमार्थः। यद्येतेषु तृचेषु छन्दोगा द्विपदोत्तराकारं तृचं कृत्वा स्तुवन्ति तथाप्यस्माभिर्द्वृचा एव कृत्वा शंस्तव्याः, न यथास्तुतं तृचाकारं शंस्तव्या इत्यर्थः ॥

तां द्वे तिस्रस्कारं शंसेत् ॥ ५ ॥

अनभ्यासेन द्व्याकारस्तवने द्वृचा एव न द्वृचाः कर्त्तव्या इत्युक्तं। इदानीमभ्यासेन द्व्याकारस्तवने तान् प्रगाथान् द्वे ऋचौ सत्यौ अभ्यासेन तिस्र ऋचः कृत्वा शंसेदिति सूत्रार्थः। तदेवंप्रकारमित्याह ॥

चतुर्थषष्ठौ पादौ बार्हते प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येत् ॥ ६ ॥

बृहतीसतो बृहत्योर्यौ द्वृचः स बार्हतः प्रगाथ इत्युच्यते। ककुप्सतो बृहत्योः काकुभ इति। बार्हताधिकारे पुनर्बार्हतवचनमनधिकृतानामप्यस्य विधेः प्रापणार्थं। तस्मिंश्चतुर्थषष्ठौ पादौ पुनरभ्यस्य पञ्चमसप्तमयोः पादयोरवस्येत्। अत्रावसानाभ्यासौ विधीयेते। एवं कृते पूर्वा बृहत्युत्तरे ककुभौ भवतः ॥

बृहतीकारश्चेत् तावेव द्विः ॥ ७ ॥

बृहतीकृत्वा शंसनं बृहतीकारमित्यर्थः। यदि तिस्रो बृहत्य एवं चिकीर्षते तदा तावेव पादौ पुनर्द्विरभ्यस्य तत्रैवावस्येत्। तत्रैवावसानलाभार्थं प्रगाथस्यार्धर्चशंसनविधानमित्युक्तं ॥

तृतीयपञ्चमौ तु काकुभेषु ॥ ८ ॥

एतेष्वेतावभ्यस्य उत्तरयोरवस्येत्। उत्तरयोरवस्येदित्य-चानुवर्त्तते। तदनुवर्त्तमानमपि प्रगाथस्यार्धर्चशंसनविधिबलात् पूर्वत्र निष्प्रयोजनमेवावतिष्ठते। अत्र तु प्रयोजनमस्तीत्युक्तं ॥

प्रत्यादानाद्युत्तरा ॥ ९ ॥

स्वम्भवतीति विशेषः ॥

एवमेतत्पृष्ठेष्वहःस्विन्द्रनिहवब्राह्मणस्पत्याम् ॥ १० ॥

एतत्पृष्ठेष्विति समासनिर्देशादेतदेवेत्यवधार्यते। एतच्छ-ब्देन प्रकृतत्वाद्बृहद्रथन्तरे उच्येते। एतदुक्तं भवति। येष्वहःसु बृहद्रथन्तरं वा तयोः संहतिर्वा पृष्ठकार्ये भवति तत्र यथा बृहद्रथन्तरस्तोत्रियानुरूपयोः शंसनं भवति तद्वदिन्द्रनिहव-ब्राह्मणस्पत्यान् शंसेत्। तयोस्तु शंसनं यथास्तुतमिति वक्ष्यति ॥

इहतीकारमितरेषु पृष्ठेषु ॥ ११ ॥

बृहद्रथन्तराभ्यामितरेषु पृष्ठेषु तान् इहतीकारं शंसेत्। इतरेष्वित्यसमासनिर्देशादितरसन्नामाचेऽपि इहतीकारमेव भवति। तेनाप्तोर्यामे रथन्तरेणाद्ये ततो वैराजेनेत्यत्र य-द्यपि बृहद्रथन्तरे पृष्ठे तथापि वैराजसम्बन्धादिहतीकारमेव भवतीति ॥

बृहद्रथन्तरयोश्च तृचस्थयोः ॥ १२ ॥

यदा बृहद्रथन्तरे गायत्रीषु वाऽन्यासु वाऽनभ्यस्तासु तिसृषु ऋक्षु स्तुवते स्तयोनिषु वा द्विपदोत्तराकारन्तदापीन्द्र-निहवब्राह्मणस्पत्याम् बृहतीकारं शंसेत् ॥

होत्रकाश्च येषां प्रगाथाः स्तोत्रियानुरूपाः ॥ १३ ॥

येषां होत्रकाणां प्रगाथाः स्तोत्रियानुरूपा भवन्ति, ते-ऽपीन्द्रनिहवब्राह्मणस्पत्यवच्छंसेयुः ॥

सर्वमन्यद्यथास्तुतं ॥ १४ ॥

उक्तादन्यत् सर्वं यथास्तुतं शंसेत्। सर्वग्रहणं बृहद्रथन्त-रयोः स्तोत्रियानुरूपसङ्ग्रहार्थं ॥

परिमितशस्य एकाहः ॥ १५ ॥

परितः सर्वतो मितं शस्यं यस्याह्नः स परिमितशस्यः। एतदुक्तं भवति, यः स्वकीयैर्धर्मजातैरुपदेश एव परिपूर्ण इति स चैकेनाह्ना समाप्यत इत्येकाहः। अनेन प्रकारेण परि-मितशस्यशब्देन प्रकृतिभूतोऽग्निष्टोम उच्यते। योऽयमधिकृत एकाहः स सर्वत्र औपदेशिकशस्य इत्यर्थः। एवञ्चेच्छस्यवि-शेषणं किमर्थमन्यदपि जातस्योपदेशादवगतमेव। अत्रोच्यते।

सत्यमेवं किन्त्वत्र विशेषोऽस्ति। सोमद्रव्यसम्बन्धिनो ये धर्मा उत्पत्तिविध्यनुप्रवेशिनस्ते चतुःसंस्थस्य ज्योतिष्टोमस्य साधारणाः। ये पुनरधिकारविध्यनुप्रवेशिनो दीक्षणीयादयः स्तुतशस्त्रादयश्च त उपदेशतोऽग्निष्टोमस्यैव अतिदेशत एवोक्थ्यादीनामपि संस्थानामित्यनेन विशेषेण शस्त्रविशेषणं कृतवानाचार्यः। तस्य चैकाहत्वं प्रसिद्धमेवोच्यते तेन शब्देनास्य संव्यवहारार्थं॥

स यद्युभयसामा यत् पवमाने तस्य योनिरनुरूपः॥ १६॥

स प्रकृत एकाहो यद्युभयसामा स्यात् बृहद्रथन्तरसामा स्यादित्यर्थः। उभयसामत्वं नाम एवं भवति, बृहद्रथन्तरं वा पृष्ठस्थाने भवतीतरत् पवमान इति। तत्र यत् पवमाने कृतं तस्य योनिर्योनिस्थाने भवति। तस्य योनिर्निष्केवल्यस्यानुरूपं कुर्यात्। चयिचस्यायमर्थः प्रत्यक्षाम्नात एव, इदन्तु सूत्रवचनं सर्वार्थत्वायोच्यते॥

योनिस्थान एवैनामन्यत्र शंसेत्॥ १७॥

अन्यत्रेत्युक्थ्यादीन्यपि गृह्यन्ते। अग्निष्टोमादन्यो यः कश्चिदुभयसामैकाहः संस्था वा बृहद्रथन्तरसामा स्यादित्यर्थः। तत्र यत् पवमाने कृतं तस्य योनिर्योनिस्थान एव शंसेत्। योनिस्थानत्वात्॥

ऊर्ध्वधाय्याया योनिस्थानं ॥ १८ ॥

निष्केवल्ये धाय्याया ऊर्ध्वं यत् स्थानं तद्योनीनां स्थानं, शंसनस्थानमित्यर्थः ॥

अनेकानन्तर्ये सकृत् पृथग्वाऽऽह्वानं ॥ १९ ॥

अनेकासां सामयोनीनां सहशंसने प्राप्ते आदावेव सर्वासामाहावः सकृत् कर्त्तव्यः। प्रतियोनिं वेति विकल्पः। तेभ्यस्त्वान्यदनन्तरमित्यनेन आदौ सकृदाहावः प्राप्त एवोत्तरत्र विकल्पेन विधीयते ॥

एवमूर्ध्वमिन्द्रनिहवात् प्रगाथानां ॥ २० ॥

ब्राह्मणस्पत्यमरुत्वतीयसामप्रगाथाः यदानेके सहागच्छेयुः तदा तेष्वपि सकृत् पृथग्वा आहाव कर्त्तव्य इत्यर्थः। अत्र सर्वत्राहावप्राप्ते अनेनानाद्येषु विकल्पो विधीयते ॥

यद्दा वानेति धाय्या। पिबा सुतस्य रसिन इति सामप्रगाथः ॥ २१ ॥

संज्ञाशब्दावेतौ ॥

इन्द्रस्य नु वीर्य्याणीत्येतस्मिन्नैन्द्रीं निविदं दध्यात् ॥ २२ ॥

इन्द्रो देवता यस्या इत्यैन्द्री निवित् ॥

अनुब्राह्मणं वा स्वरः। उक्थं वाचीन्द्रायेोपशृण्वते त्वेति शस्त्वा जपेत्। पिबा सोमामिन्द्र मन्दतु त्वेति याज्या॥ २३॥ ॥ १५॥

होत्रकाणां माध्यन्दिनेऽपि शस्त्राणि भवन्तीत्युक्तं। तान्येतानीत्याह॥

इति पञ्चमे पञ्चदशी कण्डिका॥ * ॥

होत्रकाणां कया नश्चित्र आभुवत् कया त्वन्न ऊत्या कस्तमिन्द्र त्वा वसुं सद्यो ह जात एवा त्वामिन्द्रो अन्नुषुणः सुमना उपाक इति याज्या॥ १॥

'तं वोदस्मृतीषहं तत्त्वायामि सुवीर्यम्' इति प्रगाथैा स्तोत्रियानुरूपैा। 'उदुत्ये मधुमत्तमा इन्द्रः पूर्भिदद् ब्रह्माण्यृजीषी वज्री वृषभस्तुराषाट्' इति याज्या॥

तरोभिर्वो विदद्वसुन्तरणिरित्सिषासतीति प्रगाथैा स्तोत्रियानुरूपा उदिन्वस्य रिच्यते भूय इदिमामूष्वित्यपोत्तमामुद्धरेत् सर्वत्र पिबा वर्धस्व तव द्या सुतास इति याज्या॥ २॥ ॥ १६॥

अथोपोत्तमामुद्धरेत् सर्वत्रेत्युक्तं। तस्य सर्वत्रग्रहणस्य

प्रयोजनमन्यत्रापीतयेत्यनेनान्यत्रग्रहणेन तुल्यं। अस्मिन्नवसरे सवनसंस्थानिमित्तं कर्म कर्त्तव्यं॥

इति पञ्चमे षोडशी कण्डिका॥ ० ॥

---

अथ तृतीयसवनमुत्तमस्वरेण॥ १॥

स्वरग्रहणं पूर्ववद्बाधकबाधनार्थं। तेन पाशुके हविः-सम्प्रचारेऽप्युत्तमः स्वरः सिद्धो भवति॥

आदित्यग्रहेण चरन्ति॥ २॥

आदित्यो देवता यस्य ग्रहस्य स आदित्यग्रहः, तेन चरन्ति॥

आदित्यानामवसा नूतनेन होता यक्षदादित्यान् प्रियान् प्रियधाम्न आदित्यासो अदितिर्मादयन्तामिति। नैतं ग्रह-मोक्षेत ह्रूयमानं॥ ३॥

अत्र प्रतिषेधान्नियमेन नेक्षेत्। तेनान्यत्रानियमः॥

स्तुत आर्भवे पवमाने विहृत्याङ्गारान्मनोतादि पश्विडान्तं पशुकर्म कृत्वा पुरोडाशाद्युक्तमानाराशंससादनात्॥ ४॥

कर्त्तव्यमिति शेषः। विहरणोपदेशस्तत्कालपरिज्ञानात्

तद्व्यवायपरिहारार्थः। अत्रापि द्विदेवत्या न सन्ति। पश्चिडान्तं कर्मेत्येतावतैव सिद्धे पशूपदर्शनं ब्रह्मणः पशुवदासनप्राप्त्यर्थं। तेन एतस्मिन्नवसरे आहवनीयस्य दक्षिणत आसनं भवति॥

सन्नेषु मृदिष्ठात् पुरोडाशस्य तिस्रस्तिस्रः पिण्डो दक्षिणतः प्रतिस्वञ्चमसेभ्यः स्वेभ्यः पितृभ्य उपास्येयुरत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति॥ ५॥

नाराशंसेषु सादितेषु पुरोडाशस्य मृदुतमात् प्रदेशात् गृहीत्वा सर्वे चमसिनः पुरोडाशन्तिस्रस्तिस्रः पिण्डीः कृत्वा स्वात् स्वाच्चमसात् दक्षिणतः स्वान् स्वान् पितॄनुद्दिश्य चमससमीपे आस्येयुः। ताः पिण्डीः प्रतिस्वमिति चमसेभ्य इत्यस्य विशेषणं। पितृशब्दस्य सम्बन्धिशब्दतयैव स्वत्वे सिद्धे यत् स्वशब्दं करोति तज्ज्ञापयति। सम्बन्धिपदार्था अपि यज्ञादृते यजमानस्यैवेति। तेन 'यस्यां द्वेष्यो न ताम्' इत्यत्र यजमानद्वेष्य एव परिगृह्यते॥

सव्यावृत आग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः॥ ६॥ ॥ १७॥

प्राश्य प्रतिप्रसृप्य॥

इति पञ्चमे सप्तदशी कण्डिका॥ ०॥

सावित्रेण ग्रहेण चरन्ति ॥ १ ॥

एतदुभयं गतार्थं। सवितृदेवत्यो ग्रहः सावित्रग्रहः ॥

अभूद्देवः सविता वन्द्यो नु नो होता यजद्देवं सवितारं दमूना देवः सविता वरेण्यो दधद्रत्नादक्ष पितृभ्य आयुनि। पिबात् सोमममदन्नेनमिष्टयः परिज्माचिद्रमते अस्य धर्मणीति वषट्कृते होता वैश्वदेवशस्त्रं शंसेत् ॥ २ ॥

वषट्कृतवचनमत्रापि शस्त्रकालज्ञानार्थं। होतृयजमानर्त्विक्कर्मव्यतिकरविषयेऽपि होतैव वैश्वदेवं शंसेदित्येवमर्थं। वैश्वदेवमिति शस्त्रनाम ॥

सर्वा दिशो ध्यायेच्छंसिष्यन्। यस्यां द्वेष्यो न तां ॥ ३ ॥

यस्यां द्वेष्यो न तां दिशं ध्यायेदिति वचनान्मुख्यं ध्यानमत्र न सम्भवतीति प्राच्यादिशब्दैरेव ध्यानं कर्त्तव्यं ॥

अध्वर्यो शो शोंऽसावोमिति तृतीयसवने शस्त्रादिष्वाहावः ॥ ४ ॥

उक्तार्थमेतन्माध्यन्दिने ॥

तत् सवितुर्वृणीमहेऽद्यानो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरावभूद्देव एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशत्या च । तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वाय-विह ता विमुञ्च । प्र द्यावेति दैर्घतमसं सुरूपकृत्नुमूतये तत्त्वथमयं वेनश्चोदयत् पृश्निगर्भा येभ्यो माता मधुमत् पिन्वते पय एवापिच्चे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवं ॥ ५ ॥

पुनर्वैश्वदेवग्रहणं शस्त्रादिष्विति व्यवायात्, एकया चेति कल्पजात्, दैर्घतमसमिति वासिष्ठनिवृत्त्यर्थं । नवग्रहणमस्य सूक्तस्य उत्तमावर्जस्यैव वैश्वदेवसूक्तत्वसिद्ध्यर्थं । एतत् सार्वत्रिकं, उत्तमायाः परिधानीयत्वेन सर्वत्र विनिवेशात् ॥

वैश्वदेवाग्निमारुतयोः सूक्तेषु सावित्रादिनिविदो दध्यात् ॥ ६ ॥

सप्त सूक्तानि सप्तैव च निविदो विशिष्यन्ते, उत्तमायाः षोडशिनि विनियोगात् । अतो यथासङ्ख्येन विनिवेशः सिद्धो भवति । तदेव स्पष्टयति ॥

चतस्रो वैश्वदेवे ॥ ७ ॥

शस्त्र इत्यर्थः ॥

उत्तरास्तिस्र उत्तरे ॥ ८ ॥

आग्निमारुते शस्त्र इत्यर्थः ॥

सूक्तानां तद्धि दैवतं ॥ ९ ॥

सूक्तानां यद्दैवतं भवति तदेव निविदो दैवतमित्यर्थः । हिशब्दो हेत्वर्थसूचकः प्रसिद्धिद्वारेण । तेनायमर्थः, यस्मादनयोरेकदेवत्वं प्रसिद्धं तस्मादग्निष्टुदादौ सूक्तानां देवताभेदे सति निविद ऊहेन तद्देवत्याः कर्त्तव्याः, तासु देवतापदानां ऊहः कर्त्तव्य इत्यर्थः ॥

दैवतेन सूक्तान्तः ॥ १० ॥

यद्येतयोः शस्त्रयोः सप्तैव सूक्तानि तदा निविद्भिः यथासङ्ख्यमुपपद्यते । यदा पुनर्विकृतिषु सप्तस्याधिकानि सूक्तानि तदा कथं यथासङ्ख्यमिति तदुपपादनार्थं इदं सूत्रं । दैवतेन सूक्तान्त इति दैवतेनैव सूक्तानां नानात्वमवगन्तव्यं, न समाम्नायप्रसिद्ध्या । एतदुक्तं भवति । एतयोः शस्त्रयोः सप्तैव कार्याणि प्रकृतौ परिच्छिन्नानि, तत्रैकं कार्यमेकं वा सूक्तं कुर्यात् । द्वे बहूनि वा सर्वथा तावतैव सूक्तकार्यानुप्रविष्टमेकमेवेति कृत्वा यावतां सूक्तानामेकं दैवतं तावदेकमेवेति मन्यमानो दैवतेन सूक्तान्त इत्युक्तवानाचार्यः ॥

धाय्यास्वाचैकपातिनीः ॥ ११ ॥

विद्यादिति शेषः। अत्रेति वैश्वदेवाग्निमारुतयोरित्यर्थः। अस्य विधेरुभयार्थत्वायोत्तरसूत्रे वैश्वदेवशब्दं प्रयुक्तवानाचार्यः॥

अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात् सर्वत्र वैश्वदेवे द्विः पच्छोऽर्धर्चशः सकृद्भूमिमुपस्पृशन् ॥ १२ ॥

सर्वत्र प्रकृतौ विकृतौ च वैश्वदेवशस्त्रे अनयैव परिदध्यात्। इत्यस्य परिदध्यादिदस्य कुर्वन् परिदध्यादित्यर्थः॥

उक्थं वाचीन्द्राय देवेभ्य आ श्रुत्यै त्वेति शस्त्वा जपेत्। विश्वेदेवाः शृणुतेमं हवं म इति याज्या ॥१३॥ ॥१८॥

इति पञ्चमे अष्टादशी कण्डिका ॥ ० ॥

---

त्वं सोम पितृभिः संविदान इति सौम्यस्य याज्या ॥ १ ॥

सौम्यो नाम कर्मविशेषः चरुहविष्कः सोमदैवत्यः॥

तं घृतयाज्याभ्यामुपांशूभयतः परियजन्ति ॥ २ ॥

तं सौम्यमभितो घृतयाज्याभ्यां उपांशु परियजन्ति। तत्रैव विशेषमाह॥

घृताहवनो घृतपृष्ठो अग्निर्घृते श्रितो घृतम्वस्य धाम। घृत-प्रुषस्त्वा हरितो वहन्तु घृतं पिबन् यजसि देव देवानिति पुरस्तात्। उरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि। घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिरेत्युपरिष्टात्। अन्यतरतश्चेद्-ग्राविष्णू मह्वि धाम प्रियं वामित्युपांश्वेव ॥ ३ ॥

यद्यन्यतरतो यजन्ति तदा अनया यजेत् तदाप्युपांश्वेव। एवकारः पौनर्वचनिकः ॥

आहृतं सौम्यं पूर्वमुद्गातृभ्यो गृहीत्वाऽवेक्षेत। यत् ते चक्षुर्दिवि यत् सुपर्णे येनैकराज्यमजयोश्विना। दीर्घं यच्च-क्षुरदितेरनन्तं सोमो नृचक्षा मयि तद्दधात्विति ॥ ४ ॥

अध्वर्युणा आहृतमुद्गातृभ्यः पूर्वं गृहीत्वा सौम्यमवेक्षेत मन्त्रेण ॥

अपश्यन् हृदिस्पृक् क्रतुस्पृग्वर्चोदा वर्चो अस्मासु धेहि। यन्मे मनो यमं गतं यद्वा मे अपरागतं। राज्ञा सोमेन तद्व-यमस्मासु धारयामसि। भद्रं कर्णेभिः शृणुयाम देवा इति च ॥ ५ ॥

तस्मिंश्चरौ घृतप्लुते ईक्षमाणः स्वच्छायां यदि न पश्येत् तस्यापश्यतो नैमित्तिकमिदं, 'हृदिस्पृग्' इत्यादि यजुः, भद्रं कर्णेभिरित्यृचं च ब्रूयात् ॥

अङ्गुष्ठोपकनिष्ठिकाभ्यामाज्येनाक्षिणी आज्य छन्दोगेभ्यः प्रयच्छेत् ॥ ६ ॥

अङ्गुष्ठोपकनिष्ठिकाभ्यां चरुस्थेनाज्येनाक्षिणी अंक्त्वा छन्दोगेभ्यः प्रदानार्थमध्वर्यवे प्रयच्छेदित्यर्थः। अञ्जनादि नित्यमेव ॥

विहृतेषु शालाकेष्वाग्नीध्रः पात्नीवतस्य यजत्यैभिरग्ने सरथं याह्यर्वाङित्युपांश्वेव ॥ ७ ॥

शलाका दर्भेषीकाः, तेषु भवा अग्नयः शालाकाः। तेषु विहृतेष्विति विहरणकालोपदेशः। तस्य व्यवायपरिहारार्थं शालाकाङ्कैष्ण्या अग्नयः। उपांश्वेवेत्यवधारणं तेषामुच्चैः सम्प्रैषेऽप्युपांश्वेव यष्टव्यमित्येवमर्थं ॥

नेष्टारं विसंस्थितसञ्चरेणानुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत् ॥ ८ ॥ ॥ १९ ॥

नेष्टुर्विसंस्थितसञ्चरेण नेष्टारमनुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत् पात्नीवतं। नेष्टर्यधिकृते उपस्थ इतिवचनात् तस्यैवेत्यवगतौ सत्यां तस्येतिवचनं शास्त्रान्तरेण 'नोपस्थ आसीत' इति प्रतिषेधे सत्यपि उपस्थ एवोपविशेदित्येवमर्थं। अस्य सूत्रकारस्यान्यश्रुतिर्मूलमस्तीत्यनुमिमीमहे ॥

इति पञ्चमे एकोनविंशतितमा कण्डिका ॥ * ॥

अथ यथेतं ॥ १ ॥

अथानन्तरमेव यथेतं निष्क्रामेत्, सदस आग्नीध्रं प्रतिगच्छेत्। तस्मिन्नाग्नीध्रीये यथेतं निष्क्रान्त एवाग्निमारुतमारभेतेतिवचनप्रयोजनं यथेतमिति येनैव मार्गेण गतस्तेनैवेति ॥

त्वरितमाग्निमारुतं ॥ २ ॥

त्वरितं द्रुतवृत्त्येत्यर्थः। वाचस्तिस्रो वृत्तयः, विलम्बिता मध्यमा द्रुता चेति। तत्र विलम्बितायां य एकमात्रः स मध्यमायां द्विमात्रः, एवं द्रुतायां त्रिमात्र इत्यासु विशेषः। एवं श्रुयते 'तेनासन्त्वरमाणाश्चरेयुः' इत्यारभ्य त्रिषु सवनेष्वसन्त्वरमाणाश्चरेयुरिति स्थिते असन्त्वरमाणा इति सन्त्वराप्रतिषेधात् तदनन्तरा मध्यमा वृत्तिर्विहिता भवति। तत्राग्निमारुते मध्यमामपोह्य द्रुता विधीयते। उच्चनीचभावेनैवं प्रशस्यं। त्रिषु सवनेषु मन्द्रादयो यमा आरोहणक्रमेणैव प्रयोक्तव्याः। आग्निमारुतमिति शस्त्रनाम ॥

तस्याद्यां पच्छ ऋगावानं पच्छःशस्या चेत् ॥ ३ ॥

तस्याग्निमारुतस्याद्यामृचं ऋगावानं शंसेत्। यदि सा पच्छः शस्या भवेत् तदा पादे पादेऽवसायाऽनुच्छ्वसन्नेव शंसेत् ॥

अर्धर्चशश्च इतरां ॥ ४ ॥

यदि साऽर्धर्चशः शस्या स्यात् तदार्धर्चेऽवसाय अनवानं इत्यर्थः ॥

सन्तानमुत्तमेन वचनेन ॥ ५ ॥

प्रगावानवचनात् त्रिषु वचनेषु असन्ताने प्राप्ते उत्तमेन वचनेन द्वितीयायाः सन्तानं विधीयते ॥

वैश्वानराय पृथुपाजसे ग्रन्नः करत्यर्वते प्रत्वक्षसः प्रतवसो यज्ञा यज्ञा वो अग्नये देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ प्रतव्यसीन्तव्यसोमापोष्टिष्ठेति तिस्रो वियतमप उपस्पृशन्नन्वारब्धेष्वपावृतशिरस्क इदमादि प्रति प्रतीकमाह्वानमुत नो*ऽहिर्बुध्न्यः शृणोतु देवानां पत्नीरुशतोरवन्तु न इति द्वे राकामहमिति द्वे पावीरवी कन्या चित्रायुरिमं यमप्रस्तरमाहिसोद मातलीकव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परास आहं पितृन्त्सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्य स्वादुष्किलायमिति चतस्रो मध्ये चाह्वानं मदामो दैव मोदामो दैवोमित्यासां प्रतिगरौ ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा। यापत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ। विष्णोर्नुकं वीर्याणि प्रवोचं तन्तु तन्वन् रजसोभानुमन् विद्वोवान इन्द्रो मघवा वीरपशीति परिदध्यात्। भूमिमुपस्पृशन्॥ ६ ॥

अत्र वियतमप उपस्पृशन्नित्यापोहिष्ठीये उक्तं वियतमिति व्युपरते, स्थित्वा स्थित्वा शंसेदित्यर्थः। अपस्योपस्पृशन् शंसेत्।

---

* ऽहिर्बुध्न्यः इति सं० पु० द्वये।

अन्वारब्धेष्वपावृतशिरस्कः । उद्गात्रादिष्वात्मानं अन्वारब्धेषु शिरसः प्रावरणमपोहेत् । अनेनैव ज्ञायते स्तोत्रोपाकरणकाल एव सर्वे प्रावृतशिरस्का भवेयुरिति । इदमादिप्रति प्रतीकमाक्षा॰ामित्यत्रेदमादीत्यापोहिष्ठीयादि इत्यर्थः । अस्य विधेर्विषये धाय्यात्वादनन्तरत्वादिविशेषवचनाच्च राकाहृचवर्जं अन्येषु सर्वेष्वाहावः प्राप्त एव, किमर्थोऽयं महान् प्रयास इति न विद्मः । राकाहृचार्थमिति चेत् तदेवं वक्तव्यं । आपोदेवते च हृचे राकाहृचे चेति तत्रैव वक्तव्यं । अत्रैव वैतयोराहावसिद्ध्यर्थं इदमादीत्येतदवक्तव्यं स्यात् । एवं लघुनोपायेनोभयोराहावे विधातुं शक्येऽपि अत्रैव तस्य यत् पुरस्तादाहावं विदधाति तज्ज्ञापयत्याचार्यः । अस्य विधेरनित्यत्वं । तेन राकाहृचे आहावविकल्पः सिद्धो भवति । 'मदामो दैव मोदामो दैवोम्' इत्यासां प्रतिगरावित्यत्रेदं प्रतिगरद्वयं 'ओथामो दैव' इत्यस्य प्लुतादिरूपद्वयविशिष्टस्यापवादः । प्रणवे प्रणव आहावोत्तर इत्ययं प्रणवः प्लुतादेरपवादः, न मोदामो दैवोमित्यस्य । अतः स्वादुष्किलीयास्वाहावोत्तरेऽपि न प्रणवः प्रतिगरो भवतीति सिद्धं । एवमादिप्रयोजनार्थं प्रसङ्गादपवादो बलीयानित्युक्तं । भूमिमुपस्पृशन् परिदध्यात् ॥

उत्तमेन वचनेन ध्रुवावनयनं काङ्क्षेत् ॥ ७ ॥

परिधानीयाया उत्तमेन वचनेन ध्रुवावनयनं प्रतीक्षेत । ध्रुवो नाम ग्रहः । तस्यावनयनमवसेचनं होतृचमसे, तदस्मिन्

शस्ते प्रथमात्र एव कर्त्तव्यं । तत् पूर्वमवनीतञ्चेत् परिधानीया-या मध्यमे वचने उत्तमं पादमवग्राह्य स्थित्वा तस्मिन्नवनीते शेषं समापयेत ॥

उक्थं वाचीन्द्राय देवेभ्य आश्रुताय त्वेति शस्त्वा जपेत् । अग्ने मरुद्भिः *शुभयद्भिर्ऋक्वभिरिति याज्या । इत्यन्तोऽग्नि-ष्टोमोऽग्निष्टोमः ॥ ८ ॥  ॥ २० ॥

इतिशब्देन प्रकृतमाग्निमारुतमुच्यते । एतदन्तः सोमयागोऽग्निष्टोमसंज्ञो भवतीत्यर्थः । यद्येवंशब्दो नोच्येत यदिद-माग्निमारुतं तदग्रे स्तोत्रमेवोक्तं स्यात्, तच्च न वक्तव्यं । स्वरूपत एव तदग्नेरन्येषां च स्तोत्रमेव । अन्यनिवृत्त्यर्थमिति चेत् तदपि वक्तुं न शक्यते, लिङ्गविरोधादैन्द्रीवद्वचनाभावाच्च । तेनेत्यन्त इत्युक्तमेतदन्तस्य नामधेयमेषशब्द इति साधयितुं ॥

इति पञ्चमे विंशतितमा कण्डिका ॥ * ॥

इत्याश्वलायनसूत्रवृत्तौ नारायणीयायां पञ्चमोऽध्यायः ॥*॥

---

* शुभवद्भिरिति सो॰ मू॰ ।

॥ ॐ ॥



## उक्थे तु होत्रकाणां ॥ १ ॥

तृतीयसवन इत्यनुवर्त्तते। उक्थे त्वयं विशेषः। तृतीयसवने होत्रकाणामपि शस्त्राणि भवेयुः। तानीमानीत्याह ॥

एह्यूषु ब्रुवाणि ते अग्निरगामि भारतस्त्वर्यणीधृतमस्तभ्ना-द्यामसुर इति तृचाविन्द्रावरुणा युवमावां राजानाविन्द्राव-रुणा मधुमत्तमस्येति याज्या। वयमु त्वामपूर्व्य यो न इदमिदं पुरेति प्रगाथौ सर्वाः ककुभः प्रमंहिष्ठायोदप्रुतोऽच्छाम इन्द्रं बृहस्पते युवमिन्द्रश्च वस्व इति याज्या। अधाहीन्द्र गिर्वण इमन्त इन्द्र गिर्वण ऋतुर्जनित्रीनूमर्त्तो भवा मित्रः स वां कर्मणेन्द्राविष्णू मदपती मदानामिति याज्या ॥ २ ॥

अत्र सर्वाः ककुभ इत्युक्तं किमनेनोक्तं। काकुभेषु तावत् प्रगाथेषु तृतीयपञ्चमयोरभ्यासे सति ककुभ एव सर्वा भवन्ति। तथैव च स्तुवन्ति छन्दोगाः। अतोऽन्यत् प्रयोजनमन्वेषणीयं। तदिदमुच्यते। होत्रकाश्च येषां प्रगाथाः स्तोत्रियानुरूपा

इतीन्द्रनिहवब्राह्मणस्पत्यवच्छंसनं विहितं। तत्र बार्हतानामेवायं विधिरित्यनुक्तत्वात् काकुभेष्वनुप्राप्नोति तन्निवृत्त्यर्थं ककुभ इतिवचनं। सर्वग्रहणं सर्वकाकुभप्रगाथसंग्रहार्थं। तेन बार्हतेष्वेवासौ विधिरिति मन्तव्यं॥

इत्यन्त उक्थ्यः॥३॥  ॥१॥

एवमन्त उक्थ्यः क्रतुरित्यर्थः। इत्यन्तोऽग्निष्टोम इत्यस्यानन्तरं एतानि शस्त्राण्युक्थ्याः, इत्यन्ते उक्थ्य इत्येतावत्युच्यमाने एतानि शस्त्राण्युक्थ्य एवेति गम्यते। तत् किमर्थमुक्थ्ये तु होत्रकाणामित्यत्रोक्थ्यग्रहणं। अयमभिप्रायः। अथ सोमेनेति त्रिष्वध्यायेषु ज्योतिष्टोमाख्यः सोमयागोऽधिकृतः, स च संस्थाभेदान्नामभेदाच्चतुर्धा भिन्नो व्युत्पादितो भवति। तत्र सर्वत्र सोमेन यजेतेत्येतद्विधिविहित एवैको यागः केनचिदुपाधिवशेनाभ्यस्तो भिन्नो नाम प्रतीयते। अतः सर्वेषां प्रकरणित्वे प्राप्ते अग्निष्टोम एव प्रकरणी, अन्ये तस्यैव गुणा विकारा इति ज्ञापयितुमुक्थ्य इत्युच्यते। उक्थ्य एतावदेवौपदेशिकं, अन्यत् सर्वमातिदेशिकमित्यर्थ इति॥

इति षष्ठे प्रथमा कण्डिका॥ ॥

---

अथ षोडशी॥१॥

अथशब्द आनन्तर्यार्थः। षोडशीत्ययं शब्दः शस्त्रवाची, तच्छस्त्रान्तस्य क्रतोरपि वाचकः। तच्चैकेनोच्चारणेनोभयमत्र विवक्षितमाचार्येण। तेनायमर्थो गम्यते, यदि षोडशी क्रतुः स्यात् तदा तृतीयसवने होत्रकशस्त्रानन्तरं षोडशी नाम शस्त्रं भवतीति तस्य विधिरुच्यत इति सम्बन्धः॥

असावि सोम इन्द्र त इति स्तोत्रियानुरूपौ॥२॥

अस्मिन्नेव प्रतीके षडर्च इत्यर्थः॥

आ त्वा वहन्तु हरय इति तिस्रो गायत्र्यः॥३॥

अत्र छन्दोनिर्देशः संव्यवहारार्थः॥

उपोषु शृणुही गिरः सुसंदृशन्त्वा वयं मघवन्नित्येका द्वे च पङ्क्ती॥४॥

पङ्क्तय इत्यर्थः॥

यदिन्द्र पृतना ज्येयन्ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ। आधूर्ष्वस्मा इति द्विपदा॥५॥

द्विपदावचनं पच्छःशंसनार्थं॥

ब्रह्मन् वीर ब्रह्मकृतिं जुषाण इति त्रिष्टुप्। एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे। वि स्रुतयो यथापथ इन्द्र त्वद्यन्ति रातयः। त्वामिच्छवसस्पते यन्ति गिरो न संयत इति तिस्रो द्विपदाः। प्र ते महे विदथे शंसिषं हरी इति तिस्रो जगत्यः। त्रिकद्रुकेषु महिषो यवाशिरं प्रोष्वस्मै पुरोरथमिति तृचावातिच्छन्दसौ॥ ६॥

अतिजगत्यादीनि छन्दांस्यतिछन्दःशब्देनोच्यन्ते। त्रिकद्रुकेष्वित्यत्र प्रथमा अष्टिः। उत्तरे अतिशक्कर्यौ। प्रोष्विति तृचः शक्कर एव, तेनातिछन्दसावित्युच्यते॥

पच्छःपूर्वं द्वेधाकारं॥ ७॥

अनयोः पूर्वं तृचं द्वेधा कृत्वा शंसेत्। एकैकामृचं द्वे द्वे ऋचौ कुर्यादित्यर्थः। पच्छःशंसनेन तत् सम्पद्यत इति पच्छ इत्युक्तं। एवञ्चेत् पच्छःशंसनमत्र सिद्धमेव चतुष्पदत्वात्, तथापि पच्छ इत्युक्तं। द्वेधाकारमिति अस्यार्धर्चशंसनविधिपरत्वाशङ्कानिवृत्त्यर्थं। तेन एतास्तिस्रः षड्भवन्तीति स्तोमातिशंसनकाले षड्गुणाः॥

उत्तरमनुष्टुब्गायत्रीकारं॥ ८॥

अस्य तृचस्य सप्तपदत्वादेकैकामृचमेकैकामनुष्टुभमेकैकां

गायत्रीश्च सम्पादयतीत्येवमुक्तं। आद्यैश्चतुर्भिश्चतुर्भिः पादैः अनुष्टुभः। त्रिभिस्त्रिभिर्गायत्र्यः। अनेन प्रकारेण एता अपि च षड्भवन्ति। प्रयोजनं पूर्ववत्॥

प्रचेतन प्रचेतयायाहि पिब मत्स्व। क्रतुश्छन्द ऋतं बृहत् सुम्न आधेहि नो वस्वित्यनुष्टुप्। प्र प्र वस्त्रिष्टुभमिषमर्चत प्रार्चतयोव्यतीᳫं रफाणयदिति तृचा आनुष्टुभाः॥ ९॥

अस्यानुष्टुभवचनस्य पूर्वोक्तप्रयोजनस्यासम्भवादन्यदुच्यते। निविदतिपत्तौ सत्यां अन्यस्मिन्नप्यानुष्टुभ एव तृचे निविद्धेयेत्येतत् प्रयोजनं च। जागतेन च सवनच्छन्दस्के तृच इति। तेनैतत् साधितं भवति, यत्र छन्दोनिर्देशमन्तरेण सवनविरुद्धं छन्दसि सूक्ते निविद्विहिता स्यात्, तत्र तस्मिन् निविदतिपत्तौ सत्यां सवनच्छन्दस्कसूक्तमाहर्त्तव्यं, नातिपन्ननिवित्सूक्तसमानछन्दस्कमिति॥

उत्तमस्योत्तमां शिष्ट्वोत्तमां निविदन्दध्यात्॥ १०॥

उत्तमां शिष्ट्वेत्येतदेकां शिष्ट्वेत्यनेनैव सिद्धं। पुनर्वचनमत्र तृच एव निविद्धानीयो न सूक्तमिति ज्ञापनार्थं। तेनात्र निविदतिपत्तौ तृच एवान्य आहर्त्तव्यो न सूक्तमिति सिद्धं। उत्तमां निविदमिति प्रसिद्धानुवादः। तस्य प्रयोजनं स्वाध्यायकालेऽप्येताः प्रसाया अन्ते निविदः पठितव्या इति॥

लिङ्गैः पदानुपूर्वं व्याख्यास्यामो मत्सदित्विं वृत्रमपां जिन्व-दुदार्यमुद्यान् दिवि समुद्रं पर्वतां इव ॥ ११ ॥

अस्या निविदः पाठविप्रतिपत्तौ सत्यामविच्छिन्नसम्प्रदायाधिगतपाठप्रदर्शनार्थं लिङ्गानि पठति। कानि पुनस्तानीत्याह। मत्स ० इव। एतानि लिङ्गानीति प्रयोजनार्थोऽयमुपदेशः ॥

उद्यद्ब्रध्नस्य विष्टपमिति परिधानीया। एवाह्येवैवाहीन्द्र३। एवाहि शक्रो वशी हि शक्र इति जपित्वा। अपाः पूर्वेषां हरिवः सुतानामिति यजति ॥ १२ ॥　　॥ २ ॥

जपित्वा यजतीतिवचनादुत्तरत्र च याज्यासंसर्गदर्शनायाज्याङ्गमिदं न शस्त्वा जपतीति गम्यते। तेनात्र शस्त्वाजप उक्थं वाचीन्द्राय देवेभ्य इत्ययं भवति, तदनन्तरमेवाहीति मन्त्रमुक्त्वा याज्या यजति ॥

इति षष्ठे द्वितीया कण्डिका ॥ ० ॥

---

विहृतस्येन्द्र जुषस्व प्रवहायाहि शूर हरी इह। पिबा सुतस्य मतिर्न मध्वश्चकानश्चारुर्मदाय। इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न। अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थुः। इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न। बिभेद बलं भृगुर्न ससाहे शत्रून्मदे सोमस्य। आ त्वा विशन्तु कविर्न सुतास इन्द्र त्वष्टा न। इन्द्र सयुग्भिर्दिद्युन्नमस्वामदाय महेरणाय। आ त्वा विशन्तु कविर्न सुतास इन्द्र त्वष्टा न। पृणस्व कुक्षी सोमो नाविड्ढि शूरधिया हि या नः। साधुर्न गृध्नुर्कर्भुर्नास्तेव शूरश्चमसो न। यातेव भीमो विष्णार्न त्वेषः समत्सुक्रतुर्नेति स्तोत्रियानुरूपौ॥ १॥

विहृतस्य षोडशिनः, इन्द्र जुषस्वेत्याद्याः अत्रैवाम्नाताः षड्च: स्तोत्रियानुरूपौ भवतः। तेन पूर्वौक्तावविहृतस्येति गम्यते॥

ऊर्ध्वं स्तोत्रियानुरूपाभ्यान्तदेव शस्यं विहरेत्॥ २॥

अत्र द्वावर्थौ विधीयेते। शस्तव्यमेतावत्, एतावदेतावद्विहर्त्तव्यमिति। एतदुक्तं भवति, विहृतस्य स्तोत्रियानुरूपा उक्तौ। ताभ्यामूर्ध्वमविहृते यच्छस्यन्तदेव शस्तव्यं। स्तोत्रियानुरूपौ तु प्रत्याम्नानान्निवर्त्तेत इति। एवं शस्यप्राप्तिरेकोऽर्थः। अपरस्तु विहृतस्येत्यधिकृत्य वचनात् सर्वत्र विहरणे प्राप्ते ऊर्ध्वं स्तोत्रियानुरूपाभ्यामिति विहरणस्य विषयो नियम्यत इत्यत-

कोचित्यानुरूपौ गायत्राभिर्विहर्त्तव्यौ। विहृतावेव पठित-वानाचार्य इति गम्यते। तदेतदुक्तं ब्राह्मणे, 'तद्यदि गायत्रं कुर्युः' इत्यादिना 'विहृतासु स्तुवते' इत्येवमन्तेन। विहरण-स्वरूपमाह॥

पादान् व्यवधायाधर्चशः शंसेत्॥ ३॥

द्वाभ्यां पादाभ्यामनर्धर्चान्तेऽप्यवसानं भवेत्। तत्र अनुग-न्तोऽपि प्रणव इत्येवमर्थमर्धर्चश इति वचनं॥

पूर्वासां पूर्वाणि पदानि॥ ४॥

पाठत एवास्मिन्नर्थे सिद्धे पुनर्वचनं 'गायत्र्यः पङ्क्तिभिः' इत्यत्र पङ्क्तिपदानां पूर्वप्रयोगे द्वयोरेवाव्यवधानं भवति। गायत्रीपाठक्रमानुसारेण त्रयाणामप्यव्यवधानं स्यात्। तदा पादान् व्यवधायेत्येतत् दूरोत्सारितमिति पाठक्रमत्यागः स्यात्, तन्निवृत्त्यर्थमिदमुच्यते॥

गायत्र्यः पङ्क्तिभिः॥ ५॥

विहर्त्तव्या इति शेषः॥

पंक्तीनां तु द्वे द्वे पदे श्लिष्येते ताभ्यां प्रणुयात्॥ ६॥

इदं न वक्तव्यं, प्राप्त एवायमर्थ उच्यते। अभ्यासेन पङ्क्ति-

पादसाम्यं गायत्रीपादानां न कर्त्तव्यमित्येवमर्थं। तेनान्यत्र न्यूनाधिकपादयोर्विहारे कर्त्तव्येऽभ्यासेन पादसाम्यमापाद्य पादयोर्विहरणं कर्त्तव्यं। महाव्रतादावित्येतत् साधितं भवति॥

उष्णिहो बृहतीभिरुष्णिहान्तूत्तमान् पादान् द्वौ कुर्य्यात्॥ ॥ ७॥

अत्र च पादविभागे क्रियमाणे व्यञ्जनान्युत्तराङ्गमिति स्मर्त्तव्यं॥

चतुरक्षरमाद्यं॥ ८॥

ततोऽष्टाक्षरमिति शेषः। एवं चतुरो भागान् कृत्वा बृहतीपादैर्विहर्त्तव्यमित्यर्थः॥

द्विपदाश्चतुर्धा कृत्वा प्रथमां त्रिष्टुभोत्तरा जगतीभिः॥ ९॥

अत्र द्विपदास्तिस्रः, ताः सर्वाश्चतुर्द्धा कर्त्तव्याः। प्रथमायां सर्वे भागा व्यूहेनाव्यूहेन च पञ्चाक्षराः। उत्तरास्तु चतुरक्षरभागाः। तत्र च प्रथमां त्रिष्टुभा विहरेत्। उत्तरास्तिस्रो जगतीभिः। विभागे क्रियमाणे व्यञ्जनान्युत्तराङ्गमिति स्मर्त्तव्यं॥

उत्तमायाश्चतुर्थमक्षरमन्त्यं पूर्वस्याद्यमुत्तरस्य॥ १०॥

उत्तमाया द्विपदायाः यच्चतुर्थमक्षरन्तत् प्रथमस्य भागस्य अन्त्यं भवति। तदेव द्वितीयस्य चाद्यं भवति। चानु-

ष्टुभमतिच्छन्दःखवदध्यात्। 'प्रचेतन' इत्येतामनुष्टुभमति-च्छन्दःसूक्तवधाय शंसेदित्यर्थः। इदमवदध्यादित्याह॥

द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत उपदध्यात्। प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्यां॥ ११॥

अनुष्टुभः प्रथमपादं द्विधा कृत्वा 'अधलिषोमान् षाक-स्थात' इत्यनयोर्ऋचोस्तृतीयपादावसान उपधाय तत्रावस्येत्। प्रचेतनेति द्वितीयस्यां प्रचेतयेति तृतीयस्यामित्यर्थः॥

उत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टप्कारं शंसेत्॥ ॥ १२॥

उत्तरासु 'प्रोम्वसा' इत्येतास्वित्यर्थः। इतराननुष्टुभो द्वितीयतृतीयचतुर्थानित्यर्थः। एतान् पादानुत्तरासृचु यथा-संख्येन षष्ठान् कृत्वा एकैकामृचं द्वे द्वे अनुष्टुभौ कुर्यात्॥

ऊर्ध्वं स्तोत्रियानुरूपाभ्यामातो विहृतः॥ १३॥

स्तोत्रियानुरूपाभ्यामूर्ध्वं प्रोम्वसा इत्येतदन्तो यः शस्त्राव-यवः स विहृतो भवति। एतावत एव विहृतत्वे सिद्धे विहृत-वचनं विहृतधर्मस्य प्रतिगरादेरेतावत्येव नियमार्थं। तेन स्तोत्रियानुरूपयोर्विहृतयोरपि विहृतप्रतिगरो न भवति। आनुष्टुभानामपि तृचानां विहृतस्येत्यधिकारात् कथञ्चिद्वि-हरणं प्राप्नुयात् तन्निवृत्त्यर्थञ्च॥

तत्र प्रतिगर ओथामो दैवमदे मदामो दैवोमथेति ॥ १४ ॥

द्वावेतौ प्रतिगरौ, तत्रैकवचनं जात्यभिप्रायं। तत्रग्रहणं यत्र यत्र विहृतो भवति तत्र तत्रैतौ प्रतिगरौ भवत इत्येवमर्थं। ओथामो दैवमदे, मदामो दैवोमथ इत्येवमेतौ प्रतिगरौ ॥

याज्यां जपेनोपसृजेत् ॥ १५ ॥

मिश्रयेदित्यर्थः। तमुपसर्जनप्रकारं स्वयमेव पठति ॥

एवाह्येवापाः पूर्वेषां हरिवः सुतामेवाहोन्द्रा अथो इदं सवनं केवलन्ते। एवा हि शक्रो मम हिसोमं मधुमन्तमिन्द्र-वश्रीहि शक्रः सत्रावृषन् जठर आवृषस्वेति ॥ १६ ॥

लक्षणत एव सिद्धस्य पुनः पाठप्रयोजनं च पदसन्धिषु सन्ध्यक्षरं यत् तस्याऽव्यूहेन पूरणे सत्यपि पूरणार्थं व्यूहादि न कर्त्तव्यमित्येवमर्थं ॥

समानमन्यत् ॥ १७ ॥

योऽयं विहृतस्य विशेष उक्तः ततोऽन्यत् सर्वमविहृतेन समानमित्यर्थः ॥

स्तोत्रियाय निविदे परिधानीयाया इत्याहावः ॥ १८ ॥

अयमपि विहृतस्यैव विशेषः । आहावनियमोऽनुरूपतदनन्तरयोः प्रतिषेधफलं । तेन अविहृतस्य पञ्चाहावत्वं भवति ॥

आहुतं षोडशिपात्रं समुपहावं भक्षयन्ति ॥ १९ ॥

इदं विहृताविहृतयोः साधारणं, षोडशिपात्रमिति विशेषणात् । आहुतमिति प्राप्तानुवादः । समुपहाववचनं य एतं भक्षयन्ति तेषां सर्वेषां परस्परमुपहवयाचनप्राप्त्यर्थं, न वषट्कर्तृहोमकर्त्रोरेव परस्परमितिप्रदर्शनार्थं । अथैते भक्षयितार इत्याह ॥

घर्मे च भक्षिणः ॥ २० ॥

प्रथमं तावद्वषट्कर्तृहोमकर्त्तारौ । घर्मे ये भक्षिणस्ते चेत्यर्थः ॥

मैत्रावरुणस्त्रयश्छन्दोगाः ॥ २१ ॥

सुब्रह्मण्यवर्जिताः ॥

इन्द्र षोडशिन्नोजस्विंस्त्वन्देवेष्वस्योजस्वन्तमामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु । तस्य त इन्द्रपीतस्यानुष्टुप्छन्दस उपहूतस्योपहूतो भक्षयामीति भक्षजपः ॥ २२ ॥　॥ ३ ॥

एष भक्षमन्त्रः, इत्यन्तः षोडशीत्यध्याहारः कर्त्तव्यः ॥

इति षष्ठे तृतीया कण्डिका ॥ ० ॥

अतिरात्रे पर्यायाणामुक्तः शस्त्रोपायो होतुरपि यथा होत्रकाणां ॥ १ ॥

उक्तः षोडशी । इदानीमतिरात्र उच्यते । तस्मिन्नतिरात्रे वक्ष्यमाणो विधिर्भवति । तदधिकारार्थमतिरात्र इतिवचनं । वक्ष्यमाणानि द्वादश शस्त्राणि पर्याया इत्युच्यन्ते । तेषामाद्यानि चत्वारि प्रथमः पर्यायः । मध्यमानि मध्यमे, उत्तमान्युत्तम इत्येवं नामविशेषः पर्यायाणामेषां शस्त्रोपाय उक्तः । तत्र होतुर्होत्रकाणां च यः साधारणः न तत्र विधेयमस्ति । यः पुनर्होत्रकानुद्दिश्य विहितः शस्त्रोपायः स यथा होत्रकाणां भवति होतुरपि तथैव भवतीत्यत्र विधीयते । उक्तग्रहणमुक्तस्यैवायमतिदेशो न वक्ष्यमाणस्येत्येवमर्थं । तेन निर्ह्रासे होतृसम्बन्धो नास्तीति गम्यते, वक्ष्यमाणत्वादिति ॥

प्रथमे पर्याये होतुराद्यां वर्जयित्वा प्रत्यृचं स्तोत्रियानुरूपेषु प्रथमानि पदानि द्विरुक्त्वाऽवस्यन्ति ॥ २ ॥

प्रथमे पर्याये ये स्तोत्रियानुरूपास्तेषामाद्यस्याद्यामृचं वर्जयित्वा अन्यासु सर्वास्वृक्षु प्रथमानि पदानि द्विरुक्त्वा तत्रैवावस्येयुरित्यर्थः । पदानीति पादानित्यर्थः ॥

श्लिष्टे समसित्वा प्रणुवन्ति ॥ ३ ॥

श्लिष्टौ यौ पादौ तौ समस्य प्रणवं कुर्वन्ति । ऋगन्ते प्रणवविधानं समाहार्यत्वादर्धर्चानां सन्देहनिवृत्त्यर्थं ॥

सर्वे सर्वासां मध्यमे मध्यमानि प्रत्यादाय ऋगन्तैः प्रणुवन्ति ॥ ४ ॥

प्रत्यृचं स्तोत्रियानुरूपेष्वित्यनुवर्त्तते। सर्वे इत्युत्तरार्थं। सर्वासामिति होतुराद्यां वर्जयित्वेत्येतन्निवृत्त्यर्थं। प्रत्यादायेति वचनात् मध्यमानि पदानि सकृदुक्त्वाऽवसाय तान्येव प्रत्यादाय तैर्ऋगन्तानि सन्धाय ऋगन्तैः प्रणुवन्तीत्यर्थः॥

उत्तमान्युत्तमे ॥ ५ ॥

सर्वे इति संबध्यते। तदच्छावाकसङ्ग्रहार्थं भवति। उत्तमे पर्याये स्तोत्रियानुरूपेषु सर्वासां ऋचां उत्तमानि पदानि सर्वे साच्छावाकाः द्विरुक्त्वा तैरेव प्रणुयुरित्यर्थः॥

चतुरक्षराणि त्वच्छावाकः ॥ ६ ॥

उत्तमे पर्याये अच्छावाक उत्तमे पादे अन्ततश्चतुरक्षराणि द्विरुक्त्वा प्रणुयात्। अच्छावाकस्य पदाभ्यासश्चतुरक्षराभ्यासश्च उभयं विधीयते। तत्रार्थाद्विकल्पो भवति, तत्र तुशब्देन व्यवस्थाविकल्प इत्ययं विशेष उच्यते। यत्र गायत्र्यस्तत्र पदाभ्यासः। यत्रोष्णिहस्तत्र चतुरक्षराभ्यास इति॥

चतुःशस्ताः पर्यायाः ॥ ७ ॥

उक्तार्थमेतत्॥

होतुराद्यं ॥ ८ ॥

शस्त्रं भवतीति शेषः। त्रिषु पर्य्यायेष्वेवं भवति। मुख्यत्वादेव होतुराद्यमेव भवति। वचनप्रयोजनमाद्यशस्त्रस्य होत्रा सम्बन्धकरणं, तथेतरैरितरेषामिति। तेन प्रथमाद्धोतेत्येवमादौ स्वं स्वमेव शस्त्रं शंसेयुरित्येतत् साधितं भवति। अतिरिक्तेषु वानेन क्रमेण शस्त्रिणां शस्त्रसम्बन्धः सिद्धो भवति॥

याज्याभ्यः पूर्वे पर्यासाः ॥ ९ ॥

याज्याभ्यः पूर्वाणि यानि प्रतीकानि तानि पर्यासमंज्ञानि भवन्ति॥

पान्तमा वो अन्धसोपादु शिप्रयन्धसस्त्यमु वः सत्रासाहमिति सूक्तशेषोऽभित्यं मेषमध्वर्यवो भरतेन्द्राय सोममिति याज्या। प्र व इन्द्राय मादनं प्रकृतान्यृजीषिणः प्रतिश्रुताय वो धृषदिति पञ्चदश दिवश्चिदस्येति पर्यासः स नो नव्येभिरिति चास्य मदे पुरुवर्पासि विद्वानिति याज्या। वयमु त्वा ददिदर्था वयमिन्द्रत्वाय वोऽभिवार्त्रहत्यायेत्युत्तमामुद्धरेदिन्द्रो अङ्ग महद्भयमभिन्यूषु वावमस्य धूतस्य हरिवः पिबेहेति याज्या। इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहदेन्द्रसानसिमेतोऽन्विन्द्र स्तवामेशानं मा नो अस्मिन् मघवन्निन्द्र पिब तुभ्यं सुतो मदायेति याज्या। अयन्त इन्द्र सोमोऽयन्ते

मानुषे जन उद्वेदभीत्युत्तमामुद्धरेदहं भुवमपाय्यस्यान्धसो मदायेति याज्या। आतून इन्द्र क्षुमन्तमा प्रद्रव परावतो न ह्यन्यं बडाकरमित्यष्टावीं खयन्तोरहन्दा पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रमिति याज्या। अभि त्वा वृषभा सुतेऽभि प्र गोपतिङ्गिरातून इन्द्रमद्युगितिसूक्ते अश्वावतिप्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्या। इदं वसो सुतमन्ध इन्द्रेहि मत्स्यन्धसः प्र सम्राजमुपक्रमस्वाभर धृषता तदस्मै नव्यमस्य पिब यस्य जज्ञान इन्द्रेति याज्या। इदं ह्यन्वोजसा महाँ इन्द्रो य ओजसा समस्य मन्यवे विश इति द्विचत्वारिंशद्विश्वजिते तिष्ठाहरीरथ आयुज्यमानेति याज्या। आ त्वेता निषीदता त्वमङ्गवागहि नकिरिन्द्र त्वदुत्तर इत्युत्तमामुद्धरेच्छुत्ते दधामोदन्यत् यत् पात्रमिन्द्रपानमिति याज्या। योगे योगे तवस्तरं युञ्जन्ति ब्रध्नमरुषं यदिन्द्राहं प्रतेमह ऊतौ शची वस्तव वीर्येणेति याज्या। इन्द्रः सुतेषु सोमेषु य इन्द्र सोमपातम आद्या ये अग्निमिन्धत इति सप्तदश य इन्द्र चमसेष्वा सोमः प्र वः सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरेति याज्या ॥ १० ॥

अत्र मध्यपर्यासवचनमनुक्तमस्यापि पर्यासत्वसिद्ध्यर्थं। पान्त मावः। प्रव इन्द्राय। वयमु त्वा। इन्द्राय मद्वने। अयन्त इन्द्र। आतून इन्द्र क्षुमन्तं। अभि त्वा वृषभा सुते। इदं वसो। इदं

ग्नावोजया । आलेता निषीदत । योगे योगे । इन्द्रः सुतेषु । एते चयः पर्यायाः । न किरिन्द्रेत्येतत् पादग्रहणेऽपि सूक्तमेव, उत्तमामुद्धरेदिति *ग्रहणेषात् ॥

इति पर्यायाः ॥ ११ ॥

इत्येते पर्यायसंज्ञा भवन्तीत्यर्थः ॥

पर्यासवर्जं गायत्राः ॥ १२ ॥ ॥ ४ ॥

छन्दोनिर्देशः सोमातिशंसनार्थमावापे कर्त्तव्ये गायत्राणामेवावापसिद्ध्यर्थं ॥

इति षष्ठे चतुर्थी कण्डिका ॥ ० ॥

---

संस्थितेष्वाश्विनाय स्तुवते ॥ १ ॥

अतिरात्रे इत्यनुवर्त्तते । आश्विन इति शस्त्रनाम । पर्यायेषु समाप्तेषु छन्दोगा आश्विनाय स्तुवते । अनेनाश्विनारम्भकालो विहितो भवति ॥

---

* वाक्यशेषादिति सं० पु० ।

भ्रंसिष्यन् विसंस्थितसञ्चरेण निष्क्रम्याग्नीध्रीये जान्वाच्या- क्रतोर्जुहुयात्। अग्निरन्नो गायत्रेण छन्दसा तमश्यान्तम- न्वारभे तस्मै मामवतु तस्मै स्वाहा। उषा अश्विनी त्रैष्टुभेन छन्दसा तामश्यान्तामन्वारभे तस्मै मामवतु तस्मै स्वाहा। अश्विनावश्विनौ जागतेन छन्दसा तावश्यान्तावन्वारभे ताभ्यां मामवतु ताभ्यां स्वाहा। बण्महाँ असि सूर्येति द्वाभ्या- मिन्द्र वो विश्वतस्परीति च॥ २॥

भ्रंसिष्यन्निति वचनं प्रतिनिधिप्रवृत्तो यदि भ्रंसेत् तदा जुहुयादित्येवमर्थं। विसंस्थितेष्विति संस्थितशब्ददर्शनात् संस्था- शङ्का प्राप्नोतीति तन्निवृत्त्यर्थं एताः षडाहुतयः। चशब्दो होममन्त्रसमुच्चयार्थः। तेन आज्यशेषप्राशनं तूष्णीमेव भवति॥

प्राश्याज्यशेषमप उपस्पृशेन्नाचामेद्विज्ञायते देवरथो वा एष यद्धोता नाश्वमद्भिः करवाणीति॥ ३॥

होमार्थं पृथक्कृतस्य तस्य परिशिष्टं यदाज्यन्तत् प्राश्नी- यात्। प्राश्य च अप उपस्पृशेत्। शुद्ध्यर्थमाचमनं न कुर्यात्। अनाचमने कारणत्वेन श्रुतिरेव दर्शिता। सैषा श्रुतिः 'देवरथः' इत्यादिः। होता देवानां रथः, तस्य वक्त्रं चक्रं, जिह्वा अश्वः, मम देवरथभूतस्य होतुरश्वभूतां जिह्वामाज्येन स्वक्तां नाद्भिः प्रक्षालयामीति श्रुतेरर्थः। अनेन प्रकारेणाशुचित्वमेवाच नास्तीति गम्यते॥

प्राश्य प्रतिप्रस्थाप्य पश्चात् स्वस्य धिष्ण्यस्योपविशेत् समस्तजङ्घोरुररत्निभ्यां जानुभ्यां चोपस्थं कृत्वा यथा शकुनिरुत्पतिष्यन् ॥ ४ ॥

प्राश्य प्रतिप्रस्थाप्येतिवचनमस्य प्राशनस्याशुचित्वकारणत्वाभावादन्तःसदस्यपि प्राशनमविरुद्धमिति प्रसङ्ग्यापि प्राश्नीयादिति तन्निवृत्त्यर्थमुच्यते। पश्चात् स्वस्य धिष्ण्यस्येति वचनं प्रातरनुवाकन्यायविधानाद्धविर्धान उपवेशनाशङ्कानिवृत्त्यर्थं। जङ्घा च ऊरुश्च जङ्घोरु। प्राण्यङ्गत्वादेकवद्भावः। जंघोरु जङ्घोरु चेति जङ्घोरुणी, ते समस्ते यस्य स समस्तजङ्घोरुः। एवंभूतोऽरत्निभ्यां जानुभ्यां चोपस्थं कृत्वा भूमिमाश्रित्येत्यर्थः। पादाङ्गुलीभिश्च भूमिमाश्रित्यैवमुपविशेत्। एवमुपविष्टः शकुनिरिवोत्पतिष्यन् भवति। एतदासनं शस्त्रादौ च आहावस्योच्चारणसमकालमेव, नोपरिष्टात्। एतत् तु शकुनिरिवोत्पतिष्यन्नाङ्क्षयीतेति श्रुतिवचनाल्लभ्यते॥

उपस्थकृतस्त्वेवाश्विनं शंसेत्॥ ५॥

उपस्थकृत इति यथा प्रकृत्युपविष्ट इत्यर्थः। आश्विनाधिकारे पुनराश्विनग्रहणं आहावादूर्ध्वं सर्वमाश्विनमुपस्थकृत एव शंसेदित्येवमर्थं। तेन शकुनिरिवोत्पतिष्यन्निति वचनं प्रथमाहावस्यैव न परिधानीयाहावस्येत्यवगम्यते॥

अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनो पच्छः ॥ ॥ ६ ॥

प्रतिपद्वचनं ब्राह्मणोक्तस्य प्रतिपदन्तरस्य निवृत्त्यर्थं। 'एषैव प्रतिपद्भवति' इति प्रतिपद्वचनात्तृचलार्धर्चशंसनप्राप्तौ तन्निवृत्त्यर्थं एकपातिनो पच्छ इत्युच्यते ॥

एतयाऽऽग्नेयं गायत्रमुपसन्तनुयात् ॥ ७ ॥

एतया प्रतिपदा प्रातरनुवाकार्थस्य समाम्नायस्याग्नेयं गायत्रं यत् तदुपसन्तनुयात्। तेन 'आपो रेवतीः' इतीयमन्त्या भवति। आग्नेयमित्येतावतैव सिद्धे गायत्रमितिवचनं आग्नेयस्य गायत्रस्य कृत्स्नस्य शंसनार्थं ॥

प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममोदेतोः शंसेत् ॥ ८ ॥

प्रातरनुवाकन्यायेनेति सप्तच्छन्दःसूक्तग्रहणं। नान्यैराग्नेयं गायत्रं यथास्थानं ध्रुवाणि माङ्गलानि। 'ईडेत्यावीयमावर्त्तयेदातमसोपघातात्' इत्येवमादि चास्य विषयो न्यायादतिदिश्यते, न कर्म्मविषय उत्सर्पणादिः। स्वरस्तु तृतीयसवनलाद्युत्तम एव। तस्यैव समाम्नायस्येति प्रातरनुवाकार्थस्येत्यर्थः। सहस्रावममिति यस्य शस्त्रस्य ऋचां सहस्रमवमामात्रात् तत् सहस्रावममित्युच्यते। तदुदयात् प्रागेव शंसेत्। उदयो नाम

आदित्यमण्डलदर्शनमात्रं, अदर्शने अनुदयः । तेनात्राभिविधेरसम्भवात् मर्यादैव गृह्यते । तेनोदिते यच्छस्त्रं तद्वर्जयित्वैव सहस्रावममित्युक्तं भवति ॥

वार्हतास्त्रयस्तृचा स्तोत्रियाः प्रगाथा वा तान् पुरस्तादनुदैवतं स्वस्य छन्दसो यथास्तुतं शंसेत् ॥ ९ ॥

बार्हताः बृहतीच्छन्दस्कानां मते त्रयस्तृचा अभ्युषोऽश्विदैवत्याः सन्धिसामस्तोत्रियाः छन्दोगैः क्रियन्ते, बार्हता वा प्रगाथाः, तांस्तृचान् प्रगाथान् वा यथादैवतं बृहतीच्छन्दसः पुरस्ताद्यथास्तुतं शंसेत् । 'सर्वमन्यद्यथास्तुतम्' इत्यनेनैव सिद्धे पुनर्यथास्तुतवचनं अत्राम्नातानां यथास्तुतत्वेन स्वस्य छन्दसः पुरस्ताद्यथादैवतं प्राप्तानां पुनः स्वस्य स्थाने शंसननिवृत्त्यर्थं ॥

येषु वान्येषु ॥ १० ॥

अन्येषु वा येषु केषुचिच्छन्दःसु यदि स्तुयुः तथापि यथादैवतं स्वस्य छन्दस एव पुरस्ताच्छंसेयुरित्यर्थः ॥

पच्छो द्विपदाः ॥ ११ ॥

द्विपदाः पच्छः शंसेत् । अत्र द्विपदानां बहुत्वासम्भवात् सर्वार्थोऽयं विधिरित्यवगम्यते ॥

उपसन्तनुयादेकपदाः ॥ १२ ॥

एकपदाः पूर्वेण प्रणवेनोपसन्तनुयात् ॥

ताभ्यश्चोत्तराः ॥ १३ ॥

ताभ्य एकपदाभ्यो या उत्तरा ऋचः तास्र एकपदान्तगैः प्रणवैरुपसन्तनुयात्। एकपदानामत्र बहुत्वासम्भवादयमपि विधिः सर्वार्थ एव। एकपदाद्विपदानां प्रातरनुवाके दृष्टस्योपसमासस्यापवादार्थोऽयं यत्नः ॥

विच्छन्दस उद्धरेत् ॥ १४ ॥

विच्छन्दसो विरुद्धशस्यच्छन्दसः, ताश्चैवंप्रकारा वेदितव्याः। अर्धर्चशस्येषु पच्छःशस्याः। पच्छःशस्येषु चार्धर्चशस्या इति, ता उद्धरेत् ॥

अपि वा तन्न्यायेन शंसनं ॥ १५ ॥

अपि वा नैवोद्धारः कर्त्तव्यः। तन्न्यायेन सूक्तन्यायेन शंसनमुद्धारो वेति विकल्प इत्यर्थः। एवं विकल्पे प्राप्ते अर्धर्चशस्यगतानां पच्छःशस्यानां सूक्तन्यायेनार्धर्चशंसनमविरुद्धं, कचिद्दृष्टपूर्वत्वादिति। तयोद्धारन्यायशंसनयोर्विकल्प उप-

पद्यते। एवं पच्छःशस्यगतानामपि अर्धर्चशस्यानामुद्धारपच्छः-शंसनयोर्विकल्पे प्राप्ते तन्निवृत्त्यर्थमाह॥

न तु पच्छोऽन्यास्त्रिष्टुब्जगतीभ्यः॥ १६॥

अत्रायं विशेषः। पच्छःशस्यगतानामर्धर्चशस्यानां पच्छः-शंसने कर्त्तव्ये त्रिष्टुब्जगतीभ्योऽन्या या ऋचस्त्रिष्टुब्जगतीसूक्त-मध्यगताः पच्छो न शंस्तव्या इत्यर्थः। कथन्तर्हि तासां कर्त्त-व्यमिति उद्धारस्तच्छन्दोन्यायेन वा शंसनं। एतदुद्धारवचनं सूक्तन्यायशंसनवचनं चाश्विन एव शस्त्रे, अन्यत्र सर्वत्र तच्छन्दोन्यायशंसनमेवेति सिद्धम्। 'विच्छन्दस उद्धरेत्' 'अपि वा तन्न्यायेन शंसनम्' एवं वाऽनयोः सूत्रयोरर्थः। प्रातरनुवा-कार्थे समाम्नाये गायत्र्यादिवचनस्य सत्स्वपि तासां स्वरूपत एव गायत्र्यादित्वे सिद्धे पुनर्गायत्र्यादिवचनमाश्विने गायत्र्या-द्यन्तर्भूतानामन्यच्छन्दसामुद्धारार्थमिति मन्यमानो विच्छ-न्दस इत्युक्तवानाचार्यः स्वयमेव। एवं प्राप्ते आह 'अपि वा तन्न्यायेन शंसनं'। अपि वेति पक्षव्यावृत्त्यर्थं। नैव गाय-त्र्यादिवचनादेवोद्धारः कर्तुं शक्यते। तत्र प्रकरणे उद्धार-वचनाभावात्, गायत्र्यादिवचनस्य श्रुत्यनुवादत्वेन प्रायिकत्व-सम्भवाच्च। अतस्तासां तन्न्यायशंसनं कर्त्तव्यं। तत्र यासां सूक्तन्यायशंसनमुपपद्यते तासां तथा भवति। यासामेवं न सम्भवति तासां छन्दोन्यायशंसनमिति सिद्धं भवति॥

पाङ्क्तेनोदिते सौर्याणि प्रतिपद्यते ॥ १७ ॥

उदित आदित्ये प्रतिप्रियतममित्यस्योत्तमेन प्रणवेन 'सूर्यो नो दिवः' इत्येतत् सन्धाय तदादीनि सौर्याणि सूक्तानि शंसेदित्यर्थः। 'उदिते सौर्याणि' इत्यनेनैवास्मात् प्राक्तनमुदयात् प्रागेवेति सिद्धे यत् 'आदेतोः शंसेदितिवचनं तस्यैतत् प्रयोजनं आदेतोः शंसेदेव नोपरमेदिति। तेन इडेद्यावीयमावर्त्तनेनान्येन वा आदयादनुपरमं शंसेत्। अयमेवार्थो भगवताऽऽपस्तम्बेनोक्तः, "यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सर्वा अपि दाशतयीरनुब्रूयात्' इति। सौर्याणीतिवचनमेषां चतुर्णां सूक्तानां सौर्याणीति संज्ञाकरणार्थम्। तेनैतानि दिवैवाध्येतव्यानि। सौर्याणीत्युक्ते एतान्येव प्रत्येतव्यानि चेति ॥

सूर्यो नो दिव उदु त्यं जातवेदसमिति नव चित्रं देवानां नमो मित्रस्येन्द्र क्रतुं न आभराभित्वा शूर नोनुमो बच्चवः स्वरचक्षस इति प्रगाथा मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवी विश्वशम्भुवा। विश्वस्य देवोष्टचयस्य जन्मनोऽनया रोषातिनग्रभदिति द्विपदा ॥ १८ ॥

द्विपदावचनं पच्छःशंसनार्थं ॥

बृहस्पते अतियदर्यो अर्हादिति परिधानीया ॥ १९ ॥

परिधानीयावचनं विस्पष्टार्थं ॥

प्रतिपदे परिधानीयाया इत्याहावः ॥ २० ॥

प्रतिपद्यप्राप्त आहावो विधीयते। अनुचराभावात् तृच-त्वाभावाच्च नायं ताचणिका प्रतिपत्। परिधानीयाविधानं प्रगाथस्तोत्रियेष्वाहावनिवृत्त्यर्थं ॥

बृहत् साम चेत् तस्य योनिं प्रगाथेषु द्वितीयां तृतीयां वा ॥ ॥ २१ ॥

अग्निष्टोमे रथन्तरं सामेत्युत्सर्गः, तत्र यदि बृहत् साम कुर्युः तदा तस्य बृहतो योनिः 'त्वामिद्धि हवामहे' इति तृचं। एतेषु प्रगाथेषु द्वितीयामिन्द्रक्रतुमित्यस्योपरिष्टात्, तृ-तीयामभित्वेत्यस्योपरिष्टादित्यर्थः। एतयोरन्यतरस्मिन् क्रमे शंसेत् ॥

न वा ॥ २२ ॥

कृतेऽपि बृहत्सामनि बृहतो योनिं न शंसेदित्यर्थः ॥

आश्विनेन ग्रहेण सपुरोडाशेन चरन्ति ॥ २३ ॥

आश्विनेनेत्याश्विनदेवत्येनेत्यर्थः। ग्रहेणेति प्रदर्शनार्थं। ग्रहेण वा चमसेन वा सपुरोडाशेन चरन्तीत्यर्थः ॥

इमे सोमासस्तिरो अह्न्यासस्तीव्रास्तिष्ठन्ति पीतये युवभ्यां । हविष्मता नासत्या रथेनायातमुपभूषतं पिबध्या इत्यनुवाक्या । होता यक्षदश्विना सोमानां तिरो अह्न्यानामिति प्रैषः । प्र वामन्धांसि मद्यान्यस्थुरश्वा पिबतमश्विनेति याज्ये अध्यर्धामनवानं ॥ २४ ॥

अत्राप्यृचोरेव द्वित्वं न याज्याकार्यस्य । अत्राश्विनेनेति देवताविधानं नेयं प्रत्यक्षयाज्येति ज्ञापनार्थं ॥

यद्येतस्य पुरोडाशस्य स्विष्टकृता चरेयुः । पुरोडा अग्ने पचतोऽग्ने वृधान आहुतिमिति संयाज्ये ॥ २५ ॥　　॥ ५ ॥

इत्यग्नोऽतिरात्र इति शेषः ॥

इति षष्ठे पञ्चमी कण्डिका ॥ * ॥

यदि पर्यायानभिव्युच्छेत् सर्वेभ्य एकं सम्भरेयुः ॥ १ ॥

एवमादावचतुर्विधः सोमयागो ज्योतिष्टोमाख्य उक्तः, तस्यैव विशेषमुपरिष्टाद्वक्ष्यति। अत्रान्तराले पर्यायाश्विनप्रसङ्गेन तेषां नैमित्तिकमपि वक्तुं प्रारभते 'यदि पर्यायानभिव्युच्छेत्' इति। अस्यायमर्थः। यदा सर्वे पर्याया: प्रयुक्ता न भवन्ति, यद्येवमाशङ्का स्यादतिक्रान्तप्राया रात्रिः सा पर्यायाणां आश्विनस्य चापर्याप्तेति, तदा सर्वेभ्यः पर्यायेभ्यः एकं पर्यायं सम्भृत्य कुर्युरित्यर्थः। एतमेवार्थं विवृणोति ॥

प्रथमाद्धोता द्वितीयान्मैत्रावरुणो ब्राह्मणाच्छंसी चोत्तमादच्छावाकः ॥ २ ॥

प्रथमात् पर्यायाद्धोता स्वं शस्त्रमाददीत। मैत्रावरुणब्राह्मणाच्छंसिनौ द्वितीयात् स्वे शस्त्रे। उत्तमादितरः स्वमेव शस्त्रमिति ॥

द्वौ चेत् द्वौ प्रथमात् द्वा उत्तमात् ॥ ३ ॥

प्रथमः पर्यायः प्रयुक्तः, मध्यमोत्तमावप्रयुक्तौ, तयोराश्विनस्य चापर्याप्ता रात्रिरित्याशङ्का स्यात् तदैवं कुर्युः, द्वौ होतृमैत्रावरुणौ प्रथमात्, ब्राह्मणाच्छंस्यच्छावाकावुत्तमादिति। अत्र प्रथमादितिवचनमप्रयुक्तयोरेव, प्रथमात् मध्यमादित्यर्थः। अत्र द्वयोरधिकृतत्वादन्यस्य द्वितीयत्वेऽप्युत्तमशब्दप्रयोगादन्य-

चापि द्वयोरभ्यस्तोत्तमत्वं साधितं भवति। तेन अन्यत्राप्युत्तमादित्ययं विधिर्द्विरात्रेऽप्यन्ते भवति ॥

अपि वा सर्वे स्युः स्तोमनिर्ह्रस्ताः ॥ ४ ॥

अपि वा सर्वे स्तोमा निर्ह्रस्ता भवेयुः न समारणमिति। सर्ववचनं पूर्वयोरभिव्युष्ट्योः समारणनिवृत्त्यर्थं। अयं स्तोमनिर्ह्रासो होत्रकाणामेव भवति न होतुरित्युक्तं 'उक्तः शस्त्रोपायः' इत्यत्र उक्तग्रहणेन। स्तोमनिर्ह्रस्ता इत्यनेनैतद्विधीयते पूर्वं पञ्चदश स्तोमाः सन्तः पञ्च स्तोमा भवेयुरिति। होतुस्तु पञ्चदश स्तोमा एव सर्वत्र। स्तोमनिर्ह्रासे सत्येवं शस्त्रनिर्ह्रास इत्याह ॥

ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमास्तृचाञ्छंसेयुः ॥ ५ ॥

स्तोत्रियानुरूपास्तावद्यथापूर्वं भवति, तेभ्य ऊर्ध्वं यच्छस्त्रमस्ति तस्यादितस्तृचान् शंसेयुरन्ततश्च। एवञ्चत्वारस्तृचा भवेयुः। एतत्प्रमाणानि होत्रकशस्त्राणि भवेयुः। होतुस्तु पूर्ववदेव ॥

निर्ह्रास एवैकस्मिन् ॥ ६ ॥

पूर्वयोरभिव्युष्ट्योः समारणनिर्ह्रासयोर्विकल्प उक्तः। अत्र समारणस्यासम्भवात् निर्ह्रास एवैको विधीयते। अवधारणं भवति नानन्तरायामेवाभिव्युष्टौ ॥

षोडशिवर्जमित्येके ॥ ७ ॥

एके शाखिनो षोडशिवर्जमेव निर्ह्रासङ्कुर्वन्ति ॥

आश्विनायैकस्तोत्रियोऽग्ने विवस्वदुषस इति ॥ ८ ॥

इदं नाभिवृद्धिनिमित्तमेव ॥

तं पुरस्तादनुदैवतं स्वस्य छन्दसो यथास्तुतं शंसेत् ॥ ९ ॥

तं स्तोत्रियमाग्नेये क्रतौ बृहतीच्छन्दसः पुरस्तात् सङ्कुशंसेत्। अनुदैवतं इति नात्र वीप्सा विवक्षिता। यथास्तुतमिति पूर्ववदेव ॥

त्रीणि षष्टिशतान्याश्विनं ॥ १० ॥

आश्विनोद्देशेनाख्याः सङ्ख्यायाः विध्यभावात् प्रतिपन्नाङ्गस्तोत्रीयादीनि च तस्यामेव सङ्ख्यायामन्तर्भवन्तीत्यवगन्तव्यं। प्रायश्चित्तप्रसङ्गादन्यान्यपि सोमप्रायश्चित्तान्यत्रैवोच्यन्ते ॥

विमतानां प्रसवसन्निपाते संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वा ॥ ११ ॥

विमता विरुद्धमतयः विद्विषाणा इत्यर्थः। प्रसवशब्देन सुत्या लक्ष्यते, नद्या वा पर्वतेन वा अव्यवहितदेशे विमता-

नामेकस्मिन्नहनि सुत्यासन्निपाते सति संसवो नाम दोषो भवतीत्यर्थः। नद्या वा पर्वतेन वेत्युभयत्र वाशब्दप्रयोगादन्यदपि व्यवधायकं शास्त्रान्तरोक्तमस्तीति गम्यते। तच्च शास्त्रान्तरादवगन्तव्यं॥

अप्येकेऽन्तर्हितेष्वपि॥ १२॥

विमतानां नद्यादिभिरनन्तर्हितेष्विति च विशेषणद्वयमुक्तं, तदुभयं व्यभिचाराय। अपिशब्दद्वयेन समतानामपि संसवदोषोऽस्तीत्येकोऽर्थः। अन्तर्हितेष्वपि देशेषु संसवोऽस्तीत्यपरोऽर्थः। एवमेके शाखिन आमनन्तीत्यर्थः॥

तथा सति सन्त्वरा देवतावाहनात्॥ १३॥

एवं सति आसवनदेवतानामावहनात् सन्त्वरा कर्त्तव्या। एतदन्तं कर्म कायिकं वाचिकञ्च द्रुतया कृत्या कर्त्तव्यमित्यर्थः। लघवश्चोपायाः शतप्रभृत्यादयः प्रयोक्तव्याः। किञ्च॥

कयाशुभेति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेत्॥ १४॥

इदञ्च तस्मिन्निमित्ते कर्त्तव्यं। मरुत्वतीये शस्त्रे यस्मिन् सूक्ते निविद्धीयते तस्य सूक्तस्य पुरस्तादिदं सूक्तं शंसेत्। चशब्दो निविद्धानीयत्वसमुच्चयार्थः। तेन तस्य मरुत्वतीयस्य पूर्वावस्थायामेकसूक्तत्वेनानेकत्वेत् प्रथमेष्वाहाव इत्ययमा-

त्यावः कयाशुभीयादौ भवति। द्वितादिसूक्तत्वे कयाशुभी-यस्यानाद्यत्वादस्यादौ न भवति। तत्र सर्वेषामाद्ये भवत्या-त्यावः॥

## यो जात एवेति निष्केवल्ये॥ १५॥

चशब्दः पुरस्तात् सूक्तस्येति चानुवर्त्तते, तात्रापि पूर्व-वदेवार्थो योजनीयः॥

## ममाग्ने वर्च इति वैश्वदेवसूक्तस्य॥ १६॥

अत्रापि पदत्रयमनुवर्त्तते, वैश्वदेवशस्त्रे वैश्वदेवसूक्तस्य पुर-स्तादित्यर्थः॥

## अपि वैतेष्वेव निविदो दध्यादुद्धरेदितराणि॥ १७॥

अपि वा एतेष्वागमसूक्तेषु निविदो दध्यात्। येभ्यः पुरस्तादि-मानि सूक्तानि विहितानि तान्युद्धरेत्। पूर्वेषां निविद्धान-सूक्तानां उद्धारसंयोगेन एतेषु निविदो दध्यादिति यद्विद-धाति तज्ज्ञापयति, यस्मिन् निविद्धीयते तस्याव्यवधानेन पुरस्तादेतानि भवन्ति न निविद्धानीयानां पुरस्तादिति॥

**स्थानं चेन्निविदोऽतिचरेन्मा प्रगामेति पुरस्तात् सूक्तं शस्त्वाऽन्यस्मिंस्तद्दैवते दध्यात् ॥ १८ ॥ ॥ ६ ॥**

निविदः स्थानं यद्यतिचरेत् तदा यस्मिन् सूक्ते निविदतिपन्ना तत् पूर्वापरभूतं समाप्यागन्तुकात् दैवतात् पुरस्तात् 'मा प्रगामेति' इदं सूक्तमखण्डितं शस्त्वाऽन्यस्मिन्नागन्तुके तद्दैवतानां निविदं दध्यात्। निविदः स्थानातिचारो नामैवंरूपः। सूक्तस्य यस्मिन्नन्तराले निविद्धीयते तस्माद्या पूर्वा ऋक् तदन्तर्गतेन प्रणवेनाऽऽहावमकृत्वैवानन्तरामेव ऋचं शस्त्वाय तस्यामृचि चोदितेऽवसानेऽवसानपर्यन्तमुक्त्वा यदावस्येत् एवम्प्रकार एव निविदतिचारो नान्यप्रकार इति। अतोऽन्यथा यः प्रमादः स ऋग्दोष एव न निविदतिचारः। पुरस्ताद्वचनं माप्रगामीयस्य पुरस्तादतिपन्ननिवित्कं समाप्य माप्रगामीयं शस्त्वाऽन्यं दैवतमानीय तस्मिन्निविद्धेयेत्येवमर्थं। सूक्तग्रहणं बृहस्पतिसवादिष्वपि हीनस्तोमेषु माप्रगामीयस्याखण्डनार्थं। अत्र किञ्चिदुच्यते। 'यदि पर्यायाम्' इत्यत्र पर्यायानिति कर्मप्रवचनीययोगेन द्वितीया। अभीति कर्मप्रवचनीयो लक्ष्यलक्षणसंबन्धद्योतकः। उच्छिः विवासे विपूर्वः। सम्भावनायां लिङ्। अत्र पर्यायलक्षणं व्युष्टिर्लक्ष्या। एतदुक्तं भवति। यदि पर्यायोपक्रमे तेषु वा शस्यमानेषु उषःकाल आगच्छेत् तदा वक्ष्यमाणं नैमित्तिकं कर्म कर्त्तव्यमिति ॥

इति षष्ठे षष्ठी कण्डिका ॥ ० ॥

सोमातिरेके स्तुतशस्त्रोपजनः ॥ १ ॥

सोमातिरेको नाम सवनार्थो यः सोमः स सवने परिसमाप्ते यद्यतिरिच्येत तदा सोमातिरेक इत्युच्यते। तदा स्तुतशस्त्रयो-रुपजनो भवति। छन्दोगैः स्तोतव्यमस्माभिः शंस्तव्यमित्यर्थः ॥

प्रातःसवनेऽस्ति सोमो अयं सुतो गौर्धयति मरुतामिति स्तोत्रियानुरूपौ। महाँ इन्द्रो य ओजसाऽऽतो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्च स्तोममतिशस्यैन्द्र्या यजेत् ॥ २ ॥

पादग्रहणेऽप्यैन्द्रीभिर्वैष्णवीभिश्चेति बहुवचननिर्देशादाद्या-वदर्थमुभय्यो ग्रहीतव्याः। ऐन्द्रीभिर्वैष्णवीभिश्चेति चशब्द-सामर्थ्यात् समुच्चिताभिरेवोभयीभिः सोमातिरेकनिमित्तं स्तोममतिशस्य 'एकया द्वाभ्यां वा प्रातःसवनेऽपरिमिताभि-रुत्तरयोः सवनयोः' इत्यनेन न्यायेन यया कयाचिदैन्द्र्या गायत्र्या यजेत्। प्रातःसवनत्वाद्गायत्र्येति विशेष्यते ॥

वैष्णव्या वा ॥ ३ ॥

गायत्र्येति शेषः ॥

ऐन्द्रावैष्णव्येति गाणगारिर्दैवतप्रधानत्वात् ॥ ४ ॥

यद्यैन्द्रावैष्णव्या यजेत् तदा 'यथावदेव शस्त्रमेवं याज्या' इत्येतद्विरुध्येत। अथ यद्यैन्द्रावैष्णव्या यजेत तदा तद्देवत्यायाः

गायत्र्या अभावात् गायत्रं प्रातःसवनमित्येतद्विहन्येत। तत्रै-
कस्य त्यागे सति छन्द एव त्यक्तव्यं, बहिरङ्गत्वादप्राधान्यात्
तस्येति। देवतायास्त्वभिधेयत्वादन्तरङ्गतेति मन्यमानो गाण-
गारिर्दैवतप्रधानत्वादित्युक्तवान्॥

सं वां कर्मणा समिषा हिनोमीति॥ ५॥

सैषा ऐन्द्रावैष्णवी त्रिष्टुप्, अनयैव यष्टव्यमिति सिद्धान्तितं॥

माध्यन्दिने बण्महाँ असि सूर्य्यॆाद् त्यद्दर्शतं वपुरिति
प्रगाथौ स्तोत्रियानुरूपौ। महाँ इन्द्रो नृवदिष्णोर्नुकं या
विश्वासां जनितारा मतीनामिति याज्या॥ ६॥

ऐन्द्रीभिर्वैष्णवीभिश्चेत्याद्यत्राप्यनुवर्त्तते। अतो हीनपाद-
ग्रहणमत्राचरलाघवार्थमेव न कृत्स्नसूक्तग्रहणार्थं॥

तृतीयसवन उत्तरोत्तरां संस्थामुपेयुराऽऽतिरात्रात्॥ ७॥

तृतीयसवने यदि सोमोऽतिरिच्येत तदा उत्तरोत्तरां
संस्थां कुर्युरातिरात्रात्। एतदुक्तं भवति। यद्यग्निष्टोमे तृती-
यसवनेऽतिरेकः स्यात् तदोक्थ्यं कुर्युः। यद्युक्थ्ये षोडशिनं यदि
षोडश्यन्यतिरात्रमिति। यद्यतिरात्रे तत्र वक्ष्यति। एवं चेदाति-
रात्रादितिवचनमुत्तरोत्तरां संस्थामित्यत्र सन्निहिता एव

चतस्रः संस्था उक्थ्यान्ता इत्येवमर्थं। इतरथाऽग्निष्टोमेऽतिरेकेऽत्यग्निष्टोमः प्रसज्येत, षोडशिनि वाजपेयः, अतिरात्रेऽप्तोर्याम इत्येतन्निवृत्त्यर्थमातिरात्रादित्युक्तं॥

अतिरात्राच्चेत् प्र तत्ते अद्य शिपिविष्ट नाम प्र तद्विष्णुस्तव ते वीर्याणीति स्तोत्रियानुरूपौ। माध्यन्दिनेन शेषः॥ ८॥

'मधोँ इन्द्रो नृवत्' इत्यादि याज्यान्तः शेष इत्युच्यते॥

त्वेषमित्थास मरणं शिमीवतोरिति वा याज्या॥ ९॥
॥ ७॥

इयं वा याज्या माध्यन्दिनोक्ता वा भवति। अग्निष्टोमवाजपेयाप्तोर्यामेषु तृतीयसवनेषु सोमातिरेके इदमेव शस्त्रं भवति। सोमातिरेकादन्येन वा निमित्तेन शास्त्रान्तरोक्तेन यदि स्तुतशस्त्रोपजनः स्यात् तदाप्यनेनैव सोमातिरेकोक्तेनानुसवनशस्त्राणि सम्पादनीयानि। स्तोत्रियस्तु स्तुत एव तदनुसारेणानुरूपः कल्पनीयः। एतच्च सोमातिरेके प्रातःसवनेऽस्ति सोम इत्येतावतैवास्यार्थस्य सिद्धौ सत्यां शस्त्रोपजन इत्यस्मादवचनाल्लभ्यते। एतदुक्तं भवति, यत्र यत्र नैमित्तिकः शस्त्रोपजनः तत्र तत्रानुसवनमेतेन विधानेन शस्त्राणि कल्पनीयानि। स्तोत्रियानुरूपौ छन्दोगप्रत्ययस्तदनुसारकल्पनाभ्यामिति॥

इति षष्ठे सप्तमी कण्डिका॥ ७॥

---

क्रीते राजनि नष्टे दग्धे वा ॥ १ ॥

प्रायश्चित्तं वक्ष्यत इति शेषः। नष्ट इत्युक्ते नाशप्रकार-विशेषाग्रहणात् सर्वप्रकारो नाशो गृहीतो भवति किमर्थं दग्धवचनमिति। तस्य प्रयोजनमुच्यते। लतावस्थे सोमे दाह-शेभ्यो वपासुक्कादिभ्यो मलेभ्योऽन्यैः केशकीटादिभिर्दुष्टे तस्य त्यागो न कर्त्तव्यइत्येवमर्थं। अन्यदपि दग्धवचनप्रयोजन-मस्ति। केचिदेवं वदन्ति। दग्धे सोमे तदेव भस्माऽभिषुत्य तेन यष्टव्यमिति तन्निवृत्त्यर्थं चेति। सोमनाशे प्रायश्चित्तं वक्तुं प्राप्ते सदआदीनां शालानां दाहे प्रायश्चित्तस्याल्पत्वात् तदेव प्रसङ्गादाह॥

अपिद्धानि सदो हविर्धानान्यनावृता क्रियेरन्॥ २॥

अनावृता अमन्त्रकमित्यर्थः॥

आवृता वा॥ ३॥

समन्त्रकं वेत्यर्थः। न्यायविकल्पोऽयं। शालास्वावहृष्टार्थाः। तेनासु मन्त्रव्यापारः केवलमदृष्टार्थस्याश्रयभूता शाला प्रधा-नसंवन्धे दारभूतेत्यर्थः। स च दारभावो दाहात् प्रागेव नि-वृत्त इति न पुनः क्रियामन्त्राणामिति पूर्वः पक्षः। उत्तरस्तु पक्षो यत्कार्यार्थं यद्वस्तूपादीयते तस्य तत्कार्यजनने सा-मर्थ्यजननाय मन्त्रादयः संस्काराः प्रयुज्यन्ते। तस्मादि सं-

स्वकार्यमकृत्वैव नश्येत् तदा तत्स्थः कथं प्रधानेन संबध्नीयादिति पुनरपि मन्त्राः प्रयोक्तव्या इति सिद्धं। इदानीं सोमनाशे प्रायश्चित्तमाह ॥

अन्यं राजानमभिषुणुयुः ॥ ४ ॥

अन्यं राजानमानीय तमभिषुत्य तेन यजेतेत्यर्थः ॥

अनधिगमे पूतीकान् फाल्गुनानि ॥ ५ ॥

सोमानधिगमे पूतीकान् फाल्गुनानि च संसृष्टान्यभिषुणुयुः। पूतीका नाम लतारूपाः सोमसदृशाः। फाल्गुनानि नाम स्तम्बरूपा ओषधिविशेषाः अप्रसिद्धाः पदार्थाः अभियुक्तेभ्यः शिक्षितव्याः ॥

अन्या वा ओषधयः पूतीकैः सह ॥ ६ ॥

फाल्गुनानामभावे अन्या वा ओषधयः कुशदूर्वाद्याः पूतीकैर्मिश्रयित्वाऽभिषोतव्याः। अन्या वा ओषधयः पूतीकैः सहेति पूतीकानां स्थायित्वदर्शनात् पूर्वसूत्रोक्तानामेभिः सहितानामेव प्रतिनिधित्वमवगम्यते। अत एवाचार्याः सोमप्रतिनिधौ न केवलमेकद्रव्यमिच्छन्ति। 'अन्या वा ओषधयः पूतीकैः' इति सहभावे सिद्धे यत् सहेतिवचनं तज्ज्ञापयति। पूतीकानामप्यभावे द्रव्यान्तराणि सह मिश्रयित्वाऽभिषुत्य तैर्यष्टव्यमिति ॥

प्रायश्चित्तं वा कृत्वोत्तरमारभेत ॥ ७ ॥

उत्तरसूत्रस्य सुत्याविषयत्वादिदं दीक्षोपसदिषयं भवति। दीक्षासु क्रीते नश्येदासोमलाभाद्दीक्षा वर्धयेत्। उपसत्सूपसदो वर्धयेत्। तत्र सर्वत्र प्रधानकालाविरोधेनाहर्वर्धनं कर्त्तव्यं। अहर्वर्धने क्रियमाणेऽपि प्रधानकालाविरोधेन अलभ्यमाने प्रतिनिधिमुपादाय पूर्वसङ्कल्पितकाले प्रधानयागं सम्पादयेत्। इत्थं वा कुर्यात्। प्रायश्चित्तं वा कृत्वाऽऽरब्धं प्रयोगं विसृज्य सोमं सम्पाद्य तस्मा एव कर्मणे प्रयोगान्तरमारभेत। भूः स्वाहेतीदं प्रायश्चित्तमित्युच्यते। अथवाऽऽख्यामवस्थायां शाखान्तरे प्रायश्चित्तविशेषोऽस्ति चेत् तत् कर्त्तव्यं॥

सुत्यासूक्तमेव मन्येत ॥ ८ ॥

सुत्यासु नष्टे राजनि तदलाभे उक्तमेव, प्रतिनिधिप्रयोगमेवेत्यर्थः। तत्कर्त्तव्यत्वेन मन्येतेत्यर्थः। नाचाहर्वृद्धिः प्रयोगत्यागो वा कर्त्तव्य इत्यर्थः॥

प्रतिधुक् प्रातःसवने ॥ ९ ॥

प्रतिधुगिति सद्यो दुग्धं पय उच्यते। तत् प्रातःसवने प्रतिनिधिद्रव्यमभिषुत्य तद्रसेन मिश्रयेदित्यर्थः॥

शृतं माध्यन्दिने ॥ १० ॥

क्वथितं पयः शृतमित्युच्यते। तेन माध्यन्दिने प्रतिनिधि-द्रव्यरसं श्रीणीयात् ॥

दधि तृतीयसवने ॥ ११ ॥

पूर्ववच्छ्रियेदित्यर्थः ॥

आयन्तीयं ब्रह्म साम यदि फाल्गुनानि वारवन्तीयं यज्ञा-यज्ञीयस्य स्थाने ॥ १२ ॥

यदि फाल्गुनानि प्रतिनिधित्वेन प्रविष्टानि तदा एते सामनी आयन्तीयवारवन्तीये ब्रह्मसामाग्निष्टोमसामकार्ययो-र्भवतः यथासङ्ख्येन ॥

आयन्तीयमेके ॥ १३ ॥

एके शाखिनः आयन्तीयं साम यज्ञायज्ञीयस्य कार्ये भव-तीत्याहुः ब्रह्मसाम प्रकृत्यैवेति ॥

एकदक्षिणं यज्ञं संस्थाप्योदवसाय पुनर्यजेत ॥ १४ ॥

एवं प्रतिनिधिना क्रियमाणं यज्ञप्रयोगमुदवसानीया-पर्यन्तं समाप्य तस्मात् देशादुदवसाय सोमं सम्पाद्य तमेव यज्ञं पुनः प्रयुञ्जीत ॥

तस्मिन् पूर्वस्य दक्षिणा दद्यात् ॥ १५ ॥

पुनः प्रयोगे ता दक्षिणा दद्यात्। यत्सङ्ख्याकाः पूर्वस्मिन् प्रयोगे सङ्कल्पितास्तत्सङ्ख्याका एव दद्यात्, न वैकल्पिकसङ्ख्यान्तरयुक्ता इत्यर्थः। पूर्वस्मिन् प्रयोगे एकैव गौर्दक्षिणा॥

सोमाधिगमे प्रकृत्या ॥ १६ ॥ ॥ ८ ॥

यद्युपात्तेऽपि प्रतिनिधौ यागात् प्राक् सोमो लभ्येत तदा प्रतिनिधिद्रव्यं त्यक्ता सोमेनैव यष्टव्यं। प्रतिनिधिनिमित्तानि सोमक्रयणानि च न भवन्ति। एतच्चैकाहेषु अहर्गणेषु तन्त्रमध्ये उदवसाय पुनर्यागो न शक्यते कर्त्तुमिति, सर्वाहःसाधारणत्वात् प्रयोगस्य। यदा पुनरहर्गणेषु मुख्यासम्भवात् प्रतिनिधिनैवैकमहः क्रियते तदा सत्रप्रयोगं समाप्य उदवसाय तदेवाहः पुनः प्रयुञ्जीरन्। सत्रिणः संहता एव तदर्थमेव यज्ञं संस्थाप्येति यज्ञग्रहणं कृतं, तस्यायमभिप्रायः। आरब्धो यो यज्ञः फलसाधनं तस्य प्रयोगं समापयेतत् कर्त्तव्यं, नावान्तरमेकस्याङ्गः प्रयोगमिति। एकाहेषु प्रतिनिधावुपात्ते प्रतिनिधिनैव इष्ट्वा पुनर्यष्टव्यमेव॥

इति षष्ठे अष्टमी कण्डिका॥ ० ॥

दीक्षितानामुपतापे परिहिते प्रातरनुवाकेऽनुपाकृते वा पुष्टिपते पुष्टिश्चक्षुषे चक्षुः प्राणाय प्राणं त्मने त्मानं वाचे वाचमसौ *पुनर्देहि स्वाहेति ब्रह्माहुतिं हुत्वा शीतोष्णा अपः †समानीयैकविंशतिं तासु यवान् कुशपिञ्जूलांश्चावधाय ताभिरङ्गिरवथं कुर्वीत ताभिरेनमाप्लावयेज्जीवानामस्थता३। इममुज्जीवयत जीविकानामस्थता३। इममुज्जीवयत सञ्जीवानामस्थता३। इममुं सञ्जीवयत सञ्जीविकानामस्थता३। इममुं सञ्जीवयतेत्यौषधिसूक्तेन च॥ १॥

दीक्षितानां मध्ये यः कश्चित् दीक्षितः उपतपेत्, व्याधिपीडयेत्यर्थः। तच्च नैमित्तिकमुच्यते। परिहिते प्रातरनुवाके प्रागेवापोनप्त्रीयारम्भादेतस्मिन् काले अनुपाकृते वा प्रातरनुवाके एतयोरन्यतरस्मिन् काले, 'पुष्टिपते' इत्यनेन ब्रह्माहुतिं हुत्वा, शीतोष्णा अपो मिश्रयित्वा, तास्वेकविंशतिं यवान् प्रक्षिप्य एकविंशतिं कुशपिञ्जूलांश्चावधाय॥

आप्लाव्यानुमृजेत्॥ २॥

ताभिरुपतप्तं दीक्षितमाप्लावयेत् स्नापयेत्, 'जीवानामस्थता३' इत्येवमादिभिश्चतुर्भिर्मन्त्रैः, 'या ओषधीः पूर्वा जाताः' इत्यनेन सूक्तेन च। सर्वेषां मन्त्राणामन्ते सकृदेव स्नानं

---

* पुनर्देहीति सो॰ मू॰। † समानीयैकविंशतिमाश्चिति सो॰ मू॰।

कर्तव्यं, न प्रतिमन्त्रं। एतत् सर्वं ब्रह्मणा कर्तव्यं। अस्य सूत्रस्य मध्ये ताभिरद्भिरवभृथं कुर्वीतेत्युक्तं। 'तदोषधिसूक्तेन च' इत्यस्मादुपरिष्टात् द्रष्टव्यं, तत्र ब्रह्मणः कर्तृत्वाभावात्। अस्यायमर्थः। ताभिरेवाद्भिः उपतप्तस्याचमनवर्जमुदककार्यं शौचादि कर्त्तव्यमिति। तस्य कर्त्ता अर्थात् स्वयमेव। अशक्तावन्यो यः कश्चन परिचारकः। अतो नात्र ब्रह्मा नियम्यत इत्युक्तिर्वा युक्त एव। आप्लावने प्रकृतेऽप्याप्लाव्येतिवचनमाप्लवनानुमार्जनयोः समानकर्तृकत्वसिद्ध्यर्थं। तेन एतदपि ब्रह्मैव करोति॥

उपांश्वन्तर्यामौ ते प्राणापानौ पातामसा उपांशुसवनस्ते व्यानं पात्वसावैन्द्रवायवस्ते वाचं पात्वसौ मैत्रावरुणस्ते चक्षुषी पात्वसावाश्विनस्ते श्रोत्रं पात्वसावाग्रयणस्ते दक्षक्रतू पात्वसा उक्थस्तेऽङ्गानि पात्वसौ ध्रुवस्त आयुः पात्वसाविति॥ ३॥

'उपांश्वन्तर्यामम्' इत्यादिभिरष्टभिर्मन्त्रैरनुमृजेत्। असाविव्यस्य स्थाने उपतप्तस्य नाम सम्बुद्ध्या गृह्णीयात्। प्रथमेन नासिकामनुमृजेत्। द्वितीयेन सर्वं शरीरं। सर्वशरीरव्यापित्वाद्व्यानस्य। यस्य मन्त्रस्य स्थानविशेषो लिङ्गेनावगतः तेन तद्देशानुमृजेत्। अन्येन सर्वं शरीरं॥

यथासनमनुपरिक्रमणं॥ ४॥

उपतप्तस्यैतस्मिन् कर्मणि कृते ततः सर्वे दीक्षिताः यथा स्व-

मासनमुपरिक्रमेयुर्गच्छेयुरित्यर्थः। अतोऽवगम्यते पूर्वस्मिन् कर्मणि क्रियमाणे सर्वे दीक्षिताः ब्रह्मणा सह तत्रैवासत इति॥

त्रातारमिन्द्रमवितारमिन्द्रमिति तार्क्ष्यादिः॥ ५॥

इयमृक् तार्क्ष्यसंज्ञा भवति। अनया सह तत् सूक्तमस्मिन्निमित्ते तार्क्ष्यकार्यं करोति॥

*यद्यप्यन्यदैकाहिकाद्वैश्वदेवं स्वस्त्यात्रेये निविदं दध्यात्॥ ६॥

यद्यपानोभद्रीयादैकाहिकादन्यत् तस्मिन्नहनि वैश्वदेवसूक्तं भवतीति निविद्धानीयं तदा तदुद्धृत्य स्वस्त्यात्रेये तृचे निविदं दध्यात्। स्वस्त्यात्रेयशब्देन तृच एवात्र गृह्यते, तृचस्यैवान्यत्र प्रवृत्तिनिदर्शनात्। स्वस्त्यात्रेयस्य निविद्धानत्वेन विधानात् तस्मिन्नहनि पूर्वस्य निविद्धानस्योद्धारो भवति॥

प्रकृत्याऽगदे॥ ७॥ ॥ ९॥

अगदे व्याध्यपगम इत्यर्थः। तदा नेमे विकाराः कर्त्तव्या इत्यर्थः॥

इति षष्ठे नवमी कण्डिका॥ ९॥

---

* यद्यप्यन्यदैकाहिकाहिकादिति मूलपाठः सर्वत्र, विवृतौ पुनरैकाहिकादिति मात्रं वर्त्तते।

संस्थितेऽतीर्थेन निर्हृत्यावभृथे प्रेतालङ्कारान् कुर्वन्ति ॥
॥ १ ॥

संस्थिते मृत इत्यर्थः। तस्मिन्नुपतप्ते मृते तमतीर्थेन निर्हृत्य निर्गमय्य अवभृथार्थं सङ्कल्पिते देशे निधाय प्रेतालङ्कारान् कुर्वन्ति। ये लोके प्रेतस्यैतेऽलङ्कारा इति प्रसिद्धाः ते प्रेतालङ्काराः तैरलङ्कुर्युरित्यर्थः। अत्र किश्चित् संस्थिते अतीर्थेनेति पदच्छेदः। निर्हृत्यावभृथे अवभृथार्थो देश आवभृथः, तस्येदमित्यण्। अथवा अवभृथ इत्येव पदच्छेदे सति अवभृथशब्दस्तदर्थदेशे लक्षणया वर्त्तते ॥

केशश्मश्रुलोमनखानि वापयन्ति ॥ २ ॥

प्रेतस्य केशादीनां वापनं कर्त्तव्यं ॥

नलदेनानुलिम्पन्ति ॥ ३ ॥

नलदो नाम द्रव्यविशेषः, स चाभियुक्तेभ्यः शिचितव्यः। तत्कृतेनानुलेपनेन अनुलिम्पन्ति ॥

नलदमालां प्रतिमुञ्चन्ति ॥ ४ ॥

माला च तत्कृताऽस्य प्रतिमोक्तव्या ॥

निःपुरीषमेके कृत्वा पृषदाज्यं पूरयन्ति ॥ ५ ॥

प्रेतस्य शरीरे यान्यान्त्राणि तानि निःपुरीषाणि कृत्वा पृषदाज्येन पूरयित्वा पुनः शरीरे बन्धयितव्यानीति मन्यन्ते केचिच्छाखिनः ॥

अहतस्य वाससः पाशतः पादमात्रमवच्छिद्य प्रोर्णुवन्ति प्रत्यग्दशेनाऽऽशिरःपादं ॥ ६ ॥

अहतमविसितं। वाससो वयनारम्भप्रदेशः पाश इत्युच्यते। समाप्तिप्रदेशो दशा। पाशप्रदेशे पादमात्रमवच्छिद्य तत्पादमात्रमवच्छेदं निधाय तेन वाससा प्रत्यग्दशेन प्राक्शिरसम्प्रेतमाशिरःपादं प्रच्छादयन्तीत्यर्थः ॥

अवच्छेदमस्य पुत्रा अमाकुर्वीरन् ॥ ७ ॥

तदवच्छेदं प्रेतस्य पुत्राः अमाकुर्वीरन् स्वीकुर्वीरन्नित्यर्थः ॥

अग्नीनस्य समारोप्य दक्षिणतो बहिर्वेदि दहेयुः ॥ ८ ॥

यस्य प्रेतस्य अग्नीन् द्वयोररण्योः समारोप्य देवयजनस्य दक्षिणतो बहिर्वेदि प्रेतमानीयाग्निं मथित्वा विहृत्य तत्रैव दहेयुः दहनविधिनैव ॥

आहार्यणानाहिताग्निं ॥ ९ ॥

योऽनाहिताग्निः सत्री भवति तस्मिन् मृतेऽयं विशेषः। आहार्येणाग्निना तं दहेयुः। आहार्यशब्देनौपासनमुच्यते ॥

पत्नीञ्च ॥ १० ॥

दीक्षितस्य पत्नी यदि म्रियेत तां चाहार्येणैव दहेयुः। आहार्यशब्देनात्र लौकिकोऽप्युच्यते। अत्रायं विशेषः। येन आहिताग्निना सर्वाधानं कृतं तस्य पत्नीं लौकिकेन, यस्यौपासनमस्ति तस्य पत्नीं औपासनेन। अतोऽवगम्यते, आहार्यशब्देन श्रौतोऽग्निर्लक्ष्यत इति ॥

प्रत्येत्याहः समापयेयुः ॥ ११ ॥

प्रत्येत्य दहनदेशाद्यत् पूर्वापरीभूतमहस्तत् समापयेयुरित्यर्थः ॥

प्रातरनभ्यासमनभिहिंकृतानि शस्त्रानुवचनाभिष्टवनसंस्तवनानि ॥ १२ ॥

यस्मिन्नहनि दीक्षितदहनं कृतं तस्मात् परमनन्तरमहः प्रातरित्युच्यते। तस्मिन्नहनि शस्त्रादीन्यभ्यासाभिहिङ्कारवर्जितानि भवेयुः। तत्राभिष्टवने ग्राव्णां पूर्वमेवाभिहिङ्कारो नास्ति, आद्ये च शस्त्रे। तत्राभ्यासमात्रस्यैव निषेधः। एवमन्यत्र यथासम्भवं निषेधः कल्पनीयः ॥

पुरा ग्रहग्रहणात् तीर्थेन निष्क्रम्य त्रिःप्रसव्यमायतनं परीत्य पर्युपविशन्ति ॥ १३ ॥

अस्मिन्नेव प्रातरनुवाकमित्युक्तलक्षणेऽहनि ग्रहग्रहणात् प्रागेव तीर्थेन निष्क्रम्य त्रिःप्रसव्यमप्रदक्षिणं स्वमायतनं परितो गत्वा तदायतनं परित उपविशन्ति ॥

पश्चाद्धोता ॥ १४ ॥

स्वमायतनमादिति शेषः ॥

उत्तरोऽध्वर्युः । तस्य पश्चाच्छन्दोगाः ॥ १५ ॥

तस्यग्रहणं अध्वर्योरेव पश्चाच्छन्दोगा उपविशन्ति नायतनस्येत्येवमर्थं । ब्रह्मणो दक्षिणत इति सिद्धत्वान्नोक्तं ॥

आयङ्गौः पृश्निरक्रमीदित्युपांशु स्तुवते ॥ १६ ॥

आसृच्च छन्दोगा उपांशु स्तुवते ॥

स्तुते होता प्रसव्यमायतनं परिव्रजन् स्तोत्रियमनुद्रवेद्-प्रणुवन् ॥ १७ ॥

स्तुते होता अप्रणुवन् छन्दोगैस्त्रिःप्रसव्यं स्वमायतनं परितो व्रजन् स्तोत्रियमनुद्रवेत्, वक्ष्यमाणाश्च ऋचः। 'उपांशु

स्तुवते' इति स्तुतो उपांशुत्वविधानं होतुरनुद्रवणेऽपि उपांशुत्वप्रापणार्थं। स्तोत्रियवचनं त्वगुपलचणार्थं। यासु स्तुवते ता अनुब्रूयादिति। शंसत्यादिचोदनाभावादेव सामिधेनीधर्माभावे सिद्धे पुनः स्तोत्रियशब्दसम्बन्धात् शस्त्रधर्मप्राप्त्याशङ्का स्यात् तन्निवृत्त्यर्थं प्रणवप्रतिषेधः। अथैतदनुद्रवणं किंरूपमिति। अनुमन्त्रणमिति ब्रूयात्। प्रेतस्याभिधानमत्र चिकीर्षति। तच्च मन्त्रलिङ्गादवगतं। यामीषु स्पष्टमेवैतत्। सार्पराज्ञीषु चानयैव दिशा प्रेताभिधानं कल्पनीयं। अत्र च ब्रूयादिति वक्तव्ये अनुद्रवेदित्यनुशब्दसम्बन्धात् ज्ञायते अनुमन्त्रणप्रकारोऽयमिति। तथा च वक्ष्यति 'तं दह्यमानमनुमन्त्रयते' इति। तेनानुमन्त्रणधर्मा एवासु कर्त्तव्याः॥

यामीश्च॥ १८॥

तास्च इमास्च तथाभूतेन वक्तव्याः। यमेन यामायनेनैता ऋचो दृष्टाः। सूक्तं तु यमदृष्टत्वेनैता याम्य इत्युच्यन्ते न यमदेवत्या इति॥

प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयमुद्धरेत्। मैनमग्ने विद इ्षोमाभिशोच इति षट्। पूषा त्वेतश्च्यावयतु प्र विद्वानिति चतस्र उपसर्प मातरं भूमिमेतामिति चतस्रः सोम एकेभ्यः॥ १९॥

इदं सूक्तं॥

उद्धणसा वस्त्रतपा उदुम्बलाविति च समाप्य। सञ्चित्य तीर्थेन प्रपाद्य यथासनमासादयेयुः ॥ २० ॥

एतदनुद्रवणं समाप्यानन्तरमस्थिसञ्चयनं कृत्वा तमस्थिकुम्भं तीर्थेन प्रवेश्य यदाप्यमृतस्य पूर्वमासनस्थानं तत्रास्थिकुम्भं आसादयेयुरित्यर्थः ॥

भक्षेषु प्राणभक्षान् भक्षयित्वा दक्षिणे मार्जालीये निनयेयुः। दक्षिणस्यां वा वेदिश्रोण्यां ॥ २१ ॥

अत्र वा निनयेयुरित्यर्थः। मार्जालीये निनयेयुरिति प्रदर्शनार्थं । द्रवं निनयेयुरितरत् प्रक्षिपेयुरित्यर्थः ॥

सप्तदशमहर्भवति त्रिवृतः पवमाना रथन्तरपृष्ठोऽग्निष्टोमः।
॥ २२ ॥

यस्मिन्नहनि दीक्षितः प्रमीयते तदहरुक्तेन प्रकारेण समाप्य तदनन्तरं सप्तदशस्तोमन्त्रिवृत्पवमानकं रथन्तरपृष्ठमग्निष्टोमसंस्थमहरन्तरं दीक्षितमरणनिमित्तं सत्रमध्ये सत्रिभिः कर्त्तव्यं ॥

संस्थितेऽवभृथमेके गमयन्त्येतस्यैतदहरभिप्राब्रयन्तः।
॥ २३ ॥

एतस्मिन्नहनि समाप्ते एतान्यस्थीनि अवभृथकाले अवभृ-

र्थायें सङ्कल्पितास्वप्सु कुम्भेन सह प्रक्षिपेयुः, एतस्य प्रेतस्य तदहरिति वदन्तः सर्वे सत्त्रिण इति सूत्रार्थः। एके संस्थित इत्यस्येदं प्रयोजनं। संस्थिते तीर्थेनेत्यारभ्य उक्तेन प्रकारेण एतदन्तं कर्म दीक्षितमरणनिमित्तं सत्त्रिभिः कर्त्तव्यं। अतः-परं प्रेतस्य सम्बन्धो नास्तीत्येके शाखिन आमनन्ति। तेनातःपरं सत्त्रिणः सत्त्रमेव समाप्य यथेष्टं गच्छेयुः॥

निर्मन्थ्येन वा दग्ध्वा निखाय संवत्सरादेनमग्निष्टोमेन याजयेयुः॥ २४॥

इदानीं दहनादारभ्य पक्षान्तरमुच्यते। मृतेऽप्यग्नयः पूर्ववदेव न्युप्ता एव तिष्ठन्ति। स्वयोररण्योस्तु मन्थनेनाग्निं सद्य उत्पाद्य तेन पूर्वोक्तदेशे पात्रचयनवर्जं दग्धास्थीनि सञ्चितानि निखाय अविकृतं सत्त्रं समाप्य सत्त्रसमापनकालादारभ्य संवत्सरे पूर्णे तान्यस्थीन्यादाय तानि यजमानं कृत्वाऽग्निष्टोमेन प्रातरभ्यासमित्येवमादिविशेषणविशिष्टेन याजयेयुः। त एव सत्त्रिण इत्ययमपरः पक्षः। अस्मिन् पक्षे पूर्वस्मिंश्च पक्षे सत्त्रसमापने मृतपुरुषन्यूना एव समापयेयुः॥

नेदिष्ठिनं वा दीक्षयेयुः॥ २५॥

शेषसमापने मृतस्य संख्यापूरणार्थं मृतस्य सन्निकृष्टं दीक्षयित्वा सत्त्रसमापनं कुर्युः। निर्मन्थ्य दहनपक्षे नेदिष्ठप्रवेशे सत्यपक्षियपी नित्य एव॥

अपि वोत्थानं गृहपतौ ॥ २६ ॥

गृहपतौ मृते तदहःप्रवृत्तं समाप्यावभृथं कृत्वा मद्गमो दहनं कृत्वा सद्य उत्थानं भवति, न पुनः शेषं समापयेयुरित्यर्थः ॥

उक्तः स्तुतशस्त्रविकारः ॥ २७ ॥

यः संवत्सरेऽस्मिन्यज्ञः, यस्मिंश्चाहनि गृहपतिर्म्रियते तयोः शस्त्रविकार उक्तः। अनःशाषमित्यादयो ये विकारा उक्तास्ते तयोर्द्वयोरपि भवन्तीत्यर्थः ॥

एकाहेषु यजमानासने शयीत ॥ २८ ॥

एकाहेषु यजमानः पूर्वं यस्मिन्नासने आस्ते मृतेऽपि तत्रैव शयीत यावत् स एकाहः परिसमाप्यते। मृतेऽपि तस्मिन्नासनस्थे तदहः परिसमापनं कुर्युरित्यर्थः ॥

संस्थितेऽपायतीष्ववभृथं गमयेयुरित्यालेखनः ॥ २९ ॥

तस्मिन्नहनि संस्थिते अवभृथकाले अपायतीषु अपगच्छन्तीषु वसन्तीष्वित्यर्थः, तासु अवभृथं कर्म कृत्वा तं प्रेतं तत्र प्रक्षिपेयुरित्यर्थः। एवमालेखन आचार्य आह ॥

पूर्वेण सदो दहेयुरित्याश्मरथ्यः ॥ ३० ॥

तस्मिन्नहनि समाप्तेऽवभृथकाले पूर्वेण सदो यो देशस्तस्मिन् देशे तं प्रेतं सर्वैर्यज्ञपात्रैः सह तैरेवाग्निभिर्दहेयुरित्याश्मरथ्य आह ॥

एष एवावभृथः ॥ ३१ ॥ ॥ १० ॥

अस्मिन् पक्षेऽन्योऽवभृथो न कर्त्तव्यः। एष एवावभृथोऽवभृथे यदेनमेभिरग्निभिर्यज्ञसाधनैश्चास्मिन् देशे दहनेन समापनमिति ॥

इति षष्ठे दशमी कण्डिका ॥ ० ॥

---

अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति संस्थाः ॥ १ ॥

अत्यग्निष्टोमो नाम संस्थाविशेषः। अग्निष्टोमे राजन्यस्य षोडशिनं गृह्णीयादितिवचनादाग्निमारुतादूर्ध्वं षोडशिग्रहस्य स्तुतशस्त्रे यदा भवतस्तदा सोऽत्यग्निष्टोम इत्युच्यते। वाजपेयाप्तोर्यामौ वक्ष्येते। इतरे चनैवोक्ताः। सोमयागोऽत्र प्रकृतस्तेन तस्यैते संस्थाविशेषाः सर्वे सोमयागाः संस्थया सप्तविधा एवेत्यर्थः ॥

तासां यामुपयन्ति तस्या अन्ते यज्ञपुच्छं ॥ २ ॥

तासां संस्थानां मध्ये यां संस्थामुपयन्ति कुर्वन्ति तस्या अन्ते यज्ञपुच्छं नाम वक्ष्यमाणं कर्म कर्त्तव्यं। एवं स्थिते यां काञ्चित् संस्थां प्रकल्प्य प्रवृत्तानां संस्थालेन क्लृप्ताच्छस्त्राद्-धिकं निमित्तवशेन शस्त्रान्तरमापद्यते यदा तदा तन्निमित्त-बलात् तच्छस्त्रान्तैव सा संस्था विपरिणमत इति। तस्मादेव शस्त्रादूर्ध्वं यज्ञपुच्छं नाम कर्म कर्त्तव्यमित्येतमर्थं तासां या-मुपयन्ति तस्या अन्त इत्युक्तं ॥

अनुयाजाद्युक्तं पशुनाशं युवाकात् ॥ ३ ॥

तदिदं यज्ञपुच्छमुच्यते। अनुयाजादि शंयुवाकपर्यन्तं पशौ यदुक्तं तदत्रिह कर्त्तव्यं। उत्तमस्त्विह सूक्तवाकप्रैष इति प्रैषविशेषविधानादेव पाशुकमेवात्र तन्त्रं भवति नैष्टिकं। अतः पशुनेत्यस्येदं प्रयोजनं। पशौ यद्ब्रह्मासनं दक्षिणत आ-हवनीयस्य तदत्र कर्त्तव्यमिति। तेनानुयाजादौ मनोतादौ चैवं भवति। पशुपुरोडाशे सदस्येवासीतेति सिद्धं आशंयु-वाकात् पाशुकं कर्म कर्त्तव्यं नोर्ध्वमित्येवमर्थं ॥

उत्तमस्त्विह सूक्तवाकप्रैषः ॥ ४ ॥

प्रैषसमाम्नाये द्वौ सूक्तवाकप्रैषावाम्नातौ। तयोरुत्तर इ-त्यर्थः ॥

अवीवृधतेति पुरोडाशदेवतां ॥ ५ ॥

अवीवृधतेति पुरोडाशदेवतां पशुदेवतां वेत्यध्याहार्य्यं। अस्मिन् सूक्तवाकप्रैषे 'अवीवृधत पुरोडाशैः' इत्याम्नातं। तत्र पशुदेवता अग्निः पुरोडाशानां देवता इन्द्रश्च द्वे देवते सन्निहिते। तत्रावीवृधतेत्येकवचनान्तं पदं कां देवतामभिधत्ते। पुरोडाशैरिति बहुवचनं केवलपशुदेवताभिधानेन घटते। केवलेन्द्राभिधाने च प्रकृतिप्राप्तं पशुदेवताभिधानं न कृतं स्यात्। अतः सन्निधानाविशेषादुभे अपि देवते अभिधत्ते। तस्मेणेति मन्यमानः पुरोडाशदेवतामित्युक्तवानाचार्यः। एवं सति पुरोडाशैरिति बहुवचनं पुरोडाशस्थानादिपञ्चकं चाभिप्रेत्योपपन्नं भवति। एवं सति 'अक्रियामेकेऽन्यत्र तदर्थवादवदनात्' इति पशुपुरोडाशाकरणे यत्पशुदेवतानभिधानं अस्मिन् मन्त्रे हेतुत्वेनोपवर्णितं तदपि परिहृतं भवति। तेन पशुपुरोडाशस्य कर्त्तव्यो भवति। अवीवृधत पुरोडाशैरित्येवास्मिन् मन्त्रे वक्तव्यश्च भवतीति सिद्धं॥

एके यदि सवनीयस्य पशोः पशुपुरोडाशं कुर्युरवीवृधेतां पुरोडाशैरित्येव ब्रूयात्॥ ६ ॥

मन्त्र इत्याहुरिति वाक्यशेषः। 'अक्रियामेके' इत्येके आचार्याः पशुपुरोडाशाक्रियायुक्तवन्तस्त एवात्र एक इति प्रत्यवतिष्ठन्ते। त एवमाहुः। यदि सवनीयस्य पशोः पशु-

पुरोडाशः क्रियेत तदा द्वयोर्दैवतयोः पुरोडाशेन वर्धने कर्त्तव्ये अवीवृधेतां पुरोडाशैरिति द्वयोरभिधानाय मन्त्रो ब्रूयात् न तथा ब्रवीति। अतः पुरोडाशदेवतैवात्राभिधीयते, न पशुदेवता। अतस्तस्या अनभिधानात् पशुपुरोडाशस्याव-क्रियैवेत्येक आहुरित्यर्थः। एवमेकीयपक्षमुपन्यस्य आत्मीये पक्षेऽभिधाननिर्वाहमुपपादयति॥

सवनीयैरैवेन्द्रो वर्धते पशुपुरोडाशेन पशुदेवता॥ ७॥

अवीवृधतेति देवतायागसम्बन्ध उच्यते। स चोभयोर विशिष्टः, सन्निधानं वापि विशिष्टमस्मिन् मन्त्रे तथा दर्श-नात्। एवं सत्येकवचनस्याविवक्षयाप्युभयोरभिधानमेव युक्तं, नैकस्या एवेति। अस्मिन्नुपपन्ने पुरोडाशैरितीदमप्यनयैव दिशा घटत इत्युक्तं। सवनीयैरैवेन्द्रो वर्धते पशुपुरोडाशेन पशुदेव-तेति॥

ऊर्ध्वं शंयुवाकाद्धारियोजनः॥ ८॥

शंयुवाकान्तस्यैवातिदेशमुक्त्वा हारियोजन उच्यमानस्तस्मा-दूर्ध्वमेव भवति, तत् किमूर्ध्ववचनेन, तस्येदं प्रयोजनं। तृतीय-सवनं तावच्छस्त्रान्तमेव। यत् पुनः शस्त्रादूर्ध्वमनुयाजादि शंयुवाकान्तं तदैष्टिकत्वादुत्तमस्वरं भवति। तस्मादूर्ध्वं यत् सौमिकं तच्च स्वरविधानाभावादनियतस्वरं भवतीति। तस्य

स्वरविधानार्थमूर्ध्ववचनं । शंयुवाकशब्देनात्र शंयुवाकस्वर उच्यते, स चोत्तमः, तेनायमर्थः । उत्तमादप्युत्तमस्वरेण हारियोजनः प्रयोक्तव्य इति ॥

अपाः सोममस्तमिन्द्र प्रयाहि धाना सोमानामिन्द्राद्धि च पिब च युनज्मि ते ब्रह्मणा केशिना हरी इति ॥ ९ ॥

हारियोजनस्यानुवाक्या प्रैषयाज्या ॥

इज्यानुवाक्ये अन्त्येष्वहःसु ॥ १० ॥

एते याज्यानुवाक्ये अहर्गणेषु यान्यन्त्यान्यहानि तेषु भवतः । अन्यवदेकाह इति न्यायादेकाहेष्वपि भवतः ॥

तिष्ठासुकं मघवन्मा परागा अयं यज्ञो देवया अयं मियेध इतीतरेषु ॥ ११ ॥

अहर्गणेष्वेवान्त्येभ्यो यानीतराणि तेष्वेते भवतः, अनन्त्येष्वित्यर्थः ॥

परायाहि मघवन्ना च याहीति वाऽनुवाक्योत्तरवत्स्वहःसु ॥ १२ ॥

हारियोजनविषयत्वादस्य विधेरहःशब्देनात्र सुत्याहान्येवोच्यन्ते । तेन सारस्वतसत्रादिषु यानि सुत्यानि अहो-

त्याहोभिरुत्तरवन्ति तेष्वनन्येष्वियमनुवाक्या भवति। तिष्ठासु-कमिति वा। अयं यज्ञ इत्येषैव याज्या॥

अननुवषट्कृतेऽतिप्रैषं मैत्रावरुण आहेह मद एव मघवन्निन्द्र तेऽस्त्विति॥१३॥

हारियोजनाधिकारात् तस्यैवानुवषट्कारात् प्रागेव अतिप्रैषनामकं इह मद इत्यादिकं प्रैषं मैत्रावरुण आह। मैत्रावरुणग्रहणमननुवषट्कृत इतिवचनात् होमप्राप्तिशङ्कानिवृत्त्यर्थं। आहेतिवचनं जपादिषङ्काव्यावृत्त्यर्थं। अस्य तु विषयं वक्ष्यति। तायमानरूपाणां प्रथमादङ्कः प्रवर्त्तते अभ्यासातिप्रैषाविति॥

अप्योत्यतिरात्रे॥१४॥

अतिरात्रे क्रतौ वक्ष्यमाणाप्यःशब्दस्य स्थाने अद्यशब्दः कर्त्तव्यः। समर्थनिगमत्वात् तदेवोहे प्राप्ते पुनर्वचनमस्य प्रैषस्याहर्गणेष्वन्याहरर्थतयोत्पत्तेरहर्गणानां च द्वादशाहप्रकृतित्वात् द्वादशाहस्य चातिरात्रादित्वात् तत्प्रभृतित्वादस्य प्रवृत्तेः सैवास्य प्रकृतिरिति कृत्वाऽनूहं मन्यमानस्योत्तरमप्योत्यतिरात्र इत्ययमभिप्रायः। सत्यं द्वादशाहेनान्यान्यहान्यस्य प्रकृतिरिति, किन्तु तेष्वेव यस्मिन्नहनि प्रकृतित्वेन गृहीतेऽस्य मन्त्रस्य यथार्थमभिधानं सम्भवति तदेवास्य प्रकृतिरिति कृत्वाऽतिरात्रे जप एव युक्त इति॥

अद्य सुत्यामिति च॥ १५॥

इदमपि पूर्ववदेव द्रष्टव्यं॥

तस्यान्तं श्रुत्वाऽऽग्नीध्रः श्वःसुत्यां प्राह श्वःसुत्यां वा एषां ब्राह्मणानां तामिन्द्र येन्द्राग्निभ्यां प्रब्रवीमि मित्रावरुणाभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सौम्येभ्यः सोमपेभ्यो ब्रह्मन् वाचं यच्छेति॥ १६॥ ॥ ११॥

अतिप्रैषस्यान्तमाग्नीध्रः 'सुत्या श्वःसुत्या यज्ञः श्वःसुत्या एवैषाम्' इत्येतं मन्त्रं प्राह। आहेत्येतावतैव जपादिषड्कं व्यावृत्त्योपांशुत्वे सिद्धे निवृत्ते प्रकर्षवचनादुत्तम एवाच स्वरो भवति। तस्यान्तं श्रुत्वेतिवचनमतिप्रैषश्वःसुत्ययोः सम्बन्धकरणार्थं। तेन तस्मिन्नतिप्रैषेऽध्येति व्यूहविधिः श्वःसुत्यामन्त्रेऽपि भवति। श्वःसुत्यामन्त्रेऽप्याहेतिवचनाच्च उत्तमः स्वरो विहितः सोऽतिप्रैषेऽपि भवति। अनुवषट्कारात् प्राग्गत्ययमपि श्वःसुत्यामन्त्रेऽपि भवति। उपांशुत्वव्यावृत्त्या सत्यां हारियोजनान्तर्भावो मन्त्रादीनामपि नियमं व्याहृत्य उत्तमं स्वरमिति नियमयतीत्ययमभ्युच्चयहेतुः॥

इति षष्ठे एकादशी कण्डिका॥ ※ ॥

---

आहृतमुन्नेत्रा द्रोणकलशमिडामिव प्रतिगृह्योपहवमिष्ट्वा-ऽवेक्षेत ॥ १ ॥

उन्नेत्राऽऽहृतं 'उन्नेतरुपह्वयस्व' इत्युक्त्वाऽवेक्षेत तूष्णीं द्रोण-कलशस्थं सोमं ॥

हरिवतस्ते हारियोजनस्य स्तुतस्तोमस्य शस्तोक्थस्येष्टयजुषो यो भक्षो गोसनिरश्वसनिस्तस्य त उपहूतस्योपहूतो भक्षयामीति प्राणभक्षं भक्षयित्वा प्रतिप्रदाय द्रोणकलशमात्मानमाप्याय्य यथाप्रसृप्तं विनिसृप्याग्नीध्रीये विनिसृप्ताहुती जुहुत्ययं पीत इन्दुरिन्द्रं मदेधादयं विप्रो वाचमर्चन्नियच्छन्। अयं कस्यचिद्द्रुहतादभीके सोमो राजा न सखायं रिषेधात् स्वाहा। इदं राधो अग्निना दत्तमागाद्यशोभर्गः सह ओजो बलञ्च। दीर्घायुत्वाय शतशारदाय प्रतिगृभ्णाभिमहते वीर्याय स्वाहेति ॥ २ ॥

हरिवत इति प्राणभक्षणमन्त्रः। आत्माप्यायनं मुखहृदयाभिमर्शनं मन्त्राभ्यां। यथाप्रसृप्तामिति यो येन पथा सदो हविर्धानं वा प्रसृप्तः स तेन विनिसृप्येत्यर्थः। विनिसृप्ताहुती इति होमयोर्नाम। अयं पीत इदं राध इति होममन्त्रौ ॥

आहवनीये षट् षट् शकलान्यभ्यादधति। देवकृतस्यैनसो-ऽवयजनमसि स्वाहा। पितृकृतस्यैनसोऽवयजनमसि स्वाहा। मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा। आत्मकृतस्यैनसो-ऽवयजनमसि स्वाहा। एनस एनसोऽवयजनमसि स्वाहा। यद्वो देवाश्चकृम जिह्वया गुर्विति च ॥ ३ ॥

आहवनीयवचनं आग्नीध्रीयाधिकारात्। शकलाभ्याधानं पञ्चभिर्यजुर्भिरेकयर्चा ॥

द्रोणकलशाद्धाना गृहीत्वाऽवेक्षेरन्नापूर्याऽस्थामापूरयत प्र-जया च धनेन च। इन्द्रस्य कामदुघाः स्थ कामान् मे *धुङ्ध्वं प्रजाश्च †पशूंश्चेति ॥ ४ ॥

आपूर्या इत्यवेक्षणमन्त्रः। अथवा पूर्वो भागोऽवेक्षणार्थः, उत्तरो भागोऽवघ्राणार्थ इति ॥

अवघ्रायान्तःपरिधिदेशे निवपेयुः ॥ ५ ॥

तूष्णीमवघ्राय ताः धानाः अन्तःपरिधिदेशे निवपेयुः। अत्र देशग्रहणात् परिध्यभावेऽपि स देशो गृह्यते ॥

---

* धुंग्ध्वे इति सो०। † पशूंश्चेतीति सो०।

प्रत्येत्य तीर्थदेशेऽपां पूर्णांश्चमसांस्तान्त्सव्यावृतो व्रजन्ति॥
॥६॥

आहवनीयदेशात् सर्वे दक्षिणावृतः प्रत्येत्याग्नीध्रीयं गच्छेयुः। विनिसृप्ताकृतिप्रभृति एतावत् सर्वैः कर्त्तव्यं। सर्वेषु आग्नीध्रीयदेशं गच्छत्सु तेषु ये चमसिनस्ते सव्यावृतो भूत्वा तीर्थदेशे चमसानद्भिः पूर्णानध्वर्युभिः स्थापितान् व्रजेयुः॥

हरिततृणानि विमृज्य प्रतिस्वञ्चमसेभ्यस्त्रिः प्रसव्यमुदकैरात्मनः पर्युक्षन्ते दक्षिणैः पाणिभिः॥७॥

तांश्चमसान् व्रजित्वा हरिततृणान्यार्द्रतृणानीत्यर्थः। तानि च दूर्वाजातीयानि, शास्त्रान्तरे विशेषदर्शनात्। तानि तृणानि निष्पीड्य स्वे स्वे चमसेऽन्तरा प्रक्षिप्य सर्वे चमसिनः स्वान् स्वान् चमसान् दूर्वारसयुक्ता अपो गृहीत्वा ताभिरद्भिः स्वं स्वमात्मानं दक्षिणैः पाणिभिरप्रदक्षिणं पर्युक्षन्ते। दक्षिणग्रहणं पाणींश्चमसेष्वित्यत्र सव्याधिकारनिवृत्त्यर्थं॥

इतरैर्वा प्रदक्षिणं॥८॥

सव्यैर्वा पाणिभिः प्रदक्षिणं पर्युक्षन्ते॥

स्वधा पित्रे स्वधा पितामहाय स्वधा प्रपितामहायेति॥९॥

एते त्रयः पर्युक्षणमन्त्राः॥

उक्तं जीवमृतेभ्यः ॥ १० ॥

पिण्डदाने यदुक्तं विधानन्तदत्रापि प्रत्येतव्यं। तत्र जुहु-याज्जीवेभ्य इत्युपायान्तरमस्ति। अत्रोपायान्तरस्यासम्भवा-द्यस्य प्रेतास्त्रयो भवेयुः स एव पर्युक्षणं कुर्यान्नान्यः। तद्वर्जम-न्यत् सर्वं कुर्युः ॥

पाणींश्चमसेष्ववधायाप्सु धूतस्य देव सोम ते मतिविदो नृभिः सुतस्य स्तुतस्तोमस्य शस्तोक्थस्येष्टयजुषो यो भक्षो गोसनिरश्वसनिस्तस्य त उपहूतस्योपहूतो भक्षयामीति प्राणभक्षान् भक्षयित्वा माऽहं प्रजां परासिचमित्येतेना-भ्यात्मं निनीयाच्छायं वो मरुतः श्लोक एत्वित्येतयाऽभिमृ-शन्ति ॥ ११ ॥

चमसिनः स्वे स्वे चमसे स्वं स्वं दक्षिणं पाणिं अवधाय ततः स्वस्वचमसाः दूर्वारसयुता अपस्त्रादाय ग्रवजिघ्रन्ति 'अप्सु धूतस्य' इतिमन्त्रेण। ततो 'माऽहं प्रजाम्' इत्यनेन अभ्यात्मं स्वचमसस्था अपो भूमौ निषिञ्चेयुः। एतेनेतिवचनं अनुष्टुभोऽभ्युद्धारेऽपि अस्या अनुष्टुभोऽभ्युद्धारार्थं। ततः 'अच्छायं वः' इत्येतयर्चा चम-सस्था आपो भूमौ निषिक्ता अभिमृशन्ति ॥

दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् प्राश्य सख्यानि विसृजन्ते। उभा कवी युवाना सत्यादा धर्मण-

स्यती। परिसत्यस्य धर्मणा विसख्यानि सृजामह इति॥१२॥ ॥१२॥

'दधिक्राव्ण:' इत्येतया आग्नीध्रीये दधिद्रप्सान् प्राश्नीयुः सयजमानाः सर्व्वर्त्विजः। ततः सख्यविसर्जनमपि कुर्युः 'उभा कवी' इतिमन्त्रेण। सख्यविसर्जनं नाम तानूनप्त्राभिमर्शनाद्येतावन्तं कालं सखिलेन वर्त्तितव्यं। ततश्चखिलमस्मिन् काले विसर्जनीयमित्यर्थं। तच्च परस्परं हस्तसंस्पर्शनेन विसर्जनीयं॥

इति षष्ठे द्वादशी कण्डिका॥ ० ॥

---

पत्नीसंयाजैश्चरित्वाऽवभृथं व्रजन्ति॥ १॥

'यथा प्रसृतम्' इत्यत्र 'उदायुषा' इत्यनेन होता होमार्थं निःसर्पति, स इदानीं वेदं स्तृणाति। ततः पत्नीसंयाजैश्चरित्वा पत्न्यै वेदप्रदानादि पूर्णपात्रनिनयनान्तं कर्म्म कृत्वैव वेदस्तरणं कृत्वा अकृत्वा वा प्रायश्चित्तानि जुहुयात्। इतरैरन्वारब्धः। ततो हृदयशूलोद्वासनमत्रैव कर्त्तव्यं। यद्यनूबन्ध्या पशुर्न करिष्यते तदा तदुद्वासनं पशुकर्त्तृभिरेव कर्त्तव्यं। तत्र संस्थाजपमेवावस्थाप्याऽवभृथदेशं परिव्रजन्ति॥

अजन्तः साम्नो निधनमुपयन्ति ॥ २ ॥

साम पञ्चभक्तिकं, तस्यान्त्या भक्तिर्निधनमित्युच्यते। तदव-भृथं गच्छन्तो ब्रूयुरित्यर्थः। तत् सर्वलिङ्गामेतत् कार्य्यं ॥

अवभृथेष्ट्या तिष्ठन्तस्चरन्ति ॥ ३ ॥

अवभृथेष्टिर्नाम जले क्रियते, तया तिष्ठन्तश्चरेयुः ॥

प्रयाजाद्यनुयाजान्ता नास्यामिडा न बर्हिर्मन्त्रौ प्रयाजानु-याजावप्सुमन्तौ ॥ ४ ॥

आज्यभागौ भवत इत्यर्थः ॥

गायत्रौ ॥ ५ ॥

गायत्रौ चैतौ भवतः। सूत्रभेदकरणं यत्र यत्राप्सुमन्तौ तत्र तत्र गायत्रौ भवतइत्येवमर्थं ॥

वारुणं हविः ॥ ६ ॥

हविर्ग्रहणं हविर्दोषे सति यागावसरे हविरेवोत्पाद्य यष्टव्यं न पुनराज्येनेष्ट्वा पुनर्यष्टव्यमित्येवमर्थं ॥

अव ते हेडो वरुण नमोभिरिति द्वे। अग्नीवरुणौ स्विष्टकृदर्थे ॥ ७॥

स्विष्टकृदर्थ इति स्विष्टकृद्यागेऽग्नीवरुणौ देवता भवतीत्यर्थः। तेन स्विष्टकृच्छब्दो न प्रयोक्तव्यः। अत्र निगदाभावादग्नीवरुणावित्यादिश्य 'स त्वं नः' इत्यृचा यष्टव्यं॥

त्वन्नो अग्ने वरुणस्य विद्वानिति द्वे। संस्थितायां पादानुदकान्तेऽवदध्यर्नमो वरुणायाभिष्ठितो वरुणस्य पाश इति। ॥ ८॥

संस्थितायामवभृथेष्टौ सर्वेऽस्मदीयाः 'नमो वरुणाय' इत्यनेन मन्त्रेण दक्षिणान् पादानुदकान्तेऽवदध्युः। उदकान्ते तीरसमीपवर्त्तिन्युदक इत्यर्थः। संस्थितवचनमवधानादीनामिष्टिसम्बन्धित्वज्ञापनार्थं। तेनेष्टेरक्रियापक्षे अवधानादयोऽपि न भवन्ति॥

तत आचामन्ति भक्षस्यावभृथोऽसि भक्षितस्यावभृथोऽसि भक्षं कृतस्यावभृथोऽसीति॥ ९॥

तत इति पूर्वेणेदं संबद्धमिति दर्शयति। आचामन्ति अपः पिबन्तीत्यर्थः। त्रिभिर्मन्त्रैः पिबन्ति। सर्वत्र शौचार्थमाचमनं कर्त्तव्यं॥

प्रोष्य प्रथमेन प्रष्ठीवन्ति प्रगिरन्त्युत्तराभ्यां ॥ १० ॥

तेषु पानेषु विशेष उच्यते। प्रथमेन पीता अपः प्रोष्य प्रष्ठीवन्ति। प्रोषणमिति उत्तराख्शोधनार्थः क्रियाविशेष उच्यते। तं कृत्वा निष्ठीवेयुरित्यर्थः। उत्तराभ्यां पीताः प्रोष्य प्रगिरन्ति। आचमनविधानादेव प्रगिरन्तीतिसिद्धे पुनः प्रगिरन्तीतिवचनं अत्रापि प्रोषणप्राप्त्यर्थं॥

तत आचम्याप्लवन्त आपो अस्मान् मातरः शुन्धयन्त्विद-मापः प्रवहत सुमित्र्या न आप ओषधयः सन्त्विति ॥ ११ ॥

तत इति पूर्ववत्पदार्थसम्बन्धार्थं। आचम्येतिवचनं शौ-चार्थमाचमने कृते पुनराप्लवनाङ्गमाचमनं कृत्वा आप्लवेर-न्नित्येवमर्थं। स्नानमाप्लवनमित्युच्यते। तदेभिर्मन्त्रैः कुर्युरि-त्यर्थः॥

एतयाऽऽवृताऽभ्युक्षेरन्नेव वाप्यदीक्षिताः ॥ १२ ॥

अनयाऽऽवृता एभिर्मन्त्रैरित्यर्थः। एतयाऽऽवृता अदी-क्षिता अभ्युक्षेरन्नेव वा आप्लवेरन्नेव वेत्येवं विकल्पो भवति॥

उन्नेतैनानुन्नयति ॥ १३ ॥

उन्नेता यथाम्नातेन विधिना सर्वानुदकादुन्नारयति॥

उन्नेतरुन्नेतारमुन्नयेन्नेतर्वस्वो अभ्युन्नयान इत्युन्नीयमाना जपन्ति ॥ १४ ॥

उन्नेत्रा उन्नीयमाना उन्नेतरित्येतं मन्त्रं जपन्ति ॥

उद्वयन्तमसस्परीत्युदेत्य ॥ १५ ॥

ब्रूयुरिति शेषः। उदेत्य उदकादुत्तीर्येत्यर्थः। इयमपि अवभृथसंज्ञा भवति। तेनोपांशु प्रयोक्तव्यं। लिङ्गादेव मन्त्रप्रकारः कल्प्यः ॥

समानमत ऊर्ध्वं हृदयशूलेनासंस्थाजपात् ॥ १६ ॥

अस्मात् अत ऊर्ध्वं यत् कर्त्तव्यं तद्धृदयशूलोद्वासनेन समानं भवति। अत्र हृदयशूलोद्वासनाभावादनुमन्त्रणं अपामुपस्पर्शनं संस्पर्शनपरिहारार्थमर्थलुप्तत्वादकर्त्तव्यं। अनवेक्षमाणा इत्यादयः सर्वैः कर्त्तव्याः समिदाधानान्ताः पदार्थाः। आसंस्थाजपादितिवचनं हृदयशूलोद्वासनेन संस्थाजपस्य सम्बन्धाभावात् तस्यापि प्रापणार्थं ॥

संस्थाजपेनोपतिष्ठन्ते ये येऽपवृत्तकर्माणः ॥ १७ ॥ ॥ १३ ॥

अवधानादय एते पदार्थाः सर्वैरस्मदीयैः कर्त्तव्याः, संस्थाजपस्त्वपवृत्तकर्मभिरेव कर्त्तव्य इत्येवमर्थं वचनं। इदं

चान्यत् प्रयोजनं। अपवृत्तकर्माणः संस्थाजपं कुर्युरिति संस्थाजपस्य कर्तृसम्बन्धं ब्रुवन् कर्तृद्वारेण प्रयोगाङ्गत्वमस्य दर्शयति। तेन सोमप्रयोगे यत् कर्तृसम्बन्धिसोमप्रयोगावयवः समाप्यते तस्यैव संस्थाजपो भवति। तेन दीक्षणीयादिषु संस्थाजपस्य प्रसङ्ग एव नास्तीति सिद्धं॥

इति षष्ठे नवोदशी कण्डिका॥ ❀ ॥

---

गार्हपत्य उदयनीयया चरन्ति॥१॥

गार्हपत्ये, शालामुखीये इत्यर्थः, सत्युत्तरवेदिप्रणयनादूर्ध्वं सोमस्य गार्हपत्यो भवति, वचनाद्यतः प्रणयति स गार्हपत्य इति। उदयनीया नामेष्टिः। तस्याः शालामुखीय एवाहवनीयो भवति॥

सा प्रायणीययोक्ता॥२॥

सा ग्रहणं प्रायणीयया अस्या वैलक्षण्यप्रदर्शनार्थं। तच्च वैलक्षण्यं शंयुवन्ता इत्सुसंस्था वेत्येवमादि तस्या अध्वर्युप्रऽध्ययलाकालाभिर्निःस्तीयते। ग्रन्थैस्तरामित्येष स्वरोऽत्र नातिदिश्यते, अवधिस्वरत्वात् तस्य पदार्थस्य, धर्मो ह्यतिदेशेन प्राप्यते, नावधिधर्म इति॥

पथ्या स्वस्तिरिष्टोक्तमाज्यहविषां ॥ ३ ॥

सर्वेषामेव विशेष उच्यते। तत्र चतस्त्र आज्यहविषो देवताः अदितिः पञ्चमी चरुहविः, पथ्या स्वस्तिस्तत्र प्रथमा। इह चतुर्थी भवतीत्यर्थः। किञ्च ॥

विपरीतास्तु याज्यानुवाक्याः ॥ ४ ॥

तत्र या याज्या सा इह अनुवाक्या। तत्र या अनुवाक्या सेह याज्या भवतीत्यर्थः ॥

ते चैव कुर्युर्ये प्रायणीयां ॥ ५ ॥

तत्र ये कर्त्तारस्त एवात्र नियम्यन्ते। तत्र यदि प्रतिनिधिभूतः कुर्यात् स एवात्र कुर्यादित्यर्थः ॥

प्रकृत्या संयाज्ये ॥ ६ ॥

विपरीतास्तु याज्यानुवाक्या इत्यस्य प्रतिप्रसवोऽयं ॥

संस्थितायां मैत्रावरुण्यनूबन्ध्या ॥ ७ ॥

उदयनीयायां समाप्तायां मित्रावरुणदेवत्योऽनूबन्ध्यः पशुः कर्त्तव्यः ॥

सदस्येके ॥ ८ ॥

स पशुः सदस्यासीनैर्होत्रादिभिः कर्त्तव्य इत्येके आहुः। अस्मिन्नपि पक्षे दण्डप्रदानान्तमुत्तरवेद्यामित्युक्तं ॥

उत्तरवेद्यामेके ॥ ९ ॥

अ　ारिवनः, उत्तरवेदिसमीप आसीनैरित्याहुः ॥

हुतायां वपायां यद्येकादशिन्यग्रतः क्रतावग्नीषोमीयेण सञ्चरेण प्रजित्वा गार्हपत्ये त्वाष्ट्रेण पशुना चरन्ति ॥ १० ॥

अनूबन्ध्यायां वपायां हुतायां इदं नैमित्तिकं कर्मोच्यते। यदि यस्मिन् क्रतावग्नीषोमीयस्थाने सवनीयस्थाने वा पश्वेकादशिनी प्रयुक्ता स्यात् तदा तस्मिन् क्रतावस्मिन् स्थानेऽग्नीषोमीयेन सञ्चरेण, अग्नीषोमीयप्रणयने यः सञ्चरस्तेनेत्यर्थः, तेन सञ्चरेण शालामुखीयं गत्वा तत्र त्वाष्ट्रेण त्वष्टृदेवत्येन पशुना यजेयुरित्यर्थः ॥

अञ्जनादि पर्यग्नि कृत्वोत्सृजन्त्यपुनरायनाय ॥ ११ ॥

तं त्वाष्ट्रं पशुं यूपाञ्जनादि पर्यग्निकरणान्तं कृत्वोत्सृजन्ति। अपुनरायनाय अपुनरागमनायेत्यर्थः। तावानेवायं पशुयागो भवति, नात ऊर्ध्वं कर्त्तव्यो भवतीत्यर्थः ॥

यदि त्वध्वर्यव आज्येन समापयुस्तथैव होता कुर्यात्॥ ॥१२॥

उक्तः पशुपक्षः, उत्सर्गो नामायमपरः पक्ष उच्यते। यद्यध्वर्यव आज्येन तं पशुयागं समापयेयुः तदा होतापि तथा कुर्यात्। होतृग्रहणं मैत्रावरुणस्यापि प्रदर्शनार्थं। तथैवेत्यस्य विवरणार्थमाह॥

सम्प्रैषवदादेशान्॥ १३॥

आज्येन समापने अनेके पक्षाः भवन्ति। आज्यशब्देन संव्यवहारमात्रं कृत्वा पशुवदेव क्रियते इत्येकः पक्षः। संव्यवहारोऽपि पशुशब्देनेत्यपरः। इष्टिवदेवाज्येन त्वाष्ट्रयाग इत्ययमपरः पक्षः। इष्टिपक्षेऽपि वपापुरोडाशहविःस्थानेषु त्रिःकृत्वः क्रियत इत्यपरः पक्षः। यद्यन्यथापि कुर्युः। तस्य तस्यानुगुणमादेशानस्मदीयाः कुर्युरित्यर्थः॥

पशुवन्निपातान्॥ १४॥

निपातानामेव प्रकाराः 'मेद उद्धृतं पार्श्वतः श्रोणितः' इति ये पशुसमवेताभिधायिनो द्रव्यान्तरसमवेताभिधायिनो वा मन्त्रमध्ये निपातितास्ते निपाता उच्यन्ते। तानाज्येन क्रियमाणे पशुवत्क्रियायां पशुवदेव ब्रूयादित्यर्थः॥

यद्यनूबन्ध्ये पशुपुरोडाशमनु देविकाहवींषि निर्वपेयुर्धातानुमती राका सिनीवाली कुहूः ॥ १५ ॥

यद्यत्र देविकाहवींषि अनुनिर्वपेयुरन्वायातयेयुरित्यर्थः, तदा राकादयः पञ्च देवता यष्टव्याः । ते यागाः देविका इत्युच्यन्ते । स्थानोपदेशश्चान्वायात्यत्वं स्पष्टयति ॥

धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं वाजिनीवतः । धाता प्रजानामुत राय ईशे धातेदं विश्वं भुवनं जजान । धाता कृष्टीरनिमिषाभिचष्टे धात्र इद्धव्यं घृतवज्जुहोतेति ॥ १६ ॥

धातुरिहैवाम्नायते । इतरेषामदृष्टादेशन्यायेनान्वेषणीयाः ॥

देवीनां चेत् स्थर्ग्या द्यौरुषा गौः पृथिवी ॥ १७ ॥

एषां च पञ्चानां देव्य इति समाख्या । यद्येता अन्वायातयेयुः तदेता देवता भवन्तीति ॥

सत्यूरश्मिर्न आगच्छेति द्वे आयान्तनोपि रश्मिभिरावहन्तो पोष्यावार्याणि न ता अर्वा रेणुककाटो अश्नुते न तानश-

न्ति न दभातिनस्करो बडित्या पर्वतानां इड्हा चिद्या वनस्पतीन्।॥ १८॥

सूर्यस्य चातुर्मास्येभ्यो गृहीतव्ये याज्यानुवाक्ये॥

पश्वलाभे पयस्या मैत्रावरुण्यनूबंध्यास्थाने॥ १९॥

अनूबन्ध्यायाः पशुद्रव्यालाभे मैत्रावरुणीया पयस्या कर्त्तव्या। देवतानिर्देशः प्रकृताया एवानूबन्ध्यायाः पश्वलाभे पयस्या कर्त्तव्या, नान्यासामनूबन्ध्यानां। अन्यासामनूबन्ध्यानामयं पक्षो नास्तीत्यर्थः। स्थानग्रहणं तत्कार्यकरीयं पयस्या न पश्वलाभे नैमित्तिकं कर्मान्तरमितिप्रदर्शनार्थं॥

आज्यभागप्रभृतिवाजिनान्ता॥ २०॥

एषा पयस्या एतदादिरेतदन्ता भवति। अध्वर्युप्रत्ययादन्यथा वा भवति॥

कर्मिणो वाजिनं भक्षयेयुः॥ २१॥

उत्तरविवक्षार्थमेतत्॥

सर्वे तु दीक्षिताः॥ २२॥

सत्रविषये यजमानत्वात् सर्वे भक्षयेयुः॥

सर्वे तु दीक्षितोत्थिताः पृथगग्नीन् समारोप्योदग्देवयजनान्मथित्वोदवसानीयया यजन्ते ॥ २३ ॥

तुशब्दो विशेषविध्यर्थः । तेनास्मिन् सूत्रेऽर्थद्वयमस्ति, सामान्यतो विशेषतश्च । सामान्यतस्तावदयमर्थः । प्रकृतेन ज्योतिष्टोमाख्येन सोमेन यजमानो दीक्षणीयया दीक्षां प्रविष्टः स सोमेनेष्ट्वा अवभृथेष्टौ दीक्षामोचनं कृत्वा तस्मादुत्थित एवानूबन्ध्यान्तं प्रयोगं समाप्य तदन्तेऽग्नीनरण्योः समारोप्य उदग्देवयजनात् यो देशस्तस्मिन्नग्नीन्मथित्वोदवसानीयया यजन्ते इत्येकोऽर्थः । अपरस्तु यदि सर्वे दीक्षिताः स्युः, सत्त्रेदित्यर्थः, दीक्षिता उत्थिता इतिपाठः कर्त्तव्यः, समासपाठेऽर्थस्य दुर्गमत्वात् । यदि सर्वे दीक्षिताः स्युस्तदा पूर्ववदेवानूबन्ध्यान्तं कर्म कृत्वा सर्वे स्वान् स्वानग्नीन् स्वे स्वे चारणेषु पृथक् पृथक् समारोप्य पूर्ववन्मथित्वा पृथगेवोदवसानीयया यजेरन्निति-विशेषतोऽर्थः । मथनस्यार्थसिद्धत्वे सत्यपि मथनवचनं तदानीमेव मथित्वा सद्य उदवसानीया कर्त्तव्येत्येवमर्थं । तेनोदवसानीया सोमाङ्गं भवति । तेनाग्निहोत्रकाले प्राप्तेऽपि अस्यामिष्टौ अपरिसमाप्तायां तन्न होतव्यमिति सिद्धं भवति । अनूबन्ध्यान्ते प्रायश्चित्तानि कृत्वा संस्थाजपञ्च कुर्युः पूर्वमकृतवन्तः संस्थाजपं ॥

पौनराधेयिक्यविकृताऽविकृता ॥ २४ ॥ ॥ १४ ॥

सेयमुदवसानीया एवंरूपा भवति। पौनराधेयिकी पुन-राधेये याऽऽम्नातेष्टिस्तद्रूपेत्यर्थः। किञ्चाविकृता अविभक्ता-ज्यभागविकारा उपांशुत्वरहिता केवलमग्निदेवता। प्रधान-स्विष्टकृतोर्याज्यानुवाक्याम्नातिदिश्यन्ते, नान्यदित्यर्थः ॥

इत्याश्वलायनश्रौतसूत्रपूर्वषट्कवृत्तौ नारायणीयायां षष्ठो-ऽध्यायः समाप्तः ॥

॥ * ॥ इति आश्वलायनसूत्रपूर्वार्धवृत्तिः समाप्ता ॥ * ॥

# आश्वलायनीये।

## श्रौतसूत्रे।



### उत्तरषट्करूपं।

### उत्तरार्द्धम्।

ॐ ब्रह्मणे नमः।



**सत्त्राणां ॥ १ ॥**

अधिकारोऽयं। आऽष्टमाध्यायपरिसमाप्तेर्यद्वक्ष्यति तत् सत्त्रेष्विति वेदितव्यं ॥

**उक्ता दीक्षोपसदः ॥ २ ॥**

एकाहप्रभृति 'आसंवत्सराद्' इत्यादिना 'यथासुत्योपसदः' इत्येवमन्तेन दीक्षा सत्त्राणामुक्ता। उपसदः 'चतुर्विंशतिः संवत्सर इति सत्त्राणाम्' इत्युक्ताः। तस्य वचनं प्रकृतिप्राप्तदीक्षोपसदह:सङ्ख्यानिवृत्त्यर्थं। तत्र सत्त्राणामित्यवचनात् सप्ततद्वादशाहशब्दयोरहीनसम्बन्धेऽप्यविरोधात् तापश्चिच्छब्दस्य च सत्त्रविशेषवाचित्वादहीनसम्बन्धाशङ्कां निवर्त्य तस्य विधेः सम्बन्धार्थमिदं वचनं। इदं तूपसद्ग्रहणं दीक्षासुत्याशब्दयोः परिसङ्ख्यापरत्वाशङ्कानिवृत्त्यर्थं ॥

एतेनाह्ना सुत्यानि ॥ ३ ॥

उक्तः सोमयागस्त्रिसंस्थो ज्योतिष्टोमाख्यः प्रकृतिभूत एकाहाहीनसत्राणां। तान्येकाहादीनि नवमदशमैकादशद्वादशेषु वक्ष्यन्ते। इदानीं सर्वेषां सत्राणामधिकारं कृत्वा सत्रधर्मा उच्यन्ते गवामयनानुसारेण। चतुर्विंशादीनि च तदीयान्यहानि व्युत्पाद्यन्ते महाव्रतपर्यन्तानि। प्रायणीयोदयनीयौ तु ज्योतिष्टोमेनातिरात्रेण व्याख्याताविति कृत्वेदानीं नोच्येते। एषामह्नां व्युत्पादने कृते एकाहाहीनानामपि व्याख्यानलाघवं भवतीति तेभ्योऽपि पुरस्तात् सत्राणामितीदं प्रकरणमध्यायद्वयेनारब्धवानाचार्यः। एवं सूत्रप्रणयनेनास्तद्ब्राह्मणमनुसृतं भवति इत्येषात्र सूत्रसङ्गतिः। इदानीं सूत्रं व्याख्यायते, एतेनेति। यः प्रकृतौ दीक्षणीयाद्युदवसानीयान्तस्त्रिसंस्थो ज्योतिष्टोमाख्यः सोमयागः स निर्दिश्यते स एव चाहेत्युच्यते। सुत्यानीति प्रधानकर्माण्युच्यन्ते सोमयागरूपाणि। तत्रायमर्थः। सत्रेषु यानि प्रधानयागकर्माणि तान्येतेनाह्नातिदिष्टानीति। एतेन सुत्यानीत्येतावता सिद्धेऽह्नेतिवचनमतिरात्रसंस्थस्याप्येकाहग्रहणेन संग्रहणार्थं अहोरात्रद्वयसम्बन्धे सत्यपीति ॥

प्रातरनुवाकाद्युदवसानीयान्तान्यन्त्यानि ॥ ४ ॥

प्रति प्रधानमङ्गावृत्तौ प्राप्तायां यावतोऽङ्गकाण्डस्य सकृत्कृतस्यापि प्रधानविशेषसम्बन्धे कारणं न गृह्यते, तत् सकृ-

देव कृतं सर्वार्थं भवतीति नावर्त्तन्ते। यस्य पुनरेवं न सम्भवति तदावर्त्तते। तेन तद्विवेकार्थमिदं सूत्रद्वयं। यानि पत्नी-संयाजेभ्य ऊर्ध्वमङ्गानि तान्यन्त्येष्वेवाहःसु सकृत्कृतानि सर्वार्था-नि भवेयुः। यानि प्रातरनुवाकात् पूर्वाणि तानि पूर्वेष्वेवा-हःसु सकृत् कर्त्तव्यानीत्यर्थः॥

पत्नीसंयाजान्तानीतराणि॥ ५॥

इतराण्यनन्त्यानीत्यर्थः। तानि पत्नीसंयाजान्तानि। तेष्व-वभृथादि न कर्त्तव्यं। तेष्वेव यान्याद्यन्तानि तेषु च प्रातरनु-वाकात् पूर्वाणि न कर्त्तव्यानि॥

इष्टप्राशनसख्यविसर्जने त्वन्त्य एव॥ ६॥

पत्नीसंयाजपर्यन्तानां प्रातरनुवाकप्रभृतीनामङ्गानां सर्वे-ष्वहःस्वावृत्तिरुक्ता। तदवयन्तभूतयोरप्यनयोरन्त्य एवाहनि क्रिया स्यादित्येवमर्थमिदं सूत्रं॥

ध्रुवाः शस्त्राणामातानाः॥ ७॥

आतन्यन्ते यैरित्यातानाः, यैरवयवरूपैः शस्त्राण्युच्यन्ते तूष्णींशंसननिविन्सूक्तादिभिस्ते आताना इत्युच्यन्ते। ते ध्रुवाः नित्या इत्यर्थः। परिभाषाप्रयोजनं मध्यन्दिन इत्युक्ते एते शस्त्रे प्रतीयादिति निष्केवल्यमरुत्वतीययोः संज्ञां कृत्वा व्यव-हरति 'जनिष्ठा उग्र उग्रो जज्ञे' इति। तत्रैताभ्यां सूक्ताभ्यां

द्वत्तयोः प्रस्तयोरुद्धारे प्राप्ते स्तक्तयोरेवोद्धारो नान्येषां प्रतिपदादीनामित्येवमर्था परिभाषा ॥

## सूक्तान्येव सूक्तस्थानेष्वहीनेषु ॥ ८ ॥

यानि प्रकृतौ सूक्तस्थानानि तेषु विधीयमानास्तृचादयोऽपि सूक्तान्यत्र भवन्ति। तैः समस्तस्य च सूक्तस्योद्धारो नैकदेशस्येत्यर्थः। एवकारात् न केवलं यत्र विहितानि तत्रैव सूक्तकार्यं कुर्वन्ति किंतर्हि निविद्दतिपत्तावप्येतानि सूक्तान्येव भवेयुरित्यवगम्यते। तेन सूक्तेषु निविद्दतिपत्तावेतेषु तृचेषु निविद्धेया, तृचेषु वा निविद्दतिपत्तौ सूक्तेषु निविद्धेयेत्येवमपि भवति। उदाहरणं। 'हिरण्यपाणिमूतये' इति चतस्रः, 'मही द्यौः पृथिवी च नः' 'युवाना पितरा पुनः' इति तृचावित्येवमादि। अहीनेष्विति वचनं हीनेषु सूक्तस्थानेषु विहितानां तृचानां सूक्तवत् कार्यं माभूदित्येवमर्थं। यथा येऽर्वाक् त्रिवृतः स्तोमाः स्युस्तृचा एव तत्र सूक्तस्थानेष्विति सूक्तस्थानेषु हानिर्विधीयते। तेन तानि हीनानि सूक्तस्थानानि। अतस्तानि वर्जयित्वाऽन्येष्वहीनेषु सूक्तस्थानेषु विहितानां तृचादीनां सूक्तवत् कार्यं भवति, न हीनेषु विहितानां। हीनेषु तु विहितानि यदर्थं विहितानि तानि तत् कार्यमुक्त्वाऽन्यत् किञ्चिदपि सूक्तकार्यं न कुर्युः। सूक्तेषु निविद्दतिपत्तौ तेन निविदो दध्यात्तेषु निविद्दतिपत्तौ तृचेष्वेवान्येषु निविदो दध्यान्नान्येषु सूक्तेष्विति सिद्धं ॥

देवतेन व्यवस्थाः ॥ ९ ॥

यत्र सूक्तस्थानानि चत्वारि सन्ति, त्रीणि सूक्तानि विहितानि दृश्यन्ते, तत्र दैवतेन व्यवस्थाः कर्त्तव्याः। यथा चतुर्विंशे 'उदुष्य देवः सविता हिरण्ययेति तिस्रः, ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवम्' इत्यादौ ॥

तृचाः प्रउगे ॥ १० ॥

प्रउगार्थं प्रतीकेषु गृह्यमाणेषु तृचा एव सर्वे ग्रहीतव्याः ॥

सर्वाहर्गणेषु तायमानरूपाणां प्रथमादह्नः प्रवर्त्तेते अभ्यासातिप्रैषौ ॥ ११ ॥

तायमानं विस्तीर्यमाणमित्यर्थः। एवम्भूतस्य क्रतोः रूपं तायमानरूपं। सेयमन्वर्था संज्ञा अष्टानामभ्यासादीनामहरहः शस्यान्तानां। तेषां मध्ये अभ्यासातिप्रैषसंज्ञे द्वे तायमानरूपे सर्वेष्वहर्गणेषु प्रथममहरारभ्य सर्वेष्वहःसु प्रवर्त्तेते। अहर्गणग्रहणं अहीनेष्वप्यस्य विधेः प्रापणार्थं। सर्वग्रहणमेकाहेष्वपि द्व्यहत्र्यहचोदितेषु प्रवृत्त्यर्थं। अस्मिन् सूत्रे द्वावर्थौ विधीयेते। सर्वेष्वहर्गणेषु तायमानरूपाणि भवन्तीत्येकोऽर्थः। तेषां मध्ये द्वे प्रथममहरारभ्य सर्वेष्वहःसु अभ्यासातिप्रैषौ प्रवर्त्तेते इत्यपरः। तेन साकमेधत्र्यहे सर्वेषां तायमानरूपाणां मध्यमेऽहनि प्रवृत्तिः साधिता भवति। अहर्गणेषु

सर्वेषां प्रवृत्तौ विहितायामितरेषां प्रवृत्तौ द्वितीयादिष्विति नियमादनयोः प्रथमारम्भोऽर्थसिद्ध एव। तत्र प्रथमादङ्क इति किमर्थं, उच्यते अस्येदं प्रयोजनं। मित्रावरुणयोरयने मासि मासि सुत्या भवन्ति नाहरहः। तत्र प्रथमेऽतिरात्रे हारियोजनकालेऽतिप्रैषे वक्तव्ये सति श्वःशब्देनाद्यशब्देन वा वक्तुं न शक्यते, अनेकाहव्यवहितत्वात् सुत्याकालस्य। तत्रापि कथञ्चिच्छ्वःशब्दलोपेनाप्यतिप्रैषो वक्तव्य इत्येवमर्थं प्रथमादङ्क इतिवचनं। अतिप्रैषस्वरूपमुक्तं, अभ्यासस्वरूपमाह ॥

अङ्क उत्तमे शस्त्रे परिधानीयाया उत्तमे वचन उत्तमं चतुरक्षरं द्विरुक्त्वा प्रणुयात् ॥ १२ ॥

उत्तमस्य शस्त्रस्याङ्क इतिविशेषणादङ्क एवोत्तमे शस्त्रे अभ्यासः कर्त्तव्यो नागन्तुके सोमातिरेकादिनिमित्त इति गम्यते। तस्मिञ्छस्त्रे परिधानीयायास्तृतीये वचने यदुत्तमं चतुरक्षरं तद्द्विरुक्त्वा प्रणुयादितिवचनात् पूर्ववचने प्रणवो न भवति। "यज्ञरिचे यज्ञरिचोंऽ३, ऐरयेथामैरयेथाम्३", इत्येवमाद्युदाहरणं ॥

द्वितीयादिषु त्यमूषु वाजिनन्देवजूतमिति तार्क्ष्यमग्रे निष्केवल्यस्य सूक्तानां ॥ १३ ॥

द्वितीयादिष्वहःस्वेतत्तायमानरूपं भवति। निष्केवल्यसूक्तानामग्रे त्यमूषु वाजिनन्देवजूतमिति सूक्तं, तार्क्ष्यशब्दवत्वा-

देव तत्सूक्तान्तार्द्धमित्युच्यते। तार्द्धवचनात् पादग्रहणेऽपि सू-क्तमेवेदं भवति। पादग्रहणन्तु सूक्तमपीदं सत्सूक्तग्रहणेन गृह्यत इत्येवमर्थं। अच समुच्चयार्थस्य चशब्दस्याभावादिदं निविद्धानीयं न भवति॥

जातवेदसे सुनवाम सोममित्याग्निमारुते जातवेदस्यानां ॥१४॥

द्वितीयादिष्वित्यनुवर्त्तते, अग्रे सूक्तानामिति च। आग्नि-मारुतमितिवचनमाज्यनिवृत्त्यर्थं। तत्रापि जातवेदस्यनिवि-त्संबन्धिसूक्तसमवाज्जातवेदस्यानामिति बहुवचनं जात्यभि-प्रायं। इदमपि तायमानरूपं॥

आरम्भणीयाः पर्यासान् कद्दतोऽहरहःशस्यानीति होत्र-का द्वितीयादिष्वेव॥१५॥

आरम्भणीयाः 'ऋजुनीतीनः' इत्याद्याः प्रातःसवने। माध्य न्दिने च 'अपप्राचः' इत्याद्याः। पर्यासाः 'प्रति वां सूर उदितः' इत्याद्याः। 'कस्तमिन्द्र त्वा वसुम्' इत्यादयः कद्वन्तः प्रगा-थाः। अहरहःशस्यानि 'सद्यो ह जात उद् ब्रह्मण्यभितष्टे वा' इत्येतानि। एतेषामारम्भणीयादीनाञ्चतुर्विंशेऽहनि शंसनमुक्तं, स्थानं च, संज्ञा च। अत्रैतेषां द्वितीयादिष्वहःसु प्रवृत्तिरुच्यते, तायमानरूपसंज्ञा च। एतान्यारम्भणीयादीनि होत्रकशस्त-

सम्बन्धितयैव चतुर्विंशेऽहनि विहितानि, तत्र किमिति होत्रकसम्बन्धः पुनर्विधीयते। उच्यते। नात्र होत्रकसम्बन्धः पुनर्विधातुमिष्टः, कस्तर्हि विधीयते। एषां द्वितीयादिष्वहःसु प्रवृत्तिरेव। होत्रकसम्बन्धस्त्वनूद्यते पर्यायविशेषणार्थं। तत्र द्विविधाः पर्याया दृश्यन्ते। केचिद्रात्रिपर्यायेषु केचिच्चतुर्विंशे। तत्र ये रात्रिपर्यायेषु उक्तास्ते होत्राहोत्रकैश्च सम्बन्धाः। ये चतुर्विंशे होत्रकैरेव ते सम्बन्धाः। आरम्भणीयादयश्च होत्रकैरेव सम्बन्धाः। तेनायमर्थः। यान्यारम्भणीयादीनि होत्रकाः शंसेयुरिति विधास्यन्ति तानि द्वितीयादिष्वहःसु शंसेयुरित्यर्थः। द्वितीयादिष्विति वर्त्तमाने पुनर्द्वितीयादिवचनं 'तानि सर्वाणि सर्वत्राऽन्यत्राह्न उत्तमात्' इत्यत्र सर्वाणि सर्वत्रेति वचनं यद्यहर्विशेषेणासंयुज्य विहितं तदुत्तममहर्वर्जयित्वाऽन्यत्र सर्वत्र प्राप्नुयादधिकारमनपेक्ष्यातस्तन्निवृत्त्यर्थं द्वितीयादिवचनं।

तानि सर्वाणि सर्वत्रान्यत्राह्न उत्तमात्॥ १६॥

यान्येतान्यभ्यासादीनि अहरहःशस्यान्तानि तायमानरूपाण्युक्तानि तान्युत्तमादह्नोऽन्यत्र कर्त्तव्यानि न तान्युत्तमेऽहनि कर्त्तव्यानीत्यर्थः। सोऽयमत्रैकोऽर्थः। अपरस्तु तानि सर्वाणि सर्वत्रेति। अयमभिप्रायः, केषुचिदेकाहेषु त्रिवृतो हीनस्तोमेषु ह्वचा एव सूक्तस्थानेषु विहितास्तान्येकाहानि कदाचिदहर्गणं प्राप्नुवन्ति। तत्राहरहःशस्यानामपि ह्वचत्वं प्राप्नोति तन्निवृत्त्यर्थमिदं वचनं। एतदुक्तं भवति। तानि सर्वत्र हीनस्तोमेऽपि

सर्वाणि भवेयुः। सर्वाणि कृत्स्नानि अनवखण्डितानीत्यर्थः। तेन द्वीनसोमेऽपि अहरहःशस्यानामनवखण्डनमहरहः शंसनं साधितं भवति। प्रकृतेष्वप्येतेषु तानीतिवचनमत्र वाक्यार्थद्वयमस्तीतिसूचनार्थं॥

वैकल्पिकान्यग्निष्टोमेऽहर्गणमध्यगते॥ १७॥

तायमानरूपाणि प्रकृतानि, तानि कानिचित् प्रथममहरारभ्योत्तममहर्वर्जयित्वा सर्वेष्वहःसु भवन्तीति तान्येव कानिचिद्द्वितीयादिषु तद्वर्जेष्वित्युक्तं। तत्राहर्गणेषु प्रकृतिभूतोऽग्निष्टोमः क्वचित् क्वचिद्वचनात् प्रवर्त्तते, स चोपदेशनिरपेक्षः शस्यं प्रतीत्युक्तं। तस्मिन्नहर्गणमध्यगतेऽग्निष्टोमेऽहर्गणान्तर्भावनिमित्तं यच्छस्त्रजातं तस्य प्राप्तावग्निष्टोमस्वरूपविरोधात् तन्न कर्त्तव्यमिति कश्चित् प्रतिभासः। उपदेशावगतसकलधर्मस्यापि अन्यत्र प्राप्तस्याहर्गणान्तर्भावादनियततन्त्रैर्धर्मैः सम्बध्यमानस्य नातीव स्वरूपविरोध इत्यपि कश्चित् प्रतिभासः। अनयोः प्रतिभासयोः कः श्रेयानिति निर्णेतुमशक्यमित्यभिप्रायेण वैकल्पिकानीत्युक्तवानाचार्यः। दुर्ज्ञेयत्वादस्य न्यायस्येत्यभिप्रायः। आदिमध्यगतयोरप्यस्य वैकल्पिकत्वस्य विशेषाभावात् मध्यगतशब्दः प्रदर्शनार्थः॥

अग्निष्टोमायनेषु वा॥ १८॥

वाशब्दः समुच्चयार्थः। अग्निष्टोमायनेषु चैवंनिर्बन्धा-

भावादनुष्ठानविकल्प एवेत्यर्थः। अग्निष्टोमैरेव येषु सत्रेषु अय-नं गमनं भवति तान्यग्निष्टोमायनानि येषु सर्वाण्यहानि अग्नि-ष्टोमा एव तेषु सर्वेष्वित्यर्थः॥

अन्यान्यभ्यासातिप्रैषाभ्यामिति कौत्सो विकृतौ तद्गुणभा-वात्॥ १९॥

यस्मिन् विषये प्रकृतानां पदार्थानां करणाकरणयोर्नि-र्णयाभावादव्यवस्थोक्ता तत्र तेषां मध्ये द्वयोः पदार्थयोर-साधारणेन हेतुना व्यवस्थोच्यते। अभ्यासातिप्रैषौ कर्त्तव्या-वेव विकृतौ। विकृताविति सत्रान्तर्भावात् विकृतिभावमा-पन्नेऽग्निष्टोम इत्यर्थः। कुतः, तद्गुणभावात्। तस्य गुणस्तद्गुणः तदिति गुणान्तर्गतोऽग्निष्टोम उच्यते। गुणशब्देनोपकारक-मङ्गमुच्यते। तद्गुणस्य भावस्तद्गुणभावः। तद्गुणभावात् तदुप-कारकत्वादित्यर्थः। तस्याभ्यासातिप्रैषौ तस्योपकारकौ। यस्मा-दुत्तराहःसन्तानमामन्त्रणञ्च ताभ्यां क्रियेते तस्मात् तौ नियमेन कर्त्तव्यौ। इतरथा तस्याङ्गः सत्रापन्नस्य वैगुण्यं स्यादिति। अत एव ताभ्यां अन्यान्येव वैकल्पिकानीति कौत्स आहेत्यर्थः॥

नित्यानि होतुरिति गौतमः सङ्घातादावनुप्रवृत्तत्वादच्यु-तशब्दत्वाच्च॥ २०॥

एवं कौत्सेन द्वयोर्नित्यत्व उक्ते गौतमस्त्वाभ्यासजातवेद-

स्थानां नित्यत्वमाह, होतुरिति। होतुर्ग्रहणं पदार्थत्रयोपलक्षणार्थं, न तत्कर्त्तव्यतयात्र कश्चिद्विशेष इति। उक्तेन प्रकारेणाभ्यासातिप्रैषयोरसाधारणं ब्रूमः। कर्त्तव्यतायामिदमप्यभ्यासे कारणमस्ति, मद्यातादावनुप्रवृत्तत्वादिति, आद्यमेवाहरारभ्य प्रवृत्तत्वादित्यर्थः। नानाकर्मसमुदायत्वात् सत्रस्य परस्परमन्त्यानापेक्षत्वात् समुदायिनामभ्यासस्य चाहःसन्तानप्रयोजकत्वादाद्यमेवाहरारभ्य प्रवर्त्तते। तदन्तर्भूतस्याग्निष्टोमस्यापि तत्प्रयोजनापेक्षातुल्योऽप्येवमयमस्मिन्नर्थे होतुस्त्वार्च्यजातवेदस्ययोरच्युतशब्दत्वं हेतुः॥

होत्रकाणामपि गाणगारिर्नित्यत्वात्सत्रधर्मान्वयस्य॥ २१॥

अभ्यासादीनां चतुर्णां नित्यत्वमुक्तं, इदानीमारम्भणीयादीनामपि नित्यत्वमुच्यते। होत्रकग्रहणमपि पूर्ववदेव पदार्थचतुष्टयोपलक्षणार्थं। एतान्यपि नित्यं कर्त्तव्यानि। सत्रधर्मान्वयस्य नित्यत्वात् सत्रेण सर्वधर्माणां समन्वयस्य नित्यत्वादयमभिप्रायः। तेषां सत्राहःसम्बन्धितया विधानमस्ति, क्वचिदपि निषेधो नास्ति, किमित्यग्निष्टोमेऽन्यस्मिन् वा न क्रियेरन्निति। एवमेषां करणेऽनध्यवसायोपक्रमेणाध्यवसानमेवोपसंहृतवानाचार्यः। *अन्यत्र सिद्धस्वरूपस्यान्यत्रातिदेशेन प्राप्तस्य विकृत्युपदेशानुसारेण स्वरूपविपर्यये न कश्चिद्दोष इति साधयितुमिति॥

---

* प्रसिद्धस्य रूपस्यान्यत्रातिदेशेनेति सं० पु०।

प्रगाथतृचसूक्तागमेष्वैकाहिकं तावदुद्धरेत्॥२२॥ ॥१॥

एतेषामागमे ऐकाहिकं प्रकृतिप्राप्तं तावन्मात्रमेवोद्धरे-न सर्वमित्यर्थः। त्रीणि त्रिवृन्त्यहान्यतिरात्र इत्यस्मिन्न-तिरात्रे ऐकाहिकमेव शस्त्रं प्राप्तं। तत्र कद्वत्प्रगाथागमे नि-त्यानां प्रगाथानामुद्धारः। तथा तत्रैव प्रातःसवने पर्यास-तृचागमेऽन्त्यानां तृचानामेवोद्धारः। तत्रैव माध्यन्दिनेऽहर-हःशस्त्रसूक्तागमे ऐकाहिकस्य सूक्तस्यैवोद्धारः। तावदिति-वचनादहरहःशस्त्रागमेऽपि एकस्यैव सूक्तस्योद्धारो न द्वि-तीयस्याप्यैकाहिकवचनं व्युत्क्रमस्थितस्याप्यैकाहिकस्यान्यागमे उद्धारसिद्ध्यर्थं। यथा संमदामयनगतेऽनिरुक्त एकाहे मैत्रा-वरुणस्य शस्त्रे सूक्तानां पुरस्तान्निविशमानमपि अहरहःशस्त्र-मन्त्यमप्यैकाहिकमेव बाधते। एवमन्यदप्येवंजातीयकमुदा-हरणं द्रष्टव्यं। एषां प्रगाथादीनामागन्तूनामैकाहिकैः प्रगा-थादिभिः कार्यैक्यानवगमान्नात्र समानजातीयपरिभाषा प्रवर्त्तत इति परिभाषान्तरमारब्धं॥

इत्युत्तरषट्कस्य प्रथमे प्रथमा कण्डिका॥ ॥

चतुर्विंशे होताऽजनिष्टेत्याज्यं ॥ १ ॥

सत्राणामित्यनुवर्त्तते। सत्रेषु प्रथममहः प्रायणीयं नाम, तच्च ज्योतिष्टोमातिरात्रः, स चोक्तः। इदानीं द्वितीयमहश्चतुर्विंशसंज्ञकमुच्यते। अत्र सर्वेष्वहःस्वेतेनाह्ना सुत्यानीति दीक्षणीयादिरुदवसानीयान्तो निर्दिष्टः, तत्र वचनान्न्यायाद्वा यदपोह्यते तद्वर्जमन्यत् सर्वं तदेव कर्त्तव्यं। अतस्तदेव शरीरमाश्रित्याहन्यहनि तस्यैव यावान् विशेषः स उच्यते, यन्नोच्यते तदैकाहिकमेवेति। अथास्मिंश्चतुर्विंशेऽहन्येतदाज्यं भवति ॥

आ नो मित्रावरुणा मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमयं वां मित्रावरुणा पुरुरुणा चिद्धस्ति प्रति वां सूर उदित इति षडहस्तोत्रिया मैत्रावरुणस्य ॥ २ ॥

षडहस्तोत्रिया इत्येतेषां संज्ञा। षडहशब्देन पृष्ठ्याभिप्लवौ उच्येते। तयोरिमे स्तोत्रिया इति षडहस्तोत्रियाः। एवं तु प्रवृत्तिनिमित्तमात्रमुक्तं। संज्ञैव केवलमत्र विवक्ष्यते संव्यवहारार्थं। स्तोत्रियवाच्यशब्दात् तृचत्वमेषां भवति। एते मैत्रावरुणस्य ॥

आयाहि सुषुमाहित इन्द्रमिद्गाथिनो बृहदिन्द्रेण सं हि दृक्षस आदह स्वधामन्वित्येका द्वे चेन्द्रो दधीचो अस्तुभि-

स्तिष्ठन्नोजसा सह भिंधि विश्वा अपद्विष इति ब्राह्मणाच्छंसिनः ॥ ३ ॥

तृतीयः स्तोत्रियः समाहार्यः, एकया द्वाभ्यां च। षडहस्तोत्रिया इत्यनुवर्त्तते ॥

इन्द्राग्नी आगतं सुतमिन्द्रे अग्ना नमो बृहत्ता ह्रुवे ययोरिदमियं वामस्य मन्मन इन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेत्यच्छावाकस्य ॥ ४ ॥

अत्रापि पूर्ववत् ॥

तेषां यस्मिंस्तुवीरन्स स्तोत्रियः ॥ ५ ॥

तेषामिति होत्रकाः ऋत्विज उच्यन्ते। यस्मिन्निति षडहस्तोत्रियाणां मध्ये यस्मिन्निति गम्यते। एतदुक्तं भवति। अनेकप्रकारेण चतुर्विंश उत्पन्नानां षडहस्तोत्रियाणां मध्ये यस्मिंस्तृचे स्तुवीरंश्छन्दोगा अन्यस्मिन् वा कस्मिंश्चित् स तेषां होत्रकाणां स्तोत्रियो भवति, स्तोत्रियधर्मैः सम्बध्यत इत्यर्थः। तेनेतरेऽपि तृचा एव स्तोत्रियधर्मरहिता होत्रकाणां भवन्तीति गम्यते। अनेन प्रकारेण चतुर्विंश उपपन्नानां षडहस्तोत्रियाणां सत्राधिकारात् सत्रसम्बन्धिहोत्रकोद्देशेन विधानात् सर्वाहःसु प्राप्तिः साधिता भवति। एवं व्याख्यायमाने एतत् सूत्रमर्थवद्भवति। इतरथा तेषामिति होत्रक-

संग्रहार्थं षडहस्तोत्रियसंग्रहार्थं च न वक्तव्यं, प्रकृतत्वाद्-स्मिन्नहनि। तथा यस्मिन्नस्तुवीरन्तस्य स्तोत्रिय इत्यपि न वक्तव्यं। अनुच्यमानेऽपि स एव स्तोत्रियो भवति छन्दोगप्रत्ययत्वात् तस्येति। अतस्तदप्यत्र न विधेयं। अतः षडहस्तोत्रियेभ्योऽन्यस्मिन्नपि यदि स्तुयुस्तुविंशेऽपि स एव स्तोत्रियः कर्त्तव्यः। एवमेतेषां सर्वार्थत्वप्रतिपादनपरमेवेदं सूत्रं व्याख्येयं, नान्यथेति सिद्धं। एवं सर्वेष्वहःसु प्रातःसवने स्तोत्रियस्थानोपाय उक्तः, अनुरूपस्थानोपायं दर्शयितुमाह॥

यस्मिंस्तुः सोऽनुरूपः॥ ६॥

यस्मिंस्तुः स्तुयुः सोऽनुरूपः कर्त्तव्यः। एवं सर्वेष्वहःसु द्रष्टव्यं। अत्रापि सत्राणामित्यनुवर्त्तते। तेन सत्रसम्बन्धिषु सर्वेष्वहःसु प्रायणीयेऽपि श्वःस्तोत्रिय एवानुरूपो भवति। नान्यः प्राकृतो लाक्षणिको वा॥

एकस्तोत्रियेष्वहःसु योऽन्योऽनन्तरः सोऽनुरूपो न चेत् सर्वोऽहर्गणः षडहो वा॥ ७॥

श्वःस्तोत्रियोऽनुरूप इत्युक्तं। यदा पुनरेकस्तोत्रियाण्यनेकान्यहानि तदा यावन्ति एकस्तोत्रियाणि तावद्भ्योऽनन्तरं यदहर्भिन्नस्तोत्रियं तस्मिन्यः स्तोत्रियः स सर्वेष्वेकस्तोत्रियेषु अनुरूपो भवति। अन्योऽनन्तर इत्युभयविशेषणं एकस्तोत्रि-

येभ्योऽनन्तरमेव यदा पुनरन्यः स्तोत्रियः तस्यैव यः स्तोत्रियः स पूर्वेष्वेकस्तोत्रियेष्वनुरूपो भवतीत्येवमर्थं। एतदेकस्तोत्रियत्वं होत्रकसम्बन्धितयैव ग्रहीतव्यं। तेषां चैकस्य द्वयोः सर्वेषां वा यावन्मात्रमेकस्तोत्रियत्वं भवति तावन्मात्रमेवायं विधिः प्रवर्त्तते। अन्यः स्वः यः स्तोत्रिय एव। एवमयं विधिः प्रवर्त्तते। यदि सर्वोऽहर्गण एकस्तोत्रियो न भवेत् न षडहो नवा पृष्ठ्याभिप्लवाख्यः तत्र यदा सर्वोऽहर्गण एकस्तोत्रियस्तदाऽन्यस्याऽनन्तरस्याभावादयं विधिर्न भवति। षडहयोरेकस्तोत्रियत्वे पर्युदासादेवायं विधिर्न भवति॥

ऐकाहिकस्तथा सति॥ ८॥

यदा सर्वोऽहर्गण एकस्तोत्रियः पृष्ठ्योऽभिप्लवो वा षडहस्तदैकाहिक एव वानुरूपो भवति नानन्तरः, अहर्गणस्य सर्वस्यैकस्तोत्रियत्वेऽन्यस्याऽनन्तरस्याभावादेवानन्तरो न भवति। एतत् किमिति न चेत् सर्वोऽहर्गण इति तत्पर्युदासः कृतः। तस्येदं प्रयोजनं ऐकाहिकानुरूपविधेः तस्यापि विषयत्वसिद्ध्यर्थं। अथ कस्मिंश्चिद्विषय एवं भवति। कानिचित्तोत्राणि चत्वारि वाहान्येकस्तोत्रियाणि, तदनन्तरं पृष्ठ्योऽभिप्लवो वा षडहः पूर्वैः सहैकस्तोत्रियस्तदनन्तरं च द्वित्राण्यहान्येकस्तोत्रियाणि ततो भिन्नस्तोत्रियस्तत्र कथं भवति। तत्रैवं भवति। षडहादुत्तरेष्वन्यतर एव भवति। षडहे ऐकाहिक

एव भवति। एवञ्च सति षडहात् पूर्वेष्वप्येकाहिक एव भवति, नानन्तरः। षडहव्यवधानादित्येवमर्थं तदेति वक्तव्ये तथा सतीत्युक्तं॥

अन्त्ये च॥९॥

अन्त्ये चाहनि पूर्वयोर्विध्योः प्रवृत्त्यसम्भवादेकाहिक एव भवति। एवं सति, अतिदेशादेवायमर्थः सिध्यति। अपवादश्च नास्ति, किमत्र वचनेनेति। अयमभिप्रायः, वचनादेव सर्वत्राऽनुरूपो भवति। नातिदेशेति ज्ञापनार्थं तत्प्रकटनार्थमनुरूपाधिकारे द्वितीयमनुरूपग्रहणं कृतं। अतः स्तोत्रियस्तावच्छन्दोगप्रत्यय एव। सर्वत्रास्मद्वचनं प्रायिकमेव। यत् पुनरनुरूपलक्षणविधानं तस्योत्तरे सवनेऽवकाशस्तस्यैवायमपवादः प्रातःसवने स्तोत्रियानुरूपाभ्यामन्यदेवातिदेशेन प्राप्नोतीति अनुरूपविधिप्रकटनार्थमारम्भं॥

ऊर्ध्वमनुरूपेभ्य ऋजुनीतिनो वरुण इन्द्रं वो विश्वतस्परि यत् सोम आसुते नर इत्यारम्भणीयाः शस्त्वा स्वान्स्वान् परिशिष्टानावपेरंश्चतुर्विंशमहाव्रताभिजिद्विश्वजिद्विषुवत्सु॥१०॥

ऋजुनीतीत्याद्या आरम्भणीयसंज्ञास्ता अनुरूपेभ्य ऊर्ध्वमेकैकामेकैकशः शंसेत्। पाठादेवोर्ध्वमनुरूपेभ्यः शंसने सिद्धे अनुरूपेभ्य इति वचनं नियमार्थं। अनुरूपेभ्य ऊर्ध्वमेता एव

शंसेयुः, नैकाहिकमिति। एताः शस्त्वा स्वान् स्वान् परि-शिष्टानावपेरन्। परिशिष्टा नाम षडहस्तोत्रियेषु स्तोत्रियत्वे-नानुरूपत्वेन वा गृहीताः। शिष्टान् शस्त्वेति वचनमस्मिन्नपि क्रमे ऐकाहिकनिवृत्त्यर्थं। स्वान् स्वानिति वचनं छन्दोग-वशात् षडहस्तोत्रियेभ्यो व्यतिरिक्ता एव स्तोत्रियानुरूपाश्च यदि भवेयुस्तदा परिशिष्टत्वं नास्तीति नोच्यन्ते तदाप्यावा-पसिद्ध्यर्थं। तेन परिशिष्टान् सर्वान् स्वान् स्वान् षडहस्तो-त्रियानावपेरन्नित्यर्थः। अयमावापश्चतुर्विंशादिपञ्चस्वहःसु कर्त्तव्यः। प्रकृतत्वेऽपि चतुर्विंशग्रहणं परिसङ्ख्याशङ्कानिवृ-त्त्यर्थं॥

सर्वस्तोमसर्वपृष्ठेषु च॥११॥

सर्वस्तोमो नाम यस्मिन् क्रतौ त्रिवृदादयस्त्रयस्त्रिंशपर्यन्ताः षडहस्तोमा भवन्ति। रथन्तरादीनि रैवतपर्यन्तानि षट् सा-मानि यस्मिन् भवन्ति स सर्वपृष्ठ इत्युच्यते। सर्वस्तोमसर्वपृष्ठेषु चायमावापः कर्त्तव्यः। अभिजितः सर्वस्तोमत्वाद्विश्वजितः सर्व-पृष्ठत्वादेवावापे सिद्धे पूर्वसूत्रे तयोर्ग्रहणं असर्वस्तोमासर्वपृष्ठयो-रपि प्रापणार्थं॥

ऊर्ध्वमावापात् प्रति वां सूर उदिते व्यन्तरिक्षमतिरत्ध्या वाश्वस्य सुन्वत इति तृचाः पर्यासाः॥१२॥

ऊर्ध्वमावापादिति वचनं पूर्ववदैकाहिकशस्त्रनिवृत्त्यर्थं।

आवापादूर्ध्वं पर्यासास्तृचाः शंस्तव्याः । 'प्रति वां सूरः' इत्याद्याः पर्याससंज्ञा भवन्ति । अन्वर्थसंज्ञेयं, पर्यासशब्दस्यान्तवाचित्वात् । तेन एवमन्तं शस्त्रं भवति, अत ऐकाहिकस्य क्वचिदपि प्रवृत्तिर्नास्तीति सिद्धं । समानजातीयत्वादेभिः शस्त्रैरैकाहिकानि शस्त्राणि निवर्त्तन्ते । ऊर्ध्वमेभ्य इति वक्तव्ये ऊर्ध्वमावापादिति वचनं इदमावापस्थानमितिज्ञापनार्थं । तेनान्यदप्यावप्तव्यं अस्मिन्नेव स्थान आवप्तव्यमिति सिद्धं ॥

स त्वेव मैत्रावरुणस्य षडहस्तोत्रिय उत्तमः सपर्यासः ॥ ॥ १३ ॥

उत्तरविवक्षार्थोऽयमनुवादः, प्राप्तिभेदप्रदर्शनार्थश्च । तेनाऽसति प्राप्तिभेदे वक्ष्यमाणो विधिर्न भवति । यथा 'ईळेद्यावीयमावर्त्तयेत्' इत्येवमादौ ॥

तद्दैवतमन्यं पूर्वस्य स्थाने कुर्वीत ॥ १४ ॥

पूर्वस्येत्युत्तमस्य षडहस्तोत्रियस्येत्यर्थः । तद्दैवतं मित्रावरुणदैवतं । 'अन्यं तृचं कुर्वीत गायत्रं प्रातःसवने' इति श्रुतेः । गायत्रश्च स भवति । आग्नेयं प्रातःसवनमिति । अस्यापवादो 'मैत्रावरुणं शंसति' इत्येवं मैत्रावरुणत्वे सिद्धे यत् तद्दैवतग्रहणं करोति तज्ज्ञापयति, देवतैवात्रादरणीया नान्यानि नियमलिङ्गादीनीति । स चान्यस्तृचो 'यदद्य सूरः'

इत्ययं सम्भवति। यदा पुनस्तामस्मिपेत्यनुरूपः क्रियते तदा काव्येभिरदाभ्येत्ययं तृचः कर्त्तव्यो यदस्य स्वर इति॥

अन्यत्रापि सन्निपातेन तृचं सूक्तं वाऽनन्तर्हितमेकासने द्विःशंसेत्॥ १५॥

न केवलं षडहस्तोत्रियपर्याससूक्तस्य सन्निपात एवायं विधिर्भवति किं तर्हि अन्यत्रापि सर्वस्य तृचस्य सूक्तस्य वा विधिद्वयेन प्राप्तस्य सन्निपातेन द्विःशंसने प्राप्ते अव्यवायेनैकासनेन द्विःशंसेत्। तृचसूक्तग्रहणमेकस्य द्वयोर्वा नायं विधिः स्यादित्येवमर्थं। अनन्तर्हितवचनाद्व्यवधानवचनं द्विःशंसनं न प्रतिषिध्यते। एकासन इत्यविवक्षितं। एकासनं भिन्नासनं वाऽस्तु अनन्तर्हितं न द्विःशंसेदित्यत्र तात्पर्यं, न त्वन्यत्र तृचसूक्तयोः सान्निपाते पूर्वस्य स्थानेऽन्यत्तद्दैवतं कर्त्तव्यमित्ययमेवार्थः प्रकरणाद्विधेयतयाऽवगम्यते। द्विःशंसनप्रतिषेधस्यार्थिकत्वेनापि व्याख्यातुं शक्यते, कथमत्र द्विःशंसनप्रतिषेधे तात्पर्यावाप्तिर्भवति। तत्रोच्यते। यद्यत्र पूर्वस्य तद्दैवतविधिरभिप्रेतः स्यादन्यत्रापि सन्निपाते तृचसूक्तयोः अनन्तर्हितयोरित्येव सूत्रं प्रणेतव्यं स्यात् तथा न प्रणीतं, अतो द्विःशंसनप्रतिषेध एवात्र तात्पर्येण विधीयते, न प्रकरणप्राप्ततद्दैवतविधानं नियतमिति गम्यते। क्वचित् पूर्वस्य स्थाने भवति, क्वचिदुत्तरस्य स्थाने, क्वचिदेकस्य लोपः, पूर्वस्योत्तरस्य वेति प्राप्तिप्रमाणबलाबलचिन्तया योजनीयं॥

महावालभिदं चेच्छंसेदूर्ध्वमनुरूपेभ्य आरम्भणीयाभ्यो वा नाभाकांस्तृचानावपेरन् गायत्रीकारं॥ १६॥

प्रातःसवनिकशस्त्रप्रसङ्गादिदमुच्यते। यस्मिन् क्रतौ तृतीयसवने मैत्रावरुणो महावालभिदं शंसेत् तस्मिन् प्रातःसवने होत्रकाः स्वे स्वे शस्त्रे ऊर्ध्वमनुरूपेभ्य आरम्भणीयाभ्यो वा नाभाकांस्तृचानावपेरन् गायत्रीकारं शंसेयुः, ताः षट्पदा जगत्यः। द्वे द्वे गायत्र्यौ कृत्वा शंसेयुरित्यर्थः। नाभाका इत्यपि नाम्ना व्यपदेशः स्तोमातिशंसने तासां षट्पदानामेव ग्रहणार्थो न त्रिपदानामिति॥

सखायः परिषस्वज इति मैत्रावरुणो यः ककुभो निधारय इति वा पूर्वोष्ट इन्द्रोपमातय इति ब्राह्मणाच्छंसी ता चि मध्यंभराणामित्यच्छावाकः॥१७॥　॥२॥

मैत्रावरुणस्य प्रतीकविकल्पः॥

इत्युत्तरषट्कस्य प्रथमे द्वितीया कण्डिका॥ ॥

---

मरुत्वतीये प्रैतु ब्रह्मणस्पतिरुत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्या वाऽऽवपते पूर्वौ नित्यात्॥ १॥

मरुत्वतीय इत्यधिकारार्थः। चतुर्विंशे यन्मरुत्वतीयं शस्त्रं तस्मिन् नित्याद्ब्राह्मणस्पत्यात् पूर्वावेतौ ब्राह्मणस्पत्यौ भवतः। ब्राह्मणस्पत्यवचनादेतयोरपि प्रगाथत्वं गम्यते। आवपतिग्रहणं प्राकृतस्याबाधनार्थं। सर्वत्र चावपतिग्रहणस्येदमेव प्रयोजनं॥

बृहदिन्द्राय गायत नकिः सुदासो रथमिति मरुत्वतीया ऊर्ध्वं नित्यात्॥ २॥

आवपत इत्यनुवर्त्तते॥

कया शुभेति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेत्॥ ३॥

'कया शुभा' इति च सूक्तं मरुत्वतीये 'जनिष्ठा उग्रः' इत्यस्मात् पुरस्ताच्छंसेत्। चशब्दो निविद्धानीयत्वसमुच्चयार्थः। तेन तार्क्ष्यमनिविद्धानीयं भवति। तत्र समुच्चयार्थस्य चशब्दस्याभावात् मरुत्वतीयाधिकारे पुनर्मरुत्वतीयग्रहणं 'भुव इन्द्रमिद्रवः' इत्यस्मिन् सूत्रे विशेषसिद्ध्यर्थं॥

एवं स्थितान् प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहं पुनः पुनरावर्त्तयेयुः ॥ ४ ॥

यथा चतुर्विंशे एते प्रगाथा स्थिता एवमेवं स्थितानेतान् प्रगाथान् पृष्ठ्याभिप्लवयोः षडहयोरहन्यहन्यावर्त्तयेयुरित्यर्थः। आवर्त्तयेयुरिति बहुवचनमविवक्षितं। एवं स्थितवचनमेषां षण्णां एवंक्रमिकाणामेव प्रवृत्त्यर्थं, इतरथा ऐकाहिकयोरत्र विधानाभावात् तयोः प्रवृत्तिर्न स्यात्, प्रवृत्तौ च चतुर्विंशोक्तो क्रमो न लभ्यते। तेन उभयसिद्ध्यर्थमेवंस्थितवचनं। अन्वहवचनमस्य विधेः षडहावयवभूताऽहर्धर्मत्वसूचनार्थं। तेन वैश्वदेव्यास्थाने प्रथमं पृष्ठ्याहरित्यादौ षडहावयवभूताहरतिदिष्टेऽयं विधिर्भवति। पुनः पुनरितिवचनं द्वयोः षडहयोस्त्रिष्वहःसु प्रगाथपर्याये समाप्ते पुनः क्रियायां प्रमाणं नाप्नोति पुनः पुनरिति वीप्सावचनं पृष्ठ्ये चाभिप्लवे च पुनःक्रियासिद्ध्यर्थं ॥

एकैकं ब्राह्मणस्पत्यानां ॥ ५ ॥

एते प्रगाथाः षडहयोरहन्यहनि कर्त्तव्या इत्युक्तं। तत्र प्रत्यहं सर्वेषु प्राप्तेषु एकैको नियम्यते। षडहयोरेकैकस्मिन्नहनि ब्राह्मणस्पत्यानामेकैक एव कर्त्तव्यः ॥

एवं मरुत्वतीयानां ॥ ६ ॥

एवं मरुत्वतीयानामप्येकैकमेव कुर्यात् ॥

ध्रुव इन्द्रनिहवः ॥ ७ ॥

द्वितीयं मरुत्वतीयग्रहणं अत्र सम्बध्यते। तेनायमर्थः। मरुत्वतीये शस्त्रे इन्द्रनिहवप्रगाथो ध्रुवो भवति। ध्रुवशब्देन चात्र प्राप्तितः प्रयोगतश्चाविचालित्वमुच्यते न संज्ञामात्रं। मरुत्वतीयग्रहणं उत्तरस्य सूत्रस्य सर्वार्थत्वाय। तेन सर्वेषु शस्त्रेषु धाय्या ध्रुवा भवन्ति। इतरथा मरुत्वतीयाधिकारात् धाय्या अपि मरुत्वतीये एव ध्रुवाः स्युः नान्येषु शस्त्रेषु। अतो द्वितीयं मरुत्वतीयग्रहणं एतदर्थं कृतं ॥

धाय्याश्च ॥ ८ ॥

गतार्थमेतत्, नेदं ध्रुवत्वमत्र विधीयते। प्राप्तितः प्रयोगतश्चाविचालित्वमात्रमत्रानूद्यते। तेनेन्द्रनिहवधाय्याप्रकारमन्यदप्यत्रैव न देवपत्नीहृचादि अविचालिध्रुवशब्देन गृह्यते। तेनाग्निष्टुतिविचालिशब्देनैवंप्रकारादन्यदेव ग्रहीतव्यं। मरुत्वतीयमुक्त्वा निष्केवल्यं वक्तुमाह ॥

बृहत् पृष्ठं ॥ ९ ॥

चतुर्विंशेऽहनि भवतीति शेषः ॥

रथन्तरं वा ॥ १० ॥

छन्दोगप्रत्ययसिद्धस्य वचनमुत्तरविवक्षार्थं ॥

तयोरक्रियमाणस्य योनिं शंसेत्॥ ११॥

तयोर्बृहद्रथन्तरयोर्यत् पृष्ठस्थाने न क्रियते बृहद्रथन्तरं वा तस्य योनिं शंसेत्। बृहतो योनिः 'त्वामिद्धि हवामहे' इति तृचः, रथन्तरस्य योनिः 'अभि त्वा शूर नोनुमः' इति तृच एव॥

वैरूपवैराजशाक्वररैवतानाञ्च॥ १२॥

अक्रियमाणस्येत्यनुवर्त्तते। अस्मिन्नहनि निष्केवल्ये एषामपि योनीः शंसेत्, अक्रियमाणस्येत्यनुवृत्तिसामर्थ्यात्, चतुर्विंशातिदिष्टविश्वजिदतिदेशादप्तोर्यामे वैराजस्य पृष्ठस्थाने क्रियमाणस्य योनिशंसनं न भवतीति गम्यते। चतुर्विंशवचनसामर्थ्यादसत्यप्यस्ययोनिभावे एषां योनिशंसनं कर्त्तव्यं। वैरूपादीनां योनीर्दर्शयितुमाह॥

पृष्ठ्यस्तोत्रिया योन्यः॥ १३॥

पृष्ठ्ये षडहे तृतीयादिष्वहःसु निष्केवल्येषु स्तोत्रिया विहितास्ता वैरूपादीनां योन्य इति वेदितव्याः॥

अर्धर्चाः॥ १४॥

ता योन्योऽर्धर्चशः शंस्तव्याः। पुनरादानन्यूंखादयो विकारा योनिशंसने न कर्त्तव्या इत्यर्थः॥

तासां विधानमन्वक्षं ॥ १५ ॥

'पृष्ठ्यस्तोत्रिया योन्यः' इत्युक्तं, पृष्ठ्यानां बहुत्वात् कस्य पृष्ठ्यस्तेति तन्निर्णयार्थमिदमुच्यते। यासां योनीनां यस्य पृष्ठ्यस्तोत्रियस्य निष्केवल्यस्तोत्रियत्वेनान्वक्षं विधानमस्ति तासां योनीनामत्र शंसनं कर्त्तव्यं। स च पृष्ठ्यः प्रत्यक्षंपृष्ठ्यः तत्र हि तासां विधानमन्वक्षमस्तीति सिद्धं॥

ताभ्य ऊर्ध्वं सामगाथान् ॥ १६ ॥

ताभ्यो योनिभ्य ऊर्ध्वं सामप्रगाथान् शंसेत्। अस्यायं सामप्रगाथ इत्याह॥

उक्तो रथन्तरस्य ॥ १७ ॥

यदुक्तं 'पिबा सुतस्य' इति स रथन्तरस्य॥

उभयं प्रणवश्च न इति बृहतः ॥ १८ ॥

अयं बृहतो वेदितव्यः। एवं चेत् प्रकृतावपि बृहतः प्रवेशेऽयमेव सामप्रगाथः प्राप्नुयात्। अस्तित्यत एवायमर्थः। एवं चेत् प्रकृतावेवायं प्रगाथः कस्मान्नोपदिश्यते। येषु क्रतुषु रथन्तरादिषट्कव्यतिरिक्तं यत् किञ्चित् साम पृष्ठ्यस्थाने भवति तेषु पिबवानेव सामप्रगाथो भवतीत्येवमर्थं प्रकृतावनुपदेशः॥

इन्द्र त्रिधातु शरणं त्वमिन्द्रं प्रतूर्त्तिषु मोषु त्वा वाघतश्च नेति सद्विपद उपसमस्येद् द्विपदामिन्द्रमिद्देवतातय इतीतरेषां ॥ १९ ॥

'मोषु त्वा वाघतश्च न' इत्ययं प्रगाथो 'रायस्कामः' इत्यनया द्विपदया सह वर्त्तते। तस्याश्च शंसनप्रकारः पूर्वस्मिन्नर्धर्चे प्रणवमकृत्वाऽर्धर्चान्तेन वर्णेन द्विपदाद्यवर्णं यथाशक्तं सन्दध्यात् 'रथेन·पादमादधूरायस्कामः' इति। सोऽयमुपसमासः, एवं कृत्वा शंसेत्। एते वैरूपादीनां सामप्रगाथाः, तानपि शंसेत्। एतेषां सामान्वयेन विधानात् तस्मिन् कृतौ स एव भवति प्रगाथः ॥

पृष्ठ्य एवैकैकमन्वहं ॥ २० ॥

सामप्रगाथानां सामान्वयित्वेन विधानात् पार्ष्ठिकेष्वहःस्वन्येष्वपि सर्वेष्वहःसु रथन्तरादिषु सामसु पृष्ठ्यस्थाने निविशमानेषु स्वस्वसामप्रगाथो भवतीत्यत्र सन्देहो नास्ति। वचनस्येदं प्रयोजनं पार्ष्ठिकेष्वहःसु रथन्तरादिष्वप्रयुज्यमानेष्वप्येते सामप्रगाथा नियमेन कर्त्तव्या इत्येतत् ॥

तदिदासेति च पुरस्तात् सूक्तस्य शंसेत् ॥ २१ ॥

'इन्द्रस्य नु वीर्याणि' इत्येतस्मात् पुरस्तादित्यर्थः। चशब्दप्रयोजनमुक्तं ॥

उक्थपात्रं चमसांश्चान्तरातिग्राह्यान् भक्षयन्ति निष्केवल्ये ॥ २२ ॥

निष्केवल्याधिकारे पुनर्निष्केवल्यग्रहणं सत्रसम्बन्धिसर्वनिष्केवल्यसम्प्रत्ययार्थं। तेनायमर्थः। सत्रसम्बन्धिषु सर्वेषु निष्केवल्येषूक्थपात्रे भक्षिते चमसेष्वभक्षितेषु अन्तरातिग्राह्या नाम ग्रहाः सन्ति तांस्तत्र प्रतिभक्षयेयुः॥

नित्यो भक्षजपः ॥ २३ ॥

उत्तरसूत्रेण भक्षधर्मेषु प्राप्तेषु मन्त्रस्यायमपवादः॥

षोडशिपात्रेण भक्षिणः ॥ २४ ॥ ॥ ३ ॥

षोडशिपात्रेण भक्षिणो व्याख्याताः। भक्षिषु विधीयमानेषु तद्विशेषणं भक्षणमपि विहितं भवति। तच्च विधीयमानं सधर्मकं विधीयते। अतएव मन्त्रापवादः पूर्वसूत्रे कृतः। अनेन न्यायेन दधिघर्मेऽपि प्राणभक्षः सिद्धो भवति॥

इत्युत्तरषट्कस्य प्रथमे तृतीया कण्डिका॥ ०॥

होत्रकाणां ॥ १ ॥

माध्यन्दिने सवने होतुर्विधिरुक्तः, इदानीं होत्रकाणां विधिरुच्यत इति सम्बन्धः। इति मैत्रावरुणस्येति ब्राह्मणाच्छंसिन इत्यच्छावाकस्येत्येतैरेव होत्रकसम्बन्धे सिद्धे होत्रकाणामितिवचनं चतुर्विंशेनैषां स्तोत्रियानुरूपाणां सङ्कोचनिवृत्त्यर्थं। तेन *शस्त्रसम्बन्धिनां होत्रकाणां माध्यन्दिने सवने एते स्तोत्रियानुरूपा वेदितव्याः। ननु सर्वत्र छन्दोगप्रत्यय एव स्तोत्रियः तत्र किं वचनेनेति। अनुरूपनियमार्थं, यदि 'यच्चिद्धि त्वा' इत्यत्र स्तुयुः तदा 'माचिदन्यत्' इत्ययमेवानुरूपो भवति, नान्यो लाक्षणिक इत्येवं सर्वत्र प्रयोजनं द्रष्टव्यं ॥

कया नश्चित्र आभुवत् कया त्वं न ऊत्या माचिदन्यद्विशंसत यच्चिद्धि त्वा जना इम इति स्तोत्रियानुरूपा मैत्रावरुणस्य ॥ २ ॥

एतत् स्तोत्रियानुरूपयुगलद्वयं मैत्रावरुणस्य ॥

तं वोदस्ममृतीषहन्तत्वायामि सुवीर्यमभिप्रवः सुराधसं प्रसुश्रुतं सुराधसं वयं घत्वा सुतावन्तः कईं वेद सुते सचा विश्वाः पृतना अभिभूतरं नरं तमिन्द्रं जोहवीमि या इन्द्र भुज आभर इत्येका द्वे चेन्द्रो मदाय वावृधे मदे मदे हि नो ददिः

* सत्रेति सं०२ पु० पाठः।

सुरूपकृत्नुमूतये शुष्मिन्तमन्न ऊतये आयन्त इव सूर्यं ब-
एमहाँ असि सूर्योदु त्यद्दर्शतं वपुरुदुत्ये मधुमत्तमास्त्वमिन्द्र
प्रतूर्त्तिषु त्वमिन्द्र यशा असीन्द्र क्रतुं न आभरेन्द्र *ज्येष्ठं न
आभरा त्वा सहस्रमा शतं मम त्वा सूर उदित इति ब्राह्म-
णाच्छंसिनः ॥ ३ ॥

एतान्येकादश युगलानि चतुर्थस्यानुरूपः संहार्यः ॥

तरोभिर्वो विदद्वसुं तरणिरित्सिषासति त्वामिदाह्यो नरो
वयमेनमिदाह्यो यो राजा चर्षणीनां यः सत्राहा विचर्षणिः
स्वादोरित्था विषूवत इत्था हि सोम इन्मद उभे यदिन्द्र
रोदसी अव यत्त्वं शतक्रतो नकिष्टं कर्मणा न शन्न त्वा वृह-
न्तो अद्रय उभयं शृणवच्च न आवृषस्व पुरूवसो कदाचन
स्तरीरसि कदाचन प्रयुच्छसि यत इन्द्र भयामहे यथा गौरो
अपाकृतं यदिन्द्र प्रागपागुदग् यथा गौरो अपाकृतमित्य-
च्छावाकस्य ॥ ४ ॥

एतानि दश युगलानि स्तोत्रियानुरूपाणां रूपं ॥

स्तोत्रियानुरूपाणां यद्यनुरूपे स्तुवीरन्स्तोत्रियोऽनुरूपः ॥ ५ ॥

स्तोत्रियानुरूपाधिकारे पुनः स्तोत्रियानुरूपवचनं सर्वेषु
स्तोत्रियानुरूपेष्वस्य विधेः प्रापणार्थं । तेन माध्यन्दिने सवने

* ज्येष्ठेमेति सं०२ पु० पाठः ।

तृतीयसवने च होतुर्होत्रकाणां चायं विधिर्भवतीति वेदितव्यं। प्रातःसवनमतिक्रम्यास्य विधेरुक्तत्वात् तत्रायं विधिर्न भवति ॥

ऊर्द्ध्वं स्तोत्रियानुरूपेभ्यः कस्तमिन्द्र त्वा वसुं कन्नव्यो अतसीनां कदून्वस्याकृतमिति कद्वन्तः प्रगाथाः ॥ ६ ॥

कद्वन्त इति प्रगाथानां संज्ञा। ते च होत्रकाणां यथासङ्ख्येन भवन्ति ॥

अपप्राच इन्द्र विश्वाँ अमित्रान् ब्रह्मणा ते ब्रह्मयुजा युनज्म्युरुन्नो लोकमनुनेषि विद्वानिति कद्वद्भ्य आरम्भणीयाः ॥७॥

आरम्भणीया इत्यासामृचां संज्ञा। ता अपि यथासङ्ख्येन होत्रकैः सम्बध्यन्ते। कद्वद्भ्य इति पञ्चमीनिर्देशादूर्ध्वमित्यध्याहियते। कद्वद्भ्य ऊर्ध्वं आरम्भणीया भवन्तीति ॥

ऊर्ध्वमारम्भणीयाभ्यः सद्योहजात इत्यहरहः शस्यं मैत्रावरुणोऽस्मा इदु प्रतवसे शासदह्निरितीतरावहीनसूक्ते ॥ ८ ॥

आरम्भणीयाया ऊर्ध्वं मैत्रावरुणः सद्योहजात इत्येतत् सूक्तमहरहःशस्यं अहीनसंज्ञकं शंसेत्। ब्राह्मणाच्छंस्यच्छावाकौ द्वौ आरम्भणीयाभ्यामूर्ध्वमस्मा इदु प्रतवसे शासदह्निरित्येते सूक्ते अहीनसूक्तसंज्ञके शंसेयातां ॥

आसत्यो यात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुण उदु ब्रह्माण्यभितष्टे वेतीतरावहरहःशस्ये ॥ ९ ॥

आसत्यो यात्वित्येतत् सूक्तमहीनसूक्तसंज्ञकञ्च द्वितीयं मैत्रावरुणः शंसेत्। ब्राह्मणाच्छंस्यच्छावाकौ उदु ब्रह्माण्यभितष्टे वेत्येते सूक्तेऽहरहःशस्यसंज्ञके द्वितीये सूक्ते शंसेयातां ॥

नूनं सात इत्यन्तमुत्तमं ॥ १० ॥

एतेषां सूक्तानां यदुत्तमं सूक्तं अभितष्टीयन्तत् नूनं सात इत्यन्तं भवन्ति। ऋगागमेऽप्युद्धाराभावादधिकेयं भवति। तेन शुनंहुवीयाया उद्धाराभावे सति सक्तदिन्द्रं निराहेति ब्राह्मणवचनमुपपन्नं भवति ॥

अहीनसूक्तानि षडहस्तोत्रियानावपन्तु ॥ ११ ॥

आसत्यो यातस्मा इदु प्रतवसे शासद्वह्निरित्येतान्यहीनसूक्तानि। तेषां प्रवेशविषय उच्यते। यान्यहानि षडहस्तोत्रियवन्ति तेष्वेतानि भवन्ति। चतुर्विंशमहचारिष्वित्यर्थः। षडहस्तोत्रियावापसहचारीणीत्युक्तं भवति। इदानीं तृतीयसवनमुच्यते ॥

उदुष्य देवः सविता हिरण्ययेति तिस्रस्ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवं ॥ १२ ॥

आर्भवमैकाहिकमेव वैश्वदेवं शस्तं भवति ॥

पृक्षस्य वृष्णो वृष्णे शर्द्धाय यज्ञेन वर्द्धतेत्याग्निमारुतं ॥ १३ ॥

एतदाग्निमारुतं शस्त्रं भवति ॥

अग्निष्टोम इदमहः ॥ १४ ॥

एतच्चतुर्विंशमहरग्निष्टोमसंस्थं भवति । आग्निमारुतान्तमित्यर्थः ॥

उक्थ्यो वा ॥ १५ ॥  ॥ ४ ॥

अयं चतुर्विंश उक्थ्यसंस्थो वा भवेत् । अस्मिन्नहनि यत् प्रत्यक्षमाम्नातं तस्मादन्यत् सर्वमैकाहिकं भवति । एवं सर्वत्र प्रत्यक्षमाम्नानादन्यत् स्वप्रकृतितो ग्रहीतव्यं ॥

इत्युत्तरषट्कस्य प्रथम चतुर्थी कण्डिका ॥ * ॥

---

अभिप्लवपृष्ठ्याहानि ॥ १ ॥

अभिप्लवश्च पृष्ठ्यश्च अभिप्लवपृष्ठ्यौ, तयोरहान्यभिप्लवपृष्ठ्याहानि, अत ऊर्ध्वं वक्ष्यन्त इति सम्बन्धः । अभिप्लवस्य पूर्वनिपातो गवामयने तस्य पूर्वप्रयोग इत्यनेनाभिप्रायेण ॥

रथन्तरपृष्ठान्ययुजानि ॥ २ ॥

अभिप्लवपृष्ठ्याहान्यधिकृतानि तयोर्यान्ययुजानि विषमाणि तानि रथन्तरपृष्ठानि भवेयुः। तेषु रथन्तरसाम पृष्ठस्थाने भवतीत्यर्थः ॥

बृहत्पृष्ठानीतराणि ॥ ३ ॥

इतराणि युग्मानि समानि, तेषामेव द्वितीयचतुर्थषष्ठान्यधिकृतान्यहानि यानि तानि बृहत्पृष्ठानि स्युस्तेषु बृहत् साम पृष्ठस्थाने भवतीत्यर्थः ॥

तृतीयादिषु पृष्ठ्यस्यान्वहं द्वितीयानि वैरूपवैराजशाक्वररैवतानि ॥ ४ ॥

पृष्ठ्यस्याहानि तृतीयादीन्यहानि चत्वारि तेषु वैरूपादीनि चत्वारि सामानि यथासङ्ख्येन रथन्तरस्य बृहतश्च द्वितीयानि पृष्ठ्यानि भवन्ति। द्वितीयानीतिवचनं बृहद्रथन्तरयोरबाधनार्थं। अन्वहवचनमेषामहर्धर्मत्वप्रतिपत्त्यर्थं। तेन पृष्ठ्यादितरतिदिष्टेष्वप्येष धर्मो भवतीति गम्यते ॥

तेषां यथास्थाने क्रियायां योनीः शंसेत् ॥ ५ ॥

पृष्ठ्याभिप्लवाहानि विषमाणि रथन्तरपृष्ठानि। समानि

बृहत्पृष्ठानि । पृष्ठ्ये तृतीयादीनि वैरूपादिभिर्द्विःपृष्ठ्यानो-त्युक्तं । एवं यदि छन्दोगाः कुर्युः अस्माभिरप्येषां साम्नां योनिभिर्निष्केवल्यानां स्तोत्रियाः कर्त्तव्या भवन्तीत्येतदवगतं । इदानीमिदमुच्यते । यद्येतानि निष्केवल्यस्य स्थाने न कुर्युः तदास्माभिस्तस्मिन्नहनि तदीया योनिर्योनिस्थाने शंस्तव्येति यथास्थानवचनं । तस्मिन्नहनि पृष्ठ्यस्थाने यस्य चाप्यक्रिया सैव योनिशंसनस्य निमित्तं नाहःसम्बन्धोत्येवमर्थं । तेन पृष्ठ्य-स्थानादन्यत्र क्रियायामप्यक्रिया चेत् पृष्ठ्यस्थाने शंस्तव्यैव योनिरिति वेदितव्यं । तयोरक्रियमाणस्येत्यत्र यथास्थान-वचनमन्तरेणापि सिध्यति । अयमर्थः । तत्रैकैकस्यैव साम्न-स्तत्कार्यसम्बन्धितयोक्तत्वादक्रियमाणस्येत्युक्तेऽपि कार्यविशेषस-म्बन्धो गृह्यत एव । तत्र पुनः केषाञ्चिद्द्विसामत्वात् द्वाभ्यां सामभ्यां वा तत्कार्यं कुर्युः । एकेन वा तस्मिन् कार्ये कृते-ऽन्यदन्यस्मिन् कार्ये कुर्युरिति कार्यविशेषसम्बन्धप्रापको ना-वगम्यते । अक्रियायामित्येतावत्युक्ते द्विसामसम्बन्धित्वनियत-त्वात्कार्यस्याहःसम्बन्धिनि अक्रियेति कस्यचिद्भ्रान्तिः स्यात्, तदपनोदनार्थं यथास्थानवचनं कृतं ॥

सर्वत्र चास्ययोनिभावेऽन्यत्राश्विनात् ॥ ६ ॥

तेषां योनीः शंसेदित्यनुवर्त्तते । सर्वत्रेत्यनेन पृष्ठ्याभिप्ल-वाभ्यामन्यत्रापि पृष्ठ्यस्थानादन्यत्रापीत्येतदुभयं गम्यते । तदेव स्पष्टयति, अन्यत्राश्विनादिति । साम्न उत्पत्तिर्यस्यामृचि

सा योनिरित्युच्यते। सा योनिः स्वयोनिः न स्वयोनिः अस्व-योनिः, तस्य भावः अस्वयोनिभावः। एतदुक्तं भवति। रथन्तरादीनां षषां यत्र क्वाप्यहनि यत्र क्वापि कार्येऽस्वयोनि-भावे सति तत्र तत्राहनि निष्केवल्ये योनिस्थाने योनिशंसनं कर्त्तव्यं, इति अन्यत्राश्विनादाश्विनार्थसम्बन्धिस्तोत्रादन्यत्रैवं भ-वति। तत्र यो ह्यस्वयोनिभावः स सर्वस्वयोनिशंसनस्य नि-मित्तं भवतीत्यर्थः। सर्वत्र योनिशंसनं निष्केवल्यस्य योनि-स्थान एव॥

यज्ञायज्ञीयस्य त्वक्रियमाणस्यापि सानुरूपां योनिं व्याहावं शंसेदूर्ध्वमितरस्यानुरूपात्॥ ७॥

यज्ञायज्ञीयस्य अक्रियमाणस्य अपिशब्दादस्वयोनिभूतस्य च योनिशंसनं विधीयते। तस्यैव योनिशंसनस्य द्वाविमौ विशेषौ। ऊर्ध्वमितरस्यानुरूपादिति योनिशंसनस्य स्थानं। सानुरूपत्वे च। स्तोत्रियानुरूपयोराहावपृथक्त्वं चेत्येते पञ्चा-र्था अस्मिन् सूत्रे विधीयन्ते। व्याहावचनं सकृत् पृथ-क्त्वेति विकल्पनिवृत्त्यर्थं। अन्यदप्राप्तं विधीयते। ऊर्ध्वमित-रस्यानुरूपादिति यज्ञायज्ञीयस्य स्थाने यदन्यत् प्रविष्टं तस्यानुरूपादूर्ध्वमित्यर्थः। एकस्या एव योनित्वे सत्यपि योनिशंसने क्रियमाणे यत् साम यास्वृत्तु प्रयोगकाले गीयते ताः समस्ता ऋचः शंस्तव्याः नैकैकशः, तत्सामसम्बन्धेन तत्सा-मसम्बन्धिनीनामृचां विवक्षितत्वात्॥

होत्रकाः परिशिष्टानावापानुद्धृत्य ॥ ८ ॥

तत्स्थाने वक्ष्यमाणा ऋच आवपेरन्निति शेषः। होत्रकाणां प्रातःसवने शस्त्राण्येवं भवन्ति। परिशिष्टानावापानुद्धृत्य तत्स्थाने वक्ष्यमाणा ऋचः शस्त्वा चातुर्विंशिकान्येवावपन्ति। एतेनाह्नासुत्यानीति सर्वत्र ऐकाहिके शस्त्रे प्राप्ते तन्निवर्त्य चातुर्विंशिकप्रापणार्थं परिशिष्टानावापानुद्धृत्येत्युक्तं ॥

मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमयं वां मित्रावरुणानो मित्रावरुणेति तृचाः प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत् प्र मित्रयोर्वरुणयोरिति षट् काव्येभिरदाभ्येति तिस्रो मित्रस्य चर्षणीधृत इति चतस्रो मैत्र्यो यच्चिद्धि ते विश इति वारुणं ॥ ९ ॥

मैत्र्यो वारुणमिति देवतानिर्देशस्येदं प्रयोजनं। मित्रावरुणदैवतत्वात् मैत्रावरुणस्यैतासामावापो मिश्रितानामेव कर्त्तव्य इति। तत्र मिश्रणे बहुत्वात् वारुणीनां बह्वो वारुण्योऽल्पीयस्यो मैत्र्य इत्येवं मिश्रयेत् ॥

एतस्य तृचमावपेत मैत्रावरुणो नित्यादधिकं स्तोमकारणात् ॥ १० ॥

एतस्य ऋक्समाम्नायस्य सकाशात्तृचं गृहीत्वा परिशिष्टा-

वापस्थान आवपेत् मैत्रावरुणः। नित्यादित्युद्धृतपरिशिष्टावृा-पश्चात्तु विंशिकशस्त्रं नित्यमित्युच्यते तस्मादधिकमित्यर्थः। नि-त्येनैव पञ्चदशात् प्राक्तनाः स्तोमा अभिशस्ता भवन्तीति। तथा तेष्वपि नियमेन नित्यादधिकं आवपेतेत्येवमर्थं नित्या-दधिकमित्युच्यते। स्तोमकारणादिति स्तोमातिशंसनप्रयोजन-कारितोऽयमावाप इति दर्शयति। तेन पञ्चदशस्तोमेऽपि तृचावापः कर्त्तव्यः॥

**पञ्च सप्तदशे। नवैकविंशे। द्वादश चतुर्विंशे। पञ्चदश त्रिणवे। एकविंशतिं त्रयस्त्रिंशे। द्वात्रिंशतं चतुश्चत्वारिंशे। षट्त्रिंशतमष्टाचत्वारिंशे॥ ११॥**

एकया द्वाभ्यां वा प्रातःसवन इत्यनेनैव स्तोमानुगुणा ऋचः आवप्तव्या इत्येवं सिद्धे सङ्ख्योपदेशस्येदं प्रयोजनं, स्तो-मातिशंसने नाभाका न गणयितव्या इति। अतस्तेषु सत्स्वपि तान गणयित्वा स्तोमातिशंसनार्थः एतत्सङ्ख्याका ऋच आव-प्तव्या इत्ययमर्थः सिद्धो भवति॥

**एकाल्पीयसीर्वा॥ १२॥**

एकया हीनया वाऽऽवपेत। चतस्रः सप्तदशे, अष्टावेक-विंशे, इत्येवं प्रकारः। सप्तदशात् प्राक्तनेषु स्तोमेषु नित्या-दधिकमितिवचनात् तृच एव नित्यमावप्तव्यः॥

एकाहेष्वेकभूयसीर्वा ॥ १३ ॥

एतेष्वहःस्वेकाहीभवत्सु एकभूयसीरावपेद्वा। पूर्वोक्ता वा षट् सप्तदशे, दशैकविंशे, इत्येवं प्रकारो वैश्वदेवस्थाने प्रथमं पृष्ठ्याहरित्येवमादिषु। अत्र प्रकारमाह ॥

नारम्भणीया न पर्यासा अन्या ऐकाहिकास्तृचाः पर्यासस्थानेषु ॥ १४ ॥

तायमानरूपाणामहर्गणधर्मत्वादेकाहेषु प्राप्तिर्नास्ति। तेन आरम्भणीयाः पर्यासाश्च तेषु न सन्ति। तत्रारम्भणीयास्थानं शून्यमेवावतिष्ठते। पर्यासस्थानेष्वन्या ऐकाहिकास्तृचाः अस्मिन्नेव सूत्रे विधीयन्ते तेनैकाहिकेष्वेकयोनिशंसमिति युक्तमेतत् ॥

ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि ॥ ॥ १५ ॥

सूक्तग्रहणमेतानि षट् सूक्तान्यत्र विहितानीति ज्ञापनार्थं। इतरथा पादग्रहणादृच एव प्रतीयेरन्नैवन्तर्हि पादग्रहणं किमिति क्रियते। सूक्तसंप्रत्ययार्थं। अतोऽवगम्यते एतेषु षट्सूक्तेषु यावतीभिर्ऋग्भिः प्रयोजनं तावतीरावपेत् नाखण्डितानि षट् सूक्तानीति। अत्र 'आ दह स्वधामनु' इत्येताः षण्णामुद्धारवचनाभावात् ता अपि प्रयो-

कत्वाः। षट्सूक्तवचनं मारुतीनां अपरिवर्जनं सूचयति। अस्मादेव वचनात् ज्ञायते ता अप्येन्द्र्यो मारुत्यस्तासु निपातभाज इति। एवं सति तस्मात् 'ऐन्द्रं ब्राह्मणाच्छंसी प्रातःसवने शंसति' इत्यस्याः श्रुतेरविरोधो भवति॥

आवाप उक्तो मैत्रावरुणेन॥ १६॥

आवाप इत्येतावतैव सिद्धे मैत्रावरुणेनेतिवचनं यथा मैत्रावरुणस्य स्वदेवत्याभिर्ऋग्भिरावाप उक्तः एवमस्यापि निर्दिष्टा ऋचः स्वदेवत्या एव न मारुत्य इत्येतत्प्रदर्शनार्थं॥

इहेन्द्राग्नी इन्द्राग्नी आगतं ता हुवे ययोरिदमिति नवेयं वामस्य मन्मन इत्येकादश यज्ञस्य हि स्थ इत्यच्छावाकस्य॥ ॥ १७॥

आवाप उक्तो मैत्रावरुणेनेत्यत्रापि सम्बध्यते॥

आयात्विन्द्रोऽवस इति मरुत्वतीयमान इन्द्र इति निष्केवल्यं प्रथमस्याभिप्लविकस्य॥ १८॥

प्रथमस्याभिप्लविकस्येत्ययमधिकारार्थः। प्रथमस्याभिप्लविकस्याक्त एते निष्केवल्यमरुत्वतीययोः सूक्ते भवत इत्यर्थः॥

मध्यन्दिन इत्युक्त एते शस्त्रे प्रतीयात्॥ १९॥

यत्र यत्र मध्यन्दिन इति वक्ष्यति तत्र तत्र निष्केवल्यमरुत्वतीये शस्त्रे विद्यात्॥

अहीनसूक्तस्थान एवा त्वामिन्द्र यन्न इन्द्र कथामहामिन्द्रः पूर्भिद्य एक इद्यस्तिग्मशृङ्ग इमामूष्विच्छन्ति त्वा शासदृक्निरिति संपाताः॥ २०॥

यान्येतानि नव सूक्तानि निर्दिष्टानि तेषां संपाता इति संज्ञा विधीयते। ते च सम्पाता माध्यन्दिने होत्रकाणां शस्त्रेषु यान्यहीनसूक्तस्थानानि तेषु स्थानेषु भवन्तीत्ययमप्यर्थोऽस्मिन् सूत्रे विधीयते। अहीनसूक्तस्थानइतिवचनादत्रापि चातुर्विंशिकस्य प्राप्तिं दर्शयति॥

एकैकस्य त्रयस्त्रयः॥ २१॥

प्रथमचतुर्थसप्तमादयस्त्रयः सम्पाता एकैकस्य भवन्ति॥

उक्ता मरुत्वतीयैः॥ २२॥

यथा मरुत्वतीया प्रगाथाः पृष्ठ्याभिप्लवयोरहःसु भवन्ति तथा सम्पाता अपीत्यर्थः॥

युञ्जते मन इत्येव इति चतस्रो देवान् हुव इति वैश्वदेवं ॥ २३ ॥ ॥ ५ ॥

द्यावापृथिवीयमैकाहिकं। एतद्वैश्वदेवं शस्त्रं। आज्यप्रउगे आग्निमारुतञ्च ऐकाहिकानि। एतत्प्रथमस्याभिप्लविकस्याधिकारात् सम्पातास्तु वाक्येन सर्वार्थाः ॥

इत्युत्तरषट्कस्य प्रथमे पञ्चमी कण्डिका ॥ ० ॥

---

द्वितीयस्य चतुर्विंशेनाज्यं ॥ १ ॥

द्वितीयस्याभिप्लविकस्य होताजनिष्टेत्याज्यं भवति ॥

वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आगहीत्येका भा देवादि विस्पृशेति द्वे शुक्रस्याद्यगवाशिर इत्येकाऽयं वां मित्रावरुणेति पञ्च तृचाः ॥ २ ॥

तृचग्रहणं ऋङ्निवृत्त्यर्थं ॥

गार्त्समदं प्रउगमित्येतदाचक्षते ॥ ३ ॥

गार्त्समदशब्दस्तदार्षाणां भूयस्त्वात् ॥

वैश्वानरस्य वस्यतिमिन्द्र इत्सोमपा एक इति मरुत्वतीय-
स्य प्रतिपदनुचरौ इन्द्र सोमं यात ऊतिरवमेति मध्यन्दिनः ॥
॥ ४ ॥

निष्केवल्यस्योत्तमे विपरीते। निष्केवल्यस्य यत् सूक्तं यात ऊतिरिति तस्य ये उत्तमे ऋचौ ते विपर्यस्य शंसेत् ॥

भारद्वाजो होता चेत् प्रकृत्या ॥ ५ ॥

यदि होता गोत्रतो भरद्वाजः स्यात्तदा प्रकृत्यैव शंसेत्। होतृग्रहणाद्धोतुरेव भारद्वाजत्वमत्र विवक्षितं न प्रतिनिधि-प्रवृत्तस्यापि। तेन अभारद्वाजोऽपि प्रतिनिधिप्रवृत्तः प्रकृत्यैव शंसेद्धोता चेद्भारद्वाजः स्यादिति ॥

चातुर्विंशिकं तृतीयसवनं विश्वो देवस्य नेतुरित्येका तत् सवितुर्वरेण्यमिति द्वे आविश्वदेवं सत्पतिमिति तु वैश्वदे-वस्य प्रतिपदनुचरौ ॥ ६ ॥

अयन्तु विशेषश्चातुर्विंशिकात् तृतीयसवनादेतौ प्रतिपद-नुचरौ भिद्येते इति ॥

आज्यप्रउगे प्रतिपदनुचरावुभयोर्युग्मेष्वेवमभिप्लवे ॥ ७ ॥

॥ ६ ॥

अस्मिन्नहनि ये आज्यप्रउगे वैश्वदेवमरुत्वतीययोरुभयोः प्रतिपदनुचरावभिप्लवेयान्यहानि युग्मानि द्वितीयचतुर्थषष्ठानि तेषु ते भवन्ति, न केवलं द्वितीय एवेति सूत्रार्थः। अभिप्लवाधिकारे पुनरभिप्लवग्रहणं उभयोरित्यस्य वचनस्य षडहविषयतां व्यावर्त्य प्लवविषयत्वज्ञापनार्थं ॥

इत्युत्तरषट्कस्य प्रथमे षष्ठी कण्डिका ॥ * ॥

तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यन्दिनः ॥ १ ॥

आज्यप्रउगे ऐकाहिके होत्रकाणां प्रातःसवने माध्यन्दिने चोक्तान्येवोभयोरपि षडहयोर्भवति ॥

तद्देवस्य घृतेन द्यावापृथिवी इति तिस्रोऽनश्वो जातः परावतो य इति वैश्वदेवं वैश्वानराय धिषणां धारावरा मरुतस्त्वमग्ने प्रथमो अङ्गिरा इत्याग्निमारुतं चतुर्थस्याग्ने जज्ञ इति निष्केवल्यं ॥ २ ॥

ऐकाहिकं मरुत्वतीयं ॥

क्ष्यामग्रिमस्य मे द्यावापृथिवी इति तिस्रस्ततं मे अप इति वैश्वदेवं ॥ ३ ॥

ऐकाहिकं वैश्वदेवं सूक्तं ॥

वैश्वानरं मनसेति तिस्रः प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतं ॥ ४ ॥

आज्यप्रउगे प्रतिपदनुचराश्च द्वैतीयाः ॥

पञ्चमस्य कया शुभा यस्तिग्मशृङ्ग इति मध्यन्दिनः ॥ ५ ॥

आज्यप्रउगे एकाहिके एव ॥

कयाशुभीयस्य तु नवम्युत्तमाऽन्यत्रापि यत्र निविद्धानं स्यात् ॥ ६ ॥

अन्यत्रापीतिवचनात् कर्मान्तरेऽपि यत्रैतत् सूक्तं निविद्धानीयं भवति तत्र सर्वत्र नवम्युत्तमा कर्त्तव्या। अतो निष्केवल्यस्योत्तमे विपरीते मरुत्वतीयस्योत्तमे विपरीते इत्येवमादिषु तत्कर्मावधिक एव तादृशो विधिर्न भवतीति वेदितव्यं। निविद्धानमित्ययं शब्दो न निविद्धानीयमिति, तेनैतत् साधितं भवति, बहुष्वपि निविद्धानीयेषु यस्मिन्नेव

स्तोत्रे निविडानीयं विधीयते तत्रैव नवम्युत्तमा न निविडा-
नीयमाच इत्येतदवगम्यत इति ॥

घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिरिति तृचौ
कदु प्रियायेति वैश्वदेवं ॥ ७ ॥

सावित्रमैकाहिकमेव ॥

पृक्षस्य वृष्णो वृष्णे शर्द्धाय नूचित् सद्योजा इत्याग्निमारुतं
षष्ठस्य सावित्रार्भवे तृतीयेन वैश्वानरीयश्च कतरा पूर्वापरा-
सानन्तेति वैश्वदेवं प्रयज्यव इमं स्तोममित्याग्निमारुतं ॥ ८ ॥

आज्यप्रउगे प्रतिपदनुचराश्च द्वैतीयाः अन्यदैकाहिकं ।
ब्राह्मणस्त्यमरुत्वतीययोरुक्तो विशेषः ॥

इत्यभिप्लवः षडहः ॥ ९ ॥

षडह इतिवचनमभिप्लवस्य षडहसंज्ञाविधानार्थं। अभि-
प्लव इतिवचनं पृष्ठ्यस्यापि षडहसंज्ञाप्रापणार्थं। तेन षडह-
व्यवहारे द्वयोः सम्प्रत्ययः सिद्धो भवति ॥

तस्याग्निष्टोमावभितः। उक्थ्या मध्ये ॥ १० ॥

अभिप्लवस्य संज्ञाविधिरेताभ्यां सूत्राभ्यां विधीयते ॥

उक्थ्येषु स्तोत्रियानुरूपाः ॥ ११ ॥

वक्ष्यन्त इति शेषः। तेष्विति वक्तव्ये उक्थ्येष्विति वचनमस्मिन् सूत्रप्रकरणे ये उक्थ्यास्तेषां सर्वेषां वक्ष्यमाणेन विधिना सम्बन्धसिद्ध्यर्थं ॥

मैत्रावरुणस्य ॥ १२ ॥　॥ ७ ॥

इत्युत्तरषट्कस्य प्रथमे सप्तमी कण्डिका ॥ ० ॥

---

*एह्यू षु ब्रवाणि त अग्निरगामि भारतः प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा प्र मंहिष्ठाय गायत प्र सो अग्ने तवोतिभिरग्निं वो वृधन्तमग्ने यं यज्ञमध्वरं यजिष्ठं त्वाऽववृमहे यः समिधाय आहुत्याऽऽ ते अग्न इधीमह्युभेसुश्चन्द्रसर्पिष इति द्वे एका चाग्निं तं मन्ये यो वसुरा ते वत्सो मनो यमदाऽऽग्ने स्थूरं रयिं भर प्रेष्ठं वो अतिथिं श्रेष्ठं यविष्ठ भारत भद्रो नो अग्निराहुतो यद्वो घृतेभिराहुत आ घाये अग्निमिन्धत इमा अभिप्रणोनुम इति॥ १ ॥

---

* एह्योषु इति स०२ पु० पाठः॥

एतानि दश सोत्रियानुरूपयुगलानि षष्ठस्य युगलस्य सोत्रियः समाहार्यः ॥

अथ ब्राह्मणाच्छंसिनोऽभ्रातृव्यो अनात्वं मा ते अमाजुरो यथैवाह्यसि वीरयुरेवाह्यस्य सूनृता *तन्ते मदं गृणीमसि तम्वभि प्रगायत वयमु त्वामपूर्व्य यो न इदमिदं पुरेन्द्राय साम गायत सखाय आशिषामहि य एक इद्विदयते य इन्द्र सोमपातम एन्द्र नो गध्येदु मध्वो मदिन्तरमेतो न्विन्द्रस्तवाम सखायः स्तुहीन्द्रं व्यश्ववत्वन्न इन्द्राभर वयमुत्वामपूर्व्य यो न इदमिदं पुराऽऽयाहीम इन्दव इति समाहार्योऽनुरूपोऽभ्रातृव्यो अनात्वं मा ते अमाजुरो यथेति ॥ २ ॥

एतान्यपि दशैव नवमस्यानुरूपः संहार्यः। आद्यस्य पुनर्वचनं सत्रादन्यत्राप्यस्य युगलस्य परस्परनियमार्थं ॥

अथाछावाकस्येन्द्रं विश्वा अवीवृधन्नुक्थ्यमिन्द्राय शंस्यं श्रुधीहवन्तिरश्च्या आश्रुत्कर्ण श्रुधीहवमसावि सोम इन्द्र त इममिन्द्र सुतं पिब यदिन्द्र चित्रमेहना यस्ते साधिष्ठोऽवसे पुरां भिन्दुर्युवा कविर्वृषा ह्यसि राधसे गायन्ति त्वा गायत्रिण आ त्वा गिरो रथीरिवेति ॥ ३ ॥

एतानि षड्युगलानि, अत्राप्यनुरूपनियमार्थमेषां विधानं ॥

---

* तन्नो मदमिति सो॰ मू॰ पु॰ पाठः।

सूक्तानामेकैकं शिष्ट्वाऽऽवपेरन् ॥ ४ ॥　　॥ ८ ॥

इत्युत्तरषट्कस्य प्रथमे ऽष्टमी कण्डिका ।

---

स्तोमे वर्धमाने ॥ १ ॥

उक्थ्यशस्त्राणि प्रकृतानि, तेषु शस्त्रेषु यद्यदन्यत्सूक्तं तत्त-दवशिष्य स्तोमे वर्धमाने तदतिशंसनार्थं यावदर्थमृचो वक्ष्य-माणेभ्यो सूक्तसमुदायेभ्यो गृहीत्वाऽऽवपेरन् होत्रकाः ॥

इमा उ वां भृमयो मन्यमाना इति तिस्र इन्द्रा को वामिति सूक्ते श्रुष्टी वां यज्ञो युवां नरा पुनीषे वामिमानि वां भागधे-यानीत्येतस्य यथार्थं मैत्रावरुणः ॥ २ ॥

यथार्थं यथाप्रयोजनं यावतीनामृचामावापे सति अव-राभिर्ऋग्भिः स्तोमोऽतिशस्तो भवति तावतीरावपेतेत्यर्थः ॥

यस्तस्तम्भयो अद्रिभिद्यज्ञो दिव इति सूक्ते अस्तेवसुप्रतर-मायात्विन्द्रः स्वपतिरिमान्धियमिति ब्राह्मणाच्छंसी ॥ ३ ॥

एतस्य यथार्थमावपेतेति शेषः ॥

विष्णोर्नुकमिति सूक्ते परो मात्रयेत्यच्छावाकः ॥ ४ ॥ ॥ ९ ॥

अत्राप्यावपेतेति शेषः ॥

इत्युत्तरषट्कस्य प्रथमे नवमी कण्डिका ॥ ० ॥

---

पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्यां ॥ १ ॥

अभिप्लवस्य ये आद्ये अहनी ताभ्यां पृष्ठ्यस्याद्ये अहनी व्याख्याते। अभिप्लवस्य प्रथममहरेवं भवति, आज्यप्रउगे ऐकाहिके द्यावापृथिवीयमाग्निमारुतं च। इतरत् तत्रैवोक्तं। द्वितीयमहरेवं भवति, आज्यं तृतीयसवनं चातुर्विंशिकं। इतरदुक्तमेव। एवं पृष्ठ्यस्याद्ये अहनी भवतः ॥

तृतीयसवनानि चान्यत्रं ॥ २ ॥

न केवलमाद्ये एवाहनी अभिप्लवातिदिष्टे स्यातां, उत्तरेष्वहःसु यानि तृतीयसवनानि तान्यभिप्लवस्योत्तरेषामह्नामध्यहं तृतीयसवनानि यानि तैरेवातिदिष्टानीत्यर्थः ॥

उपप्रयन्त इति तु प्रथमेऽन्न्याज्यं। अग्निं दूतमिति द्वितीये ॥ ३ ॥

आद्ययोरयमहारयं विशेषः। एते तयोराज्ये भवत इति ॥

तृतीये युञ्जाहीत्याज्यं॥ ४॥

आज्याधिकारे पुनराज्यग्रहणं तृतीयशब्दस्य वैलक्षण्यप्रदर्शनार्थं। वैलक्षण्यं चोत्तरत्राधिकारसिद्धिः॥

वायवायाहि वीतय इत्येका वायो याहि शिवादिव इति द्वे इन्द्रश्च वायवेषां सुतानामिति द्वयोरन्यतरां दिरामित्रे वरुणे वयमश्विनावेह गच्छतमायाह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिरुत नः प्रियाप्रियास्वित्यौष्णिहं प्रउगं॥ ५॥

आद्यः संहार्यो द्वितीयो द्वाभ्यामृग्भ्यां प्रथमाभ्यासेन द्वितीयाभ्यासेन वा तृचः कर्त्तव्यः। औष्णिहमिति ब्राह्मणानुवादः। तस्य विधायकत्वं मन्यमानस्यानुष्ठानमाह॥

उत्तमेऽन्वृचमभ्यासाश्चतुरक्षराः॥ ६॥

अन्वृचं प्रत्यृचमित्यर्थः। चत्वार्यक्षराणि यस्मिन्नभ्यासे स चतुरक्षरोऽभ्यासः, ते च त्रयः। ऋक्त्रयसम्बन्धात् स चाभ्यासस्तृतीये पादे भवति, उष्णिक्सम्पादनस्य चिकीर्षितत्वात्। 'सोम्याभूत् सोम्याभोश्म्' इत्येवं॥

न वा॥ ७॥

वाशब्दः पक्षं व्यावर्त्तयति, नात्राभ्यासः कर्त्तव्यः। औष्णिह-

शब्दस्य विधायकत्वं न सम्भवति, प्राप्तार्थत्वात् ब्राह्मणग्राम-वच्छब्दप्रवृत्तिः सम्भवतीति ॥

तृतीयेनाभिप्लविकेनोक्तो मध्यन्दिनः। *तं तमिद्राधसे मह त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ। वैरूपं चेत् पृष्ठं यद्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपौ ॥ ८ ॥ ॥ १० ॥

निष्केवल्यस्येति शेषः। रथन्तरस्योक्तौ ॥

इत्युत्तरषट्कस्य प्रथमे दशमी कण्डिका।

---

चतुर्थेऽहनि यत् प्रातरनुवाकप्रतिपद्यर्धर्चाद्यो न्यूङ्खः ॥ १ ॥

पार्ष्ठिके चतुर्थेऽहनि यत् प्रातरनुवाकं तस्याद्याया ऋचो यावर्धर्चयोरादी तयोर्न्यूङ्खो भवति। अहरधिकारे पुनरहनी-तिवचनं अहर्धर्मोऽयं न्यूङ्ख इति प्रदर्शनार्थं। तेनाच या न्यूङ्ख-भाज ऋचस्तासामन्यत्र वचनादृते न्यूङ्खो न भवति ॥

---

* तं तमिन्द्राधसे इति सं२ पु० पाठः।

द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तन्त्रिः ॥ २ ॥

इदानीं न्यूङ्खस्य लक्षणमुच्यते। तयोरर्धर्चयोर्यो द्वितीयः स्वरः संहितावस्थायान्तमोकारं त्रिमात्रं कृत्वा त्रिः ब्रूयात्, पच्छोऽर्धर्चश ऋकृश इति सर्वत्र शंसनविधानात्। संहितावस्थायामेव मन्त्राणां शंसनमुक्तं भवति। अतः संहितावस्थायामित्युक्तं। पूर्वसूत्रेऽर्धर्चाद्योरित्याद्ययोरक्षरयोर्न्यूङ्खो विहितः, इह तु द्वितीययोर्विधीयते, कथमनयोः सम्बन्ध इति। पूर्वसूत्रस्यायमभिप्रायः। ब्राह्मणोक्तो यो न्यूङ्खविधिरेकाक्षरद्व्यक्षरत्र्यक्षरचतुरक्षरैरिति सोऽयमर्धर्चाद्योरित्यनेन सूचितो भवति। यस्तु खलु पक्षस्तत्रैव सिद्धान्तितः 'तस्मात् द्व्यक्षरेणैव न्यूङ्खयेत्' इति, तमेव पक्षमङ्गीकृत्येदानीं न्यूङ्खो विधीयते, 'द्वितीयं स्वरं इत्यादिना ॥

तस्य तस्य चोपरिष्टादपरिमितान् पञ्च वार्धौकाराननुदात्तान् ॥ ३ ॥

तस्य तस्यौकारस्योपरिष्टादर्धौकारानमनुदात्तानपरिमितान् त्रीन् चतुरः पञ्च वा ब्रूयात्। यत्र सङ्ख्याविशेषनिर्दिष्टस्यापरिमितशब्दं ब्रवीति तत्र निर्दिष्टसङ्ख्याविशेषादुपरिष्टादपरिमितशब्दार्थो ग्रहीतव्यः। यत्र पुनरुपरिष्टात् सङ्ख्याविशेषो निर्दिष्टस्तत्र प्रागेव सङ्ख्याविशेषात् बहुत्वे सत्येवानियतिर्ग्रहीतव्येति सिद्धं। अर्धश्चासौ ओकारस्यार्धौकार इति कर्मधारयः॥

उत्तमस्य तु त्रीन् ॥ ४ ॥

उत्तमस्यौकारस्योपरिष्टात् त्रीनेवार्द्धौकारान् ब्रूयात् ॥

पूर्वमक्षरं निहन्यते न्यूङ्खमाने ॥ ५ ॥

निहन्यत इत्यनुदात्तीक्रियत इत्यर्थः। न्यूङ्खाधिकारे पुनर्न्यूङ्खमानइतिवचनं प्रथमे द्वितीये तृतीये चतुर्थे वाक्षरे न्यूङ्खमानेऽपि तस्मात् पूर्वमक्षरं निहन्यत इत्येवमर्थं ॥

तदपि निदर्शनायोदाहरिष्यामः ॥ ६ ॥

उक्तलक्षणस्यापि न्यूङ्खस्यार्धौकारस्वरूपस्यालौकिकत्वादन्यद्देवञ्जातीयकं सन्देहं व्यावर्त्तयितुं निदर्शनं क्रियते ॥

आपो३ ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ ओ३ ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ ओ३ ऽ॑उ॑ऽ॑उ॑ रेवतीः क्षयथा हि वस्वः क्रतुञ्च भद्रं बिभृथामृतञ्च। रायो३ ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ ओ३ ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ऽ॑उ॑ ओ३ ऽ॑उ॑ऽ॑उ॑श्च स्थः स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधो३मापो३ ॥ ७ ॥

आपो३प्लुतः, रायो३प्लुतः, वयोधो३मापो३प्लुत इत्येवं न्यूङ्खपुनरावृत्तिप्रदर्शनं प्रत्यावृत्तिन्यूङ्खप्रापणार्थं। अयमेव पाठः अविच्छिन्नसम्प्रदायागतः। यस्तु पुनः संहितानुरूपेण पाठः स प्रमादकृतत्वात् त्यक्तव्यः ॥

आग्निं न स्ववृक्तिभिरित्याज्यं ॥ ८ ॥

पादग्रहणेऽपीदं सूक्तमेव। आज्यस्थाने विधानात्। अत्र पादग्रहणस्य प्रयोजनमन्वेषणीयं ॥

तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च ॥ ९ ॥

तस्य सूक्तस्य याः पुरस्तात् प्रागुत्तमाया ऋचस्तासां तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च कर्त्तव्यः। उत्तमापि न्यूङ्खनिनर्दरहिता शंस्तव्यैव ॥

उक्तो न्यूङ्खः ॥ १० ॥

उक्तसङ्कीर्त्तनमुत्तरविवक्षार्थं ॥

स्वरादिरन्त ओकारश्चतुर्निनर्दः ॥ ११ ॥

तृतीयेषु पादेषु निनर्द उक्तः। तेषु कस्मिन् प्रदेश इत्युच्यते। पादान्ते। स्वरादिः, स्वरो वादिप्रदेश इत्यर्थः। स चौकारश्चतुष्कलो वक्तव्यः। स निनर्द इत्युच्यते। तस्यैव विशेषमाह ॥

उदात्तौ प्रथमोत्तमौ। अनुदात्तावितरौ। उत्तरोऽनुदात्ततरः ॥ १२ ॥

मध्यमयोरुत्तर इत्यर्थः ॥

प्लुतः प्रथमः । मकारान्त उत्तमः । तदपि निदर्शनायोदाहरिष्यामः ॥ १३ ॥

अत्रापि वाटिप्रदेशोपमर्दी निनर्दोऽनुपमर्दी वेत्येवमादिसन्देहनिवृत्त्यर्थं निदर्शनं ॥

अग्निं न स्ववृक्तिभिः । होतारन्त्वा वृणीमहे । यज्ञो३ उँउँउँउँउँ ओ३ उँउँउँउँउँ ओ३ उँउँउँ यस्तीर्णबर्हिषे विवोमदो३ *ओ३ओ३ओ३म् शीरं पावकशोचिषं विवक्षसो३मग्निं न स्ववृक्तिभिः होतारं त्वा वृणीमहे ॥ १४ ॥

पूर्वस्मिन्नर्धर्चे यो विग्रहः स आज्याद्यलङ्कारितो न न्यूङ्खनिनर्दकारितः । तेन द्वितीयादिष्वृक्षु स न भवति । आवृत्तिप्रदर्शनार्थं पूर्वस्यार्धर्चस्य पुनः पाठः । सर्वत्र संहितापाठोऽपभ्रंश एव ॥

ओ३ उँउँउँउँउँ ओ३ उँउँउँउँउँ ओ३ उँउँउँ मदेथ मदैवो३ †ओ३ओ३ओ३ मोथामो दैवो३मित्यस्य प्रतिगरः ॥ १५ ॥

न्यूङ्खनिनर्दाभ्यां प्रणवेन सम्बन्धाद्द्वितीयेऽर्धर्चेऽयं प्रतिगरो भवति, पूर्वस्मिन् प्लुतिरेव ॥

---

* ओ३ ओ३ ओ३म् इति सो० मू० पु० पाठः ।
† ओ३ ओ३ ओ३ इति सो० मू० पु० पाठः ।

अपि वोदात्तादनुदात्तं स्वरितमुदात्तमिति चतुर्निनर्दः॥ ॥१६॥

निनर्दरूपस्यौकारचतुष्टयस्य यथासङ्ख्येन स्वरविशेषोऽनेन विधीयते। पूर्वोक्तस्यायं विकल्पः। तथाभूतशस्त्रनिनर्दे सति प्रतिगरनिनर्देऽपि तथाभावनिदर्शनेन दर्शयन् न्यूङ्खेन विना तद्दर्शनाशक्तेस्तत्सहितमेव दर्शितवानाचार्यः॥

तदपि निदर्शनायोदाहरिष्यामः। अग्निं न स्ववृक्तिभिः। होतारं त्वा वृणीमहे। यशो३ उँउँउँउँउँ ओ३ उँउँउँउँउँ ओ३ उँउँउँ यस्तीर्णबर्हिषे विवोमदो३ ओ३ ओ३ ओ३म् शोरं पावकशोचिषं विवक्षसो३मग्निं न स्ववृक्तिभिः। होतारं त्वा वृणीमहे। ओ३ उँउँउँउँउँ ओ३ उँउँउँउँउँ ओ३ उँउँउँ मदेथमदैवो३ ओ३ ओ३ ओ३मोथामो दैवो३मित्यस्य प्रतिगरः॥१७॥

गतार्थमेतत् सर्वं॥

प्रथमादर्धौकारादध्वर्युर्न्यूङ्खयेत्॥१८॥

अवसाने प्रणवे च प्रतिगरो वक्तव्यः। तत्र प्रतिगरान्तर्वर्त्तिनः प्रणवस्य शस्त्रान्तर्वर्त्तिना प्रणवेन समानकालतासम्पादनार्थं *प्रतिगरान्तकालश्चतुर्भिः सूत्रैर्विधीयते॥

---

* प्रतिगरारम्भकाल इति पाठान्तरः।

प्रथमात् द्वितीयाद्वा ॥ १९ ॥

काललक्षणार्थमेतदुभयं प्रथमस्य द्वितीयस्य वाऽधौँकारस्य यः कालस्तत्र प्रतिगर आरम्भव्यः। एतौ विधी वृषाकप्यादिस्वल्पाक्षरेषु भवतः। तयोस्तत्र सम्भवाद्वक्ष्यमाणौ तु बह्वक्षरेषु भवतः ॥

व्युपरमं त्वेके ॥ २० ॥

अस्मिन् पक्षे न्यूङ्खेन सह न्यूङ्खमारभ्य विविधमुपरम्योपरम्य न्यूङ्खेन न्यूङ्खं निनर्द्देन निनर्द्दं प्रणवेन प्रणवं सम्पादयेत्। उपरमणमत्र विलम्बनमुच्यते, नावसानं। अस्य पक्षस्याभिमतत्वसूचनार्थं हशब्दं पठितवानाचार्यः ॥

यथा वा सम्पादयिष्यन्तो मन्येरन् ॥ २१ ॥

एवमारब्धे प्रणवे न प्रणवः सम्पादयितुमशक्य इति मन्यन्ते तथारम्भः कर्त्तव्य इत्यर्थः ॥

वायो शुक्रो अयामि ते विहि होत्रा अवीता वायो शतं हरीणामिन्द्रश्च वायवेषां सोमानामाचिकिता न सुक्रतू आ नो विश्वाभिरूतिभिस्त्यमु वो अप्रहणमपत्यं *वृजिनं रिपुमम्बितमेनद्दीतम इत्यानुष्टुभं प्रउगं ॥ २२ ॥

---

* च हजिनमिति पाठान्तरः।

अत्रायामनुष्टुभवचनं ब्राह्मणानुवादः। अत्र तु विशेषोऽप्य-स्ति। वैश्वदेवस्तृच औष्णिहः। तत्र द्वादशाक्षराणि न्यूनानि परिधानीया बृहती तस्यास्त्रिभिर्वचनैर्द्वादशाक्षराणि अधि-कानीति सर्वा अनुष्टुभ एवेति॥

एकपातिन्यः प्रथमः॥ २३॥

तृचस्य त्रिः प्रतीक इत्यर्थः॥

तं त्वा यज्ञेभिरीमह इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ॥ २४॥

प्रतिपदनुचरयोः सहचारित्वादेको न प्राप्नोतीति प्राक्त-नस्यानुचरस्य विधानं॥

अधीन्द्रवनिन्द्र मरुत्वाँ इन्द्रेति मरुत्वतीयं॥ २५॥

इदं मरुत्वतीयं द्विसूक्तं। तत्र किं द्वयोः सूक्तयोर्निविद्धे-यो नैकस्मिन्निति सन्देहः। यद्येकस्मिंस्तदा पूर्वस्मिन्नुत पर-स्मिन्निति। एवमन्यत्रापि सूक्तबहुत्वेऽपि सन्देहः स्यात् तन्नि-वृत्त्यर्थमाह॥

अन्त्ये निविदं दध्यादनेकभावे सूक्तानां॥ २६॥

सर्वार्थेयं परिभाषा॥

वराजं चेत् पृष्ठं पिबा सोममिन्द्र मन्दतु त्वेति स्तोत्रियानुरूपौ ॥ २७ ॥

बृहत्पृष्ठे उक्तावेव ॥

कुहश्रुत इन्द्रो युध्मस्य त इति निष्केवल्यं। श्रुधीहवीयस्य तु तृच आद्येऽर्धर्चादिषु न्यूङ्खः ॥ २८ ॥

अस्य सूक्तस्याद्ये तृचेऽर्धर्चेषु न्यूङ्खः। आदिग्रहणं न केवलं द्वितीय एवाक्षरे न्यूङ्खः कर्त्तव्यः। किं तर्हि आद्ये द्वितीये तृतीये चतुर्थे वा कर्त्तव्यो न्यूङ्ख इति गम्यते॥

एवं कुहश्रुतीयस्य ॥ २९ ॥

एवमित्यनेन तृच आद्येऽर्धर्चादिषु न्यूङ्ख इति गम्यते॥

विराजां मध्यमेषु पादेषु ॥ ३० ॥

विराज इति 'पिबा सोममिन्द्र मन्दतु त्वा' इति षडृचं उच्यन्ते। तासां मध्यमेषु पादेषु न्यूङ्खः कर्त्तव्यो द्वितीय एवाक्षरे। अत्र आदिशब्दाभावात्॥

नित्य इह प्रतिगरो न्यूङ्खादिः ॥ ३१ ॥

अस्मिन् न्यूङ्खप्रकरणे नित्य एव प्रतिगरः 'ओथामो दैव' इति। स एवं न्यूङ्खादिर्भवति। तस्य यदाद्यमक्षरं तस्मिन्नेव न्यूङ्खः कर्त्तव्य इत्यर्थः॥

प्रणवान्तः प्रणवे कुहस्तीयानां ॥ ३२ ॥

कुहस्तीयानां द्वितीयेऽर्धर्चे यः प्रतिगरो न्यूङ्खादिः स प्रणवान्तस्स्य भवति। यः पुनः कुहस्तीयानामेव चतुर्थ्यादिषृचु द्वितीयेऽर्द्धर्चे प्रतिगरः स अुतादिरेव। प्रणवान्तः प्रणवे कुहस्तीयानामित्येतदुपपादयति ॥

अर्धर्चशस्त्रैनदुत्तमावर्जं ॥ ३३ ॥

उत्तमा त्रिष्टुप्, पच्छः शस्या। अन्या बृहत्योऽनुष्टुभश्च ता अर्धर्चशः शस्याः। तेन प्राप्तमेवानूद्यते। प्रणवान्तोपपादनार्थमतो द्विशब्दस्थाने चशब्दो द्रष्टव्यः ॥

न ते गिरो अपि मृष्ये तुरस्य प्रवोमहे महिवृधे भरध्वमिति चतस्रस्तिस्रश्च विराजः ॥ ३४ ॥

विराज इति वचनं विराज एवैता भवन्ति नैतासु विराट्धर्मो न्यूङ्खादिरित्येवमर्थं। तथाचोक्तं 'न न्यूङ्खा विराजः' इति ॥

तासामूर्ध्वमारम्भणीयाभ्य स्तृचानावपेरन् ॥ ३५ ॥

एताः सप्त ऋच उक्ताः। एतासामेव सप्तानां चतुर्थेऽहनि माध्यन्दिने सवने होत्रकाः स्वे स्वे शस्त्रे आरम्भणीयाभ्य ऊर्ध्वं एकैकं तृचमावपेरन्नित्याह ॥

आद्यं मैत्रावरुणस्तस्योत्तमादिभिस्तानां तृचं ब्राह्मणाच्छंसी ॥ ३६ ॥

तस्येति तेनेत्यर्थः। तेन मैत्रावरुणेन शस्तानामुत्तमामृचं आरभ्य यस्तृचस्तं ब्राह्मणाच्छंस्यावपेतेत्यर्थः ॥

तस्य चाच्छावाकः ॥ ३७ ॥

तस्येति पूर्ववत्। शेषश्च पूर्ववदेव ॥

यजामह इन्द्रं वज्रदक्षिणमिति द्वितीयानेवमेव ॥ ३८ ॥

द्वितीयवचनमेषां तृचानां पूर्वैस्तृचैः समुच्चयार्थो एवमेव पूर्ववत् सप्तभिर्ऋग्भिस्त्रयस्तृचाः कर्त्तव्या इत्येवमर्थं ॥

पञ्चमेऽहनि यच्चिद्धि सत्यसोमपा इत्येकैकमेवमेव ॥ ३९ ॥

अस्मिन्नेव सूत्रप्रसङ्गे ग्रन्थलाघवार्थं पञ्चमषष्ठयोरप्यह्नो-स्त्वेव शस्त्रेषु तस्मिन्नेव स्थाने एकैकं तृचं विदधात्यत्रस्थ एव भगवान् सूत्रकारः ॥

षष्ठेऽहनीन्द्राय हि द्यौरसुरो अनम्नतेत्येवमेव ॥ ४० ॥ ११ ॥

एवमेवेति पूर्ववदित्यर्थः ॥

इत्युत्तरषट्कस्य प्रथमे एकादशी कण्डिका ॥ • ॥

स्तोमे वर्धमाने को अघनर्यो वनेन वाय आयाह्यर्वाङित्य-
ष्टर्चान्यावपेरन्नुपरिष्टात् पारुच्छेपीना॥ १॥

माध्यन्दिने सवने होत्रकाणां आवाप ऊर्ध्वमारम्भणीया-
भ्योऽधिकृतः। अथेदानीं स्तोमवृद्धिनिमित्त आवाप उच्यते। तेषामेव होत्रकाणां तेष्वेव शस्त्रेष्वेतानि त्रीणि सूक्तानि त्रया-णामेकैकमेकैकस्य यथासङ्ख्येन भवन्ति। अष्टर्चवचनमेतेषां कृत्स्ना वापसिद्ध्यर्थं। तेनात्रावापस्यानिमित्ते सति यथार्थावापो न कर्त्तव्यः। आवापाधिकारे पुनरावपेरन्निति वचनं बहुवचनविवक्षार्थं। तेनैकस्यावापनिमित्ते सति द्वयोः सर्वे होत्रका आवपेरन्निति साधितं भवति। उपरिष्टात् पारुच्छेपीनामित्ययं ऊर्ध्वमारम्भणीयाभ्य इत्यस्यापवादः। पारुच्छेपिग्रहणं पूर्वोक्तानामावापानां प्रदर्शनार्थं। तेनायमर्थोऽवगतो भवति। तृचावापवत्स्वहःसु तृचोऽस्य ऊर्ध्वमतिशंसनावापोऽन्यत्रारम्भणीयाभ्य ऊर्ध्वमिति॥

तैरप्यनतिशस्त ऐन्द्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन्॥
॥ २॥

तैरष्टर्चैः शस्यमानैरपि स्तोमो यद्यनतिशस्तो भवेत् तदैन्द्राणि सूक्तानि मरुच्छब्दवर्जितान्यावपेरन् त्रिष्टुप्छन्दस्कानि। अस्मादस्मादेते त्रयोऽर्था अवगम्यन्ते। अष्टर्चानामप्यति-

शंसनार्थत्वं तैरनतिशस्त ऐन्द्राणामावापो नाष्टर्चावापेन विना ऐन्द्रैरेवातिशंसनमिति। तेनाष्टर्चावापे कृते तैरप्यनतिशस्ते सोमे इन्द्रदेवत्यानि मरुच्छब्दवर्जितानि त्रैष्टुभानि सूक्तान्यावपेरन्। अन्यत्रोपयुक्तान्यनुपयुक्तानि च 'अभूरेक' इत्येवंप्रकाराणि। त्रैष्टुभवचनं व्यूळ्हादिषु गायत्रं माध्यन्दिनं जागतं मध्यन्दिनं इत्येवमादौ वचने सत्यपि त्रैष्टुभानामेवावापसिद्ध्यर्थं। आवपेरन्निति पुनर्वचनमहरन्तरेष्वप्यस्य विधेः प्रापणार्थं। तेनायमावापः सत्रेषु सर्वेष्वहःसु सोमातिशंसनार्थं भवति॥

न त्वेतान्यनोप्यातिशंसनं॥ ३॥

एतान्यष्टर्चान्यनोप्य अन्यैः अतिशंसनं नैव कर्त्तव्यं। 'एकाहाहीनेषु' इत्यनेन सूत्रेणाष्टर्चानां सर्वार्थत्वं विधीयते। पूर्वसूत्रे यत् सर्वार्थत्ववचनं तत् सत्रेष्वेवाहरन्तरेषु प्राप्यर्थतयाप्युपपद्यत इत्यनेनैवाष्टर्चानामेकाहाहीनेषु प्राप्तिर्विधीयते, एतदेवात्र विधित्सितं नान्यदिति॥

एकया द्वाभ्यां वा प्रातःसवने॥ ४॥

अतिशंसनमुक्तं तदेतावतीभिरित्युच्यते। एकया द्वाभ्यां वा ऋग्भ्यां प्रातःसवने सोमोऽतिशंस्तव्यः॥

अपरिमिताभिरुत्तरयोः सवनयोः॥ ५॥

त्रिप्रभृतिभिर्ऋग्भिः उत्तरयोः सवनयोरतिशंसनं क-

र्त्तव्यमिति। अस्मिन् सूत्रे उत्तरयोः सवनयोरितिवचना-
देव पूर्वसूत्रस्य प्रातःसवनविषयत्वे सिद्धे यत् पूर्वसूत्रे प्रातः-
सवनग्रहणं करोति तज्ज्ञापयति। ब्राह्मणे विधिद्वयं ताव-
दस्ति अनवानं प्रातःसवने यजेदित्युक्त्वा अनन्तरमेकां द्वे न
सोममतिशंसेदित्युक्त्वा अपरिमिताभिरुत्तरयोः सवनयोः इत्ये-
को विधिः। अपरस्तु एकां द्वे न द्वयोः सवनयोः सोममति-
शंसेदित्युक्त्वा अपरिमिताभिस्तृतीयसवने इति। विधिद्वय-
सूचनस्येदं प्रयोजनं माध्यन्दिने सवने एकया द्वाभ्यां वा
प्रातःसवनेऽपरिमिताभिर्वाऽतिशंसनं कर्त्तव्यमिति ॥

पञ्चमस्येममूषुवो अतिथिमुषर्बुधमिति नवाज्य ॥ ६ ॥

षाष्ठिकस्य पञ्चमस्याह्नः इममूषुव इति नव ऋच आज्यं
भवति ॥

आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायो महेतन
इत्येका रथेन पृथुपाजसा बह्ववः सूरचक्षस इमा उ वां दिवि-
ष्टयः पिबा सुतस्य रसिनो देवं देवं वो वसे देवं देवं बृहदु-
गायिषेव च इति बार्हतं प्रउगं ॥ ७ ॥

प्रथमस्तृचो द्विप्रतीकः। एवमस्य प्रउगस्य बार्हतत्वं। द्वि-
तीयस्तृचं मुक्त्वाऽन्येषु षट्सु तृचेषु द्वितीयाः सत्यो बृहत्य उत्त-

मे तृतीया च ताः सप्त सन्ति। उत्तमायास्त्रिर्वचनेन नव सन्ति। नवसु ऋक्षु अतिरिक्तानि षट्त्रिंशदक्षराणि तानि द्वितीये गायत्रे तृचे प्रक्षिप्य सर्वं बार्हतं तृचं भवति। श्रुतेरप्ययमेवाभिप्रायः॥

प्रगाथानेके द्वितीयोत्तमवर्ज्जं॥ ८॥

द्वितीयोत्तमौ तृचौ वर्जयित्वाऽन्ये तृचा एव भवन्ति इत्येकेषां मतं। प्रगाथशब्देनात्र तृचत्वमेवेष्यते, न प्रगाथधर्मः आहावादिः। 'पुरोरुग्भ्य आह्वयीत' इति तत्र नियमात्॥

यत् पाञ्चजन्यया विशेन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ। अवितासीत्याद्येन्द्र पिब तुभ्यमिति मरुत्वतीयं॥ ९॥

इदन्निसूक्तं॥

शाक्वरं चेत् पृष्ठं महानाम्न्यस्तास्तिस्रः। ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति॥ १०॥

ताः महानाम्नीरध्यर्धकारं शंसेत्त्रिभिस्त्रिभिरर्धर्चैरवसानं प्रणवञ्च कुर्यादित्यर्थः। ता अध्यर्धकारं शंसेद्यथा प्रकृत्या नव सत्यस्ता एव तिस्रो भवन्तीति सूत्रार्थः॥

तामिः पुरीषपदान्युपसन्तनुयात् ॥ ११ ॥

ताभिर्महानाम्नीभिः पुरीषपदान्युपसन्तनुयात्। महानाम्न्यो नाम नवर्चो नव पदानि पुरीषपदसंज्ञानि, तासामृचामन्त्येन प्रणवेन प्रथमं पुरीषपदं सन्धाय ततः सर्वाणि यथा पठितानि शंसेदन्त्ये प्रणवं कृत्वाऽनुरूपमुपसन्तनुयात्। तत्रान्येषु पञ्चसु शंसनविशेष उच्यते ॥

पञ्चाक्षरशः पूर्वाणि पञ्च ॥ १२ ॥

एवाह्येवेत्यवसाय पञ्च पदानि शंसेत्। उत्तराणि यथापठितमेव। अपवादाभावात्। अन्त्ये च प्रणवः कर्त्तव्य एव ॥

सर्वाणि वा यथानिशान्तं ॥ १३ ॥

सर्वाणि वा नव पदानि यथापठितमेव शंसेत् न पञ्चाक्षरशः पञ्च पदानीति। पञ्चानां पञ्चाक्षरशः शंसननिवृत्तिपरमेतत् सूत्रं न परेषां शंसनं तद्विशेषं वा विदधाति, अन्यत एव तस्यार्थस्य सिद्धेरिति ॥

योनिस्थाने तु यथानिशान्तं सपुरीषपदा उत्तमेन सन्तानः ॥ १४ ॥

योनिशंसनस्थाने त्वयं विशेषः। हृषस्व यथानिशान्तमेव

शंसेत्, न केवलं पुरीषपदान्येव। यथाम्नायान्तवचनादृच्व-पि प्रणवो न कर्त्तव्यः। सपुरीषपदा इति पुरीषपदैः सह ऋचश्च यथापठितं शंस्तव्या इत्यर्थः। अस्मिन्नपि पक्षे उत्तमे पदे प्रणवं कृत्वा तेनोत्तरं मन्द्रयात्। अस्य विधेः प्रणव-निषेधपरत्वादुत्तमेऽपि पदे प्रणवनिषेधशङ्का स्यात्, तन्नि-वृत्त्यर्थमुत्तमेन सन्तान इत्युक्तं॥

स्वादोरित्था विषूवत उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्निति त्रयस्तृचा अनुष्टुभः॥ १५॥

अनुष्टुप्त्वादेता अपि अध्यर्धकारमेव शंस्तव्याः॥

प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यं ॥ १६॥

इदमपि त्रिसूक्तमेव॥

पाङ्क्ते पूर्वा सूक्ते मरुत्वतीये पाङ्क्ते निष्केवल्ये॥ १७॥

द्वयोः शस्त्रयोर्मध्ये सूक्ते पाङ्क्ते एव। आद्ये तु शाकराति-जागते, तयोरपि पाङ्क्तत्वविधानं पङ्क्तिशंसनप्राप्त्यर्थं। तेन त-योरपि प्रत्यृचमवसानद्वयं भवतीति गम्यते। अवसानस्थानमु-त्तरत्र वक्ष्यति॥

आद्ये तु त्रिष्टुबुत्तमे ॥ १८ ॥

तत्र तत्र च द्वे पाङ्क्ते ये उक्ते, तयोर्ये आद्ये सूक्ते, तयोरुत्तमे त्रिष्टुभौ भवतः। त्रिष्टुबुत्तमा यस्य तत्त्रिष्टुबुत्तमं, ते द्वे इति त्रिष्टुबुत्तमे। 'श्यावाश्वस्य सुन्वतः' 'श्यावाश्वस्य रेभतः' इत्येते ऋचौ अक्षरतस्त्रिष्टुब्जगत्योः साधारणे इति त्रिष्टुब्वचनं। तथा टएु लमेक इदनयोः पादौ ॥

तयोरवसाने शतक्रतो समप्सुजिदिति मरुत्वतीये ॥ १९ ॥

'अविवासि' इत्यस्यावसाने 'शतक्रतो समप्सुजित्' इति ॥

शचीपतेऽनेद्येति निष्केवल्ये निष्केवल्ये ॥ २० ॥ ॥ १२ ॥

प्रेदं ब्रह्मेत्यस्यावसाने शचीपतेऽनेद्येति ॥

इत्युत्तरषट्कस्य प्रथमे द्वादशी कण्डिका ॥ ❀ ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां सप्तमोऽध्यायः।
॥*॥ उत्तरषट्के प्रथमोऽध्यायः ॥*॥

॥ ॐ ॥

षष्ठस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्तादन्याः कृत्वोभाभ्यामनवानन्तो यजन्ति ॥ १ ॥

पृष्ठ्योऽधिकृतः, तस्य षष्ठमहरिदानीमुच्यते। तस्य षष्ठस्याह्नः प्रातःसवने याः प्रस्थितयाज्यास्तासामयं विशेषः। एकैकस्याः पुरस्तादेकैकामन्यामृचमुक्त्वा उभाभ्यामनुच्छ्वसन्तो यागं कुर्युः। अन्या इति प्रकृतीभ्योऽन्या वक्ष्यमाणा इत्यर्थः। उभाभ्यामिति-वचनं उभयोः सङ्गतयोरेव याज्यात्वसिद्ध्यर्थं, नैकैकस्या अपीति। अनवानन्त इतिवचनमुभयोः सर्वत्राऽनवानसिद्ध्यर्थं॥

वृषन्निन्द्र वृषपाणास इन्दवः सुषुमायातमद्रिभिर्वनोति हि सुन्वन् क्षयं परीणसो मोषुवो अस्मदभितानि पौंस्योपूर्णो अग्ने पृणुहि त्वमीडितोऽग्निं होतारं मन्ये दास्वन्तं दध्यङ् ह मे जनुषं पूर्वो अङ्गिरा इति ॥ २ ॥

सप्तैता ऋचः प्रस्थितयाज्यास्तु सप्तैव याज्यावाकानां तेन तासां यथासङ्ख्येन भवन्ति॥

एवमेव माध्यन्दिनेऽध्यर्धान्तु तत्रानवानं ॥ ३ ॥

तत्र माध्यन्दिने सवने प्रस्थितयाज्यानामध्यर्धामेवानवानं

ब्रूयात् पूर्वामनुक्त्वसनुक्त्वा उत्तरां सन्धाय तस्या अर्धर्च्यवसाय यष्टव्यमित्यर्थः। तत्रग्रहणं तत्रैव माध्यन्दिने अध्वर्धानवानं भवति, उत्तरसूत्रविहितानामृतुयाजानां पूर्वोक्त एवोभाभ्यामनवानन्त इत्ययमेव विधिर्भवतीत्येवमर्थं॥

पिबा सोममिन्द्र सुवानमद्रिभिरिन्द्राय हि द्यौरसुरो अनम्नतेति षट्॥ ४॥

एताः सप्त माध्यन्दिने आगन्तव्याः प्रस्थितयाज्याः॥

उपरिष्टात् त्वृच ऋतुयाजानां॥ ५॥

अन्याः कृत्वोभाभ्यामनवानन्तो यजन्ति प्रेष्यति चेति शेषः॥

प्रैषमृते सौयजमृचं चानवानमुक्त्वा ऋगन्तैरसौ यजेति प्रेष्येत्॥ ६॥

ऋतुप्रैषान् होतर्यजेत्यादिशब्दरहितानुक्त्वा तैर्ऋचः सन्धाय ऋगन्तैर्होतर्यजेत्यादिशब्दान् सन्धाय तैर्मैत्रावरुणः प्रेष्यति॥

एवमेव यजन्ति॥ ७॥

एवंक्रमात्तयोरेव होता यत्रदसोयजयोः स्थाने अगूर्वषट्कारौ कृत्वा यजन्तीत्यर्थः॥

तुभ्यं हिन्वानो वसिष्ठगा अप इति द्वादश॥ ८॥

एता ऋतुयाज्यानामृचः॥

अयं जायत मनुषो धरीमणीत्याज्यं॥ ९॥

एतत्सूक्तमस्याऽऽज्यं भवति। आज्यकार्यस्य प्रकृतौ सूक्तसाध्यत्वात् पादग्रहणेऽपि इदं सूक्तमेव भवति। पादग्रहणं ब्राह्मणानुवादः॥

एकेन द्वाभ्याञ्च विग्रहः॥ १०॥

आज्याद्याया: प्रथमेऽर्धर्चे विग्रहः प्रकृतिप्राप्तः। अत्र प्रथमार्धर्चस्य त्रिपादत्वात् विग्रह इति संशयनिवृत्त्यर्थमिदमुच्यते। पूर्वमेकः पादः पश्चाद्द्वौ पादौ यथा भवति तथा विग्रहः कर्त्तव्य इत्यर्थः॥

त्रिभिरवसानं चतुर्भिः प्रणवो यत्रार्धर्चशः पाच्छेप्यः॥ ॥ ११॥

सप्तपदानां पारुच्छेपीनामर्धर्चबहुत्वात् सकृदवसाने प्राप्ते इदमुच्यते, त्रिभिरवसानं चतुर्भिः प्रणव इति। अत एवायं विधिः पारुच्छेपीनां सप्तपदानामेव भवतीत्युक्तं। अतः असप्तपदानां त्रिभिरवसानं चतुर्भिः प्रणवो न सम्भवतीति।

पच्छःशस्यानामुपरिष्टाद्विधीयमानत्वाद्यत्र पच्छः पादश्चेष्य इत्युक्तेऽप्यर्धर्चस्यविषय एवायं विधिर्भवति तत्र किमर्धर्चश इत्युच्यते। तस्येदं प्रयोजनं। यदा पुनरयाहचेति पादश्चेष्यो ग्रावस्तोत्रं प्राप्नुवन्ति तदाप्यवसानप्रणवयोरयमेव विधिर्भवति इत्येवमर्थमर्धर्चश इतिवचनं ॥

स्तीर्णं बर्हिरिति तृचौ सुषुमायातमद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनावर्मद्व इन्द्र वृषन्निन्द्रास्तुश्रौषडोपृणो अग्ने शृणुहि त्वमीडितो ये देवासो दिव्येकादश स्थेयमददाद्रभसमृणच्युतमिति प्रउगं। द्वे चैका च पञ्चमे। एकपातिन्य उपोत्तमे। तृच इत्युभयत्र शेषः। उत्तमेऽन्वृचमभ्यासा अष्टाक्षराः ॥ १२ ॥

अष्टाक्षरा इत्यभ्यासविशेषणं। अन्यपदार्थत्वाद्वह्नोहेः पुंलिङ्गं भवति। उत्तमे तृचे इयमददादित्येतस्मिन् प्रत्यृचमन्ततो यान्यष्टावक्षराणि तानि द्विरुक्त्वा प्रणवः कर्त्तव्य इत्यर्थः ॥

नवा ॥ १३ ॥

वाशब्दः पक्षं व्यावर्त्तयति, नैवाभ्यासः कर्त्तव्य इति। श्रुतावतिच्छन्दःशब्दस्य विधेयत्वं मन्यमानेनाभ्यास उक्तः,

तस्य विधेयत्वं न सम्भवति, प्राप्तार्थत्वात् पारुच्छेपीयेषु तृचेषु, अतोऽनुवादत्वैवाचावगता। न ह्येकः शब्दः प्राप्तमनुवदत्यप्राप्तं च विदधाति। तेनाच प्रउगेऽतिच्छन्दःशब्दः पारुच्छेपशब्दश्च ब्राह्मणग्रामशब्दवत् प्रयुक्ताविति सिद्धं॥

स पूर्व्यो महानां त्वय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ। यं त्वं रथमिन्द्र स यो वृषेन्द्र मरुत्व इति तिस्र इति मरुत्वतीयं॥ १४॥

अन्त्येन तृचेन सह त्रीणि सूक्तान्यत्र॥

एकेनाग्रेऽवसाय द्वाभ्यां प्रणुयात् द्वाभ्यामवसाय द्वाभ्यां प्रणुयाद्यत्र पच्छः पारुच्छेप्यः॥ १५॥

यत्र विषये त्रिष्टुब्जगत्यादीनां चतुष्पदानां पच्छःशंसनं विहितं तत्र पारुच्छेपीनामेवं भवति, एकेन पादेनाग्रेऽवसाय ततो द्वाभ्यां प्रणुयात्, पुनर्द्वाभ्यामवसाय द्वाभ्यामेव प्रणुयात्। अग्रग्रहणं पारुच्छेपीनां सप्तपदानामेवायं विधिः स्यादित्येवमर्थं। एतदुक्तं भवति। यास्वृचु एकेनाग्रेऽवसाय ततो द्वाभ्यां प्रणुयात् पुनश्च द्वाभ्यामवसाय द्वाभ्यामेव प्रणवः सम्भवति तासु पारुच्छेपीष्वयं विधिर्भवति। यत्र पच्छः पारुच्छेप्य इति सार्वत्रिकोऽयं विधिरिति दर्शयति। तेन 'इन्द्राय हि द्यौरसुरः' इत्ये-

वमादिष्वपि भवति। 'स नो नव्येभिः' इत्येवमादिष्वसन्नपदत्वान्न भवति॥

रैवतश्चेत् पृष्ठं। रेवतीर्नः सधमादे रेवाँ इद्रेवतः स्तोतेति स्तोत्रियानुरूपौ॥ १६॥

निष्केवल्यस्य स्तोत्रे यदि रैवतं साम स्यादित्यर्थः। छन्दोगप्रत्ययत्वादनित्यवचनं॥

ऐन्द्र याह्युप नः प्रधान्वस्याभूरेक इति निष्केवल्यं॥ १७॥

इदमपि त्रिसूक्तं॥

अभि त्वं देवं सवितारमोण्योरित्येका तत् सवितुर्वरेण्यमिति द्वे दोषो आगाद्बृहद्गायद्युमद्गेह्याथर्वण। सुघि देवं सवितार। तमु ष्टुह्यन्तःसिन्धुं सूनुं सत्यस्य युवानं। अद्रोघवाचं सुशेवं। सघानो देवः सविता साविषदसुपतिः। उभे सुचितो सुधातुरिति वैश्वदेवस्य प्रतिपदनुचरौ॥ १८॥

एकाग्रहणमृचां पादग्रहणमित्येवमादीनामेतच्छास्त्राकाणां परिभाषाणां खिलेष्वप्रवृत्तेः। तत् सवितुर्वरेण्यमित्यनयोरभिन्नवप्राप्तयोरप्यसति पुनर्वचने चतस्र एवर्चः प्रतिपदनुचरौ स्यातां। तत्राभित्यमित्येषा ऋक् त्रिरभ्यस्ता प्रति-

पत् स्यात्, अन्यथा वा स्यात्, अतस्तन्निवृत्त्यर्थं पुनर्वचनं। इदं चैकाग्रहणस्य पुनर्वचनस्य च प्रयोजनं एतास्विस्त एवर्चः प्रतिपत्स्यात्, उपरितनास्तु तिस्र एवानुचरः स्यादित्येवमर्थं। इतरथा 'विश्वो देवस्य नेतुः' इत्यस्या अनेकाहिकत्वादुद्धारो न स्यादिति॥

उद्धृत्य चोत्तमं सूक्तं त्रीणि॥ १९॥

अभिप्लवातिदेशात् प्राप्तानां सूक्तानां यदुत्तममुपामा न-क्तेत्येतत् सूक्तं उद्धृत्य तत्स्थाने त्रीणि सूक्तानि वच्यमाणानि भवन्तीत्यर्थः। कानि तानि केन वा क्रमेण शंस्तव्यानि कथं वा शंस्तव्यानीत्येतत्संशयनिवृत्त्यर्थमाह॥

इदमित्था रौद्रमिति॥ २०॥

एतदेकं सूक्तं शंस्तव्यमित्यर्थः॥

प्रागुपोत्तमाया ये यज्ञेनेत्यावपते॥ २१॥

इदमित्थेत्येतस्य सूक्तस्य उपोत्तमायाः प्राक् ये यज्ञेनेत्ये-तत् द्वितीयं सूक्तमावपेत्॥

तस्यार्धर्चशः प्रागुत्तमाया ऊर्ध्वञ्चतुर्थ्याः॥ २२॥

तस्य ये यज्ञेनेत्यस्य चतुर्थ्या ऊर्ध्वमुत्तमायाः प्राक् याः

षडृचः ता अर्द्धर्चशः शंस्तव्याः 'विरूपासः' इत्येवमाद्याः। 'प्राक् छन्दांसि' इत्यनेनैव प्राप्तस्य पुनर्वचनं विच्छन्दसामुद्धार-सूक्तन्यायशंसनयोराश्विन एव प्रवृत्तिर्नान्यत्रेति प्रकटनार्थं॥

**शिष्टे शस्त्वा स्वस्ति नो मिमीतामश्विना भग इति तृचः॥ ॥२३॥**

'शिष्टे' इति 'इदमित्था' इत्यस्योपोत्तमोत्तमे 'स प्रत्नथा' इत्यादिके। अयं तृचस्तृतीयं सूक्तं भवति। शिष्टे शस्त्वा एतं तृचं शंसेत्। उद्धृत्येतिवचनं 'उषासा नक्ता' इत्यस्य ऐकाह्निक-स्यापि समुच्चयनिवृत्त्यर्थं। त्रीणीत्यर्थस्य सिद्धस्य पुनर्वचनमुत्तमं सूक्तमुद्धृत्य तत्स्थाने त्रीणि सूक्तानि भवन्तीत्येवमर्थं। इतरथा उत्तमं सूक्तमुद्धृत्य इदमित्येत्यस्य प्रागुपोत्तमायाः शंसेदित्येव-त्येवमाद्याः भ्रान्तयः स्युरिति। आवपतिग्रहणमन्यत्रापि अन-योः सूक्तयोः प्राप्तौ प्रागुपोत्तमाया एव एतत्सूक्तमावप्त-व्यमित्येवमर्थं॥

**इति वैश्वदेवं॥ २४॥　　॥ १॥**

वैश्वदेवाधिकारे पुनर्वैश्वदेवग्रहणं विस्पष्टार्थं॥

इत्युत्तरषट्कस्य द्वितीये प्रथमा कण्डिका॥ ०॥

---

होत्रकाणां द्विपदास्त्रिहोक्थ्येषु स्तुवते ॥ १ ॥

इह पार्ष्ठिके षष्ठेऽहनि तृतीयसवने होत्रकाणां उक्थसंज्ञकेषु शस्त्रेषु द्विपदासृत्सु छन्दोगाः स्तुवते। होत्रकाणामित्ययमधिकारार्थः। तस्योपयोगमुत्तरत्र वक्ष्यामः। द्विपदाग्रहणं लक्षणतो द्विपदात्वे सिद्धेऽपि समाम्नायप्रसिद्धेर्बलीयस्त्वार्थं। इहेति विस्पष्टार्थं। उक्थानीति तार्त्तीयसवनिकानां होत्रकशस्त्राणां संज्ञा। शंस्यविशेषविधानार्थः परकर्तृकस्तवनोपदेशः॥

अत ऊर्ध्वमनुरूपेभ्यो विहृतानि शिल्पानि शंसेयुः॥ २ ॥

ते होत्रका अनुरूपेभ्य ऊर्ध्वं वालखिल्यादीनि शिल्पसंज्ञकानि विहरणन्यूङ्खनिनर्दादिभिर्विहृतानि शंसेयुः। शंसेयुरितिवचनं होत्रका एवानुरूपेभ्य ऊर्ध्वं शिल्पानि शंसेयुः, होता त्वन्यत्रेतिज्ञापनार्थं। तेन नाभानेदिष्ठस्यापि शिल्पत्वं साधितं भवति। ऊर्ध्वमनुरूपेभ्य इति शिल्पानां स्थानविधानं। विहृतानीतिवचनं विहृतान्यविहृतानि चेति शिल्पानां द्वैविध्यज्ञापनार्थं। तेन एतेषु त्रिषु शस्त्रेषु विहृतानि शिल्पानीति विद्यात्। यानि पुनः प्रकृत्या शिल्पानि शंसेयुरित्यारभ्योक्तानि तान्यविहृतानीति विद्यात्। द्वैविध्यस्य प्रयोजनं शिल्पान्यविहृतानि शंसेयुरित्यत्राविहृतानामेव प्रापणार्थं॥

मैत्रावरुणस्याग्ने त्वं नो अन्तमोऽग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपौ। अथ वालखिल्या विहरेत् ॥ ३ ॥

अथास्मिन्नवसरे वालखिल्या ऋचो विहरेत्। ताश्च 'अभि-प्रवः सुराधसम्' इत्येवमाद्याः ॥

तदुक्तं षोडशिना ॥ ४ ॥

तद्विहरणं षोडशिना व्याख्यातं 'पादान् व्यवधाय' इत्येव-मादिना। तस्यैव विशेषं वक्तुमाह ॥

सूक्तानां प्रथमद्वितीये पच्छः ॥ ५ ॥

यास्ता वालखिल्यसंज्ञका ऋचस्ता अष्टौ सूक्तानि, तेषां ये प्रथमद्वितीये सूक्ते ते परस्परं पच्छो विहरेदित्यर्थः ॥

तृतीयचतुर्थे अर्धर्चशः ऋक्शः पञ्चमषष्ठे। व्यतिमर्शं वा विहरेत् ॥ ६ ॥

अयमन्योऽपि विहारप्रकार उच्यते। व्यतिमृश्य व्यतिमृ-श्य वा विहरणं कर्त्तव्यं। व्युत्क्रमेणेत्यर्थः। तमेव विवृणोति ॥

पूर्वस्य प्रथमामुत्तरस्य द्वितीयया ॥ ७ ॥

पूर्वस्य सूक्तस्य प्रथमामृचमुत्तरस्य सूक्तस्य द्वितीयया ऋचा विहरेत् ॥

उत्तरस्य प्रथमां पूर्वस्य द्वितीयया ॥ ८ ॥

उत्तरस्य प्रथमामृचं पूर्वस्य द्वितीयया ऋचा विहरेत्। एवं प्रथमद्वितीययोः सूक्तयोर्द्वयोर्द्वयोर्ऋचोर्विहार उक्तः। अथेदानीं तयोरेव सूक्तयोरन्यासामृचामेवंप्रकारस्य व्यतिमर्शविहारस्य प्रापणार्थमाह ॥

तयोर्नानर्चा ॥ ९ ॥

ऋचामिति शेषः। तयोः सूक्तयोः। शिष्टानामप्यृचां मध्ये एकैकामृचं व्युत्क्रमस्थामनेन प्रकारेण व्युत्क्रमस्थया पृथक् पृथग्विहरेदित्यर्थः ॥

प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत् प्रथमद्वितीयाभ्यां प्रणुयात् तृतीयोत्तमाभ्यामवस्येत् तृतीयोत्तमाभ्यां प्रणुयात् ॥ ॥ १० ॥

ऋग्व्यतिमर्श उक्तः। पादव्यतिमर्शश्च कर्त्तव्यः। स एतैश्चतुर्भिः सूत्रैरुच्यते। प्रथमद्वितीयाभ्यामित्येते शब्दाः ऋग्द्वयापेक्षया कल्पनीयाः। प्रथमद्वितीययोः सूक्तयोर्व्यतिमर्शविहार उक्तः, अथेदानीमुत्तरेषामाह ॥

एवं व्यतिमर्शमर्धर्चशः उत्तरे। एवं व्यतिमर्शमृक्श उत्तरे॥ ११॥

व्यतिमर्शाधिकारे पुनर्व्यतिमर्शग्रहणं प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत् प्रथमद्वितीयाभ्यां प्रणुयादित्येवमादिनिवृत्त्यर्थं। अतस्तृतीयचतुर्थयोः सूक्तयोः प्रथमेनार्धर्चेनावस्येत्, द्वितीयेन प्रणुयात्, पुनश्च प्रथमेनावसाय द्वितीयेन प्रणुयादितीदश्च ऋग्विषयमेव। पञ्चमषष्ठयोः प्रथमां शस्त्वा द्वितीयां शंसेत्। पुनश्चैवं॥

विपरिहरेदेवोत्तमे सूक्ते गायत्रे सर्वत्र॥ १२॥

ये वालखिल्यानां सप्तमाष्टमे सूक्ते तयोर्विपर्यासं कृत्वा शंसेत्। अष्टमं पूर्वं शस्त्वा पश्चात् सप्तममित्यर्थः। एवकारो विपरिहार एवात्र तयोः कर्त्तव्यो न विहारप्रतिगर इत्येवमर्थः। उत्तमवचनमष्टावेव सूक्तानि वालखिल्यशब्दवाच्यानीत्येवमर्थं। गायत्रवचनमुत्तमायाः पङ्क्तेः पङ्क्तिशंसननिवृत्त्यर्थं। अतोऽसावर्धर्चशः शंस्तव्या। सर्वत्रवचनमस्य विधेः पूर्वस्मिन्नपि विहारे प्रापणार्थं॥

इमानि वां भागधेयानीति प्रागुत्तमाया आहूय दूरोहणं रोहेत्॥ १३॥

वालखिल्याभ्य ऊर्ध्वमिमानि वां भागधेयानीत्येतत् सै-

पर्णं सूक्तं शंसेत्। तस्य प्रागुक्तमाया ऋच आहूय दूरोहणं रोहेत्। आहावोऽयं पूर्वो विधीयते। दूरोहणमिति वक्ष्यमाणविषयस्य शंसनस्य संज्ञा। रोहेदिति शंसेदित्यर्थः। तच्छंसनमारोहणमवरोहणस्वरूपं इति कृत्वा रोहेदित्युक्तं, तदिदानीमुच्यते॥

हंसः शुचिषदिति पच्छोऽर्धर्चशस्त्रिपद्या चतुर्थमनवानमुक्त्वा प्रणुत्यावस्येत्। पुनस्त्रिपद्याऽर्धर्चशः पच्छ एव सप्तमं॥ ॥ १४ ॥

एतामृचमित्थं शंसेत्। प्रथमं पच्छः द्वितीयमर्धर्चशः। तृतीयं त्रिभिः पादैरवसाय उत्तमेन पादेन प्रणुत्य चतुर्थमनवानमुक्त्वा प्रणवेनावस्येत्। एतदारोहणं। अथावरोहणं। पुनस्त्रिपद्येत्येवमादिनोक्तं पञ्चमं। अर्धर्चशः षष्ठं पुनः पच्छः सप्तमं। एतत् दूरोहणं भवति। सप्तमवचनं नियमेन ऋक् सप्तकृत्वोऽभ्यस्ता दूरोहणमितिज्ञापनार्थं। एवकारः पौनर्वचनिकः॥

एतत् दूरोहणं॥ १५॥

दूरोहणमिति प्रकृते पुनर्दूरोहणवचनं द्विविधं दूरोहणमस्तीति प्रदर्शनार्थं। तेन स्वर्गकामस्य चतुरभ्यस्तैव दूरोहणं भवति। तथा च श्रुतिः 'अथ य एककामाः स्युः' इत्यादिः॥

आवां राजानाविति नित्यमैकाहिकं ॥ १६ ॥

दूरोहणानन्तरं अस्य सूक्तस्योत्तमां गत्वा आवां राजानाविति शंसेत्, अन्यदैकाहिकमर्थं लुप्तं भवति। ऐकाहिकस्य नित्यवचनात् अनैकाहिकमनित्यमिति दर्शयति। तथाच श्रुतिः 'तं यदि दर्प एव विन्देत्' इति ॥

इति नु द्वैपिडनौ ॥ १७ ॥

यावेता उक्तौ विहारौ तौ द्वैपिडनसंज्ञकावित्यर्थः ॥

अथ महावालभित् ॥ १८ ॥

अथानन्तरं महावालभिन्नामको विहारो वच्यत इत्यर्थः ॥

एतान्येव षट् सूक्तानि व्यतिमर्शं पच्छो विहरेद्व्यतिमर्शमर्धर्चशो व्यतिमर्शमृक्शः ॥ १९ ॥

वालखिल्यानामादितः षट् सूक्तानि त्रिप्रकारं विहरेदित्यर्थः। एवकारः पौनर्वचनिकः ॥

प्रगाथान्तेषु चानुपसन्तानमृग्गावानमेकपदाः शंसेत् ॥ २० ॥

वालखिल्यानां षट् सूक्तानि, अष्टाविंशतिः प्रगाथाः। तेषा-

मन्त्रेषु अनुपसन्तानमृगावानमुक्तं वक्ष्यमाणा एकपदाः शंसेत्। अनुपसन्तानस्य ऋगावानस्य अनुपसन्तानमृगावानं। निवृत्तिरत्र छान्दसी। अनुपसन्तानऋगावानशब्दयोर्द्वन्द्वैकवद्भावः। तौ चैकपदानां शंसनक्रियाया विशेषणत्वेन सम्बध्येते। तेनानुपसन्तानविशिष्टं ऋगावानविशिष्टञ्च प्रगाथे प्रगाथे समाप्ते एकपदानामेकैकां शंसेदित्यर्थः। अनुपसन्तानता चैकपदानामृगावानवचनादेवोत्तरैः प्रगाथैर्न विधातव्या भवति। अतः पूर्वैः प्रगाथान्तैरेव सम्बध्यते। तस्य चैकपदानां शंसनविशेषणत्वेनोपादानान्नायं सन्तानप्रतिषेधपरः, नाप्यवसानविधिपरश्च। अतो यः प्रगाथान्ते प्रणवः स त्रिमात्र एव भवति। ऋगन्तत्वात् प्रणवस्य प्राप्तिरस्ति। अवसानविध्यभावाच्चतुर्मात्रता नास्तीति सिद्धं॥

इन्द्रो विश्वस्य गोपतिरिन्द्रो विश्वस्य भूपतिरिन्द्रो विश्वस्य चेततीन्द्रो विश्वस्य राजतीति चतस्रः॥ २१॥

एतास्रतस्रो दशमेऽहनि श्रुतावुत्पन्ना अप्येता आचार्येणात्रैव पठिताः॥

एकां महाव्रतादाहरेत्॥ २२॥

'इन्द्रो विश्वं विराजति' इत्येतामित्यर्थः॥

त्रयोविंशतिमष्टाक्षरान् पादान् महानाम्नीभ्यः सपुरीषाभ्यः ॥ २३ ॥

महानाम्नीषु सपुरीषपदास्वपि कर्षणेऽष्टाक्षरास्त्रयोविंशतिरव पादाः सन्ति तान् सर्वानाहरेत् तैः सहाष्टाविंशतिरेकपदा भवन्ति ॥

षोडशिनोक्तः प्रतिगरोऽन्यत्रैकपदाभ्यः ॥ २४ ॥

विहृतान्सर्वर्त्तिनामेकपदानां विहृतप्रतिगरप्रतिषेधार्थमिदं सूक्तं ॥

अवकृष्यैकपदा अविहरंश्चतुर्थं शंसेत् ॥ २५ ॥

एतानि षट् सूक्तान्यविहरन् चतुर्थंरूपकं शंसेत्। एकपदाश्च वर्जयित्वा चतुर्थं शंसेत्। अविहरन्निति विस्पष्टार्थं ॥

समानमन्यत् ॥ २६ ॥ ॥ २ ॥

स्तोत्रियानुरूपौ इमानि वा इत्येतत् समानं, पूर्वाभ्यां विहाराभ्यामित्यर्थः ॥

इत्युत्तरषट्कस्य द्वितीये द्वितीया कण्डिका ॥ ० ॥

---

ब्राह्मणाच्छंसिन इमानुकं भुवनासीषधामेति पञ्चायावाजं देवहितं सनेमेति स्तोत्रियानुरूपौ ॥ १ ॥

इमानुकमिति पञ्च द्विपदाः। अयावाजमित्येका द्विपदा। एतौ ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ ॥

अपप्राच इन्द्रेति सुकीर्त्तिः ॥ २ ॥

इदं सूक्तं सुकीर्त्तिर्नाम वेदितव्यं। अस्याः संज्ञायाः प्रवृत्तिनिमित्तं तदार्षत्वं न तच्छन्दवत्त्वमित्येतत्प्रतिपादनार्थं सूक्तादिग्रहणं ॥

तस्यार्धर्चशस्तुर्थी ॥ ३ ॥

'युवं सुरामम्' इत्यस्य अनुष्टुप्त्वादेवार्धर्चशंसने प्राप्ते पुनरर्धर्चशंसनवचनं प्राप्तानुवादः पुनःप्रदर्शनार्थः। एवंप्रकाराया अन्यशस्त्रमध्यगताया अर्धर्चशः शंसनं स्वच्छन्दोन्यायेन शंसनं भवतीति ॥

अथ वृषाकपिं शंसेद्यथा होताऽऽज्याद्यां चतुर्थे ॥ ४ ॥

'विहि होताः' इत्येतत् सूक्तं वृषाकप्यार्षत्वाद्वृषाकपिरित्युच्यते। अस्य शंसनोपायः पार्ष्ठिके चतुर्थेऽहनि आज्याद्यां यथा होता शंसेत् तथा वृषाकपिं ब्राह्मणाच्छंसी शंसेत्।

तस्यां ये धर्मास्त इह कर्त्तव्या इत्यर्थः। अर्धर्चशंसनं विग्राह्यः त्रिरभ्यासो न्यूङ्खो निनर्दः प्रतिगरश्चेति तस्या धर्माः। विग्राह्यः सर्वाज्याद्यायाः सामान्यधर्मः। अर्धर्चशंसनञ्चास्या एव धर्मः, त्रिरभ्यासश्च तादृश एव। न्यूङ्खनिनर्दावपि न केवलं तस्या एव उत्तरासामपि, साधारणत्वात्। तयोरतिदेशे तु येन यत्रातिदेशः कृतस्तस्य वैशेषिकधर्मास्त एवातिदिश्येरन्, न तत्र प्रयुज्यमानाः सामान्यधर्मा अपि। एवं सिद्धे यद्धोतृ-ग्रहणं करोति तस्येदं प्रयोजनं, चतुर्थेऽहन्याज्याद्यायां ये धर्माः प्रयुज्यन्ते साधारणा वैशेषिकाश्च ते सर्वे चातिदिश्येरन्निति। एतच्च होतृशब्दस्य कर्त्तृविशेषवाचिकत्वात् कर्त्तुश्च प्रयोगानुबन्धभूतत्वाल्लभ्यते। एवं त्रिरभ्यासोऽपि प्राप्नोति, तत् कुतः उक्तं होतृग्रहणं प्रयोगप्रत्यभिज्ञानार्थमिति। तेनाज्याद्याया आद्यो यः प्रयोगस्तावन्मात्र एवातिदेशे सिद्धे पुनरभ्यासस्य प्रापकं नास्तीति सिद्धं॥

पङ्क्तिशंसन्त्विह॥५॥

पङ्क्तित्वादेव पङ्क्तिशंसने प्राप्ते पुनर्वचनमाज्याद्यायां प्रयुज्यमानत्वादर्धर्चशंसनमपि प्राप्नोतीति तन्निवृत्त्यर्थं। तुशब्दो विशेषद्योतकः। अयमत्र विशेषः पंक्तिशंसनमिति। इहेति प्रसिद्धोऽयमर्थ इति दर्शयति, यस्मादयं वृषाकपिः पङ्क्तिच्छन्दास्तस्मादिह पङ्क्तिशंसनमेवेति। अनेनैतत् साधितं भवति अतिदेशेनान्यच्छन्दःशंसनमन्यच्छन्दसो न प्राप्यत इति॥

अप्रणवान्तस्य प्रतिगरो द्वितीये पाङ्क्तावसाने ॥ ६ ॥

आज्याद्याया अतिदेशे सति न्यूङ्खनिनर्दै विकृतप्रतिगरोऽपि प्राप्त एव। तत्रार्धर्चशः शस्यत्वात् प्रतिगरस्य च प्रणवान्तत्वेन पठितत्वात् तत्र प्रणव एवासौ सम्पद्यते, इह पुनः पङ्क्तिशंसनत्वात् न्यूङ्खादिविकृतः प्रतिगरोऽवसाने सम्पद्यत इत्यप्रणवान्त इत्युच्यते। अप्रणवान्तस्य प्रतिगर इत्येतावतैव सिद्धे द्वितीये पाङ्क्तावसान इतिवचनं प्राप्तोऽयमर्थ इति दर्शयति। यस्मादस्मिन्नवसाने प्रणवो नास्ति तस्मादन्यस्मिन्नवसाने प्रणवान्त एव प्रतिगर इति प्राप्ते विवेकस्येदं प्रयोजनं, योऽयं न्यूङ्खादिविकृतः प्रतिगरः स प्राकृत एवेति प्रतिपत्तव्यं। तेन एतत् साधितं भवति, प्राकृतकार्यकरत्वात् प्राकृतस्य पुनः प्रयोगो न कर्त्तव्य इति ॥

तस्मादूर्ध्वं कुन्तापं ॥ ७ ॥

तस्माद्वृषाकपेरूर्ध्वं कुन्तापं शंसेत्। तस्मादूर्ध्वमितिवचनात् माध्यन्दिने वृषाकपौ प्रविष्टे तदनन्तरं कुन्तापः स्यादसति प्रवेशे तृतीयसवनेऽपि तस्य प्रवेशो नास्तीति गम्यते ॥

तस्यादितश्चतुर्दश विग्राह्यं निनर्द्यं शंसेत् ॥ ८ ॥

तस्य कुन्तापस्यादितश्चतुर्दश ऋचो विगृह्य विगृह्य निनर्द्यं शंसेत्। विग्राह्याः प्रागुक्ता एव, निनर्दोऽयमपूर्व इति तस्य स्वरूपनिदर्शनमाह ॥

तृतीयेषु पादेषूदात्तमनुदात्तपरं यत् प्रथमं तन्निनर्दैत् ॥ ॥ ९ ॥

तृतीयेषु पादेष्वादितो यदक्षरं तदनुदात्तीकृत्य ब्रूयात्। एतदुक्तं भवति, तृतीयेषु प्रथममादित इत्यर्थः। आदितो ये द्वे अक्षरे तयोः पूर्वमनुदात्तं, तस्मात् परं द्वितीयं उदात्तं यथा भवेत् तथा निनर्दैत्, नितरां ब्रूयादित्यर्थः। तदेवमुच्चारणं निनर्दशब्देनोच्यत इत्यर्थः॥

तदपि निदर्शनायोदाहरिष्यामः। इदं जना उपश्रुत। नराशंसस्तविष्यते। षष्टिं सहस्रा नवतिञ्च कौरम आरुशमेषु दद्म होऽम्॥ १०॥

षकारोऽनुदात्तः, टिकार उदात्तः। अन्यदेकश्रुतिः॥

ओथामो दैवोमित्यस्य प्रतिगरः॥ ११॥

प्रतिगरेष्वादितो यदक्षरद्वयं तयोः पूर्वमनुदात्तं उत्तरमुदात्तं कृत्वा ब्रूयात्। एतस्मात् पाठादेवं लभ्यते, अयं प्रतिगरः प्रणवो अवसाने प्राकृत एवास्य प्रतिगर इति। निनर्दसहितस्यार्धर्चस्येत्यर्थः॥

चतुर्दश्यामेकेन द्वाभ्याञ्च विग्रहः॥ १२॥

'उप वो नर एनमषि' इत्येषा चतुर्दशी, सा पङ्क्तिः, तस्याः

प्रथमोऽर्धर्चस्त्रिपात्। तत्र विग्राहे क्रियमाणे एवं भवति, पूर्व-मेकेन विगृह्य ततो द्वाभ्यामवस्येदित्यर्थः॥

शेषोऽर्धर्चशः॥ १३॥

चतुर्दश्या ऋचो यः शेषः सोऽर्धर्चशः शस्तव्यः। पङ्क्तिशंसने प्राप्ते इदमुच्यते॥

एता अश्वा आप्लवन्त इति सप्ततिं पदानि॥ १४॥

सप्ततिवचनं शाखान्तरे क्वचित् षट्सप्तति पदानि सन्तीति-प्रदर्शनार्थं॥

अष्टादश वा॥ १५॥

एतावन्ति वा पदानि शंसेत्। तान्येतानीत्याह॥

नवाद्यानि॥ १६॥

आदितो नव पदानि॥

अलाबुकं निखातकमिति सप्त। यदीं हनत् कथं हनत् पर्याकारं पुनः पुनरिति चैते॥ १७॥

एते च द्वे। एतान्यष्टादश पदानि समाप्य शंसेत् सप्ततिं समाप्य वेति विकल्पः॥

विततौ किरणौ द्वाविति षडनुष्टुभः ॥ १८ ॥

षड्ग्रहणं शाखान्तरे भूयांसि सन्तीति प्रदर्शनार्थं। अनुष्टुब्ग्रहणं विस्पष्टार्थं ॥

दुन्दुभिमाहननाभ्यां जरितरोथामो दैव कोशबिले जरितरोथामो दैव रजनिग्रन्थेर्धानां जरितरोथामो दैवोपानहि पादं जरितरोथामो दैवोत्तरां जनीमाञ्जन्यां जरितरोथामो दैवोत्तरां जनीं वर्त्मन्यां जरितरोथामो दैवेति प्रतिगरा अवसानेषु ॥ १९ ॥

प्रणवेषु प्राकृता एव ॥

इहेत्थ प्रागपागुदगिति चतस्रो द्वेधाकारं प्रणवेनासन्तन्वन् ॥ २० ॥

चतस्र इतिवचनं पादशः पठिता अपि नाष्टावेकपदाः चतस्र एवैता द्विपदाः द्वेधाकारं पठिता अपीति प्रदर्शनार्थं। ताः पञ्चः शंस्तव्याः प्रणवेनासन्तन्वन्। अत्र आर्थिकत्वादवसानस्य त्रिमात्रा एव प्रणवा भवेयुः। असन्तन्वन्निति सन्तानप्रतिषेधादेव प्रणवसद्भावे सिद्धे प्रणवेनेतिवचनमासां ये चत्वारः प्रणवास्तैः सन्तानो न कर्त्तव्य इत्येवमर्थं। तेन एतत् साधितं भवति, प्रवल्हिकानामन्त्यायाः यः प्रणवस्तेनाभिज्ञातेऽन्यानामाद्यया सन्तानो भवतीति ॥

अलाबूनि जरितरोथामो दैवो३म्। पृषातकानि जरितरो-थामो-दैवो३म्। अश्वत्थपलाशं जरितरोथामो दैवो३म्। पिपीलिकावटो जरितरोथामो दैवो३म्। इति प्रतिगराः प्रणवेषु॥ २१॥

अवसानेषु प्राकृता एव॥

भुगित्यभिगत इति त्रीणि पदानि सर्वाणि यथानिशान्तं॥
॥ २२॥

सर्वाणि यथानिशान्तमिति वचनादत्रोत्तमेऽपि पदे प्रणवो न कर्त्तव्य इति गम्यते। तेनात्र त्रीणि पदानि यथा-निशान्तं शंस्तव्यानि॥

श्वा जरितरोथामो दैव पर्णशदो जरितरोथामो दैव गोशफो जरितरोथामो दैवेति प्रतिगराः। वीमे देवा अक्रंसते-त्यनुष्टुप्॥ २३॥

अनुष्टुब्ग्रहणं विस्पष्टार्थं॥

पत्नी यीयप्यते जरितरोथामो दैव। होता विष्टीमेन जरितरोथामो दैवेति प्रतिगरौ॥ २४॥

द्वितीयः प्रतिगरः प्रणवेऽप्यप्रणवान्त एव, पाठसामर्थ्यात्॥

आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्निति सप्तदश पदानि। ओ ह जरितरोथामो दैव। तथा ह जरितरोथामो दैवेति प्रतिगरौ व्यत्यासं मध्ये ॥ २५ ॥

मध्यशब्देन मध्यवर्त्तीनि पदानि अभिधीयन्ते। व्यत्यासमिति तेषु पञ्चदशसु पदेषु एतौ प्रतिगरौ क्रमेण व्यत्यस्य प्रयोक्तव्यावित्यर्थः। एतौ मध्यइतिवचनादाद्ये पदे प्राकृत एव प्रतिगरो भवेत्। उत्तमे तु प्रणवो विहित एव प्रतिगरत्वेन ॥

प्रणव उत्तमः ॥ २६ ॥

उत्तमे पदे प्रणव एवात्र प्रतिगरो भवेदित्यर्थः ॥

त्वमिन्द्र शर्मरिणेति भूतेच्छदः ॥ २७ ॥

भूतेच्छद इत्यासामृचां नामधेयं ॥

तिस्र एता अनुष्टुभः। यदस्या अंहुभेद्याः। इत्याहनस्याः।
॥ २८ ॥

आहनस्या इति नामधेयं ॥

आज्याद्ययोक्ताश्चतुर्थे ॥ २९ ॥

ता आहनस्याः 'अग्निं न स्ववृक्तिभिः' इत्यनया ऋचा व्याख्याताः यथा शंस्तया एवमेता अपोत्यर्थः ॥

कपृन्नरो यद्ध प्राचीरजगन्तेति चैते ॥ ३० ॥

एते अप्यृचावेतयैव व्याख्याते इत्यर्थः ॥

ईइइइइइईइइइइइईइइइ किमयमिदमाद्यो३ ओ३ ओ३ ओ३मोथामो दैवो३मित्यासां प्रतिगरः ॥ ३१ ॥

आसां दशानामृचामयं प्रणवेषु प्रतिगरो भवति। अवसानेषु प्राकृता एव।

दधिक्राव्णो अकार्षमित्यनुष्टुप्। सुतासो मधुमत्तमा इति चतस्रः ॥ ३२ ॥

चतस्रः इति अपि चतस्रः अनुष्टुभ एव ॥

अवद्रप्सो अंशुमतीमतिष्ठदिति तिस्रः ॥ ३३ ॥

एतास्त्रिष्टुभः पङ्क्तः शंस्तव्याः ॥

अच्छाम इन्द्रमिति नित्यमैकाहिकं ॥ ३४ ॥ ॥ ३ ॥

उक्तार्थमेतत् ॥

इत्युत्तरषट्कस्य द्वितीये तृतीया कण्डिका।

---

अथाच्छावाकस्य। प्र व इन्द्राय वृत्रहन्तमायेति स्तोत्रियानुरूपौ॥१॥

एताः षट् द्विपदाः अच्छावाकस्य स्तोत्रियानुरूपौ॥

अथैवयामरुदुक्तो वृषाकपिना॥२॥

'प्र वो महे मतयो यन्तु विष्णवः' इत्येतत् सूक्तं एवयामरुन्नामकं तद्वृषाकपिना व्याख्यातं। यथा वृषाकपिः शंस्तव्य एवमेव एवयामरुन्नामकमपीति, मात्र पङ्क्तिशंसनं। अतिजागतोऽयमेवयामरुत्, पङ्क्तिशंसनं पुनः पञ्चपदास्वेव पङ्क्तिष्वित्युक्तं। वृषाकप्यतिदेशस्त्वचरलाघवादिदमप्युक्तं। अतिदेशेनान्यच्छन्दसः शंसनमन्यच्छन्दसो न प्राप्नोतीति। इममेवाभिप्रायं भगवान् सूत्रकारः स्वयमेव प्रकटयन् प्रणवान्तमेव प्रतिगरं पठितवान्। तस्य पाठस्य भ्रान्तिमूलता कल्पयितुमयोग्या, अविगानात्॥

ओ३ उँउँउँउँउँ ओ३ उँउँउँउँउँ ओ३ उँउँउँ मदे मधोर्मदस्य मदिरस्य मदैवो३ ओ३ ओ३ ओ३मोथामो दैवो३मित्यस्य प्रतिगरः। ऋतुर्जनित्रीति नित्यान्यैकाहिकानि॥३॥

नित्यैकाहिकशब्दयोः प्रयोजनमुक्तं॥

एवमुक्थ्यानि यत्र यत्र द्विपदासु स्तुवीरन्॥ ४॥

अत्रोक्थशब्दः शिल्पविषयः, श्रुतौ तथा प्रयोगदर्शनात्, 'एतानि वा अत्रोक्थानि नाभानेदिष्ठो वालखिल्याः' इत्यादौ। एवं शिल्पानि भवन्ति, पार्ष्ठिकात् षष्ठादह्नोऽन्यत्रापि यत्र यत्र होत्रकाणां तृतीयसवने द्विपदासु छन्दोगा यदि स्तुवीरन्। एतदुक्तं भवति। एकाहाहीनसत्रेषु यस्मिन् कस्मिंश्चिदहनि तृतीयसवने होत्रकाणां सर्वेषां यदि द्विपदासु स्तुवीरंश्छन्दोगास्तत्र सर्वत्राहान्येवं शिल्पानि कर्त्तव्यानीति। एकस्य होत्रकस्य द्वयोर्वा होत्रकयोर्यदा द्विपदासु छन्दोगाः स्तुवीरन् तदा एकस्य द्वयोर्वा शिल्पानि कर्त्तव्यानि भवन्ति, नैवं सर्वेषामप्नोति। कुत एतल्लभ्यते एकस्य द्वयोर्वा द्विपदास्तवने शिल्पान्येवं न भवन्तीति। एतदतो लभ्यते, 'होत्रकाणां द्विपदाः' इत्यतो होत्रकाणामितीदं बहुवचनमुक्तं इहानुवर्त्तते। तस्यैतत् प्रयोजनं, यदा सर्वेषां द्विपदास्तवनं तदैव शिल्पान्येवं भवन्ति॥

नित्यशिल्पं त्विदमहः॥ ५॥

इदं षष्ठमहर्नित्यशिल्पं भवति। शिल्पैरविनाभूतमित्यर्थः। नित्यवचनात् तदतिदिष्टानामयं धर्मो भवत्येवेति गम्यते॥

विश्वजिच्च॥ ६॥

एतदपि नित्यशिल्पं भवति। शिल्पानां प्रवृत्तौ होत्रका-

णां सर्वेषां तृतीयसवने द्विपदास्तवनं निमित्तमित्युक्तं। षष्ठ-विश्वजितौ नित्यशिल्पावित्येतदप्युक्तं। एवं स्थिते षष्ठविश्व-जितौ यद्यग्निष्टोमसंस्थौ स्यातां, यदि वा तृतीयसवने होत्र-काणां सर्वेषां द्विपदास्तवनं न स्यात् तदा कथं तयोर्नित्यशि-ल्पत्वमापादनीयमिति, तत्र निर्वाहमाह॥

तौ चेदग्निष्टोमौ यदि वोक्थ्येष्वद्विपदासु स्तुवीरन् माध्य-न्दिन एवोर्ध्वमारम्भणीयाभ्यः प्रकृत्या शिल्पानि शंसेयुः॥७॥

यद्येवं तदा माध्यन्दिन एव सवने आरम्भणीयाभ्य ऊर्ध्वं प्रकृत्या न्यूङ्खादिविकारवर्जितानि शिल्पानि शंसेयुः। माध्य-न्दिन एवेत्यवधारणं यद्येकस्य द्वयोर्वा तृतीयसवने द्विपदासु स्तुवीरन् न सर्वेषां तथापि माध्यन्दिन एव सवने सर्वे शंसेयुरित्येवमर्थं॥

बार्हतान्येव सूक्तानि वालखिल्यानां मैत्रावरुणः॥८॥

यदा माध्यन्दिने शिल्पानि शस्यन्ते तदैतावदनेनेति त्र-याणां नियमः क्रियते। वालखिल्यानां यानि बार्हतानि षट् सूक्तानि तान्येव मैत्रावरुणः शंसेत्, नान्यत्र किञ्चिच्छिल्प-मित्यर्थः॥

सुकीर्त्तिं ब्राह्मणाच्छंसी। वृषाकपिञ्च पङ्क्तिशंसं॥९॥

'तस्मादूर्ध्वं कुन्तापम्' इत्यनेन कुन्तापस्य वृषाकप्यनन्तरव-

र्त्तितायां प्राप्तायां तन्निवृत्त्यर्थं पङ्क्तिशंसनवचनं। यावान् वृषाकपिः पङ्क्तिशंसमाहस्तावदेव शंसेत्, न तत्सम्बन्धि कुन्तापमपीत्यर्थः॥

द्यौर्नय इन्द्रेत्यच्छावाकः॥१०॥

इदं सूक्तं अच्छावाक आरम्भणीयाया ऊर्ध्वं शंसेत्। अस्मिन् पक्षे इदमस्य शिल्पं भवतीति॥

प्रत्येवयामरुदित्येतदाचक्षते॥११॥

एतत् सूक्तं प्रत्येवयामरुदिति श्रुतौ प्रसिद्धमित्यर्थः॥

होतैवयामरुतमाग्निमारुते पुरस्तान्मारुतस्य पच्छः समासमुत्तमे पदे॥१२॥

अस्मिन् पक्षे आग्निमारुते शस्त्रे मारुतस्य सूक्तस्य पुरस्तादेवयामरुतं होता शंसेत् पच्छः। पच्छःशंसनविधानं सर्वासैवाचतुष्पदा इत्यर्धर्चशंसने प्राप्ते पच्छःशंसने पञ्चपदत्वात् द्वे द्वे पदे अतिरिच्येते इति तदर्थमिदमुच्यते 'समासमुत्तमे पदे' इति। उत्तमे पदे समस्य प्रणुयादित्यर्थः। होतृग्रहणमच्छावाकनिवृत्त्यर्थं। अत इदमवगम्यते, अच्छावाकसम्बन्धमप्येतत् सूक्तमागन्तुकत्वेनास्मिञ्छस्त्रे विधीयते न मारुतनिविद्धानीयत्वेनेति। तेन एतत् साधितं भवति, धा-

स्थानन्तरं प्रवेशादाहावस्याभावः, मारुतस्य च निविद्धा-
नीयत्वादिति ॥

षष्ठे त्वेव पृष्ठ्याहान्यहरहःशस्यैकभूयसीः शस्त्वा मैत्रा-
वरुणो दूरोहणं रोहेत् ॥ १३ ॥

एवं माध्यन्दिने सवने शिल्पेषु नीयमानेषु पार्ष्ठिके षष्ठे-
ऽहन्ययं विशेषः दूरोहणमपि रोहेत् इति । एवकारोऽव-
धारणार्थः । अस्मिन् पक्षे षष्ठ एवाहनि दूरोहणं रोहेन्न वि-
श्वजितीत्यवधारणार्थः । पृष्ठ्याधिकारे पुनः पृष्ठ्यग्रहणादिदं
दूरोहणं पूर्वस्माद्दूरोहणादन्यद्दूरोहणमिति ज्ञायते। यदि
पूर्वविहितस्यैवावधारणाद्विश्वजिद्व्यावृत्तिर्विधित्सिता स्यात् तदा
तस्य पार्ष्ठिक एव सम्भवात् पुनः पृष्ठ्यग्रहणं न कुर्य्यात्,
करोति च, अतो ज्ञायते दूरोहणान्तरमेतदिति। अनेन
एतत् साधितं भवति, अस्य दूरोहणस्याहावविध्यभावादा-
हावो न कर्त्तव्य इति। अहरहःशस्यस्य पञ्चर्चत्वात्तिस्रः
शस्त्वेत्येतावतैव सिद्धे एकभूयसीरितिवचनं सम्पातसूक्तेऽप्येतस्य
न्यायस्य प्रापणार्थं ॥

सम्पातसूक्त एकाहीभवत्सु ॥ १४ ॥

अस्मिन् षष्ठेऽहनि एकाहीभवति सति सम्पातसूक्ते 'कथा-
महामवृधत्' इत्यस्मिन् दूरोहणं रोहेत् तस्यार्धा ऋच एक-
भूयसीः शस्त्वा। एकाहीभवत्स्विति बहुवचनं यदा पुनरि-

दमहरहीनेषु चायं भवति तदा तत्र तायमानरूपाणाम-भावादनेकाहा अप्येकाहवद्भवन्ति, तत्र यदि माध्यन्दिने शिल्पानि तदाहरहःशस्त्राभावात् सम्पातसूक्त एव दूरोहणं कर्त्तव्यमित्येवमर्थं। सत्रेषु माध्यन्दिने होत्रकाणां शस्त्राण्येव भवन्ति। स्तोत्रियानुरूपौ कस्तमिन्द्रेति। कदाचन प्राच इन्द्रे-त्यारम्भणीया। सद्योऽह जात इत्यहरहःशस्त्रं। आ मत्या यात्वित्यहीनसूक्तं। एवं मैत्रावरुणस्य स्तोत्रियानुरूपौ कन्नव्यो अतसीनामिति। कदान् ब्रह्मणा ते ब्रह्मयुजेत्यारम्भणीया। अस्मा इन्द्र प्र तवसे इत्यहीनसूक्तं। उद् ब्रह्माणीत्यहरहःशस्त्रं। एवं ब्राह्मणाच्छंसिनः। अथाच्छावाकस्य स्तोत्रियानुरूपौ कदून्वस्याकृतमिति। कदानुरन्तो लोकमनुनेषि विद्वानित्यार-म्भणीया। शासद्वह्निरित्यहीनसूक्तं। अभितष्टे वेत्यहरहःशस्त्रं। एवमेतानि षट् प्रतीकानि चतुर्विंशादिष्वहःसु भवन्ति। षडहेषु षडहप्रकृतिषु चायं विशेषो भवति। अहीनसूक्त-स्थाने सम्पातसूक्तानि भवन्ति। मैत्रावरुणस्यैवात्वामिन्द्रेति प्रथमचतुर्थयोरह्नोः। यन्न इन्द्र इति द्वितीयपञ्चमयोः। कथामहामवृधदिति तृतीयषष्ठयोः। एवं ब्राह्मणाच्छंसिनः। इन्द्रः पूर्भिद एक इद्यस्तिग्मशृङ्ग इत्येकैकं पूर्ववत्। एवम-च्छावाकस्याप्येतानि सूक्तानि भवन्ति। इमामूष्विच्छन्ति त्वा शासद्वह्निरित्येतान्येतेष्वहःसु सत्रविषये शस्त्राणि भवन्ति। एकाहीभावे कद्वतामारम्भणीयानामहरहःशस्त्रानामभावः। अतः सम्पातसूक्ते दूरोहणमित्युक्तं॥

न ह्येकाहीभवत्स्वहरहःशस्यानि। नारम्भणीया न कद्रन्तः ॥ १५ ॥

एकाहीभवत्स्विति प्रकृते पुनर्वचनमधिकारार्थं। वक्ष्यमाणो विधिः साचिकेष्वहःस्वेकाहीभवत्स्विति वेदितव्यं। तेष्वहःस्वेकाहीभवत्स्वहरहःशस्यान्यारम्भणीयाः कद्रन्तश्च न सन्ति। हिशब्दः प्रसिद्धौ। प्रसिद्धश्चायमर्थो यद्गणधर्मा एकाहेषु न प्रवर्त्तन्त इति। अतस्तुन्यन्यायानां तार्क्ष्यजातवेदस्यादीनामेकाहीभवत्सु प्रवृत्तिनिषेधः सिद्धो भवति ॥

कद्रतां स्थाने नित्यान् प्रगाथाञ्छस्त्वा सम्पातवत्स्वहीनसूक्तानीतरेषु ततोऽन्यान्यैकाहिकानि ॥ १६ ॥

साचिकेष्वहःस्वेकाहीभवत्सु एवं शस्यं भवति। कद्रतां स्थाने नित्यानैकाहिकान् प्रगाथान् शस्त्वा पृष्ठ्याभिप्लवं प्रकृतिषु सम्पातांश्शंसेयुः। इतरेषु चतुर्विंशादिप्रकृतिषु प्रगाथानन्तरं अहीनसूक्तानि शंसेयुः। तत उभयेष्वहःसु अन्यान्यैकाहिकानि सूक्तानि शंसेयुः। माध्यन्दिने सवने होत्रका इति, नित्यानां निवर्त्तकेषु कद्रत्सु प्रतिषिद्धेषु प्राप्ता एव नित्याः प्रगाथाः किमिति तेषु पुनर्विधीयन्ते। यत् पुनर्विधानं यदा पुनरेतेषु साम प्रगाथा एकाहेषु प्राप्नुवन्ति तदा तैर्नित्यानां बाधो न स्यादित्येवमर्थं। किञ्चान्यत् प्रगाथानन्तरं मैत्रा-

वरुणस्यापि सम्पातोऽहीनसूक्तं वा भवेन्नैकाहिकमित्ययमेव च क्रमः सिद्धेदित्येवमर्थं च। एवं हि सत्रेषु मैत्रावरुणस्य क्रमः प्रगाथानन्तरमहरहःस्थाने विहितं तत् प्रतिषिध्यत इति पूर्वमेवैकाहिकं प्रतिप्रसूत स्यात्। अतस्तदपनीय तत्स्थाने सम्पातोऽहीनसूक्तं वा भवेत्। अन्यमेवैकाहिकं प्रतिप्रसूतमस्त्वित्ययं यत्नः क्रियते। एवञ्चेदन्यानां विधानं मन्दफलं भवेत्। अस्तु, तथाप्युत्तरार्थं कर्त्तव्यमेव॥

सम्पातवत्सु तु सर्वस्तोमेषु प्राकृते वैकाहेऽहीनसूक्तानि। आदितस्तृतीयानि॥ १७॥

तुशब्दो विशेषविध्यर्थः। अयमस्मिन् सूत्रे उपरितने च सूत्रे विशेषः सर्वार्थोऽयं सूत्रद्वयोक्तो विधिरित्येकाहीभवतामन्येषाञ्च साधारण इत्यर्थः। यदा पुनः सम्पातवन्त्यहानि सर्वैस्त्रिवृदादिभिस्त्रयस्त्रिंशान्तैः षड्भिः स्तोमैः युक्तानि भवन्ति, प्राकृतो वा एकाह एभिः स्तोमैर्युक्तो भवति तदा अहीनसूक्तान्यादित इतरेषां सूक्तानां भवन्ति। आदित इति पुरस्तादित्यर्थः। तृतीयानि च भवन्ति। तृतीयवचनं प्रकृतौ द्विसूक्तत्वात् निमित्तवशेन प्राप्तस्यापि सम्पातस्याहीनसूक्तस्य चालोपः स्यादिति समुच्चयसिद्ध्यर्थं। अत्र क्रमः। अहीनसूक्तं, अहरहःशस्यं, सम्पात इति सत्रेषु मैत्रावरुणस्य। इतरयोरहीनसूक्तं सम्पातोऽहरहःशस्यमिति विशेषः। एकाही-

भवतु मैत्रावरुणस्य इतरयोस्तु न विशेषः, अहीनसूक्तं सम्पातोऽन्यमैकाहिकमिति। यदा पुनः प्रकृतिभूतो ज्योतिष्टोमः सत्रमहीनमेकाहं वा प्राप्तः तदा प्रथमस्य तूर्ध्वं चतुर्थात् सर्वस्तोमोऽतिरात्र इति सर्वस्तोमस्य भवति। तत्रायं क्रमः। सर्वेषां च स्वं स्वमहीनसूक्तं, तदैकाहिके च द्वे द्वे सूक्ते, इति पूर्वयोः अच्छावाकस्याहीनसूक्तं भूय इत्यभितष्टीयं। एवमहर्गणप्राप्तौ एकाहत्वे अहीनसूक्तानि द्वे द्वे चैकाहिके सर्वेषामिति॥

सामसूक्तानि सप्रगाथानि सर्वपृष्ठेषु पृष्ठानि॥ १८॥

आदितस्तृतीयानीति च उभयं निवृत्तं। ‘सामसूक्तानि पुरस्तात् सूक्तानाम्’ इति देशविधानादादित इति निवृत्तं। एकयोगनिर्दिष्टत्वादन्यदपि निवृत्तं। यदा पुनः सम्पाताहीनसूक्तैरैकाहिकानि त्रिप्रकाराण्यहानि सर्वपृष्ठान्यहानि भवन्ति तदा सामसूक्तानि भवन्ति। तेषां स्थानं स्वरूपं चोत्तरत्र वक्ष्यते। तेष्वेव शस्तेषु शाक्वरवैरूपरैवतानि सामानि च पृष्ठकार्ये भवन्ति, तेषां सामप्रगाथाश्च भवन्ति। तदेतत साम सूक्तानि पृष्ठानि च तानि सप्रगाथानीत्येतत्त्रयं सर्वपृष्ठनिमित्तं विधीयते। अस्मिन्नेव सूत्रे अयञ्च विधिरेकाहीभवतामन्येषां चासाधारणः। एवमत्र क्रमः। सम्पाताहःसु शाक्वरादीनां स्तोत्रियानुरूपाः सामप्रगाथाः कद्रुक्त आरम्भणीयाः सामसूक्तान्यहीनसूक्तान्येतावत् सर्वेषां समानं, ततोऽह-

रहःशस्त्रसम्पातौ मैत्रावरुणस्य, इतरयोः सम्पाताहरहःशस्त्रे इति। अहीनाहःस्वेवं भवति। साममूक्तेभ्योऽनन्तरमहरहःशस्त्रमहीनसूक्तं मैत्रावरुणस्य, इतरयोरहीनसूक्ते अहरहःशस्त्रे इति। विश्वजिति तु विशेषः। अनुरूपेभ्य ऊर्ध्वं वामदेव्यादीनां योनिशंसनमिति प्रकृतौ ज्योतिष्टोमेऽहर्गणगते साममूक्तान्यहीनसूक्तानि सर्वेषां, ततोऽहरहःशस्त्रमन्यमैकाहिकं मैत्रावरुणस्य। इतरयोः पूर्वे ऐकाहिके। ततोऽहरहःशस्त्रे इति। एवं त्रिप्रकारेष्वहःसु सर्वपृष्ठेषु माध्यन्दिने सवने होत्रकाणां शस्त्राणि भवन्ति। एषामेवं त्रिप्रकाराणामह्नां एकाहीभावे सर्वपृष्ठत्वे सत्येवं शस्त्रं भवति। कद्वतां स्थाने नित्याः प्रगाथास्ततः साममूक्तानि अहीनमूक्तानि सम्पाता अन्यान्यैकाहिकानीति सम्पाताहःसु। अहीनाहःसु तान्येव सम्पातवर्जितानि त्रीण्येव सूक्तानि। ज्योतिष्टोमिके तु साममूक्तानि अहीनसूक्तानि द्वे द्वे चैकाहिके इति सर्वेषामविशेषः। ततोऽन्यान्यैकाहिकानीत्येतदुत्तरार्थमित्युक्तमस्मिन् सूत्रे पूर्वस्मिंश्च सूत्रे उपकरोति। प्रकृते द्विसूक्तत्वात् तदन्यैकाहिकैर्विनापि द्विसूक्तत्वमिद्धेरेकाहीभवत्स्वप्यहःस्वन्यानामपि लोपे प्राप्ते तेषामलोपार्थं तद्वचनं॥

## पृष्ठे संस्थाः॥ १९॥

वक्ष्यन्त इति शेषः। संस्थाग्रहणं परप्रत्ययत्वात् संस्थानियतेः स्वशास्त्रोक्तेः प्रायिकत्वप्रतिपत्त्यर्थं॥

अग्निष्टोमः प्रथमं। षोडशी चतुर्थं। उक्थ्या इतरे॥ २०॥

एवं संस्थः पृष्ठ्यो भवति॥

इति पृष्ठ्यः॥ २१॥

इत्येवङ्गुणविशिष्टः प्रकृतो यः पृष्ठ्यः सः अयुजेषु रथन्तरपृष्ठः। युजु बृहत्पृष्ठः॥

प्रत्यक्षपृष्ठः॥ २२॥

तृतीयादिषु वैरूपादिभिः समुचितपृष्ठो यः स प्रत्यक्षपृष्ठसंज्ञः पृष्ठ्यो भवतीत्यर्थः॥

अन्यैः परोक्षपृष्ठः॥ २३॥

एतेभ्योऽन्यैः सामभिर्यत्र पृष्ठकार्यं क्रियते पृष्ठ्ये स परोक्षपृष्ठसंज्ञको भवति॥

एतैर्वोपसृष्टैः॥ २४॥

उपसृष्टैरिति ऋगन्तरसम्बद्धैरित्यर्थः। एतैर्बृहद्रथन्तरादिभिः स्वयोनिभ्योऽन्यसम्बद्धैः पृष्ठकार्यं यत्र पृष्ठे क्रियते स च परोक्षपृष्ठः॥

वैरूपादीनामभावे पृष्ठ्यस्तोमः ॥ २५ ॥

यदि बृहद्रथन्तरे एव केवले क्रियेते न वैरूपादयः, तदा पृष्ठ्यस्तोमसंज्ञको भवति ॥

पवमानभाव आपर्क्यपृष्ठ्यः ॥ २६ ॥

यदि माध्यन्दिने पवमाने रथन्तरादीनि क्रियेरन्न पृष्ठ-स्थाने तदा आपर्क्यपृष्ठसंज्ञो भवति ॥

तनूपृष्ठ्यो होतुश्चे श्यैतनौधसे ॥ २७ ॥ ॥ ४ ॥

यदि होतुः पृष्ठे निष्केवल्यस्य स्थाने श्यैतं वा नौधसं वा कृत्वा अन्यत्र बृहदादीनि क्रियेरन् तदा तनूपृष्ठ्यो नाम भवति। एवमनेकधा पृष्ठ्यविकल्पा उक्ताः शास्त्रान्तरोक्ताश्च सन्ति, तेषु सर्वेषु बृहदादीनां यथास्थानमक्रियायामस्वयोनि-भावं वा दृष्ट्वा यथाविधि योनिशंसनं कर्त्तव्यं ॥

इत्युत्तरषट्कस्य द्वितीये चतुर्थी कण्डिका ॥ • ॥

अभिजिद्‌बृहत्पृष्ठः ॥ १ ॥

ज्योतिष्टोमेन सह चतुर्दशाहानि व्याख्यातानि। इदानीं पञ्चदशमहरुच्यते। अभिजिन्नाम स बृहत्पृष्ठो भवति। पृष्ठादीनां रथन्तरादीनां परप्रत्ययानां विधानस्य प्रयोजनं 'छान्दोग्यप्रत्ययम्' इत्यत्र सूत्रे वक्ष्यते ॥

उभयसामा यद्यपि रथन्तरं यज्ञायज्ञीयस्य स्थाने ॥ २ ॥

इह स्थाने त्रिविधं छन्दोगानां उभयसामत्वं भवति। बृहद्रथन्तरयोरन्यतरं माध्यन्दिने पवमाने भवति ब्रह्मसाम्नि वाऽग्निष्टोमसाम्नि वा। तत्रास्माकं पवमानभाव एव। सर्वत्रोभयसामत्वं साधयितुमचार्यं यत्नः कृतः। एतदुक्तं भवति, सर्वत्र बृहद्रथन्तरयोरन्यतरस्य पवमानभाव एवोभयसामत्वं भवतीति। अभिजिति तु यदि पृष्ठ्यस्थाने बृहद्भवति, रथन्तरञ्चाग्निष्टोमस्थाने तदाप्यत्रोभयसामत्वं भवति। इदमत्र पृष्ठविधानस्य प्रयोजनं, यदि पुनर्विपरीतं तदापि अनेनैवोभयसामत्वं भवतीति ॥

पिबवास्विद्य सामप्रगाथः ॥ ३ ॥

इहग्रहणादाचमिकोऽयमर्थ इति प्रदर्शयति ॥

पिबा सोमं तमु ष्टुहीति मध्यन्दिनः ॥ ४ ॥

तमु ष्टुहीत्यनेन साहचर्यात् पिबा सोममित्यस्य भारद्वाजस्य ग्रहणं नान्यस्य ॥

तयोरैकाहिके पुरस्तादन्ये वा शंसेयुः ॥ ५ ॥

तयोः सूक्तयोः पुरस्तादैकाहिके 'जनिष्ठा उग्र इन्द्रस्यानु-वीर्याणि' इत्येते, अन्ये वाऽनैकाहिके ये केचन तत्कार्ययोग्ये इत्यर्थः। एवं द्विसूक्तो मध्यन्दिनो विहितो भवति, पूर्वस्य च विधेर्निरपेक्षत्वात्। तेनैकसूक्तमेव विहितं भवति। अतः साम-र्थ्यादवाचनिकोऽयं विकल्प इति निश्चिनुमः ॥

एते एवेति गौतमः सप्तदशत्वात् पृष्ठ्यस्य ॥ ६ ॥

एवं स्थिते एकसूक्तपक्षे न्यायानुगुण्यमस्तीति गौतम आह। एते एव 'पिबा सोमं तमु ष्टुहि' इत्येते एव कर्त्तव्ये नैकाहिके अन्ये एवेति। अयमत्र न्यायः सप्तदशत्वात् पृष्ठ्यस्येति पृष्ठस्य सप्तदशत्वं एकसूक्तत्वे यथा हेतुस्तथोपपादयितुमाह ॥

यावत्यो यावत्यः कुशानां नवतो दशतो वा निष्केवल्ये तावतिद्धक्ता मध्यन्दिनाः स्युरिति सद्दा न्यायः ॥ ७ ॥

कुशानामच्छन्दोगानां स्तोत्रावृत्तिसङ्ख्यानार्थानि काष्ठानि,

तासां भवतो द्वयतो वा विभज्यमानानां यावत्यो निष्केवल्य-स्तोमे पूर्णा भवन्ति तावतिसूक्ता मध्यन्दिना भवेयुः। ता-वतिसूक्तास्तावत्सूक्ता इत्यर्थः। तावन्ति सूक्तानि येषु मध्य-न्दिनेषु ते तावतिसूक्ता मध्यन्दिना इत्युच्यन्ते। अयं न्यायः प्राचुर्येण सर्वेष्वहःसु दृष्ट इति महा न्याय इत्युक्तं। अत्र व्यभिचाराशङ्का न कर्त्तव्या। यत् पुनर्मध्यमे छान्दोमिके चतुश्चत्वारिंशे स्तोमे पञ्च सूक्तानि दृष्टानि, तत् तु वाचनि-कमिति परिहर्त्तुं शक्यत एव। अत्रापि द्विसूक्तत्वं वाचनिक-मेवेत्यस्याव्यभिचारिता युक्ता। न्यायव्युत्पादनस्य प्रयोजनं 'माध्यन्दिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्यं' इत्यत्र वक्ष्यते॥

मरुत्वतीयस्योत्तमे विपरीते॥ ८॥

'पिबा सोममभि' इत्यस्योत्तमे ऋचौ व्यत्यस्य शंसेत्। उत्तमां शस्त्वोपोत्तमां शंसेदित्यर्थः॥

चातुर्विंशिकं तृतीयसवनं॥ ९॥

अन्यद्धोतुरैकाहिकं होत्रकाणां सर्वत्र सार्वत्रिकमेव उक्तो-ऽभिजिन्नामा बृहत्पृष्ठः। अथेदानीं स्वरसामान उच्यन्ते॥

अभिप्लवत्र्यहः पूर्वः स्वरसामानः॥ १०॥

अभिप्लवस्य यः पूर्वस्त्र्यहस्तेनातिदिष्टानि वक्ष्यमाणगुण-विशिष्टानि त्रीणि अहानि स्वरसामसंज्ञानि भवन्ति॥

स्वराणि त्विह पृष्ठानि॥ ११॥

स्वरसंज्ञकानि सामानि एष्वहःसु पृष्ठानि भवन्ति। एत-देवैतेषु स्वरसामशब्दस्य प्रवृत्तिनिमित्तं॥

तेषां स्तोत्रिया यज्जायथा अपूर्व्यमत्स्यपायि ते मह एनमेनं प्रत्येत नेति॥ १२॥

यथासङ्ख्येन तेषामेते स्तोत्रिया भवन्ति। अधिकारादेव तेषामित्यस्यार्थस्य सिद्धौ सत्यान्तेषामितिवचनमुत्तरार्थं॥

आद्यो वा सर्वेषां॥ १३॥

'यज्जायथा अपूर्व्यम्' इत्ययमाद्यः स्तोत्रियः, स एव वा त्रिषु स्वरसामसु स्तोत्रियो भवति॥

वयं घत्वा सुतावन्त इति तिस्रो बृहत्यो यस्ते साधिष्ठोऽवस इति षळनुष्टुभ इत्यनुरूपाः॥ १४॥

एकां बृहतीं गृहीत्वा द्वे अनुष्टुभौ च गृहीत्वा एकोऽनु-

रूपो भवति। एवमपरौ चानुरूपौ। अत्र तेषामित्यनेन सम्बन्धः। तेषां स्वराणां यथासङ्ख्येनैतेऽनुरूपा भवन्तीति॥

स्तोत्रिये यथा युक्ता बृहतो तथाऽनुरूपे॥१५॥

स्तोत्रिये परस्थाने बृहतो यत्र स्थाने वाऽनुष्टुभौ अनुरूपे च तत्स्थान एव, एताः कर्त्तव्या इत्यर्थः॥

स्थायोन्येतानि यथा बृहद्रथन्तरे॥१६॥　　॥५॥

यथा बृहद्रथन्तरे पृष्ठ्याभिप्लवयोः तदतिदिष्टेषु चाहःसु पृष्ठ्यत्वेन योनिशंसनरूपेण वा स्थायिनी नित्ये, एवं स्वरसामसु स्वराणि नित्यानीत्यर्थः॥

इत्युत्तरषट्कस्य द्वितीये पञ्चमी कण्डिका॥०॥

---

विषुवान् दिवाकीर्त्यः॥१॥

विषुवानित्येको न विंशमहस्तदिदानीमुच्यते। स विषुवान् दिवाकीर्त्यो भवति। अयं विधिः कर्मणि निष्प्रयोजनः। 'उदिते प्रातरनुवाकः' इति विधानात् तस्य चाग्निष्टोमसंस्थत्वादग्निष्टोमस्य चाह्नन्येव समापनीयत्वात् कर्मणस्य कीर्त्तयतो

विषयत्वाच्च। अतस्तद्विधायकब्राह्मणस्य तत्साधनभूतानाञ्च शस्त्रादीनां द्विवैत्राध्ययनं कर्त्तव्यमित्येवमर्थोऽयं यत्नः कृतो भगवताऽऽश्वलायनेनाचार्येणेति मन्तव्यं॥

उदिते प्रातरनुवाकः॥ २॥

अनुवक्तव्य इति शेषः॥

प्रथपाजा अमर्त्य इति षड् धाय्याः सामिधेनीनां॥ ३॥

अस्मिन्नहनि सामिधेनीनामुपोत्तमायाः प्रागेताः षडृचो धाय्या भवन्ति। धाय्याग्रहणं स्थानलाभार्थं। सामिधेनीग्रहणं शस्त्रधाय्यानिवृत्त्यर्थं॥

सौर्यः सवनीयस्योपालभ्यः॥ ४॥

सुत्याधिकारादेव सवनीयत्वे सिद्धे सवनीयग्रहणं सवनीयस्याऽऽलम्भं कृत्वा पश्चात् सौर्य आलभ्य इत्येवमर्थं॥

सौमापौष्णो वा॥ ५॥

अयं वा पश्चादुपालभ्यः पूर्वो वेति विकल्पः॥

समुद्रादूर्मिरित्याज्यं। त्यं सुमेषं कयाशुभेति च मरुत्वतीयं॥ ६॥

एकविंशाद्ध्रीमस्तोमेऽपि विषुवत्यनयोः सूक्तयोः समुच्चितयोरेव मरुत्वतीयत्वसिद्ध्यर्थं चशब्दः॥

महादिवाकीर्त्यं पृष्ठं॥ ७॥

महादिवाकीर्त्यमिति सामनाम॥

विभ्राड्बृहत् पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ यदि बृहद्रथन्तरे पवमानयोः कुर्युर्योनी एनयोः शंसेत्॥ ८॥

उत्तरविवक्षार्थोऽयमनुवादः॥

रथन्तरस्य पूर्वा॥ ९॥

पूर्वशिष्टत्वात् समासे च पूर्वनिपातत्वात् बृहतो योनिः पूर्वं शंसव्येत्येतदाभासनिवृत्त्यर्थं सूत्रं। एतत् सार्वत्रिकं। अनयोर्योनिशंसनप्राप्तौ अस्मिंस्त्वहनि निमित्तक्रमादेवैषोऽर्थः सिद्ध एवेति॥

आद्ये भवतोऽन्याभिरपि सन्निपाते ॥ १० ॥

अन्याभिर्वैरूपादीनां योनिभिः सह यदा बृहद्रथन्तर-योनी शंस्येते तदा एतयोर्योनी शस्त्वाऽन्येषां योनीः शंसेत्। अयमपि विधिः सार्वत्रिक एव ॥

उत्तमस्त्विह सामप्रगाथः ॥ ११ ॥

'इन्द्रमिद्देवतातये' इत्येषः ॥

नृणामु त्वाऽन्तमङ्गीभिरुक्थैरिति तिस्रो यस्तिग्मशृङ्गो-ऽभि त्यं मेषमिन्द्रस्य नु वीर्याणीति ॥ १२ ॥

नृणामु त्वेत्येवमादीनि निष्केवल्यस्य सूक्तानि ॥

एतस्मिन्नैन्द्रीं निविदं शस्त्वा शंसेदेवोत्तराणि षड्दिवश्चि-दस्य सुत इत् त्वमेष प्रपूर्वीर्वृषामदः प्र मंहिष्ठाय त्यमूष्विति ॥ १३ ॥

एतस्मिन्नित्यनूच्यमाने सूक्तं समाप्य निवित् स्यात् तन्निवर्त्य सूक्तमध्ये निविदः प्रापणार्थमेतस्मिन्नित्युच्यते। ऐन्द्रीमिति विशेषणमत्रानैन्द्र्यपि निविदस्तीति ज्ञापनार्थं। तेन दूरोहण-स्यापि निवित्त्वं साधितं भवति। तथा च श्रुतिरस्ति। 'एषा

ह वा अत्र निवित्' इति। दूरोहणस्य निवित्त्वे सति प्रयोजनं 'एकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति तावतीरुत्तराः शंसति' इत्युक्तस्थाने 'हंसवती न सञ्ज्ञेया' इति निविदं शस्त्वोत्तराणि षडित्युच्यमाने सूक्तशेषस्याशंसनमाशङ्क्येत तन्निवृत्त्यर्थं शंसेदेवेत्युक्तं। शंसेदेव सूक्तशेषं, उत्तराणि च षट् सूक्तानीत्युक्तं भगवता सूत्रकारेण। षड्ग्रहणं एकविंशा-द्धीनस्तोमेऽपि विषुवति सूक्तहानिर्माभूदित्येवमर्थं। उत्तर-ग्रहणं प्रदर्शनार्थं, अतः पूर्वेषामुत्तरेषाञ्च हीनस्तोमेऽपि विषु-वति सूक्तहानिर्नास्तीति सिद्धं॥

इह तार्क्ष्यमन्ततः॥ १४॥

अस्मिन्नहनि निष्केवल्यसूक्तेष्वेवान्ततस्तार्क्ष्यं शंसेत्। अतो-ऽत्र निविद्धानीयत्वमप्यस्य भवतीति गम्यते। अतोऽत्र तार्क्ष्य-स्य पृथगाह्वानं न भवतीति। अन्यत्र तु सूक्तानन्तर्याभावात् तेभ्यस्तान्यदनन्तरमित्याहावो भवत्येव। त्यमूष्वित्यत्र हीनपाद-ग्रहणात् सर्वत्र तार्क्ष्यं सूक्तमेव भवति॥

तस्यैकां शस्त्वाऽऽह्य दूरोहणं रोहेत्॥ १५॥

तस्य तार्क्ष्यस्यैकामृचं शस्त्वाऽऽह्य दूरोहणं रोहेत्, शंसेत् पूर्ववत्॥

इति निष्केवल्यं। विकर्णं चेद् ब्रह्मसामोर्ध्वमनुरूपात् तं वोदस्मन्तीषहमभि प्र वः सुराधसमिति ब्राह्मणाच्छंसी श्यैतनौधसयोर्योनी शंसेत्॥ १६॥

यदि ब्राह्मणाच्छंसिनः स्तोत्रे विकर्णं ब्रह्मसाम कुर्युः तदा ब्राह्मणाच्छंस्यनुरूपादूर्ध्वं 'तं वोदस्मन्तीषहम्' इति नौधसयोनिं 'अभि प्र वः सुराधसम्' इति श्यैतयोनिञ्च शंसेत्। श्यैतस्य पूर्वनिपातोऽल्पाच्तरत्वात्॥

नौधसस्य पूर्वा। श्यैतस्योत्तरा॥ १७॥

नौधसस्य पूर्वामित्येतावतैव सिद्धे श्यैतस्योत्तरत्वे पुनस्तस्योत्तरवचनं 'तं वोदस्मन्तीषहम्' इति नौधसयोनिं पूर्वमुक्त्वा 'अभि प्र वः सुराधसं' इति पश्चादुक्त्वा श्यैतनौधसयोर्योनी इति व्युत्क्रमेण साम्नोऽतिदेशं कृतवान्, अतस्तद्भ्रान्त्यपनुत्यर्थं पूर्वामुत्तरामिति चोक्तवान्। या पूर्वोक्ता सा नौधसयोनिः, योत्तरा सा श्यैतस्येत्ययमर्थः सिद्धो भवति। शंसने च नौधसयोनिं पूर्वं शंसेत् पश्चात् श्यैतस्येत्ययमर्थोऽनेैव साधयितुमुभयोर्ग्रहणं कृतमिति सिद्धं॥

एतद्धोत्रकाणां योनिस्थानं। यच्च प्रगाथ आम्नानमेताभ्यस्तत् पश्चाद्भावपरिमितत्वात्॥ १८॥

यत् प्रगाथे प्रकृतिप्राप्तमाम्नानं तद्योनिभ्य एव भवति

न प्रगाथेभ्य इत्यर्थः। एवं चेद्वचनादेवायमर्थः सिध्यति किं हेतुवचनेनेति। हेतुवचनस्येदं प्रयोजनं, पञ्चाहावस्य अतिरेकभयादेव इदमन्यदीयमाह्वानं अन्यस्योच्यते वचनबलादिति। एतद्दर्शयितुमिच्छति ॥

उत्तमेनाभिप्लविकेनोक्तं तृतीयसवनं ॥ १९ ॥

'षष्ठस्य सावित्रार्भवे तृतीयेन' इत्यादिना ॥

ऐकाह्निकौ तु प्रतिपदनुचरौ ॥ २० ॥

'नाभिप्लविकौ विश्वेदेवस्य नेतुरित्याद्यौ' इत्यर्थः ॥

भासश्च यज्ञायज्ञीयस्य स्थाने ॥ २१ ॥

भासं नाम सामविशेषः। तदत्र कर्त्तव्यमित्यर्थः ॥

पृक्षस्य वृष्णो अरुषस्य नू सह इति स्तोत्रियानुरूपौ ॥ २२ ॥

भासस्येत्यर्थः ॥

मूर्धानं दिवो अरतिं पृथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा ॥ २३ ॥

इमौ वा पूर्वौ वेति विकल्पः ॥

अन्यासु चेदेवंलिङ्गास्वतोऽनुरूपः ॥ २४ ॥

उक्ताभ्योऽन्यासु एवंलिङ्गासु चेद्गायः क्रियेत तदा भास-स्तोत्रियं गृहीत्वा 'मूर्धा दिवो नाभिः' इत्ययमेवानुरूपः कर्त्तव्य इत्यर्थः ॥

आवृत्ताः स्वरसामानः ॥ २५ ॥ ॥ ६ ॥

आवृत्ताः प्रतिलोमा इत्यर्थः। स्वरसाम्नां उत्तमः प्रथमो मध्यमो मध्य आद्योऽन्तत इत्येषां पुनर्वचनं नवरात्र-पूरणार्थं, नाहरन्तरसिद्ध्यर्थमिति ॥

इत्युत्तरषट्कस्य द्वितीये षष्ठी कण्डिका ॥ ॥

---

विश्वजितोऽग्निं नर इत्याज्यं ॥ १ ॥

विश्वजिन्नाम विंशमहरुच्यते। तस्मिन्नहनि विश्वजिति 'अग्निं नरो दीधितिभिः' इत्याज्यं भवति ॥

चतुर्विंशेन मध्यन्दिनः ॥ २ ॥

निष्केवल्यमरुत्वतीये चतुर्विंशेन व्याख्याते इत्यर्थः। अत्र विशेषमाह ॥

वैराजं तु पृष्ठं सन्यूङ्खं ॥ ३ ॥

अत्र वैराजं नाम साम पृष्ठस्थाने भवति। तस्य च ‘पिबा सोममिन्द्र मन्दतु त्वा’ इति विराजस्तोत्रियानुरूपौ भवतः। तासां मध्यमेषु पादेषु न्यूङ्खश्च भवतीति वैराजं पृष्ठं सन्यूङ्खमित्युक्तं ॥

बृहतश्च योनिं प्राग्वैरूपयोन्याः ॥ ४ ॥

चतुर्विंशातिदेशादेव बृहतः क्रियमाणस्य योनिशंसने प्राप्ते पुनर्वचनं योनिशंसनस्य निमित्तद्वये सत्यपि सकृदेवास्य योनिं शंसेदित्येवमर्थं। प्राग्वैरूपयोन्या इत्येतस्मिन् क्रमे सिद्धेऽपि पुनर्वचनं बृहतश्च योनिमित्येतावत्युच्यमाने योन्यन्तरनिवृत्तिशङ्का स्यादिति तदाशङ्कानिवृत्त्यर्थं ॥

होत्रकाणां पृष्ठानि शाक्वरवैरूपरैवतानि ॥ ५ ॥

होत्रकशस्त्रस्तोत्रेष्वेतानि सामानि भवन्तीत्यर्थः। अतस्तेषां योनयोऽस्मिन्नहनि होत्रकाणां शस्त्रेषु स्तोत्रिया भवन्ति। अनुरूपश्च तस्य तस्य स्तोत्रियस्य स्वकीयो भवति ॥

ते योनीः शंसन्ति ॥ ६ ॥

त इति विशेषणं पृष्ठवन्तोऽपृष्ठवन्तश्च होत्रकाः सन्तीति होत्रकद्वैविध्यप्रतिपादनद्वारेण द्विविधो विश्वजित् सर्वपृष्ठो-

ऽसर्वपृष्ठस्येति प्रदर्शयति। तथा चतुर्विंशमहाव्रताभिजि-द्विश्वजिदित्यत्र ससर्वपृष्ठग्रहणं कुर्वन्नपि भेदेन विश्वजिद्ग्रहणं करोति। तदपि दर्शयति असर्वपृष्ठो विश्वजिदस्तीति। अतस्ते पृष्ठवन्तो होत्रका योनीः शंसन्ति॥

वामदेव्यस्य मैत्रावरुणः। उक्ते ब्राह्मणाच्छंसिनः॥ ७॥

उक्ते इति श्यैतनौधसयोर्योनी इत्यर्थः॥

काले यस्याच्छावाकः॥ ८॥

वामदेव्यकाले ययोरेते योनी इति प्रदर्शनार्थमाह॥

ऐकाहिकौ स्तोत्रियावेतयोर्योनी॥ ९॥

'कयानश्चित्र आभुवत्' 'तरोभिर्वो विदद्वसुम्' इत्येते इत्यर्थः॥

ता अन्तरेण कद्वतश्चैतेषामेव पृष्ठानां सामप्रगाथान्॥ ॥ १०॥

ता योनीः कद्वतः प्रगाथांश्चान्तरेण मध्य इत्यर्थः। एते-षां शाक्वरवैरूपरैवतानां सामप्रगाथाञ्छंसेयुरेकैकमेकैकः। 'सामसूक्तानि सप्रगाथानि' इत्यत्र सामसूक्तानां सप्रगाथानां च सर्वपृष्ठेषु प्राप्तिरुक्ता। इह एतेषां मध्ये सामसूक्तानां स्व-रूपं स्थानं चोच्यते। अन्येषां स्थानमेव स्वरूपस्यान्यत्रोक्तत्वात्॥

सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि पुरस्तात् सूक्तानां। उक्तं तृतीयसवनमुत्तमेन पृष्ठ्याह्ना। ऐकाहिकौ तु प्रतिपदनुचरौ। बृहच्चेदग्निष्टोमसाम त्वमग्ने यज्ञानामिति स्तोत्रियानुरूपौ। इति नवरात्रः॥ ११॥

योऽयमभिजिदादिः विश्वजिदन्तः अहःसमूह उक्तः स नवरात्रसंज्ञो वेदितव्यः। स च अभिजित्स्वरसामानो विषुवानावृत्ताः स्वरसामानो विश्वजिच्चेति नवरात्रः॥

सर्वेऽग्निष्टोमाः॥ १२॥

सर्वग्रहणं स्वरसामसूत्तरयोरप्यग्निष्टोमत्वसिद्ध्यर्थं। अभिप्लवप्रकृतित्वात् तयोरुक्थ्यसंस्थताऽऽशङ्क्येतेति॥

उक्थानेके स्वरसाम्नः॥ १३॥

एवं केचिच्छाखाविशेषानुसारिण इच्छन्तीत्यर्थः॥

द्वितीयमाभिप्लविकं गौः। आयुरुत्तरं॥ १४॥

तृतीयमाभिप्लविकमित्यर्थः। संज्ञाप्रसङ्गादयमपि संज्ञाविधिरुच्यते॥

व्यहक्लृप्ते पूर्वस्मात् व्यहात् सवनशो यथान्तरं गौरायुरुत्तरात्॥ १५॥

यदि गोआयुषी व्यहक्लृप्ते भवतः तदेवं भवतः, पूर्वस्मादाभिप्लविकत्र्यहात् सवनं सवनमादाय यथान्तरं यथाक्रमेणेत्यर्थः। एवं गौर्भवति। प्रथमात् प्रातःसवनं। द्वितीयात् माध्यन्दिनं सवनं। तृतीयात् तृतीयसवनं इति। एवमुत्तरादाभिप्लविकात् त्र्यहात् सवनशो यथान्तरमायुरित्यर्थः॥

षडहक्लृप्ते युग्मेभ्यो गौरयुजेभ्य आयुः॥ १६॥

षडहे क्लृप्ते एते एव भवतः। अभिप्लवस्य युग्मेभ्योऽहोभ्यः सवनशो यथान्तरं गौः क्लृप्तिः। अयुजेभ्य आयुरिति पूर्ववत्। एवं त्रिप्रकारा गोआयुषोरुत्पत्तिः॥

दशरात्रे॥ १७॥

अधिकारोऽयं। एतदिदमित्यस्मात् प्राक् यदुच्यते तद्दशरात्रे इति वेदितव्यं। वक्ष्यमाणानि च दशानि अहानि दशरात्रसंज्ञकानि भवन्तीत्युभयमत्रोच्यते॥

पृष्ठ्यः षडहः पूर्वत्र्यहः पुनश्छन्दोमाः॥ १८॥

प्रथमं तावत् पृष्ठ्यः षडहो भवति। ततः पृष्ठ्यस्यैव यानि

चीणि पूर्वाण्यहानि तेषां चयाणां छन्दोमा इति संज्ञा। एतानि दशराचे नवाहानि। पुनर्ग्रहणं किमर्थं, स एव पूर्वस्त्र्यहः पुनरावर्त्तते तस्यान्यत्वमच नास्तीति ज्ञापनार्थं। तेन इदं साधितं भवति, स्वरसाम्नामाभिप्लविकत्वे सत्यपि ऐकाहिक एव सामप्रगाथास्तिस्वप्यहःसु भवन्ति, नाभिप्लविक इत्यर्थः॥

न त्वच स्थायि वैरूपं तृतीये॥ १९॥

अचेति छन्दोमप्रत्ययार्थमुच्यते। तेनाच छन्दोमेषु तृतीयेऽहनि वैरूपं साम न स्थायि भवति। अनित्यमित्यर्थः। एतदुक्तं भवति। यदि पृष्ठस्थाने तत् कुर्युस्तदा स्तोचियत्वेन शंसेद्यदि तत्स्थाने न कुर्युर्यानिशंसनमपि न कुर्यादिति। असत्यचग्रहणे दशराचाधिकारात् तस्य तृतीयेऽहनि वैरूपस्यानित्यता प्रसज्येत, अतस्तन्निवृत्त्यर्थं अचग्रहणं॥

प्रथमस्य छान्दोमिकस्य द्विपूक्तो मध्यन्दिनः॥ २०॥

दशराचाधिकाराच्छान्दोमिकस्येति विशेषणं। द्विसूक्तवचनं संभवेऽपि द्विसूक्तासिद्ध्यर्थं। तेनाच 'उद्धरेदितराणि' इत्ययमेव पच आरम्भणीय इति॥

वैषुवते निविद्धाने पूर्वे च ॥ २१ ॥

'त्वं सुमेषं कया शुभा' इति च मरुत्वतीयं। 'अभि त्वं मेषमिन्द्रस्य नु वीर्याणि' इति निष्केवल्यं॥

द्वितीयस्य शंसा महान् महश्चित्त्वमिन्द्र पिबा सोममभितमस्य द्यावापृथिवी महाँ इन्द्रो नृवदिति मरुत्वतीयं ॥ २२ ॥

द्वितीयस्य छान्दोमिकस्येत्यर्थः ॥

अपूर्व्या पुरुत मानितां सुते कीर्त्तिं त्वं महाँ इन्द्र यो ह दिवश्चिदस्य त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यं। तृतीयस्येन्द्रः स्वाहा गायत् साम तिष्ठा हरी प्रमं दिन इमां उ त्वेति मरुत्वतीयं ॥ २३ ॥

छान्दोमिकस्येत्यनुवर्त्तते ॥

सच्च त्वे जग्मुरिति सूक्ते आसत्यो यात्वहं भुवं तत्त इन्द्रियमिति निष्केवल्यं। आयाहि वनसे मानुकं वभ्रुरेक इति द्विपदा सूक्तानि पुरस्ताद्वैश्वदेवसूक्तानां ॥ २४ ॥

एतानि सूक्तानि लक्षणतो द्वैपदान्येव, तत् किमर्थमेषां

द्विपदावचनमिति । अस्येदं प्रयोजनं समाम्नायस्य बलीयस्त्व-ज्ञापनार्थं । तेन एतत् साधितं भवति । याश्चतुष्पदावत् समाम्नाये पठ्यन्ते द्विपदाः 'पवस्व सोम मन्दयन् परिप्रधन्वे-न्द्राय सोम इत्येवमाद्याः' तासां ग्रावस्तोत्रे चतुष्पदावदेव स्तवनं भवति । याः पुनर्द्विपदावदेव समाम्नायन्ते तासामध्या-सवदित्युक्तमिति । वैश्वदेवसूक्तानामिति कर्म्मधारयः समासः । वैश्वदेवानि च तानि सूक्तानि चेत्यतस्त्रिष्वहःस्वेतानि यथा-क्रमेण भवन्ति । तथा च व्यूल्हस्य प्रथमे छान्दोमिके वक्ष्यति 'नित्यानि द्विपदासूक्तानि' इति सर्वेषु छान्दोमिकेषु प्रा-प्नोतीति दर्शयति ॥

इति नु समूल्हः ॥ २५ ॥　　॥ ७ ॥

दशरात्रोऽधिकृतः । तत्र नवाहान्युक्त्वा 'इति नु समूल्हः' इत्युपसंहृतवानाचार्यः । तेन एतत् ज्ञायते समूल्हव्यूल्हौ नव-रात्रावपि स्त इति । दशममहर्वक्ष्यते, तच्च साधारणं द्वयोः । तेन समूढो व्यूढश्च दशरात्रो भवति । नवरात्रदशरात्र इत्युभयथा व्यवहारोऽस्त्येव । उभयथाव्यवहारेऽपि नवैवा-हानि विक्रियन्ते, दशमं तु तुल्यमेवेति सिद्धं ॥

इत्युत्तरषट्कस्य द्वितीये सप्तमी कण्डिका ॥ ७ ॥

**व्यूल्हश्चेत् पृष्ठ्यस्योत्तरे त्र्यहे मध्यन्दिनेषु गायत्रांस्तृचानुपसंशस्य तेषु निविदो दध्यात्॥ १॥**

यदि व्यूल्हो दशरात्रस्तदा पूर्वस्मादयं विशेष उच्यते। उभयत्र पृष्ठ्यस्योत्तरे त्र्यहे मध्यन्दिनेषु सूक्तेषु गायत्रांस्तृचानुपसंशस्य तेषु तृचेषु निविदो दध्यात्। गायत्रग्रहणं गायत्र्येव्यवहरः सु सवनच्छन्द इति दर्शयितुं। अतोऽत्र गायत्र्याः सवनच्छन्दस्त्वात् निविदतिपत्तौ गायत्र एवान्यस्मिंस्तृचे निविद्धेया। अन्यत्रापि निविदतिपत्तावेवं भवति। यत् सवनच्छन्दः तत् सवनच्छन्दस्कं सूक्तमाहृत्य तस्मिन्निविद्धेया, नातिपन्नच्छन्दस्के सूक्त इति। उपसंशस्येति वचनं तृचानामेतेषां सूक्तत्वेन स्वातन्त्र्यनिवृत्त्यर्थं। इतरथा 'तृचानेव याज्ञिकाः सूक्तमाहुः' इति स्मरणात्, सूक्तान्येव सूक्तस्थानेष्वहीनेष्विति परिभाषया च स्वतन्त्रत्वं स्यात्। ततश्चाहीनस्तोमेषु तृचवर्जनमन्यस्य उद्धारः स्यात्, दृश्यते तृचसहितस्यान्यस्य सूक्तस्यालोपः, शंसने च तृचसहितात् सूक्तादेव पुरस्तादावापो न केवलतृचादेवेतीत्येवमपि लभ्यते। तृचानामसत्यपि सूक्तत्वे तृचेष्वेव निविद्धेयेत्येवमर्थं 'तेषु निविदो दध्यात्' इत्युक्तं। तेन एकतृच इत्येवंनिविद्धेया भवति॥

**इमं नु मायिनं हुव त्यमु वः सत्रासाहं मरुत्वाँ इन्द्रमीढ्वस्तमिन्द्रं वाजयामस्ययं ह येन वा इदमुप नो हरिभिः सुतमिति ॥ २॥**

एते षट् तृचाः॥

त्रैष्टुभान्येषां तृतीयसवनानि ॥ ३ ॥

एषामह्नां तृतीयसवनानि त्रैष्टुभानि भवन्ति। इदमपि सवनच्छन्दस्त्वेन न विधीयते। प्रयोजनमपि पूर्ववदेव द्रष्टव्यं ॥

चतुर्थेऽहन्या देवो यातु प्र द्यावेति वासिष्ठं प्र ऋभुभ्यः प्रष्ठूकेत्विति वैश्वदेवं। वैश्वानरस्य सुमतौ क ईं व्यक्ता अग्निं नर इत्याग्निमारुतं। अष्टादशोत्तमे विराजः ॥ ४ ॥

विराड्वचनं विराज एवैता ऋचो नासां विराड्धर्मो न्यूङ्ख इति ॥

द्विपदा एकादश मारुते। एकविंशतिवैश्वदेवसूक्ते ॥ ५ ॥

द्विपदा इति शेषः। द्विपदावचनमुक्तप्रयोजनं ॥

पञ्चमस्योदुष्य देवः सविता दमूना इति तिस्रो मही द्यावापृथिवी इह ज्येष्ठे इति चतस्र ऋभुर्विभ्वास्तुषेजनमिति वैश्वदेवं। हविष्पान्तं वपुर्नु तदग्निर्होता गृहपतिः स राजेति तिस्र इत्याग्निमारुतं। उत्तमा वैश्वदेवसूक्ते साध्यासा। उत्तमा जातवेदस्ये ॥ ६ ॥

ऋच्यभ्यस्यत इत्यभ्यासः। समाम्नायाद्यामृचि पद्यामुक्तार्थे इव यः पूर्वपादसदृशः पादो विधीयते सोऽभ्यास इति विद्यात्॥

सर्वत्राध्यासानुपसमस्य प्रणुयात् ॥ ७ ॥

उपसमासो नाम अकृत्वा प्रणवं यथार्गन्तरमेव सन्धाय वचनं । ऋगन्ते तु प्रणवः कर्त्तव्यः । एवं सर्वत्रवचनं प्रकरणादुत्कृष्याप्ययं विधिः प्रवर्त्ततइत्येवमर्थं । सर्वत्रवचनं कारणमन्तरेणाप्यस्य विधेः प्रापणार्थं । साध्यासानामचतुष्पादत्वादर्धर्चशंसननिवृत्त्यर्थं वचनं ॥

षष्ठस्योदुष्य देव इति गार्त्समदं किमु श्रेष्ठ उप नो वाजा इति त्रयोदशार्भवञ्चतस्रश्च वैश्वदेवसूक्ते त्वमन्त्यमुद्धरेदिति वैश्वदेवं ॥ ८ ॥

किमु श्रेष्ठ इति त्रयोदशर्चः, उप नो वाजा इति चतस्रः, एताः सप्तदशर्चं आर्भवं भवति । समूल्हे त्रीणि वैश्वदेवसूक्तानि, तेषामन्त्यं त्वचमुद्धरेत् स्वस्त्यात्रेयसंज्ञकं ॥

अहश्च कृष्णं मध्वोवो नाम सप्तत्यैत्याग्निमारुतं । इति पृष्ठ्यः ॥ ९ ॥ ॥ ८ ॥

उक्तमिति शेषः । उक्तानुसङ्कीर्त्तनं पृष्ठ्यस्यापि समूल्हे व्यूल्हे व्यवहारसिद्ध्यर्थं ॥

इत्युत्तरषट्कस्य द्वितीये अष्टमी कण्डिका ॥ ० ॥

---

अथ छन्दोमाः ॥ १ ॥

अथानन्तरं व्यूढस्य छन्दोमा अधिक्रियन्त इति सम्बन्धः ॥

समुद्रादूर्मिरित्याज्यं। आ वायो भूष शुचिपा उप नः प्रयाभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिरध्वरं प्र सोता जीरो अध्वरेष्वस्थाद्ये वायव इन्द्रमादना स या वां शतं नियुतो याः सहस्रमित्येकपातिन्यः प्र यद्वां मित्रावरुणा स्पूर्द्धन्ना गोमता नासत्या रथेना नो देव शवसा याहि शुष्मिन् प्र वो यज्ञेषु देवयन्तो अर्चन् प्र क्षोदसा धायसा सस्र एवेति प्रउगं ॥ ॥ २ ॥

एकपातिन्यौ प्रथमौ तृचौ ॥

माध्यन्दिने सूक्ते विपरिहृत्येतरयोर्निविदौ दध्यात् ॥ ३ ॥

मध्यन्दिने भवं माध्यन्दिनं। निष्केवल्यमरुत्वतीययोः सूक्ते इत्यर्थः। मरुत्वतीये निष्केवल्ये च ये सूक्ते ते पूर्वोत्तरे कृत्वा इतरयोरुत्तरीकृतयोर्निविदौ दध्यात्। अन्ते निविदं दध्यादित्युत्तरयोरेव निविदि प्राप्तायां इतरयोरितिवचनं संसवेऽप्यनुद्धार एवास्मिन् दशरात्रे भवतीत्येवमर्थं। अतस्त्रिषूक्तान्यस्मिन् दशरात्रे भवतीति निविदतिपत्तौ चान्यस्मिन् आगत एव निविद्धेया ॥

एवमुत्तरयोश्चतुर्थपञ्चमे ॥ ४ ॥

अत्रापीतरयोरित्यनुवर्त्तते। प्रयोजनं च पूर्ववत्। एवमुत्तरयोरपि छन्दोमयोश्चतुर्थपञ्चमे सूक्ते विपरिहृत्योत्तरोक्तेष्वेव निविदो दध्यात् ॥

अभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवाऽयं देवाय जन्मन इति तृचा एभिरग्ने दुव इति वैश्वदेवं ॥ ५ ॥

पूर्वाणि त्रीणि सूक्तानि तृचा एव ॥

नित्यानि द्विपदासूक्तानि ॥ ६ ॥

वैश्वदेवसूक्तानामित्यस्य कर्मधारयत्वात् द्विपदासूक्तानि त्रिषु छन्दोमेषु समूल्हे प्राप्तानामनेन व्यूल्हे प्राप्तिरुच्यते ॥

वैश्वानरो अजीजनदित्येका स विश्वं प्रति चाकॢपदृतूनुत्सृजते वशी। यज्ञस्य वय उत्तिरन्। वृषापावक दीदिह्यग्ने वैश्वानर द्युमत्। जमदग्निभिराहुतः। प्रयद्वस्त्रिष्टुभं दूतं व इत्याग्निमारुतं ॥ ७ ॥ ॥ ६ ॥

वैश्वानरीयं सूक्तं तृचं आद्या, चातुर्मास्येषु कल्पना। उत्तरे अत्रैवाम्नाते 'स विश्वं वृषापावके' इत्येते ॥

इत्युत्तरषट्कस्य द्वितीये नवमी कण्डिका ॥ * ॥

द्वितीयस्याग्निं वो देवमित्याज्यं। कुविदंग नमसा ये वृधासः पीवो अन्नाꣳ रयिवृधः सुमेधा उच्छन्नुषसः सुदिना अरिप्रा इत्येकपातिन्य उशन्ता दूता नदभाय गोपा यावत्तरस्तन्वो यावदोज इत्येका द्वे च प्रति वाꣳ सूर उदिते सूक्तैर्धेनुः प्रत्नस्य काम्यं दुहाना ब्राह्मण इन्द्रोपयाहि विद्वानूर्ध्वो अग्निः सुमतिं वस्वो अश्रेदु तस्या नः सरस्वती जुषाणेति प्रउगं॥१॥

आद्यस्तृच एकपातिन्यः। द्वितीयस्त्वेका द्वे च॥

हिरण्यपाणिमूतय इति चतस्रो मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति तृचौ देवानामिदव इति वैश्वदेवं॥ ॥२॥

प्रथमश्चतुर्ऋचं। ततो द्वे सूक्ते तृचौ। चतुर्थं सूक्तं॥

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिं। अजस्रं घर्ममीमहे। दिवि पृष्टो अरोचताग्निर्वैश्वानरो महान्। ज्योतिषा बाधते तमः। अग्निः प्रत्नेषु धामसु कामो भूतस्य भव्यस्य। सम्राडेको विराजति। क्रीडं वः शर्धोऽग्ने मृडेत्याग्निमारुतं॥ ॥३॥　　॥१०॥

प्रथमः कश्यजस्तृचः। इतरे सूक्ते॥

इत्युत्तरषट्कस्य द्वितीये दशमी कण्डिका॥ ॥

तृतीयस्यागन्म महेत्याज्यं। प्रवीरया शुचयो दद्रिरे ते सत्येन मनसा दीध्याना दिवि चयंता रजसः पृथिव्यामाविश्व-वाराऽश्विनागतं नोऽयं सोम इन्द्र तुभ्यं सुन्व आतु प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देवयन्तो हवन्त आ नो दिवो बृहतः पर्वतादासरस्वत्यभि नो नेषिवस्य इति प्रउगं ॥ १ ॥

दद्रिरेते इति प्रयोगपाठः ॥

एकपातिन्य उत्तमः ॥ २ ॥

उत्तमस्तृच एकपातिन्यः ॥

दोषो आगात् प्रवां मह्दिद्यवी अभीति तृचाविन्द्र इषे ददातु नस्तेनो रत्नानि धत्तनेत्येका द्वे च ये त्रिंशतीति वैश्वदेवं ॥ ३ ॥

'दोषो आगात्' इति पार्ष्ठिके षष्ठेऽहनि अनुचरत्वेन पठिता इह सूक्तत्वायोच्यन्ते द्यावापृथिवीयं तृच एव। 'इन्द्र इषे ददातु न इत्येका तेनो रत्नानि धत्तनेति द्वे आर्भवं समाम्नायें ॥

वैश्वानरो न ऊतय आ प्रयातु परावतः। अग्निर्नः सुष्टुतीरुप। वैश्वानरो न आगमदिमं यज्ञं सजूरुप। अग्निरुक्थेन

वाहसा। वैश्वानरो अङ्गिरोभ्यः स्तोम उक्थञ्च चाकनत्। एषु द्युम्नं स्वर्यमत्। मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतं ॥ ४ ॥　　॥ ११ ॥

वैश्वानरीयं सूक्तं कल्पजस्तृचः ॥

इत्युत्तरषट्कस्य द्वितीये एकादशी कण्डिका ॥ ० ॥

दशमेऽहनि ॥ १ ॥

यदित ऊर्ध्वं वक्ष्यते तद्दशमेऽहनीत्येवमधिकारो भवति ॥

अनुष्टुभां स्थाने। अग्निं नरो दीधितिभिररण्योरिति तृचमाग्नेये क्रतौ ॥ २ ॥

आग्नेये क्रतौ या अनुष्टुभः प्रातरनुवाकेऽनूच्यन्ते तासां सर्वासां स्थानेऽयं तृचो भवति। क्रतुग्रहणं प्रातरनुवाके एवायं विधिः स्यान्नान्यत्रेत्येवमर्थं ॥

उषा अपस्वसुस्तम इति पच्छो द्विपदां त्रिरुपस्ये ॥ ३ ॥

क्रताविव्यनुवर्त्तते, पच्छो द्विपदां इत्यस्य प्रसविषयत्वात्।

पञ्च इति वचनमनुवचनेऽप्यत्र प्रापणार्थं। या उपरष्टे क्रताव-नुष्टुभस्तासां सर्वासां स्थाने एतां द्विपदां त्रिष्कृत्वो ब्रूयात् ॥

आ नू(न)मश्विनोरृषिरा युवमृच्छक्यं त्वाप्तं इति तृचमाश्विने क्रतौ ॥ ४ ॥

क्रतुग्रहणमाश्विने शस्त्रे एवं माभूदित्येवमर्थं। अतो ज्ञा-यते दशममहरतिरात्रसंस्थमेकाहीभूतमस्तीति। तथा च शाखान्तरे दृष्टं ॥

स्तोकसूक्तस्य द्वितीयतृतीययोः स्थानेऽग्ने घृतस्य धीतिभि-रुभेसुश्चन्द्रसर्पिष इत्येते ॥ ५ ॥

प्रकृतेऽपि स्थानग्रहणे पुनः स्थानग्रहणं दशमेऽहन्यनुष्टुभां स्थान इत्यस्य सूत्रस्यानीप्सितार्थप्रतिपादकत्वशङ्कानिवृत्त्यर्थं। दशमेऽहनि या अनुष्टुभस्तासां सर्वासां स्थानेऽन्या ऋचः कर्त्तव्या इति यद्ययमर्थः स्यात्, तदा यासां स्थाने या उक्तास्तासां सर्वासां स्थाने ता भवन्ति, यासां नोक्तास्तासामन्या अन्वे-षणीयाः स्युः। एवं सति प्रथमेनैव सूत्रेण गतार्थत्वात् पुनरपि स्थानग्रहणप्रपञ्चोऽनर्थकः स्यात। कृतश्च प्रपञ्चः। अतो ज्ञा-यते यस्य प्रपञ्चस्यायमर्थ इति। यासां स्थानेऽन्या विधीयन्ते तासामेव स्थाने ता भवन्ति। अन्यासामनुष्टुभामेव प्रयोगः कर्त्तव्य इति पुनः पुनः स्थानग्रहणं कृतमिति सिद्धं ॥

इदमापः प्रवहतेत्येतस्याः स्थान आपो अस्मान् मातरः शुन्धयन्त्विति। अच्छा वो अग्निमवसे प्रत्यस्मा इति तृचयोः स्थानेऽच्छा नः शीरशोचिषं प्रतिश्रुताय वो धृषदिति तृचावच्छावाकः ॥ ६ ॥

अच्छावाकग्रहणमाश्विने शस्त्रेऽच्छा वो अग्निमवस इत्यस्य उद्धारो माभूदित्यतोऽपीदमहरेकाहीभूतं अतिरात्रसंस्थमस्तीति ज्ञापितं भवतीति ॥

परि त्वाग्ने पुरं वयमित्येतस्याः स्थानेऽग्ने हंसि न्यत्रिणमिति। उत्तिष्ठतावपश्यतेत्येतस्याः स्थान उत्तिष्ठन्नोजसा सहेति। उरु विष्णो विक्रमस्वेति घृतयाज्यास्थाने भवामित्रो न शेव्यो घृतासुतिरिति ॥ ७ ॥

घृतयाज्याग्रहणं द्वयमेव घृतयाज्याऽस्मिन्नहनि नियमेन भवतीति। अनेन प्रकारेणास्मिन्नहनि अन्यतरतस्वेदित्ययं पक्षो न प्रवर्त्तत इति साधितं भवति ॥

अहरहस्त्वाहर्गणेषु यत्रैतदहः स्यात् ॥ ८ ॥

न केवलं दशम एवाहनि घृतयाज्याया उभयतो यागपक्षः किन्तर्हि सर्वेष्वहीनेषु च यस्मिन्नहर्गणे दशममहरस्ति तस्मिन्नहरहस्त्वायमेव घृतयाज्याविधिर्भवति। अहरहरिति

सर्वेष्वहःस्वित्यर्थः। एतदुक्तं भवति। यस्मिन्नहर्गणे अविवाक्यं अस्ति तस्मिन् सर्वेषु अहःसु घृतयाज्यायाः सौम्यस्योभयतो यागपच एव नियम्यत इति॥

सिनीवाल्या अभ्यस्येदित्येके॥ ९॥

सिनीवाल्याया ये याज्यानुवाक्ये उक्ते ते अनुष्टुभौ मत्वाऽभ्यासेनान्यत्वमापादयेदित्येके मन्यन्ते। अभ्यासे चानुवाक्यायां चतुरचराभ्यासः याज्यायामष्टाचराभ्यासः कर्त्तव्य इति श्रुतावेव प्रसिद्धं। अन्यानामष्टाचराणामभ्यासः॥

नास्मिन्नहनि केनचित् कस्यचिद्विवाच्यमविवाक्यमित्येतदाचक्षते॥ १०॥

अस्मिन्नहनि केनचित् कर्त्रा कस्मैचित् कर्त्रे मन्त्रः कर्मवानविवाच्यं नाख्यातव्यमित्यर्थः। कुतः, यस्मादेतदहरविवाक्यमिति श्रुतावेव प्रसिद्धं परस्परमविवेचनीयमेतस्मिन्नहनीत्यविवाक्यमिदमहर्भवति॥

संशये बहिर्वेदि स्वाध्यायप्रयोगः॥ ११॥

यदि कस्यचित् कर्त्तुः स्वपदार्थकरणेऽज्ञानसंशयविपर्यया: स्युस्तदा किं कर्त्तव्यमित्यत्राह। बहिर्वेदि स्थित्वा तस्या-

ज्ञानाद्यपनयनार्थं अध्ययनेनान्येन स्वाध्यायप्रयोगः कर्त्तव्यः। कर्मणि संशयश्चेत् तद्विधायकशास्त्रं ब्राह्मणं प्रयोगशास्त्रं वा पठेत्। मन्त्रे चेन्मन्त्रः पठितव्यः। एवं बहिर्वेद्यध्ययनेन यदि संशयादिर्नापेयात् तदा ॥

अन्तर्वेदीत्येके ॥ १२ ॥

एवं चेदन्तर्वेदि स्थित्वैव पठितव्यं, उपदेष्टव्यं ॥

न व्यञ्जनेनोपहितेन वाऽर्थः ॥ १३ ॥

एवमपि संशयो यदि नापेयात् तदा व्यञ्जनेन वा उपहितेन वा प्रतिरुद्धोऽर्थः कर्म वा मन्त्रो वा साधयितव्यः। व्यञ्जनं नाम व्यज्यते सूच्यते येन तद्व्यञ्जनं। उपहितं नाम छलोक्तिः। अयमद्य एवंप्रकारः, नाहमस्मै वदामीत्येवंप्रकारः। एतदुक्तं भवति। अन्तर्वेदि स्वाध्यायप्रयोगेणापि तेषां अर्थो यदि न सिध्येत् तदा केनचित् सूचकेन शब्देन तदर्थं ब्रूयात् न वाचकेनेत्यर्थः। अथवा उपहितेन छलोक्त्या वा तेषामर्थः साधयितव्य इति। न व्यञ्जनेनेत्यत्र नेति व्यवच्छिद्य योजना। पूर्वोक्तेन यदि संशयो नापेयात् तदा व्यञ्जनेनोपहितेनेति ॥

प्रत्यसि त्वा प्रायश्चित्तं जुहुयुः ॥ १४ ॥

उक्तानामन्यतमेनोपायनार्थं साधयितुं न शक्यते यदि

तदा विधिमुखेनैव तदर्थं साधयित्वा सर्वप्रायश्चित्तं जुहुयुः। स्वस्वशास्त्रविहितं विशिष्टं प्रायश्चित्तमस्ति चेत् तदा जुहुयुः॥

अग्ने तमद्याश्वं न स्तोमैरित्याज्यं॥ १५॥

सूक्तकार्ये विहितत्वात् सूक्तमेव भवति॥

पञ्चोत्तरेण विग्रहः। दशोत्तरेण वा। आ त्वा रथं यथोतय इत्येतस्याः स्थाने त्रिकद्रुकेषु महिषो यवाशिरमिति॥ १६॥

आद्याया उद्धारः उत्तरे द्वे भवतः। अनुचरादि सर्वं समानं॥

सखाय आशिषामहीति निस्र उष्णिहो मरुत्वाँ इन्द्रेति मरुत्वतीयं॥ १७॥

एतास्तिस्र एकं सूक्तं। मरुत्वाँ इन्द्र वृषभ इत्येकं। एवं द्विसूक्तं मरुत्वतीयं। उष्णिग्ग्रहणं विस्पष्टार्थं॥

कया नश्चित्र आभुवदित्येतासु रथन्तरं पृष्ठं। तस्य योनिं शंसेत्॥ १८॥

उत्तरविवक्षार्थमेतत्॥

छन्दतस्य गाणगारिर्दशरात्रे युग्मान्वयत्वात् ॥ १९ ॥

इदं सामान्यतो दृष्टमात्रं ॥

तार्क्ष्येणैकपदा उपसंशस्य ऋगावानमेकपदाः शंसेदिन्द्रो विश्वस्य गोपतिरिति चतस्रः ॥ २० ॥

तार्क्ष्यानन्तरं एकपदा ऋगावानं शंसेत्। तार्क्ष्यस्योत्तमेन प्रणवेण प्रथमामेकपदामुपसन्तनुयात्। उपसंशस्येतिवचनं, तार्क्ष्यस्यैकपदाभिः सहैकतासिद्ध्यर्थं। अतस्तार्क्ष्यसम्बन्धे सत्येकपदाभ्य एवाहावो न कर्त्तव्यः। असति तु तार्क्ष्ये एकपदाभ्यः एवाहावः कर्त्तव्य इत्येतत् साधितं भवति। पुनरेकपदाग्रहणं तार्क्ष्याभावेऽपि एकाहेष्वेकपदानां प्रापणार्थं॥

उत्तमयोपसन्तानः ॥ २१ ॥

उत्तमयैकपदया सूक्तादेराहाव उपसन्तनुयात्, 'इन्द्रो विश्वस्य राजतोऽशोंसावोऽम्' इति ॥

य इन्द्र सोमपातम इति षडुष्णिहो युध्मस्य त इति निष्केवल्यं ॥ २२ ॥

उक्तार्थमेतत् ॥

तत् सवितुर्वृणीमह इत्येतस्याः स्थानेऽभि त्यं देवं सवितारमोण्योरिति ॥ २३ ॥

आद्यायाः स्थान एषा भवति। कविमित्यर्धर्चान्तः। अस्य हि स्वयमस्तरमित्यादि समानं ॥

ऋभुक्षण इत्यार्भवं। पश्चाननतायुमिति द्वैपदं समिद्धमग्निं समिधा गिरा गृण इति तृचश्च द्विप्रतीकं जातवेदस्यं ॥ २४ ॥

द्विप्रतीकवचनं द्विपदासूक्तानामसति वचने निविद्धानीयत्वं नास्तीति ज्ञापयितुं। अतः 'आयाहि वनसा सह' इत्यादीनामाहावो न कर्त्तव्यः। तेभ्यः परस्तादैश्वदेवसूक्तादिष्वेवाहावः कर्त्तव्य इति सिद्धं ॥

चतुर्थेन व्यूळ्हस्येतराणि सूक्तानि ॥ २५ ॥

वैश्वदेवाग्निमारुतयोरार्भवजातवेदस्यादन्यानि सावित्रादीनि यानि सूक्तानि तानि व्यूळ्हस्य चतुर्थादह्न आहर्त्तव्यानीत्यर्थः। होतुरुक्तादन्यदैकाहिकं। होत्रकाणां सात्त्रिकमेव सर्वं अहीनं, सम्पाताभावात्। माध्यन्दिनेऽयं विशेषः। आरम्भणीयाभ्य ऊर्ध्वं 'सद्यो ह जातः' इति अहरहः शस्यमन्यमैकाहिकमेव 'आ त्वामिन्द्र' इति मैत्रावरुणस्य। ब्राह्मणाच्छंसिनः पूर्वमैकाहिकं। 'इन्द्रः पूर्भिदुदु ब्रह्माणि' इत्यहरहःशस्यं। अच्छावाकस्य भूय इदिति पूर्वमैकाहिकमहरहःशस्यमभितष्टेवेति ॥

वामदेव्यमग्निष्टोमसामाऽग्निं नरो दीधितिभिररण्योरिति स्तोत्रियानुरूपौ। अग्निष्टोम इदमहः ॥ २६ ॥

अग्निष्टोमसंस्थं इदमहर्भवतीत्यर्थः ॥

ऊर्ध्वं पत्नीसंयाजेभ्यः ॥ २७ ॥ ॥ १२ ॥

इत्युत्तरषट्कस्य द्वितीये द्वादशी कण्डिका ॥ ० ॥

---

गार्हपत्ये जुह्वतीह रमेह रमध्वमिह धृतिरिह स्वधृतिरग्ने वाट् स्वाहा वाडिति ॥ १ ॥

गार्हपत्योऽत्र शालामुखीयः। तत्र सर्वे होत्रादयो जुह्वति। पत्नीसंयाजान्तत्वादह्नः संस्थित इति वक्तव्ये यत् पत्नीसंयाजेभ्य ऊर्ध्वं इति ब्रवीति तत् ज्ञापयति दशमस्यैवाह्न एतदङ्गमिति ॥

आग्नीध्रीय उपहृजं धरुणं मातरं धरुणो धयन्। रायस्पोषमिषमूर्जमस्मासु दीधरत् स्वाहेति ॥ २ ॥

अत्रापि होत्रादयः सर्वे कर्त्तारो जुह्वति। इदं होमद्वयं ब्राह्मणेऽप्युक्तं। तत्रैको होमकर्त्ता इतरे जुह्वन्तं समन्वारभन्त एवं वा जुहुयात् सूत्रानुसारेण वा ॥

सदः प्रसृप्य मानसेन स्तुवते ॥ ३ ॥

अस्मिन् काले छन्दोगाः सदः प्रसृप्य मानसेन स्तुवते। मानसं नाम स्तोत्रविशेषः। सदः प्रसृप्येति परकर्तृकविधानं यत्रैते स्तुवते तत्रैवोत्तरं कर्म होत्रापि कर्त्तव्यमित्येवमर्थं। अतः 'सदस्येवाध्वर्यवित्याह्वयीत' इत्यादि सर्वं कर्त्तव्यं ॥

यर्हि स्तुतं मन्येताध्वर्यवित्याह्वयीत ॥ ४ ॥

यदा छन्दोगैः स्तुतं मन्यते होता, मानसत्वादप्रत्यक्षात् स्तुतिरिति समाप्तिरिति यस्मिन् स्तुतं मन्यत इत्युक्तं, तदा अध्वर्यो इत्याह्वानं कुर्यात् ॥

हो होतरितीतरः ॥ ५ ॥

इतरोऽध्वर्युः हो होतरिति प्रत्याह्वानं करोति ॥

आयङ्गौः पृश्निरक्रमीदित्युपांशु तिस्रः पराचीः शस्त्वा व्याख्यास्वरेण चतुर्होतॄन् व्याचक्षीत ॥ ६ ॥

तिस्र इति वचनं सुत्याधारत्वे सत्यप्यासां स्तोत्रियधर्मनिवृत्त्यर्थं। तेनाध्वर्यो इत्ययमाहावः शस्त्राङ्गमेव न स्तोत्रियाङ्गं। अतः शस्त्रस्य मध्यमस्वरत्वादध्वर्यो इत्यपि मध्यमस्वरो भवति नोपांशुस्वरः। पराचीरित्यभ्यासनिवृत्त्यर्थं।

व्याख्यास्वरो नाम मध्यमस्वरः। चतुर्होतार इति 'तेषां चित्तिः स्रुग' इत्येवमादेः 'मन उपवक्ता' इत्येवमन्तस्य मन्त्रस्य नाम, तं व्याचक्षीत, वाक्ये वाक्येऽवसाय ब्रूयादित्यर्थः॥

देवा वा अध्वर्यो प्रजापतिगृहपतयः सत्रमासत॥ ७॥

एवं चतुर्होतृसंज्ञस्य मन्त्रस्योत्पत्तिवाक्यमिदमुक्त्वा चतुर्होतृन् व्याचक्षीत॥

ॐ होतस्तथा होतरित्यध्वर्युः प्रतिगृणात्यवसितेऽवसिते दशसु पदेषु॥ ८॥

ॐ होतः तथा होतः इत्येतौ प्रतिगरौ, तेषां चित्तिरित्यादिषु दशसु पदेषु भवतः। तत्र पूर्वेषु पञ्चसु पूर्वो भवति, उत्तरेषूत्तर इति विभागोऽर्थाल्लभ्यते। दशसु पदेष्वितिवचनात् दशस्वेव पदेषु चतुर्होतृसंज्ञकेष्वेतौ प्रतिगरौ भवतः, न प्रतिपत्तिवाक्येन ग्रहसंज्ञके च मन्त्र इति। उत्तरयोस्त्वनुज्ञोद्यय़ोरपप्रजनवचनादेव प्रतिगराभावः। अत्राहावो यः तत्र 'हो होतः' इति प्रतिगरः, सार्पराज्ञीनां शंसतिचोदितत्वात् प्राकृतावेव प्रतिगरौ तौ उपांशु कर्त्तव्यौ। उत्तमेऽर्धर्चे यः प्रणवस्तेनावसानमर्थाल्लभ्यते, उत्तरस्यानुक्तारपदसमाम्नातत्वाच्च। तेनासौ त्रिमात्र एव भवति, प्रणवान्तश्च प्रतिगरस्तत्र॥

तेषां चित्तिः स्रुगासी३त्। चित्तमाज्यमासी३त्। वाग्वे-दिरासी३त्। आधीतं बर्हिरासी३त्। केता अग्निरासी३त्। विज्ञातमग्नीदासी३त्। प्राणो हविरासी३त्। सामाध्वर्युरा-सी३त्। वाचस्पतिर्होतासी३त्। मन उपवक्तासी३त्॥ ९॥

अयं चतुर्होताख्यः पदसमूहः॥

ते वा एतं ग्रहमगृह्णत। वाचस्पते विधे नामन्। विधेम ते नाम। विधेस्त्वमस्माकं नाम्नाद्यां गच्छ। यां देवाः प्रजापतिगृहपतय ऋद्धिमराध्नुवंस्तामृद्धिं रात्स्याम इति॥ ॥ १०॥

'ते वा एतम्' इत्यादिः, 'तामृद्धिं रात्स्यामः' इत्यन्तो ग्रहसंज्ञो मन्त्रः॥

अपव्रजत्यध्वर्युः॥ ११॥

अस्मिन्नवसरेऽध्वर्युरपगच्छति॥

अथ प्रजापतेस्तनूरितर उपांश्वनुद्रवति॥ १२॥

ग्रहमन्त्रस्य मध्यमस्वर एव प्रसक्तत्वात्, अथानन्तरं प्रजा-पतेस्तनूरितरो होताऽनुद्रवत्युपांशु। प्रजापतेस्तनूरिति मन्त्र-संज्ञा॥

ब्रह्मोद्यञ्च। ब्रह्मोद्यञ्चोपांश्वेवानुद्रवति। अन्नादा चान्नपत्नी च भद्रा च कल्याणी चानिलया चापभया चानाप्ता चानाप्या चानाधृष्या चाप्रतिधृष्या चापूर्वा चाभ्रातृव्या चेति तन्वः ॥ १३ ॥

एते तनुसंज्ञका मन्त्राः ॥

अग्निर्गृहपतिरिति हैक आहुः सोऽस्य लोकस्य गृहपतिर्वायुर्गृहपतिरिति हैक आहुः सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृहपतिर्योऽसौ तपत्येष पतिर्ऋतवो गृहाः। येषां वै गृहपतिं देवं विद्वान् गृहपतिर्भवति राध्नोति स गृहपतीराध्नुवन्ति ते यजमानाः। येषां वा अपहतपाप्मानं देवं विद्वान् गृहपतिर्भवत्यप स गृहपतिः पाप्मानं हतेऽप ते यजमानाः पाप्मानं घ्नते ॥ १४ ॥

एते ब्रह्मोद्यसंज्ञा मन्त्राः ॥

अध्वर्यो अरात्स्मेत्युच्चैः ॥ १५ ॥

एतत् प्रियवाक्यं, तदुच्चैर्वक्तव्यं ॥

एषा याज्या ॥ १६ ॥

यदेतत् प्रियवाक्यं तदेवमेवावस्थितं याज्या भवति ॥

एष वषट्कारः ॥ १७ ॥

एवञ्च वषट्कारश्च आगूश्च न कर्त्तव्यः ॥

नानुवषट्करोति। उक्तं वषट्कारानुमन्त्रणं ॥ १८ ॥

तदिह कर्त्तव्यमिति शेषः ॥

अरात्स्म होतरित्यध्वर्युः प्रत्याह ॥ १९ ॥

एतदुक्तं भवति। दशममहः परिसमाप्तं। अतो वयमरात्स्म, अध्वर्यो समृद्धा वयमित्यर्थः, होत्रैवमुक्तोऽध्वर्युरपि तमेवार्थमनुमोदते, सत्यमेवमरात्स्म होतरिति ॥

मनसाऽध्वर्युर्ग्रहं गृहीत्वा। मनसा भक्षमाहरति ॥ २० ॥

मनसा क्रियमाणमन्येन न शक्यते ज्ञातुमिति स्वविज्ञानार्थमिदमुच्यते ॥

मानसेषु भक्षेषु मनसोपह्वानं भक्षणे ॥ २१ ॥

अध्वर्युणैवंकृते स्वयमप्येवं करोति। अध्वर्युग्रहणात् अन्ये प्रतिप्रस्थात्रादयोऽपि भक्षाहरणं कुर्वन्ति। तेष्वेवोपहवयाचनं भवतीति ज्ञायते ॥

मनसात्मानमाप्याय्यौदुम्बरीं समन्वारभ्य वाचं यच्छन्त्या-नक्षत्रदर्शनात्। तत्रानधरान् पाणींश्चिकीर्षेरन्॥ २२॥

तत्रौदुम्बर्यान्वारम्भणे पाणीनधरान् कर्त्तुं नेच्छेयुः। औदुम्बर्या अग्रप्रदेशे समन्वारभेरन्नित्यर्थः॥

दृश्यमानेष्वध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशात् युवन्तमिन्द्रा पर्वता पुरोयुधेति जपन्तः॥ २३॥

दृश्यमानेषु नक्षत्रेषु अध्वर्युप्रधानाः परस्परं समन्वारब्धाः सर्पन्त्यातीर्थदेशप्राप्तेः, 'युवन्तमिन्द्रा पर्वता' इत्येतामृचं सकृत् सर्वे जपन्तः॥

अध्वर्युपथेनेत्येके॥ २४॥

अयं सर्पणस्य मार्गविधिः। अध्वर्युपथो नाम हविर्धानाग्नीध्रीययोर्मध्यं, तेन वा प्रसर्पन्ति॥

दक्षिणस्य हविर्धानस्याधोक्षेणेत्येके॥ २५॥

अक्षस्याधस्ताच्चक्रयोर्मध्येनेत्यर्थः। एक इति दिङ्क्तः प्रयोजनं अस्य सर्पणस्य मार्गान्तरमप्यस्तीति प्रदर्शनार्थं॥

प्राप्य वरान् वृत्वा वाचं विसृजन्ते यदि्होनमकर्म यदत्यरीरिचाम प्रजापतिं तत् पितरमप्येत्विति ॥ २६ ॥

तीर्थदेशं प्राप्य तत्राभिमतान् वरान् कामानित्यर्थः। वृत्वा प्रार्थयित्वा, ततो वाचं विसृजन्ते 'यदि्होनम' इत्यनेन मन्त्रेण। अस्यायमर्थः। यत् अस्मिन्नहनि कर्मणि ऊनमतिरिक्तं वा कृतवन्तो वयं तत् सर्वं प्रजापतिं पितरं पालयितारं गच्छत्विति॥

अथ वाचं निह्नवन्ते वागैतु वागुपैतु वागुप मैतु वागिति ॥ २७ ॥

निह्नवन्ते नमस्कुर्युरित्यर्थः। अस्माभिर्विसृष्टा वाचो न गच्छन्तु, अस्मानेव पुनः प्रविशन्त्वित्यर्थः॥

उत्करदेशे सुब्रह्मण्यां त्रिराहूय वाचं विसृजन्ते ॥ २८ ॥

ततः सर्वे होत्रादयः उत्करदेशे स्थित्वा सुब्रह्मण्योमिति त्रिराहूय वाचं विसृजन्ते ॥

नित्यस्त्विह वाग्विसर्गः ॥ २९ ॥

यदुक्तो वाग्विसर्गमन्त्रो भूर्भुवःस्वरिति तेनात्र वाग्विसर्गः कर्त्तव्यः॥

एतावत् सात्रं होतृकर्मान्यत्र महाव्रतात् ॥ ३० ॥

एतावदित्येतत्परिमाणमित्यर्थः । सत्रे भव सात्रं । होतृशब्देन होता तत्पुरुषाश्चोच्यन्ते, तेषां कर्म होतृकर्म । प्रथमं तावच्चतुःसंस्थो ज्योतिष्टोम उक्तः 'ततः सत्राणाम्' इत्यधिकृत्य । चतुर्विंशादीन्यविवाक्यपर्यन्ताहान्युक्तानि । महाव्रतञ्चान्यत्र वक्ष्यते । यदत्र सत्राणामित्यधिकृत्य त्रयोविंशतिरहान्युक्तानि साङ्गोपाङ्गानि तस्य सर्वस्यात्राङ्गत्वज्ञापनार्थमित्येतावत् सात्रं होतृकर्मेत्युपसंहरति । एतावदेव सात्रं होतृकर्म न शास्त्रान्तरमपेक्षणीयं, नापि सत्रेषु पुनः प्रकृत्यतिदेशोऽपेक्षणीय इति । अत्र होतृकर्मेति विशेषणं ब्रह्मणो ब्रह्मपुरुषाणां शास्त्रान्तरोक्तमस्ति चेत् तदपि कर्त्तव्यमित्यर्थं । सत्राणामित्यधिकृत्य त्रयोविंशतिमेवाहान्युक्त्वा महाव्रतमनुक्त्वैव एतावत् सात्रं होतृकर्मेत्युक्ते महाव्रतस्यासत्रत्वप्रसङ्गः स्यात् तन्निराकरणार्थमन्यत्र महाव्रतादित्युक्तं । अतो महाव्रतमपि सात्रमेवेत्युक्तं भवति ॥

तदेषाऽभियज्ञगाथा गीयते। प्रायणीयश्चतुर्विंशं पृष्ठ्योऽभिप्लव एव च। अभिजित्स्वरसामानो विषुवान् विश्वजित् तथा। छन्दोमा दशमञ्चाह उत्तमं तु महाव्रतं। अहीनैकाहः सत्राणां प्रकृतिः समुदाहृियते। यद्यन्यधीयते पूर्वधीयते तं प्रतियामन्त्यहानि पञ्चविंशतिर्यै वै संवत्सरो मितः। एतेषामेव प्रभवस्त्रीणि षष्टिशतानि यदिति ॥ ३१ ॥

पञ्चविंशतिरिति ज्योतिष्टोमेन सहितस्य सत्रेष्वपि प्रवृत्ति-रस्तीति सात्रिकैः सह गृह्यते। संवत्सर इति गवामयन-मुच्यते। कथं पञ्चविंशत्या षष्ठ्यधिकानि त्रीणि शतानि पूर्यन्त इति तदुपपादयति, एतेषामेव प्रभव इति। अभ्यासादिना सङ्ख्यापूरणसामर्थ्यं प्रभव इत्युच्यते॥

तद्ये केचन छान्दोग्ये वाऽऽध्वर्यवे वा हौत्रामर्शाः समा-म्नाता न तान् कुर्यादकृत्स्नत्वाद्धौत्रस्य॥ ३२॥

छन्दोगानां शास्त्रं छान्दोग्यं। तथा आध्वर्यवमेवेत्युक्तं, 'एतावत् सार्वं होतृकर्म' इति। तत्राध्वर्यवे वा छान्दोग्ये वा वेदे ये केचन हौत्रामर्शाः पदार्थाः दृष्टाः कर्त्तव्यतया ते न कर्त्त-व्याः। हौत्रामर्शा इति हौत्राभासा इत्यर्थः। कुतः, अकृ-त्स्नत्वाद्धौत्रस्य। तौ हि वेदौ हौत्रस्य न विधायकौ, अन्यप-रत्वात् तयोः। अतस्तत्र ये समाम्नाताः पदार्थास्तेऽनर्थका वा भवन्तु, तत्सापेक्षेणापि वा प्रयोगशास्त्रान्तरेण सार्थका वा भवन्तु। सर्वथा तावदाश्वलायनसूत्रप्रयोगे ते न कर्त्तव्या एवेति निश्चिनुमः। अकृत्स्नत्वादिति हेतुवचनाद्यत्र कृत्स्नं हौत्रमाध्वर्यवेषु विहितं दर्शपूर्णमासनिरूढकौकिल्यादिषु तत्र तत् कर्त्तव्यमेवेति सिद्धं॥

छन्दोगप्रत्ययं स्तोम स्तोत्रियः पृष्ठं संस्थेति॥ ३३॥

तद्वै केचनेत्यस्यापवादः सूत्रद्वयं। सोमादयश्छन्दोगप्रमाणा इत्यर्थः॥

अध्वर्युप्रत्ययन्तु व्याख्यानं कामकालदेशदक्षिणानां दीक्षोपसत्प्रसवसंस्थोत्थानानामेतावत्त्वं हविषामुच्चैरुपांशुतायां हविषां चानुपूर्वं॥ ३४॥

एतत् सर्वमध्वर्युप्रत्ययं, अध्वर्य्वधीनमित्यर्थः। व्याख्यानं परिज्ञानं। काम्यत इति कामः फलं। कालः 'शरदि वाजपेयेन' इत्यादिः। देशः प्राचीनप्रवणादिः। दक्षिणा द्वादशशतादि। दीक्षा एका, तिस्रो वा दीक्षाः। उपसत् तिस्र उपसद इत्यादि उपसदश्च। तत्रैव प्रसवः सुत्या। संस्था समाप्तिः। उत्थानं स्नाचं प्रत्यस्रवणं प्रायोत्थानमित्यादि। हविषामेतावत्त्वमियत्ता। हविषामेवोच्चैष्ट्वमुपांशुत्वञ्च। हविषां चानुपूर्व्यं देवतानां क्रमः। एतत् सर्वं अध्वर्युप्रत्ययं। छन्दोगप्रत्ययानामध्वर्युप्रत्ययानां सतामस्मच्छास्त्रे यदभिधानं तस्येदं प्रयोजनं। यद्यस्मच्छास्त्रे विशेषविधिः तेषां सामान्यविधिस्तदा अस्मदीय एव विधिः संग्राह्य इति प्रयोजनं॥

एतेभ्य एवाहोभ्योऽहीनैकाहान् पश्चात्तरान् व्याख्यास्यामः॥ ३५॥ ॥ १३॥

यान्येतानि पञ्चविंशतिरहान्युपदिष्टानि एतेभ्य एवाहो-

भ्योऽहीनैकाहान् व्याख्यास्यामः। पश्चात्तरानिति तरप्-प्रत्ययः, ब्रह्मचारिधर्मव्यवहितत्वात्। 'सिद्धैरहोभिरङ्गामतिदेशः' इत्यस्मिन् सूत्रेऽयमेवार्थो वक्ष्यते, तत् किमर्थमयमेवार्थ उच्यते। तस्येदं प्रयोजनं 'एतद्विदं ब्रह्मचारिणम्' इत्यत्रैतच्छब्देनाहीनैकाहानामपि ग्रहणार्थं। इतरथा तेषामसन्निधानादेतच्छब्देन ते न गृह्येरन्, अतस्तदर्थमत्राप्युक्तं॥

इत्युत्तरषट्कस्य द्वितीये त्रयोदशी कण्डिका।

एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमञ्चारयित्वा व्रतमनुयुज्यानुक्रोशिने प्रब्रूयादुत्तरमहः॥ १॥

यान्येतानि महाव्रतवर्जान्यनुक्रान्तान्यहानि तानि मन्त्रब्राह्मणसूत्राध्ययनेन तदर्थज्ञानेन च विदित्वा तेषामङ्गामेकाहाहीनसत्राणां सत्राभावञ्च यो वेद स एवैतद्विदित्युच्यते। ब्रह्मचारिग्रहणं यो ब्रह्मचारी विद्यां समाप्य स्नानं कर्त्तुं न शक्नोति, द्वादशवर्षाण्यध्ययनं कुर्वन्नपि न किञ्चित् ग्रहीतुं शक्नोति, तमपि ब्रह्मचारिणमनतद्विदमप्येतानि व्रतानि ग्राहयित्वा एतान् वेदभागानध्याप्याश्रमं स्वसामर्थ्यानुगुणं प्रवेष्टुं शिक्षयीतेत्येवमर्थं। अनिराकृतिनं अनुत्सृष्टाध्ययनं। एवंविधं

ब्रह्मचारिणं व्रतं ग्राहयित्वा संवत्सरावमं कालञ्चारयित्वा ततस्तस्मै ब्रह्मचारिणेऽनुक्रोशिने आत्मगुणयुक्तायोत्तरमहर्म-हाव्रतं ब्रूयात्, प्रथमं ब्रूयादित्यर्थः। अहरधिकारे पुनरहो-ग्रहणस्येदं प्रयोजनं, तदहर्विधायकं वेदभागमर्थावगमन-पर्यन्तमनुष्ठानयोग्यं ग्राहयितव्यमिति ॥

महानाम्नोरग्रे ॥ २ ॥

महाव्रतानुवचनात् पूर्वं महानाम्नीभ्यो व्रतादेशनादि श्रवणान्तं कृत्वाऽनन्तरे संवत्सरे महाव्रतं ग्राहयितव्यं। ततो-ऽनन्तरे संवत्सरे उपनिषद् इति क्रमः ॥

उदगयने पूर्वपक्षे श्रोष्यन् बहिर्ग्रामात् स्थालीपाकं तिल-मिश्रं श्रपयित्वाऽऽचार्याय वेदयीत ॥ ३ ॥

आचार्येणानुक्तं श्रोष्यन् ब्रह्मचारी उदगयने आपूर्यमाण-पक्षे ग्रामाद्बहिः निष्क्रम्य शुचौ देशे होम्यद्रुमेण पार्वणवत्-त्तिलमिश्रं स्थालीपाकं नवभ्यो देवताभ्यस्तूष्णीं निर्वापप्रोक्षणे कृत्वा श्रपयेत्, तत आचार्याय-वेदयीत विज्ञापयेतेत्यर्थः ॥

विदिते व्रतसंशयान् पृष्ट्वा लघुमात्राश्चेदापत्कारिताः स्यु-रन्वारब्धे जुहुयादग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधि-राज एषः। तस्मै जुहोमि हविषा घृतेन मा देवानां मोमु-

हन्नागधेयं मो अस्माकं मोमुहन्नागधेयं स्वाहा। या तिरश्ची निपद्यतेऽहं विधरणी इति। तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा। यस्मै त्वा कामकामाय वयं सम्राड्यजामहे। तमस्मभ्यं कामं दत्वाऽथेदं त्वं घृतं पिब स्वाहा। अयन्नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं शत्रून् जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ स्वाहा। अह्वयन्त्यै चानुमत्यै च स्वाहा। प्रदात्रे स्वाहा। व्याहृतिभिश्च पृथक्॥ ४॥

विदिते ऽतः स्थालीपाक इत्यवगते व्रतसंशयान् व्रतापराधान् पृच्छेत्। ते यदि पृष्टाः, लघुमात्रात् कारणात् प्रवृत्तिनिमित्तादापदाकारितास्चेत् 'अग्नावग्निः' इत्यादिभिर्जुहुयात् न प्रायश्चित्तान्तरं कर्त्तव्यं। अथ चेद्गुरुप्रमाणं प्रवृत्तिकारणं बुद्धिपूर्वं वा करोति अपराधान् तत्तदनुरूपं प्रायश्चित्तं कारयित्वा पुनर्व्रतमादिश्य ततः संवत्सरे पूर्णे एव श्रावयेद्विदित इति वचनं। ऽतः स्थालीपाक इति विदिते एव व्रतसंशये प्रश्नप्रवृत्त्यर्थं। अन्वारब्धे ब्रह्मचारिणि आचार्यो जुहुयात् अग्नावग्निरित्येवमादिभिरत्रैव पठितैर्मन्त्रैर्व्याहृतिभिश्च। पृथगिति समस्तव्याहृतिनिवृत्त्यर्थं॥

हुत्वाऽऽचैतं स्थालीपाकं सर्वमश्नानेति॥ ५॥

हुत्वेति वचनमेतैर्मन्त्रैर्हुत्वा स्विष्टकृतेऽवदाय तमहुत्वैवाग्नि-

धाय ब्रूयात् संप्रेषितव्यमित्येवमर्थं। एतं स्थालीपाकं सर्वम-शानेति संप्रैषः। ततस्तच्छेषं ब्रह्मचारी सर्वमश्नीयात्॥

भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत् त्वं व्रतानां व्रतपतिरसि व्रतञ्चरिष्यामि तच्छकेयन्तेन शकेयन्तेन राध्यासमिति॥ ६॥

भुक्तवन्तमिति वचनं न केवलमशने संप्रैष एव अशनमपि कर्त्तव्यमेवेत्येवमर्थं। उपस्थापयेदित्युपतिष्ठस्वादित्यमिति ब्रूयादित्यर्थः। ततो ब्रह्मचार्यद्भिः पूर्णाञ्जलिना मन्त्रेणादित्यमुपतिष्ठेत्॥

समाप्य संमील्य वाचं यच्छेत् कालमभिसमीक्षमाणो यदा समयिष्यादाचार्येण॥ ७॥

समाप्यवचनं उपस्थानमन्त्रं समाप्यानन्तरं संमील्य वाचं यच्छेन्न कालविक्षेपं कुर्यादित्येवमर्थं। वाग्यमनं कुर्वन् यस्मिन् काले आचार्येण सह समवायो भवेत् तं कालं मनसा ध्यायन् वाग्यमनं कुर्यात्। अयं स काल इत्याह॥

एकरात्रमध्यायोपवादनात्॥ ८॥

एकरात्रं कालमेवासित्वा तदनन्तरे दिवसे आचार्येण सह समवायं गमिष्यामीति ध्यायेत्। कुतः, अध्यायोपवादनात्।

अध्याय: स्वाध्याय:, महानाम्नी मन्त्र इत्यर्थः। तस्योपवादनात् उपवादनं अन्यमुपेत्य तस्याध्ययनस्य वादनं शिष्यमुपादाय अध्यापनीयमित्यर्थः। एतदुक्तं भवति। य एकरात्राध्ययनेन महानाम्नीः अध्येतुं शक्नोति स एकरात्रं ध्यायन् वाग्यमनं कुर्यादिति॥

त्रिरात्रं वा नित्याध्यायेन॥ ९॥

त्रिरात्रं वैवमासीत यो नित्याध्यायेनाध्येतुं शक्नोति। अध्ययनमध्याय:। नित्यमध्याय:, नित्यं सन्ततमित्यर्थः। एतदुक्तं भवति। यो बहुभिरेवाहोभिरध्येतुं शक्नोति स त्रिरात्रमेवासित्वा चतुर्थेऽहन्याचार्येण समवायं गच्छेदित्यर्थः॥

तमेव कालमभिसमीक्षमाण आचार्योऽहतेन वाससा त्रिः प्रदक्षिणं शिरः स मुखं वेष्टयित्वाऽऽचैतं कालमेवंभूतोऽस्वपन् भवेति॥ १०॥

तमेव कालं प्रतिपद्यमान आचार्य:, य: कालो ब्रह्मचारिणा सङ्कल्पित इत्यर्थः। अहतेनानिवसितेन धौतेन वाससा ब्रह्मचारिण: शिरो मुखेन सहितम्शि: प्रदक्षिणं वेष्टयित्वा यथा न तद्वास: पतेत् तथोपाय कृत्वा ब्रूयादाचार्य:, 'एतं कालमिति सङ्कल्पितप्रदर्शनार्थत्वादेकरात्रं कालं एवंभूतोऽस्वपन् भव' इति, त्रिरात्रं कालमिति वा॥

तद्वालमस्वपन्नासीत ॥ ११ ॥

यः सङ्कल्पितः कालस्तस्मिन् काले सर्वदाऽस्वपन् भवेत् ब्रह्मचारी। ततः स्विष्टकृदादिहोमशेषं समापयेत् ॥

अनुवक्ष्यमाणेऽपराजितायां दिश्यग्निं प्रतिष्ठाप्यासिमुदकमण्डलुमश्मानमित्युत्तरतोऽग्नेः कृत्वा वत्सतरीः प्रत्यगुदगसंश्रवणे बद्ध्वा ॥ १२ ॥

आचार्याय वेदयीतेति शेषः। द्वितीये चतुर्थे वा दिवसे प्राप्ते आचार्योऽनुवक्ष्यति, तस्मिन्ननुवक्ष्यमाणे सति। अपराजितायां दिशि बहिर्ग्रामाच्छुचौ देशे उल्लेखनादि कृत्वाऽग्निं प्रतिष्ठाप्य तस्योत्तरतः अस्यादीन्निधाय तस्यैव प्रत्यगुदक् यो देशः तस्मिन् वत्सतरीं बध्नाति; यथाग्निसमीपे उच्यमानः शब्दो वत्सतर्या न सम्यक् श्रूयते तथा बध्नीयात्। एतावत् कर्म ब्रह्मचारिणः स्वभूतः कश्चित् करोति। एतावति कृते आचार्याय वेदयीत ॥

पश्चादग्नेराचार्यस्तृणेषूपविशेदपराजितां दिशमभिसमीक्षमाणः ॥ १३ ॥

एवं प्रागग्रेषु तृणेषूपविशेत् ॥

ब्रह्मचारी लेपान् परिमृज्य प्रदक्षिणमग्निमाचार्यञ्च कृत्वोपसंगृह्य पश्चादाचार्यस्योपविशेत् तृणेष्वेव प्रत्यग्दक्षिणामभिसमीक्षमाणः ॥ १४ ॥

मुखगताम् लेपान् शरीरगतांश्च शोधयित्वाऽग्निमाचार्यं च प्रदक्षिणं कृत्वाऽऽचार्यं विधिवदुपसंगृह्य पश्चादाचार्यस्योपविशेत् तृणेष्वेव प्रागग्रेषु प्रत्यग्दक्षिणां दिशं अभिसमीक्षमाणः ॥

पृष्ठेन पृष्ठं सन्धाय ब्रूयान्मनसा महानाम्नीर्भो अनुब्रूहीति ॥ १५ ॥

पृष्ठं नाम शरीरस्य बहिःप्रदेशः। ब्रह्मचारी स्वपृष्ठदेशेन आचार्यस्य पृष्ठदेशं सन्निधाय अखिला मनसैतं ब्रूयात्, महानाम्नीर्भो अनुब्रूहीति ॥

पुनः पृष्ट्वाऽनुक्रोशिने संमील्यैवानुब्रूयात् सपुरीषपदास्त्रिः ॥ १६ ॥

अस्मिन्नपि काले व्रतसंश्रयान् पृष्ट्वा पूर्ववच्चेत् ब्रूयात् स्वयमपि संमील्यैवैताः पुनर्नव ऋचः, नव च पुरीषपदानि ताः सर्वाः त्रिरनुब्रूयात् 'विदा मघवन्' इत्याद्या नव ऋचः। 'एवाह्येवेवाहि' इत्यादीनि नव पुरीषपदानि च त्रिर्ब्रूयात् ॥

अनूच्योन्मूच्योष्णीषमादित्यमीक्षयेत्। मित्रस्य त्वा चक्षुषा प्रतीक्षे। मित्रस्य त्वा चक्षुषा समीक्षे॥ १७॥

इतिकाराध्याहारेण सूत्रच्छेदः। सर्वत्र णिच्प्रत्ययप्रयोगे 'आदित्यमुपतिष्ठस्व' 'आदित्यमीक्षस्व' 'पिण्डमशान' इत्येव-मादिसंप्रैषं ब्रूयात्॥

मित्रस्य वश्चक्षुषानुवीक्ष इति दिशः ससंभाराः। पुनरा-दित्यं मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषो हेतुर्ऋच्छत्विति। भूमिमुपस्पृशेदग्न इडा-नम इडा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः शिवा नः शन्तमा भव सुमृडीका सरस्वति। मा ते व्योम संदृशि। भद्रं कर्णेभिः शृणुयाम देवाः शन्न इन्द्रा-ग्नी भवतामवोभिः स्तुषे जनं सुव्रतं न व्यसोभिः कया नश्चित्र आभुवदिति तिस्रः स्योना पृथिवि भवेति। समाप्य समानं सम्भारवर्जं॥ १८॥

यदिदं महानाम्न्यध्ययनं उक्तं तत् समाप्योत्तरयोरपि महाव्रतोपनिषदाख्ययोर्व्रतमनुयुज्य आवणान्तं महानाम्नी-व्रतेन समानरूपं कर्त्तव्यं। अयमेतयोर्विशेषः पूर्वस्मात्, सम्भा-रवर्जमिति। सम्भारो नाम 'श्रोष्यन् बहिर्ग्रामात्' इत्या-

रभ्य 'पुनरादित्यं मित्रस्य त्वा चक्षुषा' इत्येवमन्तं वर्जयित्वे-त्यर्थः। एतदुक्तं भवति। महाव्रतोपनिषदाख्ययोर्व्रतमनुयुज्य श्रावणान्तं संवत्सरादूर्ध्वं उदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वा श्रवणमेव कर्त्तव्यं॥

एष द्वयोः स्वाध्यायधर्मः॥ १९॥

स्वाध्यायधर्म एष एव महाव्रतोपनिषदोर्वेदभागयोरध्य-यनविधिः। यो महानाम्नीनामाऽध्ययनविधिरुक्तः व्रतमनु-युज्य संवत्सरावमच्चारयित्वा उदगयने पूर्वपक्षे ग्रामाद्बहिर्गत्वा-ऽऽचार्यसकाशात् त्रिः श्रुत्वाऽनुप्रवचनीयस्य क्वत्वा ततोऽध्ययनं कर्त्तव्यमिति। एतद्गनयोरप्यध्ययने सम्पादनीयमित्यर्थः॥

आचार्यवदेकः॥ २०॥

अयमपि विशेषो महाव्रतोपनिषदोरध्ययने भवति। यद्येकोऽधीयीत शिष्यः तदा आचार्यवद्भूत्वाऽधीयीत। यथा-चार्योऽपराजितां दिशमभिसमीक्षमाणो ब्रूयात्, एवमेकस्ते-च्छिष्यः तामेव दिशमभिमुखोऽधीयीत। यदि द्वौ बहवो वा तदा नायं नियम आदरणीयः। अत एतत् ज्ञायते, एको द्वौ बहवो वाऽधीयीरन्नित्यध्ययन-एवायं नियमः, श्रावणे त्वेक एव। व्रतादेशनादेरनुप्रवचनीयान्तस्य संस्कारस्य तन्त्र-सिद्धौ प्रमाणाभावात्॥

फाल्गुनाद्याऽऽश्रवणाया अनधीतपूर्वाणामध्यायः ॥ २१ ॥

एषां महानाम्न्यादीनामध्ययनकाल उच्यते। श्रवणमात्रमेव कृत्वा पूर्वमनधीतवन्तो ये तेषामयं कालः। फाल्गुनमासमारभ्य आश्रावण्याः पौर्णमास्या यः कालः स तेषामध्ययनकालः ॥

तैष्याद्यधीतपूर्वाणामधीतपूर्वाणां ॥ २२ ॥  ॥ १४ ॥

येऽधीतपूर्वास्तेऽस्मिन् कालेऽधीयीरन्, श्रावणी पौर्णमासी परावधिः तैषी पौर्णमासी पूर्वावधिर्यस्य कालस्य स काल इति ॥

इत्युत्तरषट्कस्य द्वितीये चतुर्दशी कण्डिका ॥ * ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां अष्टमोऽध्यायः।

॥*॥ उत्तरषट्के द्वितीयोऽध्यायः ॥*॥

॥*॥ ॐ ॥*॥



उक्तप्रकृतयोऽहीनैकाहाः ॥ १ ॥

उक्तो ज्योतिष्टोमः एकाहाहीनसत्राणां प्रकृतिभूतः। उक्तानि पञ्चविंशतिरहानि सात्रिकाणि। एतेभ्य एव सात्रिकेभ्योऽहोभ्योऽहीनैकाहान् व्याख्यायन्त इत्युक्तं। इदानीं तानेकाहाहीनान् वक्तुकामेनाचार्येण उक्तप्रकृतयोऽहीनैकाहा इत्युक्तं। तस्यायमर्थः। उक्ता प्रकृतिर्येषां ते इमे उक्तप्रकृतयोऽहीनैकाहाः। प्रकृतिः प्रकारो न रूपान्तरमित्यनर्थान्तरं। ज्योतिष्टोमो हि सर्वेषामेकाहाहीनसत्राणां प्रकृतिरिति सिद्धं। तदतिदिष्टानि च सात्रिकाणि चतुर्विंशतिरहान्यहीनैकाहानां प्रकृतित्वेन इष्यन्ते। तदेतदुभयमस्मिन् सूत्रे प्रकृतिशब्देन गृह्यते। एतदुक्तं भवति। इत उत्तरं द्वयोरध्याययोरेकाहाहीना वक्ष्यन्ते। ते च ज्योतिष्टोमसरूपाः सात्रिकाहःसरूपाश्चेत्येतावत् सूत्रप्रयोजनं वक्ष्यमाणानां संज्ञाकरणं तेषां चोभयप्रकृतित्वकथनं चेति। अहीनशब्दस्य पूर्वनिपातः पूर्वेण पदेन सन्धौ क्रियमाणे प्रश्लेषत्वाभावाद्द्वरलाघवार्थः॥

सिद्धैरहोभिरह्नामतिदेशः ॥ २ ॥

एकाहाहीना वक्ष्यन्त इत्युक्तं। ते चोभयप्रकृतय इत्युक्तं। तत्रानेन सूत्रेण सात्त्विकप्रकृतीनां लक्षणमुच्यते। एकाहाहीनेषु येषामह्नां प्राक्सिद्धैरहोभिरतिदेशोऽस्ति तानि सात्त्विकाहःप्रकृतीनि। अहोभिरह्नामतिदेश इत्येतावत्युक्तेऽपि प्राक्सिद्धैरेव सात्त्विकैरतिदेश इति गम्यत एव, किमर्थं सिद्धैरित्युच्यते। तस्येदं प्रयोजनं। यत्र वक्ष्यमाणं कर्म प्राक्सिद्धाहस्तन्नामनामितया वक्ष्यन्तेऽनेनेदमित्यतिदेशवचनं नास्ति तत्रापि तन्नामनामितयैव तत्प्रकृतिलक्षापनार्थं। तेनैवं सूत्रार्थः। अत्र वक्ष्यमाणानामह्नां विधानावस्थायामेव प्राक्सिद्धैरहोभिर्ग्रहणं क्रियते तन्नामनामितया सिध्युत्तरकालं वा, यत्रातिदेशवचनं अस्यनेन इदमिति तत्रोभयत्रापि तान्येव प्रकृतिरिति सूत्रार्थः। अह्नामिति वचनं सुत्यानामेवायमतिदेशो न दीक्षोपसदामित्येवमर्थः। तेनैषु दीक्षोपसदः स्वकीया एव नियमेन भवन्तीति सिद्धं ॥

अनतिदेशे त्वेकाहो ज्योतिष्टोमो द्वादशशतदक्षिणास्तेन शस्यमेकाहानां ॥ ३ ॥

तत्रैकाहो ज्योतिष्टोमो द्वादशशतदक्षिण इत्येतावता प्रागुक्तस्य चतुःसंस्थस्य सोमयागस्यानुवादं कुर्वन्नप्राप्तानां न

अहःसंबन्धं दक्षिणाविशेषसम्बन्धं च विदधाति सूत्रस्योत्तरेण भागेन, एकाहानां मध्ये ये सात्रिकैरहोभिर्नातिदिश्यन्ते तेष्वेकाहेष्वेव विशिष्टे च ज्योतिष्टोमे नातिदेशो विधीयते। अनतिदेश इतिवचनं एकाहेषु यावन्तोऽतिदेशविषयास्तेष्वहःस्वेवास्य विधेः प्राप्तिप्रदर्शनार्थं। तेनानिरुक्तादिष्वपि ज्योतिष्टोमप्राप्तेरपवाद एव चतुर्विंशादीनां अवयवातिदेश इति सिद्धं। तुशब्दो विशेषविध्यर्थः। एकाहेष्वयं विशेषो भवति, ज्योतिष्टोमप्राप्त्यपवादः सात्रिकातिदेश इति। शस्यग्रहणं वचनान्तरानपोदितधर्मप्रदर्शनार्थं। तेन दीक्षोपसद ऐकाहिका एव भवन्ति, न ज्यौतिष्टोमिका इति सिद्धं॥

गोआयुषी विपरीते द्व्यहानां॥ ४॥

अनतिदेश इति वर्त्तते। येषां द्व्यहानां अतिदेशो नास्ति तेषां गोआयुषी विपरीते व्यत्यस्ते प्रकृतेर्वेदितव्ये। अनतिदेशवचनं अहीनद्व्यहनिवृत्त्यर्थं। तत्राङ्गां मह्नाः मह्नाताः, 'षडहान्ता अभिप्लवात्' इत्यतिदेशवचनमस्ति। तेन एकाहद्व्यहा वरुणप्रघासस्थाने द्व्यहः द्वयोर्मासयोर्व्युष्टिद्व्यह इत्युदाहरणं। बहुवचनमसंमाम्नातद्व्यहप्रदर्शनार्थं॥

त्र्यहाणां पृष्ठ्यत्र्यहः पूर्वः। अभिप्लवत्र्यहो वा॥ ५॥

पूर्व इति शेषः। अत्राप्यनतिदेश इति वर्तते। अनतिदेशवचनस्य बहुवचनस्य च पूर्ववदेव प्रयोजनं॥

एवम्प्रायाश्च दक्षिणा अर्वागतिरात्रेभ्यः ॥ ६ ॥

एवम्प्राया इति द्वादशशतप्राया इति गम्यते, प्रकृतत्वात्। अस्मिन्नेव प्रकरणे अतिरात्रवचनेन ज्योतिरादयोऽतिरात्रा गृह्यन्ते, बहुवचननिर्देशात्। तेनायमर्थः। ज्योतिरादिभ्यो-ऽतिरात्रेभ्यः अर्वाक् ये एकाहाः अहरन्तरेणातिदिष्टा अनतिदिष्टाश्च ते सर्वे द्वादशशतदक्षिणा वेदितव्याः। प्रायवचनं 'अन्वहं पञ्चाशच्छो दक्षिणा सोमचमसो दक्षिणा' इत्येवमाद्याभिर्विशेषविहिताभिरसमुच्चयार्थं ॥

साहस्रास्त्वतिरात्राः ॥ ७ ॥

तुशब्दोऽर्वागपि ज्योतिरादिभ्यो योऽतिरात्रस्तस्यापि सहस्रदक्षिणात्वप्रापणार्थं ॥

द्व्यहास्त्र्यहाश्च ॥ ८ ॥

अर्वागतिरात्रेभ्य इत्यनेनानतिदेश इत्यस्य निवृत्तत्वादस्मिन् सूत्रेऽहीनैकाहद्व्यहास्त्र्यहाश्च सहस्रदक्षिणा वेदितव्याः। अत एवोत्तरे सूत्रेऽहीनग्रहणं कृतं ॥

ये भूयांसस्त्र्यहादहीनाः सहस्रं तेषां त्र्यहे प्रसंख्यायान्वहन्ततः सहस्राणि ॥ ९ ॥

त्र्यहात् भूयांसो येऽहीनाश्चतुरहादयः तेषु दक्षिणा-

परिमाणज्ञानमनेनोपायेन क्रियते। आदितस्त्र्यहे सहस्रमिति कृत्वा ततः परतो यावन्त्यहानि तेषु प्रत्यहं सहस्रमिति कृत्वा चतुरहे सहस्रद्वयं पञ्चाहे सहस्रत्रयं षडहे सहस्रचतुष्टयमित्येवं सहस्रचतुष्टयं परिमाणक्लृप्तिः॥

समावत्त्वेव दक्षिणा नयेयुः॥ १०॥

समावदिति सममित्यर्थः। दक्षिणापरिमाणज्ञानोपाय उक्तः। तासां नयनेऽयं विशेषः। यस्मिन्नहीने यावत्यो दक्षिणा प्राप्ताः ताः समं विभज्य एकैकं भागमहन्यहनि दद्यात्॥

अतिरिक्तास्तूत्तमेऽधिकाः॥ ११॥

एवं समविभागे क्रियमाणे या अतिरिच्यन्ते ता उत्तमेऽहनि दातव्याः। अधिका इति वचनात् स्वभागलब्धाभिः सह दातव्या इति गम्यते॥

अतिदिष्टानां स्तोमपृष्ठसंस्थान्यत्वादनन्यभावः॥ १२॥

यान्यहानि स्तोमपृष्ठसंस्थाभिः सह सम्बद्धान्येवोत्पत्तिभूमावुत्पन्नानि तानि यदि कदाचिदतिदिष्टानि, तेषु चातिदिष्टेषु छन्दोगवशादध्वर्युवशाद्वा स्तोमादीनामन्यत्वं यदि स्यात् तथाप्यस्माकं तान्येवाहानीति कृत्वा शस्त्रकल्पनं भवतीत्यर्थः। वेदादेवोत्पत्तिभूमावुत्पन्नानीत्यर्थः॥

नित्या नैमित्तिका विकाराः ॥ १३ ॥

स्तोमादीनामन्यत्वेऽपि ऋक्षामन्यत्वं नास्तीत्युक्तं। तथापि स्तोमादिर्निमित्ता ये नैमित्तिका विकाराः ते नित्याः तेष्वप्यहःसु कर्त्तव्या इत्यर्थः ॥

माध्यन्दिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्त्रं ॥ १४ ॥

माध्यन्दिने तु सवने होतुरयं विशेषो भवति, निष्केवल्ये स्तोमकारितमेव शस्त्रं भवति, निष्केवल्यमरुत्वतीययोः तत्र पूर्वोक्तं यावत्यो यावत्यः कुशानां नवतो दशतो वा इति। अनेन न्यायेन सूक्तावापः सूक्तोद्धारो वा कर्त्तव्य इत्यर्थः। निष्केवल्यमरुत्वतीययोर्मध्यन्दिनशब्देनैव ग्रहणे सिद्धेऽपि सवनवाचिनो माध्यन्दिनशब्दस्य ग्रहणं सोमातिरेकनिमित्तेऽपि शस्त्रे निष्केवल्यस्तोमकारितशस्त्रस्य प्रापणार्थं। तत्र तु ऋग्भिरेव निष्केवल्यस्य स्तोमकारितशंसनं स्वस्तोमातिशंसनञ्च कर्त्तव्यं न सूक्तेन। यदि स्वस्तोमाधिको निष्केवल्यस्तोमस्तदा तस्मादप्यतिशंसनञ्च कर्त्तव्यं, यदा हीनं तदास्मादतिशंसनमिति निष्केवल्ये स्तोमकारितमिति पाठः कर्त्तव्यो न निष्केवल्यस्तोमकारितमिति ॥

तत्रोपजनस्तार्क्ष्यवर्जमग्रे सूक्तानां ॥ १५ ॥

निष्केवल्यमरुत्वतीययोः निष्केवल्ये स्तोमकारितं शस्त्रमि-

त्युक्तं। तत्र स्तोमविवृद्धावुपजनस्थानमुच्यते। निविद्धानीयानां सूक्तानां पुरस्तादेवावापो भवतीत्यर्थः। तेषामपि निविद्धानीयत्वं भवति। निष्केवल्ये तु तार्क्ष्यं वर्जयित्वा निविद्धानीयानामेव सूक्तानां पुरस्ताद्भवति। सूक्तानां पुरस्ताद्विधाने क्रियमाणे तार्क्ष्यवर्जमितिवचनात् तार्क्ष्यस्य पादग्रहणेऽपि सूक्तत्वं गम्यत एव। सूक्तानामिति बहुवचनमविवचितं। यस्मिन्नहनि यत् सूक्तमवगतं तस्मात् पुरस्तादित्यर्थः॥

हानौ तत एवोद्धारः॥ १६॥

स्तोमहानावपि निष्केवल्यमरुत्वतीययोरनेकसूक्तत्वे यावत्यो यावत्य इत्यनेन न्यायेन सूक्तानां पूर्वं पूर्वमुद्धरेत्। असत्यपि हानावितिवचनेऽस्यार्थस्य सिद्धौ सत्यां हानावितिवचनं निष्केवल्यमरुत्वतीयाभ्यामन्यत्रापि स्तोमहानौ सत्यामवगतस्यैव सूक्तस्य पुरस्तादुद्धारो भवतीत्येवमर्थं॥

येऽर्वाक् त्रिवृतः स्तोमाः स्युस्तृचा एव तत्र सूक्तस्थानेषु ॥ १७॥

ये त्रिवृतोऽर्वागेकस्तोमादयोऽष्टपर्यन्तास्तेषु क्रियमाणेषु सर्वेषु सवनेषु होतुर्होत्रकाणां च सूक्तस्थानेषु सर्वेषु तृचा एव कर्त्तव्याः। तृचा एवेत्यवधारणमस्य विधेः सर्वार्थत्वाय॥

यथा नित्या निविदोऽभ्युदियात् ॥ १८ ॥ ॥ १ ॥

'स्थाने तत एवोद्धारः' इत्यनेन सूत्रेण सूक्तानां पुरस्तादुद्धारो विहितः। तृचा एव सूक्तस्थानेष्वित्यप्युक्तं। तेनान्यासृचा गृह्यन्त इत्येवं प्राप्तं। एवं वचनसामर्थ्यादन्ये तृचे गृह्यमाणे यथा नित्या निविदो भवेयुः तथा तमेवान्यं तृचमभ्युदियात् अभ्युपगमयेदित्यर्थः। नित्यशब्देनात्र स्वरूपनित्यत्वं स्थाननित्यत्वं चोच्यते। स्थानं चात्र 'एकां तृचेऽर्धां युग्मासु' इत्यादि गृह्यते। एतदुक्तं भवति। हीनस्तोमेषु सूक्तस्थान्यात् तृचात् पूर्वास्वृक्षु भ्रियमाणासु तत्स्थानान्निविदमादायान्ये तृचे सवनानुसारेण एकां तृचेऽर्द्धां युग्मास्वित्यनेन विधिना तां निविदं दध्यादितिवचनमन्तरेण निविदां पूर्वोक्तस्थानत्वे सिद्धे यन्नित्यशब्देन पूर्वोक्तस्थानत्वं विदधाति तज्ज्ञापयति। वचनादृते स्वस्थानं निविदो न जहातीति। तेन सूक्तमुखीयादयस्तृचा वृद्धिहेतवोऽपि निविदो न चालयन्ति स्वस्मात् स्थानादिति सिद्धं॥

इत्युत्तरषट्कस्य तृतीये प्रथमा कण्डिका ॥ ॥

उक्तानि चातुर्मास्यानि ॥ १ ॥

उक्तानुसङ्कीर्त्तनं वक्ष्यमाणेषु सोमेषु उपक्रमकालप्रभृतिचातुर्मास्यशरीरस्य सर्वस्य पर्वसम्बद्धस्याऽपर्वसम्बद्धस्य च प्रापणार्थं संज्ञार्थञ्च ॥

सोमान् वक्ष्यामः पर्वणां स्थाने ॥ २ ॥

संज्ञाप्रभृतिचातुर्मास्यशरीरे सर्वस्मिन् प्राप्ते विशेष उच्यते, पर्वणां स्थाने सोमाः कर्त्तव्याः ॥

अयूपकानेके ॥ ३ ॥

ये पर्वस्थाने विहिताः सोमास्तानयूपकान् यूपरहितानेके शाखिन इच्छन्ति। *अपर्वसम्बद्धो यूपकवानेव सोमः कर्त्तव्यः, यथाग्निष्टोम ऐन्द्राग्नस्थान इति ॥

परिधौ पशुं नियुञ्जन्ति ॥ ४ ॥

अयूपकेषु सोमेषु परिधौ पशुनियोगः कर्त्तव्यः। तत्र दक्षिणे परिधावुत्तरे वा कर्त्तव्यो न मध्यमे, उपचारविरोधात्। तत्र यूपधर्मा न कर्त्तव्याः। एवं ह्यत्र वचनं परिधौ पशुं नियुञ्जन्तीति, नैवं परिधिर्यूपो भवतीति। तेन परिहित एव

---

* अपर्वसम्बद्धोऽयूपकानेवेति सर्वत्र पाठो वर्त्तते।

परिधौ पशुनियोगः कर्त्तव्यः । पशोरनपगमोपायस्तु कर्त्तव्य एव ॥

वैश्वदेव्यास्थाने प्रथमं पृष्ठ्याहः । जनिष्ठा उग्र उग्रो जज्ञ इति मध्यन्दिनः । ऐकाह्निका होत्राः सर्वत्र प्रथमसांपातिकेष्वहःस्वेकाहोभवत्सु ॥ ५ ॥

एतानि षाडहिकानि प्रथमसाम्पातिकानि, 'पृष्ठ्याभिप्लवयोः प्रथमे चतुर्थे च स्वरसामसु च प्रथमां छन्दोमेषु प्रथमं' इति । एतानि षाडहिकान्येकाहेषु यत्र यत्रातिदिश्यन्ते तत्र सर्वत्र माध्यन्दिने सवने होत्रका ऐकाहिकशस्त्रा भवन्ति, ज्योतिष्टोमिकशस्त्रा इत्यर्थः । अस्य प्रयोजनं मैत्रावरुणाच्छावाकयोः 'सद्यो ह जातः' इत्यस्य 'भूय इत्' इत्यस्य चानुद्धारः । इतरथा 'एवा त्वामिमामूषु' इत्यनयोः सम्पातयोः सम्पातत्वेनान्यैकाहिकत्वेन च प्राप्तौ तद्देवतमन्यं पूर्वस्य स्थान इत्यनेन न्यायेनैकाहिकयोः पूर्वयोरुद्धार एव स्यात्, अतस्तन्निवृत्त्यर्थमैकाहिकवचनं । माध्यन्दिनाधिकारात् माध्यन्दिन एव सवनेऽयं विधिर्भवति नेतरयोः सवनयोरिति सिद्धं ॥

वैश्वानरपार्जन्ये हविषो अग्नीषोमीयस्य पशोः पशुपुरोडाशेऽन्वायातयेयुः । प्रातःसवनिकेषु पुरोडाशेषु वैश्वदेव्या हवींष्यन्वायातयेयुः । वैश्वदेवः पशुः ॥ ६ ॥

अस्मिन्नहनि सवनीयः पशुः वैश्वदेवो भवति ॥

**बार्हस्पत्याऽनूबन्ध्या ॥ ७ ॥**

अनूबन्ध्यश्च पशुः बृहस्पतिदेवत्यो भवति ॥

**वरुणप्रघासस्थाने शुद्धः ॥ ८ ॥**

शुद्धचोदनासु गोआयुषी विपरीते इत्युक्तं ॥

**उत्तरस्याङ्गः प्रातःसवनिकेषु पुरोडाशेषु वरुणप्रघासहवींष्यन्वायातयेयुः ॥ ९ ॥**

तयोर्यदुत्तरमहस्तस्येत्यर्थः ॥

**मारुतवारुणौ पशू ॥ १० ॥**

तयोरह्नोर्यथासङ्ख्येन इमौ पशू सवनीयौ भवतः ॥

**मैत्रावरुण्यनूबन्ध्या ॥ ११ ॥**

शुद्धानां प्रातरनुवाकात् पूर्वस्य तन्त्रकाण्डस्य पत्नीसंयाजेभ्य उत्तरस्य तन्त्रेणानुष्ठानसिद्धेरेकैव मित्रावरुणदेवत्याऽनूबन्ध्या भवति ॥

**अग्निष्टोम ऐन्द्राग्नस्थाने ॥ १२ ॥**

योऽयं चातुर्मास्याङ्गभूतः ऐन्द्राग्नः पशुर्द्वयोर्मासयोरैन्द्राग्नः पशुः इति तस्य स्थानेऽग्निष्टोमः कर्त्तव्यः, न निरूढः

स्थाने, तस्यात्र प्रसङ्गाभावात्। सर्वास्वग्निष्टोमचोदनासु प्रकृतिभूतोऽग्निष्टोमसंस्थो ज्योतिष्टोमो गृह्यते। अत्र विशेषवचनात् सवनीयानूबन्ध्यावपि प्राकृतावेव॥

साकमेधस्थाने त्र्यहोऽतिरात्रान्तः॥ १३॥

अहचोदनासु पृष्ठ्यत्र्यहः पूर्वोऽभिप्लवत्र्यहो वेत्युक्तं। स त्र्यहोऽतिरात्रान्तः साकमेधस्थाने भवति। यस्य त्र्यहस्यान्त्यमहरतिरात्रं भवति स त्र्यहोऽतिरात्रान्तः। उत्तममहरतिरात्रसंस्थं भवति। इतरे तु यथाप्राप्तसंस्थे इत्यर्थः॥

द्वितीयस्याह्नोऽनुसवनं पुरोडाशेषु पूर्वेद्युर्हवींषि॥ १४॥

अस्य त्र्यहस्य यः द्वितीयमहः तस्मिन्ननुसवनं पुरोडाशाः, तेषु साकमेधानां यानि पूर्वेद्युरनुसवनं विहितानि हवींषि तानि यथासङ्ख्यमन्वायातयेयुः॥

तृतीयेऽहन्युपांश्वन्तर्यामौ कृत्वा पौर्णदर्वं। प्रातःसवनिकेषु क्रैडिनं॥ १५॥

अन्वायातयेयुरिति शेषः॥

माध्यन्दिनेषु माहेन्द्राणि॥ १६॥

अन्वायातयेयुः॥

4 L 2

अन्तरेण घृतयाज्ये दक्षिणे मार्जालीये पित्र्या ॥ १७ ॥

अन्वायातयेयुरित्यनुवर्त्तत एव। अन्तरेण घृतयाज्ये इति तयोर्मध्य इत्यर्थः ॥

तत्रोपस्थानं यथाऽनतिप्रणीतचरता ॥ १८ ॥

अस्यामपि पित्र्यायामनावृत्याऽनतिप्रणीतचर्यायामिति वाऽनावृत्योपस्थानं भवतीत्यर्थः ॥

अनूबन्ध्यायाः पशुपुराडाश आदित्यमन्वायातयेयुः ॥ ॥ १९ ॥

अन्वायातयेयुरिति पुनर्वचनं सर्वत्रानुवृत्तिप्रदर्शनार्थं, न पूर्वेष्वनुवृत्तिनिवृत्त्यर्थं। परिसङ्ख्यातोऽनुवाद आश्रयितुं युक्त इति ॥

आग्नेय्यैन्द्राग्नैकादशिनाः पशवः ॥ २० ॥

आग्नेयस्य ऐन्द्राग्नस्य एकादशिनास्य यथासङ्ख्येनान्वहं सवनीयाः पशवो भवन्ति ॥

सौर्याऽनूबन्ध्या ॥ २१ ॥

तस्यानुष्ठेयाङ्गावभरङ्गतत्वादेकैवानूबन्ध्या ॥

अग्निष्टोमः शुनासीरीयायाः स्थाने। प्रातःसवनिकेषु पुरोडाशेषु शुनासीरीयाया हवींष्यन्वायातयेयुः ॥ २२ ॥

अन्वायातयेयुरितीदमपि प्रदर्शनार्थमेव ॥

वायव्यः पशुः ॥ २३ ॥

प्राकृतस्य सवनीयस्थाने प्राप्तस्य देवतान्तरं विधीयते ॥

आश्विन्यनूबन्ध्या ॥ २४ ॥

इदमपि पूर्ववदेव देवतान्तरविधानं ॥

अन्वहं पञ्चाशच्छो दक्षिणाः ॥ २५ ॥　　॥ २ ॥

यान्येतान्यष्टौ सुत्याहानि अनुक्रान्तानि तेषामेकैकस्मिन्नहनि पञ्चाशत् पञ्चाशद्गावो दक्षिणा दातव्याः ॥

इत्युत्तरषट्कस्य तृतीये द्वितीया कण्डिका ॥ * ॥

## अथ राजसूयाः ॥ १ ॥

अथेत्यधिकारार्थः । उत्तरत्रये वक्ष्यन्ते सोमाः पशव इष्टयः, ते सर्वे राजसूयसंज्ञा भवन्ति । न केवलं सोमा एवेत्यधिकारप्रयोजनं पूर्वत्र तु सोमा एव चातुर्मास्यसंज्ञा भवन्तीति तदयनेनैव सिद्धं ॥

## पुरस्तात् फाल्गुन्याः पौर्णमास्याः पवित्रेणाग्निष्टोमेनाभ्यारोहणीयेन यजेत ॥ २ ॥

या फाल्गुनी पौर्णमासी तस्याः पुरस्तात् पवित्रसंज्ञकेनाग्निष्टोमप्रकृतिकेनाभ्यारोहणप्रयोजनेन यष्टव्यं । अस्य चारोहणप्रयोजनत्वाद्राजसूयानां तदेकदेशभूतानां चातुर्मास्यानामारम्भार्थाय वैश्वानरपार्जन्याया अत्र निवृत्तिः । पुरस्तादितिवचनात् तस्मिञ्छुक्लपक्षेऽपर्वण्येव सुत्यमहर्भवति । तदानुगुण्येन तस्मिन्नेव शुक्लपक्षे दीक्षोपसदश्च कर्त्तव्याः ॥

## पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते ॥ ३ ॥

फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते आरभते, वैश्वदेवं पर्वणि कर्त्तव्यमित्यर्थः । पवित्रेणैवाभ्यारोहणस्य कृतत्वादत्र वैश्वानरपार्जन्या न भवति ॥

## नित्यानि पर्वाणि ॥ ४ ॥

यानि वैश्वदेवादीनि कर्माणि तानि नित्यानि न सोम-चातुर्मास्येष्विव परतन्त्राणीत्येवमर्थं नित्यग्रहणं ॥

## चक्राभ्यां तु पर्वान्तरेषु चरन्ति ॥ ५ ॥

चक्रशब्देन दर्शपूर्णमासावुच्येते। सौर्याचान्द्रमसाविति केचित्। पर्वान्तरेष्विति पर्वाणामन्तराले यान्यहानि तेषु चक्राभ्यां यागः कर्त्तव्य इत्यर्थः ॥

## अहर्विपर्ययं पक्षविपर्ययं वा ॥ ६ ॥

पर्वान्तरेषु चक्राभ्यां यागे कर्त्तव्येऽहर्विपर्ययं पक्षविपर्ययं वा कृत्वा चरेयुः। अहर्विपर्ययो नाम एवं भवति, एकस्मिन्नहनि पौर्णमास्याः अपरस्मिन्नहनि अमावास्यायाः पुनरपि पौर्णमास्या पुनरप्यमावास्ययेति। पक्षविपर्ययो नाम कृष्णे पक्षे पौर्णमास्या शुक्ले पक्षेऽमावास्ययेत्येवं। पुनरप्येवं ॥

## संवत्सरान्ते समानपक्षेऽभिषेचनीयदशपेयौ ॥ ७ ॥

संवत्सरान्त इति संवत्सरस्य परस्तादित्येवमर्थः। एवं चातुर्मास्यैः संवत्सरे परिसमाप्यमाणे फाल्गुन्यां शुनासीरीयायागेन संवत्सरः परिसमाप्तो भवति। तत उत्तरमेव कृष्ण-

पक्षमतीत्यानन्तरे शुक्लपक्षेऽभिषेचनीयदशपेयौ कर्त्तव्यौ। पञ्चदश्यां प्रतिपदि वा दीक्षा। चतुर्थ्यां पञ्चम्यां वा सुत्य-महरभिषेचनीयस्य। ततः संसृपेष्टयः सप्ताहानि। तत एका-दश्यां दशपेयस्य दीक्षा। पौर्णमास्यां सुत्यमहः। एवं तौ समा-नपक्षे कृतौ भवतः। अध्वर्युवशाद्वा सहदीक्षणीयान्तयोः कृत्वा सोमक्रयाद्येव पृथक् भवति॥

उक्थ्यो बृहत्पृष्ठ उभयसामाभिषेचनीयः॥ ८॥

सोऽयमभिषेचनीय उकथ्यसंस्थो भवति, बृहत्पृष्ठश्च। उभयश्च निष्केवल्यस्तोत्रे बृहद्भवति। तस्य योनिर्निष्केव-ल्यस्य स्तोत्रियो भवति। पवमाने रथन्तरं भवति। तस्य योनिर्योनिस्थाने शंस्तव्येत्यर्थः॥

संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशि-पावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शानःशेप-माचक्षीत॥ ९॥

समाप्ते मरुत्वतीयेऽनारब्धे निष्केवल्यस्तोत्रे दक्षिणत आ-हवनीयस्यासीनं राजानं अभिषिञ्चन्ति अध्वर्यवः। तस्मै अभिषिक्ताय राज्ञे पुत्रामात्यपरिवृताय पुत्रपौत्रादिभि-र्बन्धुभिः परिवृताय अमात्यैः परिवृताय सुहृद्भिः परिवृ-ताय। अमात्यशब्देनात्र राजकार्यनिर्वोढारो मन्त्र्यादय

उच्यन्ते। तैश्च परिवृतायेत्यर्थः। हिरण्मयः कशिपुः हिरण्यकशिपुः, तस्मिन्नासीनो होता शौनःशेपमाख्यानमाचक्षीत ब्रूयादित्यर्थः। तदाख्यानं ब्राह्मणे त्रयस्त्रिंशोऽध्यायः 'हरिश्चन्द्रो ह वैधसः' इत्यादिः, तं सर्वमाचक्षीतेत्यर्थः॥

हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति यशो वै हिरण्यं यशसैवैनं तत् समर्धयति॥ १०॥

होतुरासनविधानमुत्तरार्थं। अध्वर्योरासनं अस्माभिर विधेयं। अत उभयोः सङ्कीर्तनं स्तुत्यर्थमेव। यस्माद्यशो हिरण्यं तस्मादेनं राजानं यशसा समर्धयति होता अध्वर्युश्च। हिरण्मयासनं हिरण्यसम्बन्धादित्यर्थः॥

ॐमित्यृचः प्रतिगर एवं तथेति गाथायाः॥ ११॥

एवमिति नायं प्रतिगरः प्रतिगरावयवो वा, तस्मादेवमर्थः। यथा ॐशब्दः ऋक्षु प्रतिगरो भवति एवमेव तथाशब्दो गाथासु प्रतिगरो भवतीति। अस्मिन्नाख्याने 'कस्य नूनं' इत्येवमाद्या ऋचः। 'यं न्विमं पुत्रमिच्छन्ति' इत्यवमाद्या गाथाः। सर्वत्र ब्राह्मणगाः श्लोकाः गाथा इत्युच्यते। ऋचां गाथानां च प्रतिगरविधानात् ब्राह्मणवाक्येषु प्रतिगरो नास्तीति 'हरिश्चन्द्रो ह वैधसः' इत्यारभ्य 'स ह नारदं पप्रच्छ' इत्येवमन्तमुक्त्वाऽवसाय। 'यं न्विमं' इत्यारभ्य 'नारदः' इत्येवमन्तमुक्त्वा-

ऽत्रमिति तथत्यध्वर्युः प्रतिगृणाति । सर्वत्र च गाथान्ते ऋगन्ते च प्रतिगरो भवति नान्यत्र । ततः 'स एकया पृष्टो दशभिः प्रत्युवाच' इत्यन्तं ब्राह्मणवाक्यमुक्त्वाऽवसाय दश गाथा ब्रूयात् । दशसूक्तस्य प्रतिगृणाति । एवं सर्वत्राचष्टे प्रतिगृणाति च ॥

ॐमिति वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति ॥ १२ ॥

ओमिति वै दैवमिति दैवशब्देन वैदिकत्वमुच्यते । ॐमिति वैदिकमिदमनुज्ञावचनमित्यर्थः । तथेति मानुषं । मानुषमिति लौकिकमिदमनुज्ञावचनमित्यर्थः । ताभ्यां वैदिकलौकिकाभ्यां ॐतथाशब्दाभ्यां प्रतिगरभूताभ्यां एनं राजानं पापादेनसः प्रमुञ्चति । पापशब्देनात्र महत् पापमुच्यते, एनःशब्देनाल्पं । महतश्च पापादल्पाच्च पापात् प्रमुञ्चतीत्यर्थः ॥

तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पञ्च नैनः परिशिष्यते ॥ ॥ १३ ॥

यस्मादेतदाख्यानं ॐतथेतिशब्दप्रतिगरयुक्तं महतोऽल्पाच्च पापात् प्रमुञ्चति तस्मादयजमानोऽपि राजा यः परबलं युद्धेन विजितवान् स चैतच्छौनःशेपमाख्यानमाख्यापयेतैव । य एवमाख्यापयते राजा, तस्मिन् राजनि महदल्पमपि एनो न परिशिष्यते च, न राज्ञोऽप्यर्थे वर्त्तते ॥

सहस्रमाख्याने दद्यात् ॥ १४ ॥

होत्र इत्यर्थः ॥

शतं प्रतिगरित्रे ॥ १५ ॥

अध्वर्यव इत्यर्थः ॥

यथास्वमासने ॥ १६ ॥

यद्यस्य स्वं यथास्वं तत् तस्य यथास्वमासने च दद्यात्। यद्यस्य स्वं तत् तस्मा इत्यर्थः। अस्मिन् प्रकरणे ब्राह्मणानुवादात् न्यूनाधिकचोद्यं नास्ति ॥

संसृपेष्टिभिश्चरित्वा दशपेयेन यजेत ॥ १७ ॥

संसृपेष्टयो नाम सप्तेष्टयः आग्नेयादयः, ताभिः सप्ताहं चरित्वा दशपेयेन यजेत। दशपेयो नाम यज्ञक्रतुः ॥

तत्र दशदशैकैकं चमसं भक्षयेयुः ॥ १८ ॥

तत्र दशपेये एकैकं चमसं दश पुरुषा भक्षयन्ति ॥

नित्यान् प्रसंख्यायेतराननुप्रसर्पयेयुः ॥ १९ ॥

प्रकृतौ यं चमसं ये भक्षयन्ति वषट्कारेण होमाभिषवाभ्यां समाख्यया वाऽन्येन कारणेन ते नित्या इत्युच्यन्ते। तान्

प्रसङ्ख्यायास्मिन्निति इतरान् पुरुषान् प्रति चमस-मनुप्रसर्पयेयुः। ये पुरुषा अनुप्रसर्पन्ति त एवंलक्षणा इत्यु-च्यन्ते॥

ये मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः॥ २०॥

येषां मातृतः पितृतश्चोभयतो ये दशपूर्वाः पुरुषाः ते विद्यया तपसा पुण्यैः प्रतिषिद्धवर्जितैश्च युक्ताः सम्यगनुष्ठित-वन्तो वैदिकं पन्थानं, अपि च अब्राह्मण्यं न निनयेयुः निश्चयेनाब्राह्मण्यं न गमयेयुः। अब्राह्मण्यगमनं नाम शूद्रा-यामपत्योत्पादनमित्युच्यते। विद्या नाम षडङ्गो वेदः, तदर्थ-ज्ञानञ्च। तपो नाम श्रौतस्मार्त्तकर्मानुष्ठानं। पुण्यकर्म नाम प्रतिषिद्धवर्जनं। तानेवंविधान् पुरुषाननुप्रसर्पयेयुः। एत-दुक्तं भवति। मातृतः पितृतश्चोभयतः पूर्वं दश ये पुरुषाः ते षडङ्गवेदाध्ययनेन तदर्थज्ञानेन च श्रौतस्मार्त्तकर्मा-नुष्ठानेन च प्रतिषिद्धवर्जितेन च युक्ताः शूद्रायामपत्यो-त्पादनं चाकृतवन्तो येषां पुरुषाणां तानेवंविधान् पुरुषाननु प्रसर्पयेयुः। दशपुरुषमिति दश पुरुषा इत्यर्थः। तच्च पूर्वपुरुष-विशेषणं। तेषामेवोद्देशकं ये इत्येतत् पदं। येषामित्येतत् प्रस-र्पणे जिघृक्षितानां पुरुषाणां विशेषणं। उभयतो मातृतः पि-तृतश्चेत्यर्थः॥

पितृत इत्येके ॥ २१ ॥

एके आचार्याः पितृत एव एतल्लक्षणमिच्छन्ति, न मातृतोऽपीति ॥

नवग्वासः सुतसोमास इन्द्रं सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानयोराद्ये ॥ २२ ॥

दशपेयस्य निष्केवल्यमरुत्वतीययोर्निविद्धानीययोराद्ये अधिके एते ऋचौ भवतः ॥

सूक्तमुखीये इत्युक्त एते प्रतीयात् ॥ २३ ॥

इते इति एतत्स्थाने उक्ते इत्यर्थः ॥

उत्तर आपूर्यमाणपक्षे केशवपनीयो बृहत्पृष्ठोऽतिरात्रः ॥
॥ २४ ॥

दशपेये कृते य उत्तरः शुक्लपक्ष आगच्छति वैशाखः तस्मिन् केशवपनीयो नाम एकाहः कर्त्तव्यः। स च बृहत्पृष्ठोऽतिरात्रसंस्थश्च भवति ॥

द्वयोर्मासयोर्व्युष्टिद्व्यहः ॥ २५ ॥

केशवपनीयादूर्ध्वं द्वयोर्मासयोर्यः शुक्लपक्षः आषाढः तत्र

व्युष्टिद्व्यहो नाम द्व्यहः कर्त्तव्यः। तस्य द्व्यहस्य गोआयुषी विपरीते इत्यतिदेश उक्तः। तत्रैवं विशेषो वक्ष्यते॥

अग्निष्टोमः पूर्वमहः। सर्वस्तोमोऽतिरात्र उत्तरं॥ २६॥

तस्य द्व्यहस्य यत् पूर्वमहः तदग्निष्टोमसंस्थं भवति। तस्यैव यदुत्तरमहः तत् सर्वस्तोमोऽतिरात्रसंस्थं भवति। सर्वस्तोमत्वात् षडहस्तोत्रियावापाहीनसूक्तानीत्येवमादयो धर्मा भवन्ति॥

उत्तर आपूर्यमाणपक्षे क्षत्रस्य धृतिरग्निष्टोमः॥ २७॥ ॥ ३॥

व्युष्टिद्व्यहादूर्ध्वं यः शुक्लपक्षः श्रावणस्तस्मिन् क्षत्रस्य धृतिर्नाम एकाहः स चाग्निष्टोमप्रकृतिर्भवति। संस्था च सैव भवति॥

इत्युत्तरषट्कस्य तृतीये तृतीया कण्डिका॥ ०॥

---

इति राजसूयाः॥ १॥

इतिशब्दः प्रकारवाची। एवम्प्रकाराः सर्वे राजसूयाः बहवश्चाध्वर्युविहिता राजसूयाः सन्ति, अस्मच्छास्त्रविहिताश्चैकाहास्तेषां सर्वेषामयमेव प्रकार इत्यर्थः॥

न्यायक्लृप्ताश्च दक्षिणा अन्यत्राभिषेचनीयदशपेयाभ्यां ॥ २ ॥

अस्मिन् विहिते राजसूये पवित्रादयो ये सोमास्तेषु न्यायक्लृप्तो दक्षिणाविधिर्भवति। न्यायो नाम 'एवम्प्रायाश्च दक्षिणाः' इत्येवमादिभिः सूत्रैर्विहितो दक्षिणाप्रकारः, चशब्दादध्वर्युविहितश्च। अयन्तु विधिरभिषेचनीयदशपेयाभ्यामन्यत्रैव भवति। तयोस्तु वक्ष्यमाण एव दक्षिणाविधिर्भवति, न न्यायक्लृप्त इत्येवमर्थः पर्युदासः ॥

अभिषेचनीये तु द्वात्रिंशतं द्वात्रिंशतं सहस्राणि पृथङ्मुख्येभ्यः ॥ ३ ॥

अभिषेचनीये त्वयं दक्षिणाविधिर्भवति। होत्रेभ्यो मुख्येभ्य एकैकस्मै द्वात्रिंशतं सहस्राणि ददाति। पृथग्ग्रहणं पृथक् पृथक् कृत्य दातव्यमित्येवमर्थं ॥

षोडश षोडश द्वितीयिभ्यः ॥ ४ ॥

अर्द्धिभ्य इत्यर्थः ॥

अष्टावष्टौ तृतीयिभ्यः। चत्वारि चत्वारि पादिभ्यः ॥ ५ ॥

सर्वत्र सहस्राणीत्यधिक्रियते। अर्धमस्यास्तीत्यर्द्धी। एवं द्वितीयी तृतीयी पादी च। एषां सम्बन्धिशब्दानां सिद्धवदभिधानात् प्रकृतावप्येवं दक्षिणाविभाग इति साधितं भवति ॥

संस्थापेष्टीनां हिरण्यमाग्नेय्यां वत्सतरी सारस्वत्यामवध्वस्तः सावित्र्यां श्यामः पौष्णां शितिपृष्ठो बार्हस्पत्यायामृषभ ऐन्द्र्यां महानिरष्टो वारुण्यां ॥ ६ ॥

संस्थापेष्टीनामयं दक्षिणाविधिर्भवति । हिरण्यमनियतमल्पं सुवर्णं दद्यात्। वत्सतरी नाम गोजातौ स्त्रीबाला विसृष्टमातृस्तना । अवध्वस्तः पांसुवर्णः । श्यामो धूम्रवर्णः । शितिपृष्ठः कृष्णपृष्ठः । ऋषभः सेचनसमर्थः । महानिरष्टः अवृद्धवया बलीबर्दः । सर्वे गोजातय एव भवन्ति ॥

साहस्रो दशपेयः ॥ ७ ॥

दशपेयः सहस्रदक्षिण इत्यर्थः ॥

इमाश्चादिष्टदक्षिणाः ॥ ८ ॥

आदिष्टदक्षिणा इति ऋत्विज आदिश्योद्दिश्य विहिता इत्यर्थः । चशब्दः सहस्रदक्षिणार्थाया आदिष्टदक्षिणानां समुच्चयार्थः ॥

सौवर्णी स्रगुद्गातुः ॥ ९ ॥

सुवर्णमयी मालेत्यर्थः ॥

अश्वः प्रस्तोतुः । धेनुः प्रतिहर्त्तुः ॥ १० ॥

धेनुः सवत्सा दातव्या ॥

अजः सुब्रह्मण्यायै ॥ ११ ॥

अजः सुब्रह्मण्याया इति सुब्रह्मण्यायेत्यर्थः ॥

हिरण्यप्राकाशावध्वर्य्योः ॥ १२ ॥

प्राकाशौ प्रदीप्तकुण्डले इति केचित्। तौ सुवर्णमयौ दातव्यौ। अध्वर्य्योरध्वर्यवे इत्यर्थः। एवमत्र सर्वत्र चतुर्थ्यर्थे षष्ठी ॥

राजतौ प्रतिप्रस्थातुः ॥ १३ ॥

रजतमयौ प्राकाशावित्यर्थः ॥

द्वादश पष्ठौह्यो गर्भिण्यो ब्रह्मणः ॥ १४ ॥

पष्ठौह्यः पञ्चवर्षास्ता गर्भिणीर्दद्यात् ॥

वशा मैत्रावरुणस्य ॥ १५ ॥

प्रजननासमर्था ॥

रुक्मो पोतुः ॥ १६ ॥

रुक्मो नाम आभरणविशेषो वृक्षाकारः ॥

ऋषभो ब्राह्मणाच्छंसिनः। कार्पासं वासः पोतुः। क्षौमो वरासो नेष्टुः ॥ १७ ॥

क्षौमो आतसो शाठो, वरासो स्थूला ॥

एकयुक्तं यवाचितमच्छावाकस्य ॥ १८ ॥

एकेनानडुहा युक्तं यवपूर्णं शकटमित्यर्थः ॥

अनड्वानाग्नीध्रस्य ॥ १९ ॥

अनोवहनसमर्थो बलीवर्दोऽनड्वान् ॥

वत्सतर्युन्नेतुः। त्रिवर्षः साण्डो ग्रावस्तुतः ॥ २० ॥ ॥ ४ ॥

त्रीणि वर्षाणि यस्य वयः स त्रिवर्षः साण्डः अण्डाभ्यां सहितः, नानण्डो न भग्नाण्ड इत्यर्थः ॥

इत्युत्तरषट्कस्य तृतीये चतुर्थी कण्डिका ॥

उशनसस्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेत ॥ १ ॥

उशनसस्तोमो नाम एकाहः। पुनःस्तोम इति चास्यैव संज्ञा। गरो विषं, गरो गीर्णो येन स गरगीर्णः। यो बहु-प्रतिग्रहादिना पापादिभयादात्मानं गरगीर्णमिव मन्यते स एतेन यजेत॥

उशना यत् सहस्यैरयातं त्वमपो यद्वेतुर्वशायेति सूक्त-मुखीये। गोस्तोमभूमिस्तोमवनस्पतिसवानां न ता अर्वा-रेणुककाटो अश्नुते न तानशन्ति न दभाति तस्करो बडित्था पर्वतानां दृल्हाचिद्या वनस्पतीन् देवेभ्यो वनस्पते हवींषि वनस्पते रशनया नियूयेति सूक्तमुखीयाः ॥ २ ॥

गोस्तोमो भूमिस्तोमो वनस्पतिसव इति त्रय एकाहाः कर्त्तव्या इत्येकोऽर्थः, अर्थात् कल्पते। अपरस्तु तेषामेताः षडृचः सूक्तमुखीया एकैकस्य द्वे द्वे भवत इति। 'देवेभ्यो वनस्पते हवींषि' इत्यनया साहचर्यात् 'वनस्पते रशनया नियूय' इति प्रैषगतैव गृह्यते॥

आधिपत्यकामो ब्रह्मवर्चसकामो वा बृहस्पतिसवेन यजेत ॥ ३ ॥

अधिपतेर्भाव आधिपत्यं, तत्कामो ब्रह्मवर्चसकामो वा,

बृहस्पतिसवो नाम एकाहः तेन यजेत। ब्रह्मणो वर्चस्तेजः ब्रह्मवर्चसमित्युच्यते। ब्रह्मेति ब्राह्मण्यं वेदश्चोच्यते तयोर्यद्वर्चस्तद्ब्रह्मवर्चसं, तत्कामो ब्रह्मवर्चसकामः॥

तस्य तृचाः सूक्तस्थानेषु॥ ४॥

तस्य बृहस्पतिसवस्य यानि सूक्तस्थानानि होतुर्होत्रकाणाञ्च तेषु सर्वेषु तृचा एव कर्त्तव्याः। तस्येतिवचनं तस्य बृहस्पतिसवस्य स्वभूतानि सूक्तस्थानानि तेष्वेवायं तृचत्वनियमः स्यात् नागन्तूनामित्येवमर्थं। तेनागन्तूनां निविद्दतिपत्तौ प्राप्तानां तृचत्वनियमो न भवति॥

अग्निर्देवेषु राजतीत्याज्यं। यस्तस्तम्भ धुनेतय इति सूक्तमुखीये। इन्द्र मरुत्व इह नृणामु त्वेति मध्यन्दिनः। उदुष्य देवः सविता हिरण्यया घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं स्वस्ति नो मिमीतामश्विनाभाग इति वैश्वदेवं। वैश्वानरं मनसाग्निं निचाय्य प्रयन्तु वाजास्तविषीभिरग्नयः समिद्धमग्निं समिधा गिरा गृण इत्याग्निमारुतं। होत्रका ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमान्तृचाञ्छंसेयुः॥ ५॥

होत्रकाणां स्तोत्रियानुरूपेभ्य ऊर्ध्वं यच्छस्त्रं तस्यादितोऽन्ततश्च एकैकं तृचं होत्रकाः स्तोत्रियानुरूपेभ्य ऊर्ध्वं शंसेयुः।

तन्माध्यगतं शस्त्रमुद्धार्यमित्यर्थः। ऊर्ध्वमनुरूपेभ्य इत्येतावतैव सिद्धे स्तोत्रियग्रहणं परिसङ्ख्याशङ्कानिवृत्त्यर्थं॥

प्रगाथेभ्यस्तु माध्यन्दिने॥ ६॥

माध्यन्दिने सवनेऽयं विशेषः। प्रगाथेभ्य ऊर्ध्वं यच्छस्त्रं तस्यादितोऽन्ततश्च ऋचौ ग्राह्यौ, तयोर्मध्ये यच्छस्त्रं तदुद्धार्यमिति॥

अनुसवनमेकादशैकादश दक्षिणाः॥ ७॥

सवने सवने एकादशैकादश दक्षिणा ददाति सन्नेषु नाराशंसेषु। प्रातःसवने तु दक्षिणानां निर्देशमात्रमेव कृत्वा तासामपि माध्यन्दिन एव सवने नयनं कर्त्तव्यं। माध्यन्दिने या दक्षिणास्तासां दानं नयनञ्च तत्रैव कर्त्तव्यं। तृतीयसवने तु दक्षिणानिर्देशमात्रमेव कृत्वा अनूबन्ध्यावपायागे कृते तासां नयनं कर्त्तव्यं। उन्नेष्यमाणास्वित्येते आहुती माध्यन्दिने एव सवने भवतः, नेतरयोः सवनयोः। प्रातःसवने नयनाभावात् तृतीयसवनस्यस्य पूर्वेणैव सिद्धत्वात् 'क इदम्' इत्ययं माध्यन्दिने तृतीयसवने च भवति, उभयत्र नयनसम्भवात्, दृष्टार्थत्वाच्चेति सिद्धं॥

एकादशैकादश वा सहस्राणि॥ ८॥

एकादशैकादश वा सहस्राणीत्यनुसवनं दक्षिणा ददाति।

पूर्वस्यैकादशशब्दस्य दक्षिणाविशेषणार्थत्वादस्य च सहस्रसङ्ख्याविशेषणार्थत्वान्न पुनरुक्तदोषः॥

शतानि वा॥ ९॥

अत्र सङ्ख्याविशेषणार्थत्वात् पूर्व एवानुवर्त्तते। एकादशैकादश वा शतानि अनुसवनं दक्षिणा इत्यर्थः॥

अश्वो माध्यन्दिनेऽधिकः॥ १०॥

त्रिष्वपि पक्षेष्वश्वो माध्यन्दिने दक्षिणाभिः सह अधिको दातव्यः॥

भवा भ्रातृव्यवानधिबुभूषुर्यजेत॥ ११॥

भूर्नाम एकाहः, तेन भ्रातृव्यवान् यजेत। भ्रातृव्याः शत्रवः, तानधिबुभूषुः, अभिभवितुमिच्छुरित्यर्थः॥

सद्यस्क्रियाऽनुक्रिया परिक्रिया वा स्वर्गकामः॥ १२॥

सद्यस्क्रिया नामैकाहः। यस्मिन् दीक्षोपसदः सुत्यं सर्वमेकस्मिन्नहनि क्रियते। अनुक्रियाप्येकाहः। स एवं भवति एकस्मिन्नहनि दीक्षा, द्वितीयेऽहनि क्रयाद्युपवसथान्तं, तृतीयेऽहनि सुत्येत्येवं। परिक्रियाप्येकाहो भवति। एषामन्यतमेन स्वर्गकामो यजेतेति निरतिशयसुखकाम इत्यर्थः॥

एकत्रिकेण त्र्येकेण वाऽन्नाद्यकामः ॥ १३ ॥

एकत्रिकः त्र्येकश्च द्वावेकाहौ, तयोरन्यतरेणान्नाद्यकामो यजेत। एकत्रिक एवं भवति, एकस्तोमो बहिष्पवमानः, त्रिस्तोमो होतुराज्यं, एवं व्यत्यासेन सर्वत्रैतौ स्तोमौ भवतः। त्र्येकस्त्वेतावेव स्तोमौ विपरीतौ भवतः। त्रिस्तोमो बहिष्पवमानः, एकस्तोमो होतुराज्यं। एवमेव व्यत्यस्य व्यत्यस्य समापयेत् ॥

गोतमस्तोमेन य इच्छेद्दानकामा मे प्रजा स्यादिति ॥ १४ ॥

गोतमस्तोमो नामैकाहः। तेन स यजेत यो मम प्रजा दानशीला दानकामा स्यादिति कामयेत ॥

एतेषां सप्तानां शस्यमुक्तं बृहस्पतिसवेन ॥ १५ ॥

एतेषां भरादीनां गोतमस्तोमपर्यन्तानां सप्तानां बृहस्पतिसवेन शस्यं व्याख्यातं। सप्तग्रहणं गोतमस्तोमसंग्रहार्थं। इतरथा गोतमस्तोमस्य माध्यन्दिने सवने स्तोमविवृद्धावपरिमिताभिरतिशंसने प्राप्ते एतच्छस्यं न प्राप्नुयात्। अतः सप्तग्रहणं कृतं। तेन तस्मिन्नेव शस्ये यथासम्भवमतिशंसनं भवति। शस्यग्रहणमेतेषु शस्यमेव न दक्षिणाविधिरपीत्येवमर्थं ॥

त्वं भुवः प्रतिमानं पृथिव्या भुवस्त्वमिन्द्र ब्रह्मणा महान्त्व-
द्यो ह जातो वृषभः कनीनस्त्वं सद्यो अपि वो जात इन्द्रान-
त्वाहिन्ने अधदेव देवा अनु ते दायि मह इन्द्रियाय कथो नु
ते परिचराणि विद्वानिति द्वे एकस्य चिन्मे विश्व१स्त्वोज एकन्नु
त्वा सत्पतिं पाञ्चजन्यं त्वयमा मनुषो देवताता प्रघान्वस्य म-
हतो महानीत्था हि सोम इन्मद इन्द्रो मदाय वावृध इति
सूक्तमुखीयाः॥ १६॥ ॥ ५॥

एतेषां सप्तानां चतुर्दश ऋचो द्वे द्वे सम्भूयैकैकस्य एका-
हस्य यथासङ्ख्यं सूक्तमुखीयाः स्युः॥

इत्युत्तरषट्कस्य तृतीये पञ्चमी कण्डिका॥ ०॥

गोतमस्तोममन्तरुक्थ्यं कुर्वन्ति॥ १॥

उक्तो गोतमस्तोमः, तस्यैव कश्चिद्विशेष उच्यते। तमन्तरु-
क्थ्यं कुर्वन्ति, अध्वर्यवः छन्दोगाश्च। तत्रान्तरुक्थ्यं नाम एवं
भवति। अन्तर्मध्य इत्यर्थः। अग्निष्टोममध्ये यस्मिन्नुक्थ्या
भवन्ति सोऽन्तरुक्थ्यः। स चतुःप्रकारो भवति। ऐन्द्रावरुणा-

दिभिर्ग्रहैः, 'एष्वूषु ब्रवाणि ते' इत्यादिभिः स्तोत्रियानुरूपैर्वा, साकमश्वादिभिः सामभिर्वा, सामस्तोत्रियानुरूपैर्वा। एषु पक्षेषु विशेषमाह॥

ग्रहान्तरुक्थ्यश्चेदग्ने मरुद्भिर्ऋक्वभिः पा इन्द्रावरुणाभ्यां मत्स्वेन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यां सजूरित्याग्निमारुते पुरस्तात् परिधानीयाया आवपेत॥२॥

उक्थ्यग्रहाः यदाग्निष्टोमचमसैः सह गृहीत्वा सहैव हूयन्ते तदा ग्रहान्तरुक्थ्यो भवति। तत्राग्निमारुतस्य परिधानीयायाः पुरस्तादियमृगर्धर्चशः शंस्तव्या॥

उभयोराम्नानं॥३॥

उत्तरविवक्षार्थमिदं सूत्रं॥

अन्यतरस्यामेके। उक्थ्यस्तोत्रियेषु चेद्यज्ञायज्ञीयेन॥ ॥४॥

स्तुयुरिति शेषः। एष स्तोत्रियानुरूपान्तरुक्थ्यः॥

स्वैर्वा॥५॥

स्तुयुरिति शेषः। उक्थ्यस्तोत्रियेष्वेव स्वैः साकमश्वादिभिरेवाग्निमारुताय यदि स्तुयुः, तदैव सामस्तोत्रियानुरूपान्त-

हक्ष्यो भवति। अनन्तरोक्तयोः पङ्क्तिपचयोः यंसनप्रकार-
माह॥

सकृदाद्य स्तोत्रियान्। तथानुरूपान्॥ ६॥

त्रिभिः स्तोत्रियैरेकं स्तोत्रियकार्यमत्र क्रियते। अनुरूपैस्तु
त्रिभिरेकमनुरूपकार्यं कृतमिति कृत्वा आहावैक्यमत्रेति म-
न्तव्यं॥

अन्यत्राप्येवं स्तोत्रियानुरूपसन्निपाते॥ ७॥

अन्यत्रापि स्तोत्रियानुरूपद्र्व्याणां सन्निपाते सति कार्यै-
क्यादेक एवाहावः कर्त्तव्यः। अत्रोदाहरणं गर्भकारस्तवने।
अत्र चोदाहरणं यदि कदाचिच्छन्दोगाः स्तयोनावेव य-
ज्ञायज्ञीयेन स्तुत्वा उक्थ्यस्तोत्रियेष्वपि यज्ञायज्ञीयेन स्तुयुः
तदा स्तोत्रियानुरूपचतुष्टयं भवति। अयन्तु कल्पः सूत्र-
कारेणानिबद्धः। अत्राप्याहावैक्यसिद्ध्यर्थं अन्यत्रापीत्यपिशब्दः
कृतो भगवता सूत्रकारेण॥

यद्यु वै यज्ञायज्ञीययोनौ सर्वैरेवोक्थ्यसामभिः प्रकृत्या
स्यात् तथा सति॥ ८॥ ॥ ६॥

एष सामान्तरुक्थ्यपक्षो भवति। यदि यज्ञायज्ञीयस्य
त्वचु वाकमश्वसौभरनामधेयैः स्तुयुस्तदा प्रकृत्या स्यादाग्नि-

मावृतं शस्त्रं, न यज्ञायज्ञीयस्याक्रियमाणस्य योनिशंसनं कर्त्तव्यमित्यर्थः। तथा सतीति कथं सतीत्युक्तं भवति। अयमभिप्रायः। प्रकृत्येति योनिशंसनाभाव उच्यते। तथा सति तस्मिन्नेव शस्त्रे स्तोत्रियत्वेन शंसने सति इत्यर्थः। अनेन प्रकारेण तद्भावभावित्वमुक्तं भवति। अतः सिद्धमन्यत्रापि यत्र स्तोत्रियत्वेन यस्मिन् शस्त्रे शंसनमस्ति तस्मिन् शस्त्रे योनित्वेनापि शंसनं तासामृचां तत्र न भवतीति। अत्रैतावान् प्रयोजकोऽंशः, एकस्मिञ्छस्त्रे स्तोत्रियत्वेन शस्तस्य पुनरपि तस्मिन्नेव शस्त्रे योनिशंसनं न भवतीति। नात्र क्रियमाणता अस्तयोनिभावता वा विशेषो हेतुः। अत स्तोत्रियानुरूपान्तरक्थ्यपचे च यज्ञायज्ञीयस्य यथोक्तं योनिशंसनं कर्त्तव्यं॥

इत्युत्तरषट्कस्य तृतीये षष्ठी कण्डिका।

श्येनाजिराभ्यामभिचरन् यजेत॥ १॥

श्येनश्च अजिरश्च द्वावेकाहौ, ताभ्यामभिचरन् यजेत। अभिपूर्वश्चरतिर्हिंसायां वर्त्तते। अभिचरन् शत्रून् मारयिष्यन्नित्यर्थः॥

अर्हं मनुर्गर्भेनुसंस्त्वया मन्यो यस्ते मन्यविति मध्यन्दिनौ ॥ ॥ २ ॥

यथासङ्ख्येनोभयोर्भवतः ॥

शेषो बृहस्पतिसवेन ॥ ३ ॥

अनयोर्मध्यन्दिनाभ्यामन्यो यः शेषः स बृहस्पतिसवेन व्याख्यातः ॥

सन्नद्धा लोहितोष्णीषा निस्त्रिंशिनो याजयेयुः ॥ ४ ॥

युद्धोपकरणैः कवचादिभिः सम्यग्बद्धाः सन्नद्धा इत्यच विवक्ष्यन्ते। लोहितवासोभिर्वेष्टितशिरसो लोहितोष्णीषा उच्यन्ते। निस्त्रिंशोऽसिः खड्गो वा स येषां हस्तेषु भवति ते निस्त्रिंशिन उच्यन्ते। ते याजयेयुरिति वचनं सदस्यसमसाध्वर्यमभिहवनिवृत्त्यर्थं ॥

शरमयं बर्हिः ॥ ५ ॥

शरो नाम वेणुसदृशः, तन्मयं बर्हिर्भवति ॥

मौसलाः परिधयः ॥ ६ ॥

मौसला मुसलस्वरूपा इत्यर्थः ॥

वैभीतक इध्मः ॥ ७ ॥

विभीतको नाम तरुविशेषः तन्मयो भवतीध्मः ॥

वाघातको वा ॥ ८ ॥

वाघातकस्य वृक्षविशेषः तन्मयो वा भवति ॥

अपगूर्याश्रावयेत् ॥ ९ ॥

स्रुचावुत्क्षिप्य अपगुरयन्निव आश्रावयेत् ॥

प्रत्याश्रावयेच्च ॥ १० ॥

स्रुचमुत्क्षिप्य अवगुरयन् प्रत्याश्रावयेच्च ॥

छिन्दन्निव वषट्कुर्यात् ॥ ११ ॥

वषट्कारशब्दे छेदनं नाम स्निग्धता वर्णानां तीक्ष्णता च । अथवा वषट्कारोच्चारणकाले मनसा शत्रून् दारयन्निव स्यात् ॥

दृषन्निव जुहुयात् ॥ १२ ॥

स्रुचा अङ्गारान् पेषयन्निव मनसा वा शत्रून् पेषयन्निव स्यात् ॥

साद्यस्केषूर्वरा वेदिः ॥ १३ ॥

अभिचरणीयेषु साधारणधर्मा उक्ताः, इदानीं साद्यस्केषु साधारणधर्मा उच्यन्ते। साद्यस्का नाम सोमयागाः सदीक्षोपसत्का एकस्मिन्नहनि क्रियन्ते। तेषु उर्वरा वेदिः, सर्वसस्यवती भूमिः सा वेदिर्भवतीत्यर्थः ॥

खल उत्तरवेदिः ॥ १४ ॥

यस्मिन् प्रदेशे धान्यानि पूलैर्विविच्यन्ते अनडुदादिभिः स प्रदेशः खल इत्युच्यते ॥

खलेवाली यूपः ॥ १५ ॥

खलेऽनडुद्भ्रमणे क्रियमाणे तद्धन्धनार्था मेथी खलेवालीत्युच्यते। खलेऽनडुहो वारयतीति खलेवाली ॥

स्फ्यग्रो यूपः ॥ १६ ॥

स्फ्यस्येव अग्रं यस्य सः स्फ्याग्रः। छान्दसो ह्रस्वः। एवं यूपो भवति ॥

अचषालः ॥ १७ ॥

अचषालश्चषालरहितश्च भवति ॥

कलापी चषालः ॥ १८ ॥

सा मेथी अग्रप्रदेशे धान्यपूलैर्बद्धा तिष्ठति स एव चषालो भवति ॥

इत्यागन्तुका विकाराः ॥ १९ ॥

इत्येतेऽनुक्रान्ता धर्मा आगन्तुका विकाराश्च वेदितव्याः। अप्राकृता धर्मा आगन्तुका उच्यन्ते। प्राकृतेष्वेव विशेषविधयो विकारा उच्यन्ते। तत्र 'सन्नद्धा लोहितोष्णीषाः' इत्येवंप्रकारा आगन्तुकाः। 'शरमयं बर्हिः उर्वरा वेदिः' इत्यादयो विकाराः ॥

अन्यांश्चाध्वर्यवो विदुः ॥ २० ॥

अध्वर्यवः अन्यांश्चागन्तुकान् विकारांश्च आमनन्ति। ते सर्वेऽप्यस्माभिरनुष्ठेया इत्यर्थः ॥

सिद्धे तु शस्ये होता संप्रैषान्वयः स्यात् ॥ २१ ॥

शस्यग्रहणमनुवचनादीनामपि प्रदर्शनार्थं। सिद्धे तुवचनादस्मच्छास्त्रे विहिते सति होता संप्रैषान्वयः स्यात्। इदमत्रोदाहरणं। खलेवाल्या उच्छ्रयणाभावादञ्जनपरिव्ययणयोर्द्वे एवर्चावनूच्येते। तत्र प्रकृत्या बहुत्वाभावादभिहिङ्काराभ्यासौ न स्यातां। एवं प्राप्त इदमुच्यते। सिद्धे साभिहि-

षाराभ्यासेऽनुवचने सति संप्रैषानुसारेण तावन्मात्रमनुवक्तव्यं, नान्यो विकार उषारयितव्य इत्यर्थः। अन्यदप्येवंप्रकारेणा-न्वेषणीयं॥

पाप्या कीर्त्या पिहितो महारोगेण वा यो वाऽलंप्रजननः प्रजां न विन्देत सोऽग्निष्टुता यजेत॥ २२॥

पापी कीर्त्तिः ब्रह्महत्यादिना जाता, तया पिहितः छन्न इत्यर्थः। महारोगेण वा पिहितः। दीर्घकालानुवर्त्ती रोगो महारोगः। अथवा आयुर्वेदप्रसिद्धो महारोगः। यो वाऽलं-प्रजननः पर्याप्तप्रजननः पुंस्त्वयुक्त इत्यर्थः, स यदि प्रजां न लभेत। एते त्रयोऽग्निष्टुतोऽधिकारिणः। अग्निष्टुदित्येकाहस्य संज्ञा॥

तिष्ठाहरी यो जात एवेति मध्यन्दिनः। सर्वाग्नेयश्चेत् स्तो-त्रियानुरूपा आग्नेयाः स्युः॥ २३॥

असर्वाग्नेयोऽग्निष्टुदुक्तः, सर्वाग्नेय इदानीमुच्यते। यद्यय-मग्निष्टुत् सर्वाग्नेयः स्यात् तदा स्तोत्रियानुरूपा आग्नेयीभिः कर्त्तव्याः॥

विचारि वा॥ २४॥

एवं वा सर्वाग्नेयोऽग्निष्टुद्भवति विचारि यथाऽऽग्नेयो भवति तथा प्राप्ते। विचारिशब्देन आगमापायिन उच्यन्ते।

अविचारित इन्द्रमिद्धवधाय्यापोहिष्ठीयप्रकाराः, तेभ्योऽन्ये विचारितास्ते सर्वे आग्नेया भवन्तीत्यर्थः ॥

अपिवा सर्वेषु देवताशब्देष्वग्निमेवाभिसंनमेत् ॥ २५ ॥

*अपि वैवं सर्वाग्नेयोऽग्निष्टुद्भवति। यथा प्राप्ते शस्ते सर्वेषु देवताशब्देषु अग्निशब्दः प्रयोक्तव्य इत्यर्थः। अग्निशब्दस्य पुंलिङ्गत्वात् स्त्रीदेवताशब्दस्थानेऽपि पुंलिङ्ग एवाग्निशब्दः प्रयोक्तव्यः। यथा 'पावका नोऽग्निर्वाजेभिः' इति द्विवचनबहुवचने त्वविरोधात् कर्त्तव्ये एव, यथा 'घृतेनाग्नी घृतावृधा' इति। 'ओमासश्चर्षणीधृतोऽग्नय आगते' इति। देवताशब्देष्वग्निशब्दं प्रक्षिपेदिति वचनात् सिद्धेऽपि सर्वेष्वितिवचनं शस्त्रादिषट्के जपादिषट्के च सर्वप्रकारे मन्त्रेष्वस्य विधिः प्रापणार्थं ॥

तथा सत्यन्वक्षमिन्द्रस्तुता यजेत ॥ २६ ॥

तथासति एभिस्त्रिभिः प्रकारैः सर्वाग्नेयेऽग्निष्टुति सतीत्यर्थः। अन्वक्षं सद्य एवेत्यर्थः। इन्द्रस्तुन्नाम एकाहः, तेन यजेत ॥

इन्द्र सोममिन्द्रं स्तवेति मध्यन्दिनः ॥ २७ ॥

'इन्द्र सोमं सोमपते पिबेम' इत्येतस्यैव सर्वत्र ग्रहणं, चेष्टुभत्वान्माध्यन्दिनस्य सवनस्य ॥

---

* अथ चैवमिति पुस्तकद्वये।

भूतिकामो वा ग्रामकामो वा प्रजाकामो वा ॥ २८ ॥

उपहव्येन यजेत। भूतिकामो यः स्वाध्यायेन धनेन वाऽभिभवितुं कामयते स भूतिकामः। ग्रामकामः प्रसिद्धः। प्रजाकामः पुत्रकामः। एषामन्यतमकाम उपहव्येन एकाहेन यजेत। एषः छन्दोगानामनिरुक्ततमः श्रूयते। इन्द्रस्थाने शक्रशब्दः प्रयोक्तव्यः, सर्वशब्दस्थाने विश्वशब्द इत्यादयो धर्मा अनिरुक्ताः श्रूयन्त इति छन्दोगानां प्रसिद्धं। ते चास्माभिरनुसरणीयाः ॥

इमा उ त्वा य एक इदिति मध्यन्दिनः। इन्द्राग्न्योः कुलायेन प्रजातिकामः ॥ २९ ॥

प्रजातिकाम इति प्रजाभिः पशुभिश्च महान् भूयांसमतिकामयमान इत्यर्थः। इन्द्राग्न्योः कुलायमित्येकाहः ॥

तिष्ठाहरी तमु ष्टुहीति मध्यन्दिनः। ऋषभेण विजिगीषमाणः ॥ ३० ॥

विजेतुमिच्छन् विजिगीषमाणः ॥

मरुत्वाँ इन्द्र युध्मस्यन इति मध्यन्दिनः। तीव्रसोमेनान्नाद्यकामः ॥ ३१ ॥

तीव्रसोम इत्येकाहः ॥

कस्य वीरस्तीव्रस्याभिवयस इति मध्यन्दिनः। विघनेनाभिचरन्॥ ३२॥

विघन इति क्रतुनाम॥

तस्य शस्यमजिरेण॥ ३३॥

तस्यग्रहणं शस्यप्रदर्शनार्थं, न लोहितोष्णीषादिनिवृत्त्यर्थं॥

इन्द्राविष्णोरुत्क्रान्तिना स्वर्गकामः॥ ३४॥

इन्द्राविष्णोरुत्क्रान्तिरेकाहनाम॥

इमा उ त्वा द्यौर्नय इन्द्रेति मध्यन्दिनः। यः कामयेत नैष्णिह्यं पाप्मन इयामिति स ऋतपेयेन यजेत॥ ३५॥

निस्नेहस्य भावो नैष्णिह्यं। पाप्मनो नैष्णिह्यं गच्छेयमिति यः कामयेत स ऋतपेयनामकेन एकाहेन यजेत। अल्पमपि पापं मयि न तिष्ठदिति यः कामयते स ऋतपेयेन यजेतेत्यर्थः॥

ऋतस्य हि शुरुधः सन्ति पूर्वीरिति सूक्तमुखीये। सत्येन चमसान् भक्षयन्ति॥ ३६॥

सत्यमुक्ता भक्षयन्ति॥

सत्यमियं पृथिवी सत्यमयमग्निः सत्यमयं वायुः सत्यमसावादित्य इति ॥ ३७ ॥

एवमन्त्रमुक्त्वा भक्षयन्तीत्यर्थः। अत्र नित्यस्य भक्षमन्त्रस्य निवृत्तिः ॥

सोमचमसो दक्षिणा ॥ ३८ ॥ ॥ ७ ॥

'सोमांशुभिः पूर्णं चमसं दक्षिणाकाले सगोत्राय ब्राह्मणाय ददाति' इति श्रुतिः। ऋत्विगानतावुपायान्तरमन्वेषणीयं ॥

इत्युत्तरषट्कस्य तृतीये सप्तमी कण्डिका ॥ ७ ॥

---

अतिमूर्त्तिना यक्ष्यमाणो मासं सौर्याचान्द्रमसीभ्यामिष्टीभ्यां यजेत ॥ १ ॥

अतिमूर्त्तिर्द्रुणाग्नो वज्रसुवर्ण इत्यस्यैकाहस्य त्रीणि नामानि। अनेन यक्ष्यमाणः पुरस्तादेकं मासं सौर्याचान्द्रमसीभ्यामिष्टीभ्यां यजत। सूर्योऽस्या देवतेति सौरी। सौर्या इत्या-

कारान्तनिर्देशश्छान्दसः। चन्द्रमा देवता अस्या इति चान्द्रमसी। एताभ्यामिष्टिभ्यां स यजेत। कथमित्यपेक्षायामेतदाह॥

शुक्लं चान्द्रमस्या। सौर्य्येतरं॥ २॥

शुक्लपक्षमहरहश्चान्द्रमस्या यजेत। इतरं कृष्णपक्षमहरहः सौर्य्यया यजेत। ततोऽतिमूर्त्तिना यष्टव्यं॥

अत्राह गोरमन्वत नवो नवो भवति जायमानस्तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः॥ ३॥

याज्यानुवाक्याग्रहणं सूक्तमुखीयत्वनिवृत्त्यर्थं। इतरथा षट् ऋचोऽनुक्रम्य सूक्तमुखीय इत्युक्ते आसामन्यतमे इति प्रतिभासः स्यात् तन्निवृत्त्यर्थमिति॥

स ईं महीन्धुनिमेतोररम्णात् स्वप्नेनाभ्युप्याचुमुरिन्धुनिञ्चेति सूक्तमुखीये॥ ४॥

अतिमूर्त्तिन एते सूक्तमुखीये॥

सूर्य्यस्तुता यशस्कामः॥ ५॥

सूर्य्यस्तुदेकाहः। यशः कीर्त्तिः॥

पिबा सोममभीन्द्रं स्तवेति मध्यन्दिनः। व्योम्नाऽन्नाद्यकामः ॥ ६ ॥

व्योमेत्येकाहनाम ॥

विश्वदेवस्तुता यशस्कामः ॥ ७ ॥

विश्वदेवस्तुदित्येकाहाख्यः ॥

पञ्चशारदीयेन पशुकामः ॥ ८ ॥

पञ्चशारदीय एकाहः ॥

एतेषां त्रयाणां कयाशुभातदिदासेति मध्यन्दिनः। उभयसामानौ पूर्वौ ॥ ९ ॥

व्योमविश्वदेवस्तुतावित्यर्थः ॥

उक्थ्यः पञ्चशारदीयः। विश्वो विश्वो वो अतिथिमित्याज्यं ॥ १० ॥

पञ्चशारदीये एतदाज्यं भवति ॥

कण्वरथन्तरं पृष्ठं ॥ ११ ॥

पञ्चशारदीयस्यैव ॥

गोसवविवधौ पशुकामः ॥ १२ ॥

गोसवो विवधश्च एकाहौ। तयोरेकैकः पशुकामस्य ॥

इन्द्र सोममेतायामेति मध्यन्दिनः ॥ १३ ॥

गोसवविवधयोरप्येष एव मध्यन्दिनः ॥

दश सहस्राणि दक्षिणाः ॥ १४ ॥

दक्षिणा द्वयोरेकैकस्य सर्वाः ॥

षोडशैकाहाः ॥ १५ ॥

अतः परं षोडश एकाहाः। ते चोद्भिदादयो राशिमराशयान्ताः ॥

आयुर्गौरिति व्यत्यासं ॥ १६ ॥

तेषां षोडशानामायुर्गौश्च प्रकृती भवतः। व्यत्यासमिति अयुजामायुः युजाङ्गौरित्येवं व्यत्यासः प्रथमस्यायुः द्वितीयस्य गौः तृतीयस्यायुरित्येवमर्थः ॥

उद्भिद्वलभिदौ स्वर्गकामः ॥ १७ ॥

तेषामाद्यौ उद्भिच्च वलभिच्च तौ स्वर्गकामस्य। येऽत्र द्वन्द्वशो विहितास्ते यमयज्ञा वेदितव्याः। तेषु सर्वेषु यमयज्ञेषु पूर्वेण

यागं कृत्वाऽनन्तरमेवोत्तरेण यागः कर्त्तव्यः। अथवा छन्दोगप्रत्ययादेव यमयज्ञानाङ्गतिर्भवेत् एतेषु मध्यन्दिने विधिरायुषो गोश्च प्राप्ते तावन्मात्रापवादः॥

इन्द्र सोममिन्द्रः पूर्भिदिति मध्यन्दिनः॥ १८॥

उद्भिद्बलभिदोरेष मध्यन्दिनः॥

विनुत्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते॥ १९॥

विनुतिरभिभूतिश्च द्वौ। इषुश्च वज्रश्च द्वौ। द्वयोर्यमयोर्मन्युसूक्ते 'त्वया मन्यो यस्ते मन्यो' इत्येते मध्यन्दिनो भवतीत्यर्थः॥

अभिचरन् यजत॥ २०॥

तावेव द्वौ द्वावभिचरतो भवतः। एतत् सर्वं पूर्वसूत्रस्थेन चशब्देन लभ्यते॥

त्विष्यपचित्योः सम्राट्स्वराजो राड्विराजोः शदस्य चैकाहिके॥ २१॥

त्विषिश्च अपचितिश्च द्वौ। सम्राट्च स्वराट्च द्वौ। राट्च विराट्च द्वौ। शदश्चैकाहः। एतेषां सप्तानां ऐकाहिके 'अनिष्ठा उग्र इन्द्रस्य नु वीर्याणि' इत्येते मध्यन्दिनो भवतीत्यर्थः॥

उपशदस्य राशिमराययोश्च कयाशुभीयतदिदासीये ॥ ॥२२॥

उपशदस्यैकाहः। राशिमराययश्च द्वौ। तेषां कयाशुभीयतदिदासीये मध्यन्दिनो भवतीत्यर्थः॥

भूतिकामराज्यकामान्नाद्यकामेन्द्रियकामतेजस्कामानां ॥ ॥२३॥

षोडशानां मध्ये त्विष्यादीनामनुक्तकामानामेते कामा भवन्ति॥

एते कामा द्वयोर्द्वयोः॥ २४॥

त्विष्यादीनां द्वयोर्द्वयोरेकैकस्य एकैकः कामो यथासङ्ख्येन भवति॥

ऋषिस्तोमा व्रात्यस्तोमाश्च पृष्ठ्याहानि॥ २५॥

ऋषिस्तोमा नाम सप्तैकाहाः। व्रात्यस्तोमा नाम च सप्तैव। तेषां चोभयेषां पृष्ठ्याहानि यथासङ्ख्येन प्रकृतिभूतानि भवन्तीत्यर्थः। प्रथमस्य प्रथमेनेत्येवं। उभयत्र सप्तमो ज्योतिष्टोमः प्रकृतिः॥

नाकसद् ऋतुस्तोमा दिक्स्तोमाश्चाभिप्लवाहानि॥ २९॥
॥ ८॥

नाकसद् इति षडैकाहाः एको गणः। ऋतुस्तोमनामानश्च षडैकाहाः। दिक्स्तोमनामानश्च षडैकाहाः। द्वावेतौ गणौ। एतेषां त्रयाणां अभिप्लवाहानि प्रकृतिरेकैकस्य गणस्य यथासङ्ख्येनैव पूर्ववत्॥

इत्युत्तरषट्कस्य तृतीये अष्टमी कण्डिका॥ *॥

वाजपेयेनाधिपत्यकामः॥ १॥

आधिपत्यं आधिक्येन स्वाम्यं तत्कामो वाजपेयेन यजेत॥

सप्तदश दीक्षाः॥ २॥

तस्य वाजपेयस्य सप्तदश दीक्षा भवन्ति। एकाहानामेका तिस्रो वा दीक्षा इत्यस्यायमपवादः॥

सप्तदशापवर्गो वा॥ ३॥

सप्तदशभिरहोभिरपवृज्यते समाप्यते स सप्तदशापवर्गः। तदा त्रयोदश दीक्षास्तिस्र उपसद एका सुत्येति कल्पना॥

हिरण्यस्रज ऋत्विजो याजयेयुः ॥ ४ ॥

हिरण्मयीभिः स्रग्भिर्भूषिता हिरण्यस्रज इत्युच्यते। ऋत्विक्ग्रहणं चमसाध्वर्युप्रमित्रादिनिवृत्त्यर्थं ॥

वज्रकिञ्जल्का शतपुष्करा होतुः ॥ ५ ॥

होतुः स्रगेवं भवति, हिरण्मयैः शतेन पुष्करैः कृतानि च तानि च पुष्कराणि, वज्रनामकैः रत्नविशेषैः कृतकिञ्जल्कानि भवन्ति। किञ्जल्कपुष्करशब्दाभ्यां स्रगेव विशेष्यते। पार्ष्ठिकः परस्परसंबद्धः ॥

विश्वजिदाज्यं कयाशुभातदिदासेति मध्यन्दिनः। संस्थिते मरुत्वतीये बार्हस्पत्येष्टिः ॥ ६ ॥

बृहस्पतिरस्या देवतेति बार्हस्पत्या ॥

आज्यभागप्रभृतीडान्ता। बृहस्पतिः प्रथमं जायमानो बृहस्पतिः समजयद्वसूनि। त्वामीडते अजिरं दूत्यायाग्निं सुदीतिं सुदृशं गृणन्त इति संयाज्ये ॥ ७ ॥

अत्र बृहस्पतेरादेशो न कर्त्तव्यः, सौमिकोऽभ्यस्यति वचनात् आज्यभागयोः स्विष्टकृति चादेशः कर्त्तव्य एव ॥

यदि त्वध्वर्यव आजिञ्ज्ञापयेयुरथ ब्रह्मा तीर्थदेशे मयूखे चक्रं प्रतिमुक्तं तदारुह्य प्रदक्षिणमावर्त्त्यमाने वाजिनां साम गायादाविर्मर्या आवाजं वाजिनो अग्मन्। देवस्य सवितुः सवे स्वर्गाँ अर्वन्तो जयतः स्वर्गाँ अर्वतो जयतीति वा॥ ८॥

यदीति यदेत्यर्थः। यदाऽध्वर्यव आजिञ्ज्ञापयन्ति यजमानं आजिं नाम *चणं जापयेयुः गमयेयुरित्यर्थः। एतदुक्तं भवति। यदा त्वध्वर्यवो यजमानमाजिं गमयेयुः तदा ब्रह्मा तीर्थदेशे मयूखं निखाय। मयूखमक्षमित्यर्थः। तस्मिन् चक्रं प्रतिमुच्य, तदारुह्यास्ते। तच्चक्रं प्रदक्षिणमावर्त्तयन्ति केचित् पुरुषाः। तदा ब्रह्मा वाजिनां साम गायात्। 'आविर्मर्या' इत्यस्यामृचि गीतं तत् साम। एषा ऋक् पुरउष्णिक्। अर्वन्तः अर्वत इति वा तृतीये पादे पठितव्यं, उभयथा समाम्नायदर्शनात्। अस्यार्थस्य ज्ञापनार्थं तृतीयः पादः सूत्रकारेण द्विधा पठ्यते॥

यदि साम नाधीयात्त्रिरेतामृचं जपेत्। तृतीयेनाभिप्लविकेनोक्तं तृतीयसवनं। चित्रवतीषु चेत् सुवीरस्त्वं नश्चित्र ऊत्याग्ने विवस्वदुषस इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ। षोडशी त्विह॥ ९॥

तृतीयस्याङ्ग उक्थसंस्थत्वादत्र षोडशी विधीयते॥

---

* क्षणमिति, स० पु० ह्य।

तस्मादूर्ध्वमतिरिक्तोक्थं ॥ १० ॥

तस्मादूर्ध्वं षोडशिन ऊर्ध्वं इत्यर्थः। अनेन वचनेन यत्र षोडशी नास्ति तत्रातिरिक्तोक्थमपि नास्तीति गम्यते। अनेन प्रकारेण अषोडशिको वाजपेयोऽस्तीति साधितं भवति ॥

प्र तत्ते अद्य शिपिविष्टनाम प्र तद्विष्णुस्तवते वीर्येणेति स्तोत्रियानुरूपौ ॥ ११ ॥

एवमतिरिक्तोक्थं भवति ॥

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्यत्ते दित्सु प्रराध्यं त्वामिच्छवसस्पते ॥ १२ ॥

एकर्चानि त्रीणि प्रतीकानि ॥

तं प्रत्नथेति त्रयोदशानामेकां शिष्ट्वाऽऽहूय दूरोहणं रोहेत् ॥ १३ ॥

'तं प्रत्नथा पूर्वाः' इति त्रयोदशर्चः शंस्तव्याः। तासामेकामृचमवशिष्य आहूय दूरोहणं रोहेत्। आहूयेतिवचनं षष्ठे त्वेव पृष्ठ्याहन्यहरहःशस्येत्यस्मिन् दूरोहणे आहावाभावादत्राप्याहावाभावशङ्का स्यात् तन्निवृत्त्यर्थमुच्यते ॥

बृहस्पते युवमिन्द्रश्च स्व इति परिधानीया। विभ्राट् बृहत् पिबतु सोम्यं मध्विति याज्या। तस्य गवां शतानामश्वरथानामश्वानां साद्यानां वह्यानां महानसानां दासीनां निष्ककण्ठीनां हस्तिनां हिरण्यकच्याणां सप्तदश सप्तदशानि दक्षिणाः॥ १४॥

तस्य सप्तदशानि दक्षिणा दातव्याः। तस्येतिवचनं सषोडशिकस्यैव दक्षिणाविधिरितिज्ञापनार्थं। इतरथा प्रकृतत्वाद्‌षोडशिकस्यापि स्यात् तन्निवृत्त्यर्थं तस्येत्युच्यते। तेन षोडशिकस्य न्यायकॢप्तैव दक्षिणा भवति। गवां शतानां सप्तदशेति सम्बन्धः। शतशब्दो गोभिरेव सम्बध्यते, नोत्तरैः। अश्वैर्युक्ता रथा अश्वरथाः तेषां सप्तदश, अश्वानां सप्तदश। येषु सीदन्ति पुरुषास्ते साद्याः अश्वादयः पृष्ठवाहिन इत्यर्थः, तेषां सप्तदश। वह्याः वहनसमर्थाः, तेषामपि सप्तदश। महान्ति च अनांसि चेति महानसानि, तेषामपि सप्तदश। निष्कं नागाभरणविशेषः, तेन कण्ठे भूषिताः निष्ककण्ठ्यः, एवंभूतानां दासीनां सप्तदश। हिरण्मयः कच्चो येषां ते हिरण्यकच्याः, एवंभूतानां हस्तिनां सप्तदश। एतेषां द्रव्याणां सप्तदश सप्तदश दातव्याः। सा दक्षिणा सषोडशिकस्य वाजपेयस्येत्यर्थः। सप्तदश सप्तदशेतिपाठः कर्त्तव्यः, सप्तदश सप्तदशानीत्यस्य अपपाठत्वात्॥

दशान्ये दक्षिणागणा धनानां शतावमापरार्ध्यानां॥ ॥१५॥

शतावमापरार्ध्यानामिति शतावमानां शतप्रभृतीनामित्यर्थः। परार्ध्यं परावधिस्तद्यस्य नास्ति तदपरार्ध्यमित्युच्यते। अपरिमितपरावधीनामित्यर्थः। शतप्रभृतीनां अपरिमितपरावधीनामित्युक्तेऽपि द्विशतात् प्रागेव परावधिर्भवति। एतदुक्तं भवति। गवादीनां द्रव्याणां सप्तदशसङ्ख्यायुक्ता अष्टौ गणा दक्षिणात्वेनोक्ताः पूर्वसूत्रे, इदानीमन्ये दश गणाः शतप्रभृत्यपरिमितसङ्ख्यायुक्ता येषां केषांचिद्धनानां संबन्धिनोऽस्य दक्षिणा भवन्ति। पूर्वैणास्य विकल्पोऽर्थात् सिद्धो भवति॥

पूर्वान् वा गणशोऽभ्यस्येत्॥ १६॥

यद्यन्यानि धनानि न सन्ति तदा पूर्वेषां गवादीनामेकैकस्य वा द्रव्यस्य दशकृत्वोऽभ्यस्य दशगणान् सम्पाद्य दक्षिणां दद्यात्, अन्येषां धनानामसम्भवे॥

सप्तदश सप्तदशानि सम्पादयेत्॥ १७॥

एवमप्यसम्भवे यानि कानिचित् द्रव्याणि सप्तदशसङ्ख्यायुक्तानि सप्तदश दातव्यानीत्यर्थः। अयमप्यपरो दक्षिणाकल्पः। एवमेते चत्वारो दक्षिणाकल्पाः सषोडशिकस्य वाजपेयस्य॥

इति वाजपेयः ॥ १८ ॥

इत्येवंप्रकाराः सर्वे वाजपेया इत्यर्थः। एकवचनं जात्यभिप्रायं॥

तेनेष्ट्वा राजा राजसूयेन यजेत। ब्राह्मणो बृहस्पतिसवेन ॥ १९ ॥ ॥ ९ ॥

अनयोरेवानुकीर्त्तनादैश्यस्यायं नास्तीति गम्यते॥

इत्युत्तरषट्कस्य तृतीये नवमी कण्डिका ॥ ❊ ॥

---

अनिरुक्तस्य चतुर्विंशेन प्रातःसवनं तृतीयसवनञ्च ॥ १ ॥

अनिरुक्तो नाम एकाहः॥

तं प्रत्नथेति तु त्रयोदशवैश्वदेवं ॥ २ ॥

'यज्ञस्य वो रथ्यं' इत्यस्यापवादः॥

कयाशुभातद्दिदासेति मध्यन्दिनः ॥ ३ ॥

ऐकाहिकं माध्यन्दिनं सवनं, तस्यायं मध्यन्दिनः॥

होत्रका ऊर्ध्वं प्रगाथेभ्यः प्रथमान् सम्पातांश्छंसेयुः ॥ ४॥

होत्रका माध्यन्दिने सवने स्तोत्रियानुरूपान् स्वान् शस्त्वा प्रगाथानन्तरं प्रथमान् सम्पातान् 'एवा त्वामिन्द्र इन्द्रः पूर्भिदिमामूषु' इत्येतान् शंसेयुः ॥

अहीनसूक्तानि वा ॥ ५ ॥

अहीनसूक्तानि 'आमत्यो या तु असा इद् आसद्भिः' इत्येतानि वा प्रगाथानन्तरं शंसेयुः। एवं द्विसूक्ता होत्रका भवन्ति। मैत्रावरुणाच्छावाकयोः सम्पातपक्षे तस्यैव द्विःशंसने प्राप्ते तद्दैवतमन्यमित्येतत् कर्त्तव्यं। ब्राह्मणाच्छंसिनो यथा प्रकृत्यैव। अहीनसूक्तपक्षे प्रगाथानन्तरं अहीनसूक्तानि ततोऽन्यान्यैकाहिकानि ॥

एवं पूर्वे सवने बृहत्पृष्ठेष्वसमाम्नातेषु ॥ ६ ॥

असमाम्नाता ये बृहत्पृष्ठा एकाहास्तेष्वेवं पूर्वे सवने भवतः प्रातःसवनं माध्यन्दिनं च यथा निरुक्ते भवतः ॥

प्रतिकामं विश्वजिच्छिल्पः ॥ ७ ॥

कामं कामं प्रतिकामं, यो यो यं यं कामं कामयते स स विश्वजिच्छिल्पनाम्नैकाहेन यजेत ॥

तस्य समानं विश्वजिता प्रगाथेभ्यः ॥ ८ ॥

तस्य विश्वजिच्छिल्पस्य शस्त्रं विश्वजिता समानं। माध्यन्दिने सवने होत्रकाणां ये प्रगाथास्तेभ्य इति ॥

बृहस्पतिसवेनाज्यं। निष्केवल्यमरुत्वतीयौ च तृचौ ॥ ॥ ९ ॥

बृहस्पतिसवेन व्याख्यातौ ॥

ताभ्यां तु पूर्वे ऐकाहिके ॥ १० ॥

'इन्द्र मरुत्व इह पाहि सोमं' इत्येताभ्यां पूर्वे 'जनिष्ठा उग्र इन्द्रस्य नु वीर्याणि' इत्येते सूक्ते शंस्तव्ये ॥

होत्रका ऊर्ध्वं प्रगाथेभ्यः शिल्पान्यविकृतानि शंसेयुः ॥ ॥ ११ ॥

शिल्पानि वालखिल्यादीनि विहारन्यूङ्खादिरहितानि शंस्तव्यानि। तौ चेदग्निष्टोमौ यदि वोक्थ्येष्वहिपदास्वित्येतस्मिन् प्रकरणे यथोक्तं तथा तत्रापि शंसनीयानीत्यर्थः ॥

सामसूक्तानि च ॥ १२ ॥

शिल्पानन्तरं सामसूक्तानि च शंसनीयानि ॥

आद्यांस्तृचानहीनसूक्तानां ॥ १३ ॥

अहीनसूक्तानामाद्यांस्तृचांश्शंसेयुः ॥

अन्त्यानामैकाहिकानामुत्तमान् ॥ १४ ॥

तृचानिति शेषः ॥

समानं तृतीयसवनं बृहस्पतिसवेन। नाभानेदिष्ठस्त्वत्र पूर्वो वैश्वदेवात् तृचात् ॥ १५ ॥

बृहस्पतिसवे वैश्वदेवं सूक्तं 'स्वस्ति नो मिमीताम्' इत्ययं तृचः, तस्मात् पूर्वो नाभानेदिष्ठो भवति। नाभानेदिष्ठेति 'इदमित्था' इति सूक्तद्वयस्याख्या ॥

एवयामरुत्त्वाग्निमारुते मारुतात् ॥ १६ ॥

पूर्वो भवतीति शेषः। आग्निमारुते मारुतं सूक्तं 'प्रयन्तु वाजाः' इति तृचः, तस्मात् पूर्वमेवयामरुद्भवति ॥

तयोरुक्तः शस्योपायः ॥ १७ ॥ ॥ १० ॥

तयोरेवयामरुन्नाभानेदिष्ठयोः शस्योपाय उक्तः। एवयामरुतः पच्छः समासमुत्तमे पदे इति। नाभानेदिष्ठस्य प्रागुपोत्तमाया ये यज्ञेनेत्यादि ॥

इत्युत्तरषट्कस्य तृतीये दशमी कण्डिका ॥ ० ॥

यस्य पशवो नोपधरेरन्नन्यान्वाभिजनान्निनीत्सेत सोऽप्तो-र्यामेण यजेत ॥ १ ॥

यस्य पशवो नोपधरेरन् न तिष्ठेयुः न दृश्येयुरित्यर्थः । यस्यैवं पशवो भवन्ति स अप्तोर्यामेण एकाहेन यजेत । अथवा विद्यमानेष्वेव पशुषु अन्यान् पशूनभिजातान् अभितः स्थिता-नित्यर्थः । निनीत्सेत निदि कुत्सायामित्ययं धातुः अत्र प्राप्तौ वर्त्तते । सनन्तस्य रूपसिद्धिस्तु कथञ्चिद्द्रष्टव्या । अशक्या चेत् छान्दसो भवत्ययं शब्दः । अर्थस्त्वायमेव । एवं वा योजना अ-न्यान् अभिजनान् कुलीनानित्यर्थः । यस्तानाप्तुमिच्छेत् स वा-ऽनेन यजेत ॥

माध्यन्दिने शिल्पयोनिवर्जमुक्तो विश्वजिता ॥ २ ॥

अयमप्तोर्यामः सात्रिकेण विश्वजिता व्याख्यातः । तत्रायं विशेषः । विश्वजिति तु तौ चेदग्निष्टोमौ यदि वोक्थ्यौ स्वद्वि-पदासु स्तुवीरन्निति माध्यन्दिने शिल्पप्राप्तौ निमित्तद्वयमुक्तं तत्राग्निष्टोमत्वासम्भवादप्तोर्यामः स्यात् द्विपदास्तवनमेवात्र मा-ध्यन्दिने शिल्पप्राप्तेर्निमित्तं, तद्वर्जनार्थमत्र शिल्पग्रहणं । नित्यशिल्पत्वाद्विश्वजितः तदतिदेशादयं पर्युदासः कृतः शिल्प-ग्रहणेनेत्यर्थः । योनिग्रहणं च एवमेव द्रष्टव्यं । चतुर्विंशाति-देशाद्विश्वजितो निष्केवल्ये योनिशंसनं प्राप्तं, तच्च विश्वजित्येव होत्रकाणां विहितं । योनिशंसनं तस्योभयस्य पर्युदासार्थं,

योनिग्रहणमिति यत् पुनः सामान्यविहितक्रियमाणस्व-
योनिभावनिमित्तं तदत्र न प्रतिषिध्यते ॥

एकाहेन ॥ ३ ॥

एकाहेन वाऽयमप्तोर्यामो व्याख्यातः। एकाहशब्देनात्र ज्योतिष्टोमो गृह्यते ॥

गर्भकारश्चेत् स्तुवीरंस्तथैव स्तोत्रियानुरूपान् ॥ ४ ॥

शंसेदिति शेषः ॥

रथन्तरेणाग्रे ततो वैराजेन ततो रथन्तरेण ॥ ५ ॥

अनेन गर्भकारस्वरूपमुच्यते ॥

बृहद्वैराजाभ्यां वैवमेव ॥ ६ ॥

एवमेवेति गर्भकारमेवेत्यर्थः ॥

वामदेव्यशाक्वरे मैत्रावरुणस्य। नौधसवैरूपे ब्राह्मणा-
च्छंसिनः ॥ ७ ॥

रथन्तरपृष्ठपक्षे एते ॥

श्यैतवैरूपे वा ॥ ८ ॥

बृहत्पृष्ठे एते ॥

कालेयरैवते अच्छावाकस्य ॥ ९ ॥

सर्वत्र एवमेवेत्यनुवर्त्तते ॥

सामानन्तर्येण द्वौ द्वौ प्रगाथावगर्भकारं ॥ १० ॥

विश्वजिता अन्तरेण कद्दतस्येति सामप्रगाथानां पूर्वमेव प्रवेश उक्तः तन्निवृत्त्यर्थं सामानन्तर्येणेत्युक्तं। द्वौ द्वाविति नित्यसामप्रगाथावित्यर्थः ॥

अतिरात्रस्त्विह ॥ ११ ॥

ऊर्ध्वमाश्विनादिति वक्ष्यमाणेनैव वचनेन अतिरात्रत्वे सिद्धे इदं वचनं षोडशिनि चातिरात्र इत्येवमाद्यतिरात्रधर्मप्राप्त्यर्थं ॥

अद्वैपदोक्थ्यस्यैद्वैषुवतं तृतीयसवनं ॥ १२ ॥

विश्वजिदतिदेशादुत्तमेन पृष्ठ्याह्ना तृतीयसवनं प्राप्तं तस्यायमद्वैपदोक्थ्यनिमित्तोऽयमपवादः। अद्वैपदोक्थ्यस्य द्वैषुवतं तृतीयसवनं प्राप्तं ॥

ऊर्ध्वमाश्विनादतिरिक्तोक्थ्यानि ॥ १३ ॥

अतिरिक्तोक्थ्यानीति शस्त्रनाम। तानि शस्त्राणि होतुर्होत्रकाणां च ॥

जराबोधत द्विविड्ढि जरमाणः समिध्यसेऽग्निनेन्द्रेणाभात्यग्निः क्षेत्रस्य पतिना वयमिति परिधानीया युवं देवा क्रतुना पूर्व्येणेति याज्या ॥ १४ ॥

द्वे सूक्ते पच्छः । अर्वागयं द्वचस्तोकः शंसनविधिः पच्छोऽर्धर्चशः पङ्क्तित इति ॥

यदद्यकच्च वृत्रहन्नुदेदभिश्रुता मघमानो विश्वाभिः प्रातर्यावाणा क्षेत्रस्य पते मधुमन्तमूर्मिमिति परिधानीया युवां देवास्त्रय एकादशास इति याज्या॥ १५ ॥

प्रातर्यावाणेति सूक्तं परिधानीया च पच्छः ॥

तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसा नूनमश्विना त वां रथं मधुमतीरोषधीर्द्याव आप इति परिधानीयाऽपनाय्यं तदश्विना कृतं वामिति याज्या ॥ १६ ॥

'यदद्य कच्चिन्नान् यदिन्द्रेण स रथः' इत्येते ऋचौ, 'तं वां रथः' इति सूक्तं परिधानीया च पच्छः ॥

अतो देवा अवन्तु न इति स्तोत्रियानुरूपौ ॥ १७ ॥

'अतो देवा अवन्तु नः' इत्याद्याः षडृचः इत्यर्थः ॥

उत नोऽधियोगो अग्ना इति वानुरूपस्योत्तमा ॥ १८ ॥

'इदं विष्णुर्विचक्रमे' इत्येवमाद्याः पञ्चर्चो गृहीत्वा 'उत नोऽधियोगो अग्नाः' इत्येतां वा षष्ठीं कुर्यादित्यर्थः ॥

ईडे द्यावापृथिवी उभा उ नूनं दैव्या होतारा प्रथमा पुरोहितेति परिधानीयाऽयं वां भागो निहितो यजत्रेति याज्या ॥ ॥ १९ ॥

द्वे सूक्ते परिधानीया च पक्षः ॥

यदि नाधीयात् पुराणमोकः सख्यं शिवं वामिति चतस्रो याज्याः ॥ २० ॥

यद्येता ऋचो नाधीयात् तदा 'पुराणमोकः सख्यं शिवं वां' इति चतस्रो याज्या भवन्ति। एतासामध्ययने यत् किञ्चिद्व्रतमस्ति तच्चानुष्ठातुमशक्यमिति यदि नाधीयादित्युक्तं। एतच्च भाष्यकारवचनादवगम्यते। एतेषां चमसानामाश्विनत्वे एता याज्या भवन्ति। आग्नेयैन्द्रावैष्णवत्वे त्वेता याज्या भवन्ति 'यथा होतरस्मे वयं *स्तीर्णे बर्हिषि परो माचया' इति ॥

तद्वो गाय सुते सचा स्तोत्रमिन्द्राय गायत त्यमु वः सत्रासाहं सचा ते अनुकृष्टय इति वा स्तोत्रियानुरूपाः ॥ २१ ॥

---

* स्तीर्णं बर्हिरिति सं २ पु० पाठः।

एते द्वे लोहितयानुरूपयुगले जिह्माग्रमध्यमयोः प्रस्नयोर्भवतः ॥

अपरिमिताः परःसहस्रा दक्षिणाः ॥ २२ ॥

सहस्रादूर्ध्वं द्विसाहस्रादर्वाक् यथाकाममित्यर्थः ॥

श्वेतश्चाश्वतरीरथो होतुर्वेतुः ॥ २३ ॥　　॥ ११ ॥

अश्वतरीभिर्युक्तो रथो रजतादिभिरन्यैर्वा श्वेतीकृतोऽधिको होत्रे देयः । सर्वाभ्यः क्रतुदक्षिणाभ्यो होत्रेऽधिको दातव्य इत्यर्थः ॥

इत्युत्तरषट्कस्य तृतीये एकादशी कण्डिका ।

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां नवमोऽध्यायः ।

॥ ० ॥ उत्तरषट्के तृतीयोऽध्यायः ॥ ० ॥

---

॥ ॐ ॥



## ज्योतिर्ऋद्धिकामस्य ॥ १ ॥

ऋद्धिर्नाम पुत्रपश्वन्नाद्यादिभिर्वृद्धिः, तत्कामस्य ज्योतिर्नाम एकाहो विधीयते ॥

## नवसप्तदशः प्रजातिकामस्य ॥ २ ॥

नवसप्तदशो नाम एकाहः, तेन प्रजातिकामो यजेत । प्रजातिः प्रजासम्पत्तिः, तां कामयमानः ॥

## विषुवत्स्तोमो भ्रातृव्यवतः ॥ ३ ॥

विषुवत्स्तोम एकाहः ॥

## गौरभिजिच्च ॥ ४ ॥

गौरभिजिच्च द्वावेकाहौ भ्रातृव्यवतः । चशब्दबलादेकैक एव भ्रातृव्यवतो न संयुक्तौ ॥

## गौरुभयसामा सर्वस्तोमो बुभूषतः ॥ ५ ॥

अयमपरो गोसंज्ञक उच्यते । अनेन विशेषणेन उभय-

सामा सर्वस्तोमस्य तेन च बुभूषन् भवितुमिच्छन् महत्त्वमिच्छन्नित्यर्थः॥

आयुर्दीर्घव्याधेः॥ ६॥

यस्य दीर्घकालमनुवृत्तो व्याधिः स दीर्घव्याधिः। आयुरित्येकाहनाम॥

पशुकामस्य विश्वजित्। ब्रह्मवर्चसकामवीर्यकामप्रजाकामप्रतिष्ठाकामानां पृष्ठ्याद्यान्यादितः पृथक्कामैः॥ ७॥

एतेषां चतुर्णां कामानां चत्वार एकाहाः, एकैकस्य एकैकं। एतेषां यथासङ्ख्येन प्रकृतः पृष्ठः स्यादितश्चत्वार्यहानि पृथक्कामैरित्यनेन वचनेन कामानां यथासङ्ख्यं लभ्यते॥

इत्यतिरात्राः॥ ८॥

ज्योतिरादीनामेवायं संस्थाविधिर्न पूर्वेषां। पूर्वेषां तु क्वचित् क्वचित् संस्था विहितैव॥

तेषामाद्यास्त्रय एकाहिकसंस्थाः॥ ९॥

ज्योतिःसंज्ञकत्वादस्याभिप्लविकस्य प्रथमस्याह्नस्तेनास्य ज्योतिष्टोमातिदेशः प्राप्नुयात्। विषुवत्स्तोमस्य च विषुवता कथञ्चित् प्राप्नुयात्, तदाशङ्कानिवृत्त्यर्थं त्रयाणामेकाहिकसंस्थत्वमुक्तं॥

इत्येकाहाः ॥ १० ॥

ये एतेऽनुक्रान्ता नवमेऽध्याये क्रतव एवमन्तास्ते एकाह-संज्ञा वेदितव्याः। 'अथाहीनाः' इत्यनेनैव पूर्वेषामेकाहत्वे सिद्धे एकाहवचनं वरुणप्रघासस्थाने द्व्यहः साकमेधस्थाने त्र्यह-इत्येवमादीनां द्व्यहत्र्यहाणामार्त्विज्यनिषेधादयोऽहीनधर्मा मा भूवन्नित्येवमर्थं ॥

अथाहीनाः ॥ ११ ॥

अथानन्तरमहीना वक्ष्यन्त इत्यर्थः। ते च एवंप्रकारा इत्याह ॥

द्व्यहप्रभृतयो द्वादशरात्रपरार्ध्याः अग्निष्टोमादयः अति-रात्रान्ताः मासापवर्गाः अपरिमाणदीक्षाः ॥ १२ ॥

उपसदो द्वादश नियताः, द्विरात्रादिषु सुत्याहानि द्व्यहा-दीन्येव, मासस्यावशिष्टानि षोडश परार्ध्यादानीति तत्प्रभृतो-न्येकादशान्तान्यहानि, तेषां प्रातिलोम्येन दीक्षाहानि विज्ञे-यानि*। एतदुक्तं भवति। यथाक्रमेण द्विरात्रादिषु द्वादश-पर्यन्तेषु दीक्षाहानीत्यर्थः। एवमनेनैव न्यायेन द्वादशाहे मासापवर्गे प्राप्ते वचनात् षट्त्रिंशदहत्वं भवति। असत्यप-परिमाणदीक्षतैव स्यात्, न संवत्सरमित्येवमर्थं ॥

---

* एकोनान्यहान्यावड्भ्योऽवकल्प्यन्ते। इत्यधिकोद्धृत पाठो ऽत्रवर्त्तते।

एकाहांश्चैतरेयिणः ॥ १३ ॥

ऐतरेयिण आचार्या एकाहानपि मासापवर्गानपरिमा-णदीक्षानामनन्ति ॥

साहस्रांश्च दक्षिणाः ॥ १४ ॥

ते एव आचार्या एकाहेषु सर्वेषु सहस्रदक्षिणत्वमामनन्ति ॥

अतिरात्रांश्च सर्वशः ॥ १५ ॥

त एवाचार्याः सर्वानेकाहानतिरात्रसंस्थानाहुः ॥

तत्राह्नां संख्याः संख्याताः षडहान्ता अभिप्लवात् ॥ १६ ॥

तत्राहीनप्रकरणे या अह्नां सङ्ख्याः सङ्ख्याताः षडहपर्य्य-न्तास्ता अभिप्लवषडहा वेदितव्याः। षडहान्तानामहीनाना-माभिप्लविकान्यहान्यादित आरभ्य यावदर्थं प्रकृतय इत्यर्थः। सङ्ख्याता इतिवचनमसमाम्नातव्यावृत्त्यर्थं। तेन समाम्नाता-नामभिप्लवः प्रकृतिः, असमाम्नातानां पृष्ठ्यः प्रकृतिरिति साधितं भवति ॥

अतिरात्रस्त्वन्त्यः संख्यापूरणे गृहीतानां ॥ १७ ॥

अतिरात्रान्ता इत्युक्तं, तदतिरात्रत्वं गृहीतैरेवाहोभिर्यदा

सङ्ख्यापूरणं भवति तदा गृहीतानामेव यदन्यमहस्तदेवातिरात्रसंस्थं कर्त्तव्यं नान्यथेति। यत्र तु पुनर्गृहीतैः सङ्ख्यापूरणं नास्ति तत्रैवमित्याह॥

हानौ वैश्वानरोऽधिकः॥ १८॥ ॥ १॥

यत्र गृहीतैरहोभिः सङ्ख्याहानिर्भवति तत्र वैश्वानरोऽधिकः। तत्र वैश्वानरोऽन्ते कर्त्तव्यः। वैश्वानरशब्देन प्रकृतोऽतिरात्रो गृह्यते। हानावेवातिरात्रान्तत्वमहीनानामिति शेषः॥

इत्युत्तरषट्कस्य चतुर्थे प्रथमा कण्डिका॥ ०॥

---

आङ्गिरसं स्वर्गकामः॥ १॥

इदानीमहीना उच्यन्ते। आङ्गिरसो नामायमहीनः। तेन स्वर्गकामो यजेत॥

यो वा पण्यो हीनोऽनप्रेप्सुः स्यात्॥ २॥

यः पुरुषः पूर्वं पुण्येप्सुः सुखभागित्यर्थः। ततः पश्चात्

सुखभाक्त्वाद्भ्रष्टो हीनः, स पुनरपि तमेव भावं प्राप्तुमिच्छन् अनुप्रेप्सुरित्युच्यते। स वा अनेनाङ्गिरसेन यजेत॥

चैत्ररथमन्नाद्यकामः। कापिवनं स्वर्गकाम इति द्व्यहाः॥ ॥३॥

इत्येते त्रयो द्व्यहाः॥

प्रथमस्य उत्तरस्याह्नस्तार्त्तीयं तृतीयसवनं॥४॥

त्रयाणां प्रथमस्याङ्गिरसस्य द्वितीयेऽहनि यत् तृतीयसवनं तृतीयस्याभिप्लविकस्य यत् तृतीयं सवनं तेनातिदिष्टमित्यर्थः। द्वैतीयस्यायमपवादः॥

त्वं हि चैतवदिति चाज्यं॥५॥

अङ्गिरसस्य द्वितीयेऽहन्येतदाज्यं भवति। द्व्यहा उक्ताः॥

गर्गत्रिरात्रं स्वर्गकामः॥६॥

गर्गत्रिरात्रमित्यहीननाम॥

तस्य मध्यमस्याह्नो वामदेव्यं पृष्ठं। विभ्रो विभ्रोयमग्निष्टोमसाम॥७॥

मध्यमस्यैवाह्नः॥

वारवन्तीयमुत्तमे ॥ ८ ॥

अग्निष्टोमसामेति शेषः। गर्गत्रिरात्रस्योत्तमेऽहनीत्यर्थः ॥

त्वमग्ने वसूंरिति चाज्यं ॥ ९ ॥

उत्तम एवाहनीत्यर्थः ॥

बैदत्रिरात्रं राज्यकामः ॥ १० ॥

इदमप्यहीननाम ॥

सर्वे त्रिवृतोऽतिरात्राः ॥ ११ ॥

बैदत्रिरात्रे सर्वाण्यहानि त्रिवृन्त्यतिरात्रसंस्थानि च भवन्ति ॥

छन्दोमपवमानान्तर्वसू पशुकामः ॥ १२ ॥

छन्दोमपवमानस्य अन्तर्वसुस्य द्वावहीनौ। तयोरन्यतरेण पशुकामो यजेत ॥

पराकच्छन्दोमपराकौ स्वर्गकामः ॥ १३ ॥

पराकच्छन्दोमः पराकस्य तयोरन्यतरेणेत्यर्थः ॥

इति त्र्यहाः ॥ १४ ॥

इत्येते षट् त्र्यहा उक्ताः ॥

गर्गत्रिरात्रशस्याः ॥ १५ ॥

एषामनुक्तशस्या ये ते गर्गत्रिरात्रशस्या इत्यर्थः ॥

अत्रेश्चतुर्वीरं वीरकामः ॥ १६ ॥

अत्रेश्चतुर्वीरमित्यहीननाम। वीरकामः पुत्रकाम इत्यर्थः ॥

तस्य वीरवन्त्याज्यानि ॥ १७ ॥

तस्यात्रेश्चतुर्वीरस्य चतुर्ष्वहःसु यान्याज्यानि तानि वीरशब्दयुक्तानि कर्त्तव्यानि। प्रथमेऽहनि पूर्वप्राप्तस्य तोकशब्दवत्त्वात् तदेव वीरवत्त्वमपि स्यादित्युत्तरेषु वीरवन्ति विदधाति ॥

यमग्ने वाजसातमेति द्वितीयेऽहन्याज्यं। अग्नायो मर्त्य इति तृतीये। अग्निं नर इति चतुर्थे ॥ १८ ॥

प्रकृतत्वादेवास्य चतुर्वीरत्वसम्प्रत्यये सिद्धे पुनस्तत्प्रापणार्थं तस्येति वचनं ॥

षोडशिमच्चतुर्थं ॥ १९ ॥

षोडशिमच्चतुर्थमित्यस्य विधेः सर्वाहीनसम्प्रत्ययार्थं। सर्वेष्वहीनेषु यच्चतुर्थमहस्तत् षोडशिमच्च कर्त्तव्यमित्यर्थः ॥

तस्याभि त्वा वृषभासुत इति गायत्रीषु रथन्तरं पृष्ठं॥ ॥२०॥

तस्याचेश्चतुर्वीरस्यैवायुजोर्यत् रथन्तरं तद्गायत्रीषु रथन्तरं कर्त्तव्यं। इदमपि तस्ययहणं पूर्वसूत्रस्य सर्वार्थत्वायैव॥

अनुष्टुब्बृहतीषु बृहत्॥२१॥

तस्यैव चतुर्वीरस्यैवायुजोर्यत् बृहत्तदनुष्टुप्सु बृहतीषु वा कर्त्तव्यं। अनुष्टुब्बृहतीनामृचामनुविधानादेव ताः समाम्नाता इति गम्यते॥

चतुर्थं त्वं बलस्य गोमतो यज्जायथा अपूर्व्येति वा॥२२॥

अत्रेश्चतुर्थमहर्यस्मिन् यद्बृहत्तत् 'त्वं बलस्य गोमतः' इत्यासु वा 'यज्जायथा अपूर्व्या' इत्यासु वा नियमेन कर्त्तव्यं॥

जामदग्न्यं पुष्टिकामः॥२३॥

जामदग्न्यमित्यहीननाम॥

तस्य पुरोडाशिन्य उपसदः॥२४॥

तस्य जामदग्न्यस्य या उपसदस्ताः पुरोडाशिन्यो भवन्ति, नाज्यहविषः। उपसदां पुरोडाशत्वविधानात्तासां तत्र होमपक्षे दर्विहोमत्वमप्यस्तीतिज्ञापनार्थं॥

वैश्वामित्रं भ्रातृव्यवान् प्रजाकामो वसिष्ठसंसर्पं ॥ २५ ॥

वैश्वामित्रं सवसिष्ठसंसर्पमित्यहीननाम ॥

इति चतुरहाः ॥ २६ ॥

इत्येते चत्वारश्चतुरहा अनुक्रान्ताः ॥

सार्वसेनं पशुकामः। दैवं भ्रातृव्यवान्। पञ्चशारदीयं पशुकामः। व्रतवन्तमायुष्कामः। वावरं वाक्प्रवदिषुः ॥ ॥ २७ ॥

वाक्प्रवदिषुः वाचः प्रवदिषुरित्यर्थः ॥

इति पञ्च पञ्चरात्राः ॥ २८ ॥

इत्येते सार्वसेनदैवपञ्चशारदीयव्रतवद्वावरमिति पञ्च पञ्चरात्रा उक्ताः। पञ्चग्रहणमेतावन्त एव पञ्चरात्राः नान्ये समाम्नाता अपीति ॥

पञ्चशारदीयस्य तु सप्तदशोक्षाण ऐन्द्रामारुता मारुतीभिः सह वत्सतरीभिः सप्तदशभिः सप्तदशभिः पञ्चवर्षपर्यग्निकृताः सवनीयाः ॥ २९ ॥

पञ्चभिर्वर्षैः समाप्यत इति पञ्चशारदीयः, तस्यायं विशेषः ऐन्द्रामारुताः सप्तदशोक्षाणः सवनीया भवन्ति। इन्द्रश्च मरु-

च येषां देवतानां ते ऐन्द्रामारुताः, उक्षाणो गोवृषाः। तेषामयं संस्कारो यागकालात् पुरस्तात् पञ्चवर्षाणि प्रतिवर्षं मारुतिभिः वत्सतरीभिः सह पर्यग्निकर्त्तव्याः त उक्षाणः। मरुतो देवता आसामिति मारुत्यः। तास्र सप्तदश, आदावेव पञ्चशारदीयेन यक्ष्य इति सङ्कल्प्य ततः पशुबन्धविधानेनोक्षण उपाकृत्यैन्द्रमरुद्भ्यां वत्सतरीस्र मरुद्भ्य उपाकृत्य पर्यग्निकरणान्ते वत्सतरीरालभन्ते। उक्षण उत्सृजन्त्येवं पञ्चवर्षाणि वर्षे वर्षे कर्त्तव्यं। त एवास्मिन् पञ्चशारदीये पञ्चरात्रे सवनीया भवन्ति॥

तेषां त्रींस्त्रींश्चतुर्ष्वहःस्वालभेरन्। परिशिष्टान् पञ्च पञ्चमे ॥ ३० ॥

पञ्चग्रहणं तेषु नष्टेषु वा मृतेषु वा शाखान्तरोक्तेन विधानेन सप्तदश सम्पाद्य पूर्वेष्वहःसु त्रींस्त्रीनालभ्य पञ्चमे पञ्चालभेतेत्येवमर्थं। इतरथा नष्टेषु मृतेषु वा यथासम्भवमालम्भः स्यात्, तन्निवृत्त्यर्थं पञ्चग्रहणं॥

व्रतवतस्तु तृतीयस्याह्नः स्थाने महाव्रतं॥ ३१ ॥

व्रतवतः पञ्चरात्रस्यायं विशेषः। आभिप्लविकस्य पञ्चाहस्य तृतीयमहरुद्धृत्य तत्स्थाने महाव्रतं कृत्वाऽन्यत् पूर्ववत् कर्त्तव्यं॥

पृष्ठ्यपञ्चाच उत्तमः ॥ ३२ ॥ ॥ २ ॥

आभिप्लविकस्यायमपवादः ॥

इत्युत्तरषट्कस्य चतुर्थे द्वितीया कण्डिका ॥ • ॥

ऋतूनां षडहं प्रतिष्ठाकामः ॥ १ ॥

ऋतूनां षडहमित्यहीननाम ॥

पृष्ठ्यः समूल्हो व्यूल्हो वा ॥ २ ॥

अभिप्लवापवादः। पृष्ठ्य इति विशेषवचनेऽपि व्यूल्हसमूल्हविकल्पे सिद्धे यदुभयग्रहणं तदविशेषवचने समूल्ह एव स्यात् न व्यूल्ह इत्येवमर्थं ॥

पृष्ठ्यावलम्बं पशुकामः ॥ ३ ॥

पृष्ठ्यावलम्बस्याहान्युच्यन्ते ॥

पृष्ठ्यपञ्चाहोऽभ्यासक्तो विश्वजिच्च ॥ ४ ॥

पृष्ठ्यपञ्चाहोऽभ्यासक्तः विश्वजिच्च षष्ठमहः। अभ्यासक्त-

स्वरूपमुच्यते। प्रथमस्याह्नो द्वे सवने त्रिवृत्स्तोमे भवतः। पञ्चदश तृतीयसवनं। द्वितीयस्य पञ्चदशे द्वे सवने। सप्तदश तृतीयसवनं। तृतीयस्य सप्तदशे द्वे सवने। एकविंशस्तृतीयसवनं, एवमुत्तरेष्वपि योज्यं। एवमभ्यासङ्गो भवति॥

सम्भार्यमायुष्कामः। पृष्ठ्यं त्र्यहः पूर्वोऽभिप्लवत्र्यहस्य॥ ५॥

अभिप्लवत्र्यहस्य पूर्वं एव द्वयोस्त्र्यहयोः सम्भरणात् सम्भार्यनामाऽहीनो भवति। एते त्रयः षड्रात्रा उक्ताः॥

ऋषिसप्तरात्रमृद्धिकामः। प्राजापत्यं प्रजाकामः। छन्दोमपवमानव्रतं पशुकामः। जामदग्न्यमन्नाद्यकामः। एते चत्वारः *पृष्ठ्यो महाव्रतञ्च॥ ६॥

एते चत्वारः सप्तरात्रा उक्ताः ऋषिसप्तरात्रप्राजापत्यछन्दोमपवमानव्रतजामदग्न्याः, तेषामियमहःक्लृप्तिः॥

पृष्ठ्यो महाव्रतञ्च॥ ७॥

अविशेषवचनात् समूढः पृष्ठ्यो भवति॥

व्रतं तु स्वस्तोमं प्रथमे॥ ८॥

यत् प्रथमे सप्तरात्रे महाव्रतं तत् स्वस्तोमं भवति। पञ्चविंशस्तोममित्यर्थः॥

---

* पृष्ठ्य इत्यादि सो० मू० पु० नास्ति।

सप्तदशं द्वितीये ॥ ९ ॥

द्वितीये सप्तरात्रे महाव्रतं सप्तदशस्तोमं भवति ॥

छन्दोमपवमानं तृतीये ॥ १० ॥

छन्दोमशब्देनात्र तत्सम्बन्धिनः स्तोमा उच्यन्ते, चतुर्विंशश्चतुश्चत्वारिंशाष्टाचत्वारिंशाः तृतीये सप्तरात्रे यन्महाव्रतं तस्य पवमानेषु यथाक्रमं भवति। शेषः स्वस्तोम एव ॥

चतुर्विंशो बहिष्पवमानः सप्तदशः शेषश्चतुर्थे ॥ ११ ॥

चतुर्थे सप्तरात्रे यन्महाव्रतं तस्य बहिष्पवमानः चतुर्विंशस्तोमो भवति। शेषः सप्तदशस्तोम इति ॥

ऐन्द्रमत्यन्याः प्रजा बुभूषन् ॥ १२ ॥

यः अन्याः प्रजाः अतीत्य वर्त्तनमिच्छेत् सः अनेनेन्द्रेण यजेत ॥

त्रिकद्रुका अभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमः ॥ १३ ॥

त्रिकद्रुका इत्यभिप्लवत्र्यहः पूर्व उच्यते। सर्वस्तोम इत्यनेन गोरुभयसामा सर्वस्तोम इत्यत्र गृह्यते। ऐन्द्रस्येयमहःक्लृप्तिः ॥

जनकसप्तरात्रमृद्धिकामः। अभिप्लवचतुरहोविश्वजिन्महाव्रतं ज्योतिष्टोमः॥ १४॥

जनकसप्तरात्रस्याह्नः क्लृप्तिरुच्यते। अभिप्लवचतुरहोविश्वजिन्महाव्रतं ज्योतिष्टोम इति॥

पृष्ठ्यस्तोमो विश्वजिच्च पशुकामस्य सप्तमः॥ १५॥

सप्तमः सप्तरात्र उच्यते। तस्य नाम शाखान्तरादवगन्तव्यं। अहःक्लृप्तिस्तावदुच्यते। पृष्ठ्य एव षडहः केवलं बृहद्रथन्तरपृष्ठः पृष्ठस्तोम उच्यते। विश्वजिच्च सप्तमं भवति। सप्तममहर्भवति। अनेन पशुकामो यजेत। एते सप्तरात्राः॥

देवत्वमोप्सतोऽष्टरात्रः॥ १६॥

देवत्वं प्राप्नुमिच्छतोऽष्टरात्रो भवति। अस्यापि नाम अन्यतोऽवगन्तव्यं॥

पृष्ठ्यो महाव्रतं ज्योतिष्टोमः॥ १७॥

इयमस्याहःक्लृप्तिः। एक एवायमष्टरात्र उक्तः॥

नवरात्रमायुष्कामः। पृष्ठ्यस्त्रिकद्रुकाश्च॥ १८॥

पूर्वस्याहःक्लृप्तिरियं॥

त्रिकद्रुकाः पृष्ठ्यावलम्ब इति पशुकामस्य ॥ १९ ॥

त्रिकद्रुका उक्ताः, पृष्ठ्यावलम्बो नाम षडह उक्तः,यस्य यान्यहानि तानीह भवन्तीत्यर्थः ॥

इति नवरात्रौ ॥ २० ॥

द्वावेतौ नवरात्रौ। अनयोरपि नामनी शास्त्रान्तरादवगन्तव्ये ॥

त्रिककुबध्यर्द्धः पृष्ठ्यः। महात्रिककुप्व्यूल्हो नवरात्रः। समूल्हत्रिककुप्समूल्हः ॥ २१ ॥

नवरात्र इत्यनुवर्त्तते ॥

चतुष्टोमत्रिककुबध्यर्द्धोऽभिप्लवः। एतैश्चतुर्भिः स्वानां श्रैष्ठ्यकामो यजेत ॥ २२ ॥

एतैस्त्रिककुम्महात्रिककुप्समूल्हत्रिककुप्चतुष्टोमत्रिककुब्भिः स्वानां श्रैष्ठ्यकामो यजेत। एतेषां दशमो वैश्वानर एव भवति। कामश्चैतेषामेकैकेन समृध्यते ॥

कुसुरुबिन्दुमृद्धिकामः। त्रयाणां पृष्ठ्याक्रामेकैकं त्रिः ॥
॥ २३ ॥

कुसुरुबिन्दोरियमहःक्लृप्तिः। अत्रापि दशमो वैश्वानर एव ॥

छन्दोमवन्तं पशुकामः। पृष्ठ्यावलम्बस्य प्राग्विश्वजितश्छ-न्दोमा दशमश्चाहः ॥ २४ ॥

छन्दोमवत इमान्यहानि पृष्ठ्यावलम्बस्य षडहस्य यान्यहानि तेषां विश्वजितः प्राक् चयश्छन्दोमाः अविवाक्यं चैकं ततो विश्वजिद्दशममहर्भवति ॥

पुराऽभिचरन् ॥ २५ ॥

पूर्नाम दशरात्रः, तस्याहानि ॥

ज्योतिर्गामभितो गौरभिजितं विश्वजिदायुषं ॥ २६ ॥

ज्योतिर्नामैकाहः स गोनामानमभितः उभयतः कर्त्तव्यः। गोश्चाभिजितमभितः विश्वजिदायुषमभितः कर्त्तव्यः। वैश्वानरो दशममहर्भवति ॥

अललोपिशङ्गं श्रीकामः ॥ २७ ॥

अललीपिशङ्गस्य एतान्यहानि ॥

अभिप्लवत्र्यहः पूर्वस्तिः ॥ २८ ॥

त्र्यहं समाप्य आवर्त्तयितव्यं ॥

इति दशरात्राः ॥ २८ ॥　　॥ ३ ॥

इत्येतेऽष्टौ दशरात्रा उक्ताः ॥

इत्युत्तरषट्कस्य चतुर्थे तृतीया कण्डिका ॥ ० ॥

पौण्डरीकमृद्धिकामः। पृष्ठ्यस्तोमश्छन्दोमा गोतमस्तोमो विश्वजित्। व्यूल्हो नवरात्रो महाव्रतं वैश्वानर इति वा। ॥ १ ॥

उभयथा पौण्डरीको भवति ॥

अथ सम्भार्यौ ॥ २ ॥

एतयोः संभार्ययोः नाम्नोरन्यतः कामोऽवगन्तव्यः। अहः-क्लृप्तिरुच्यते ॥

अतिरात्रश्चतुर्विंशमध्यर्द्धोऽभिप्लवः पृष्ठ्यो वा ॥ ३ ॥

उभयोः संभार्ययोरतिरात्रश्चतुर्विंशे साधारणेऽध्यर्धोऽभि-प्लवः पूर्वस्यैव। अध्यर्धः पृष्ठ्य उत्तरस्यैव ॥

इन्द्रवज्रं भ्रातृव्यवान् ॥ ४ ॥

इन्द्रवज्रस्याहःक्लृप्तिः ॥

पृष्ठ्यस्याद्ये अहनी व्यत्यासमानवरात्रात् ॥ ५ ॥

पृष्ठ्यस्यादितो द्वे अहनी व्यत्यस्य कर्त्तव्ये। यावन्नवाहानि भवन्ति ॥

ततो महाव्रतं ॥ ६ ॥ ॥ ४ ॥

ततो वैश्वानरः। एवं पञ्चप्रकारा एकादशरात्रा उक्ताः ॥

इत्युत्तरषट्कस्य चतुर्थे चतुर्थी कण्डिका ॥ ० ॥

अथ द्वादशाहा भवेयुः ॥ १ ॥

अथानन्तरं ये वक्ष्यन्ते ते द्वादशाहाः भवेयुः, भवन्तीत्यर्थः ॥

सत्राणि भवेयुः। अहीना वा ॥ २ ॥

ते द्वादशाहा, सत्राणि भवेयुः, अहीना वा भवेयुः। य-

दा सत्राणि तदोभयतोऽतिरात्रत्वं बहुयजमानत्वमित्यादयो धर्मा भवन्ति। यदा पुनरहीनास्तदाऽग्निष्टोमादित्वं मासापवर्गत्वं महाव्रतसहितेष्वपि अपरिमाणदीक्षत्वमित्येवमादयो धर्मा भवन्तीति द्वैविध्यवचनं॥

उक्तो दशरात्रः॥ ३॥

उक्तवचनमत्रातिरिच्यते, अन्यत्रोक्तवचनमन्तरेणातिदेशदर्शनात्। यथा पृष्ठ्यः समूढो व्यूढो वेत्येते चत्वारः, 'पृष्ठ्यो महाव्रतं च' इति एवमादिषु। तेनोक्तवचनस्य प्रयोजनवत् कर्त्तव्यमिदमुच्यते, उक्तो दशरात्र इत्येतदुक्तं भवति। द्वादशाहावयवभूतानि यानि दशाहानि तानि तत्रैव पुञ्जीकृत्य दशरात्र इति वचनमत्रत्योक्तानि। तस्यैव वचनस्य द्वादशाहार्थतैव प्रयोजनमिति, अत्रोक्तिस्तु पञ्चविंशतेरह्नां व्युत्पत्तिभूमित्वात् दशरात्रसंज्ञितानाञ्च तदन्तर्भावात्, तेन तत्रैव पुञ्जीकरणं कृत्य दशरात्रं नाम च सौकर्यात् कृतमिति मन्तव्यं। अतो द्वादशाहा भवेयुः। प्रकृतिर्दशरात्र इत्यनेनाभिप्रायेण उक्तवचनं कृतवानाचार्यः। तथा च श्रुतौ छन्दोगानां बहुशः श्रूयते 'द्वादशाहस्य दशाहानि' इति। स च दशरात्रो द्विविध उक्तः॥

समूल्हो व्यूल्हो वा॥ ४॥

समूल्हो व्यूल्हश्च, अनेन प्रकारेण द्वौ द्वादशाहावुक्तौ,

समूल्हो व्यूल्हस्य तत्र द्वादशाहोऽहर्गणानां प्रकृतिरिति न्यायात् सर्वाहर्गणानां प्रकृतिरित्यवगतः। तत्र तावन्तरेण व्यूल्हो दशरात्रः, एषा प्रकृतिः सत्राणां इति विशेषग्रहणात् सत्राणां व्यूल्हो हीनानां समूल्ह इत्यवसितं भवति॥

तमभितोऽतिरात्रौ॥ ५॥

तमभितोऽतिरात्राविति। तं द्विविधं दशरात्रं अभितोऽतिरात्रौ प्रकृतौ भवत इत्यर्थः। एवं व्यूल्हः समूल्हस्य द्वादशाहावित्याह॥

सम्भार्ययोर्वा वैश्वानरमुपदध्यात्॥ ६॥

यौ संभार्यनामकावेकादशरात्रौ, तयोर्वैश्वानरमधिकं कृत्वा द्वौ द्वादशाहावन्तौ भवतः। 'अहीनेषु हानौ वैश्वानरोऽधिकः' इति परिभाषयैव प्राप्ता एव वैश्वानरेतिवचनमिदं सत्रपक्षेऽपि वैश्वानरस्य प्रापणार्थं॥

संवत्सरप्रवल्हं श्रीकामः। अतिरात्रश्चतुर्विंशं विषुवद्वजा नवरात्रो महाव्रतं॥ ७॥

संवत्सरस्य प्रवल्हस्याहानीमानि। अयं द्वादशाहो हीन एव, श्रीकाम इत्येकवचनेन उपदेशात् परिभाषाप्राप्तवैश्वानरोपजीवनाच्च॥

## अथ भरतद्वादशाहः ॥ ८ ॥

अथशब्दो हीनकैवल्यबुद्धिविच्छेदार्थः । सत्राहीनसाधारणाश्चत्वारो द्वादशाहा उक्ताः । तत एको हीन उक्तः । उत्तमश्च साधारण एव अतस्तद्विच्छेदार्थमयमथशब्दः प्रयुक्तः॥

## इममेवैकाहं पृथक्संस्थाभिरुपेयुः ॥ ९ ॥

भरतद्वादशाहस्याहःक्लृप्तिः । इममेव प्रकृतैकाहं पृथग्भूताभिः संस्थाभिर्युक्तं द्वादशकृत्वः कुर्युः । विकृतिषु प्रकृतेः संनिहितत्वादिदमुच्यते । उत्तरत्र संस्थाविधानादेव संस्थासम्बन्धे सिद्धे पृथक्संस्थाभिरिति वचनं वचनादेव स्थाननियमो नातिदेशादिति ज्ञापनार्थं ॥

## अतिरात्रमग्रेऽथाग्निष्टोममथाष्टा उक्थ्यानथाग्निष्टोममथातिरात्रं ॥ १० ॥

द्वादशाहसामान्येन प्राप्तानां संस्थानां विधीयमानभरतद्वादशाहे अयमपवादः ॥

## इति द्वादशाहः ॥ ११ ॥

इत्येवंप्रकारा द्वादशाहा आम्नाताश्च वेदितव्याः ॥

तैरात्मना बुभूषन्तः प्रजया पशुभिः प्रजनयिष्यमाणाः स्वर्गं लोकमेष्यन्तः स्वानां श्रैष्ठ्यमैच्छन्त उपेयुर्वा यजेत वा ॥ ॥ १२ ॥

संवत्सरप्रवल्हस्य केवलाहीनत्वात् कामनापेक्षत्वाच्च इतरेषां पञ्चानामेवात्र ग्रहणं । आत्मना बुभूषन्त आत्मना भवितुमिच्छन्त आत्मकैवल्यमिच्छन्तः इत्यर्थः । चत्वार एते कामाः पञ्च द्वादशाहाः, तेनानन्तर्ययोगो न भवति, सर्वे सर्वैरधिक्रियेरन्ननियमेनेत्यर्थः । तैर्यजेत वा उपेयुरिति संबधः । उपेयुरिति सत्त्रलिङ्गं । यजेतेत्यहीनलिङ्गं ।

इति पृथक्त्वं ॥ १३ ॥

इत्येतदेव सत्राहीनयोः पृथक्त्वं भेद इत्यर्थः । सर्वत्रापि यदुपेयुशब्दचोदितं भवति तत् सत्त्रमेव । तथा यजेतेत्येकवचनचोदितं तदहीन एव । एतदुक्तं भवति । सत्राहीनत्वे बहुयजमानैकयजमानत्वादिकृत एव भेदो न शस्त्रभेदकृत इति ॥

अथ सामान्यं ॥ १४ ॥

अथेदानीं सत्राहीनयोरसमाम्नातयोः साधारणो विधिरुच्यत इत्यर्थः ।

अपरिमितत्वाद्धर्मस्य प्रदेशान् वक्ष्यामः ॥ १५ ॥

धर्मप्रदेशा नात्र प्रथमसमाम्नातकर्माण्युच्यन्ते । प्रदिश्यन्ते

ज्ञायन्ते यैरुपायैरसमाम्नातान्यपि कर्माणि तदुपायाः प्रदेशा उच्यन्ते। ते च विध्येकदेशभूतत्वात् प्रदेशशब्दवाच्याः। एतदुक्तं भवति। कर्मणां समाम्नातानामसमाम्नातानां च अपरिमेयत्वात् तेषामेकैकशो वक्तुमशक्यत्वात् सामान्येन तज्ज्ञानोपायान् विध्येकदेशभूतान् वक्ष्याम इति। के तदुपायाः, कथं वा तदुपायैः असमाम्नातानां कर्मणां ज्ञानं सम्भवति इति तमुपायं उत्तरेण सूत्रेण दर्शयति

यथा हि परिमिता वर्णा अपरिमितां वाचो गतिमाप्नुवन्त्येवमेव परिमितानामङ्गानामपरिमिताः संघाताः ॥ १६ ॥

यथा अकारादयः वर्णाः त्रिषष्टिसङ्ख्यादिपरिमिता एव स्थानकरणानुप्रदानादिभिर्गुणैः सम्यगुच्चारणाय शिक्षिताः सन्तः सर्वस्याः पदवाक्यभूताया अपरिमिताया वाच उच्चारणाय शक्तिं ज्ञानं च उत्पादयन्ति एवं पञ्चविंशतिरङ्गानि परिमितान्येव सम्यक् परिज्ञातानि च भवन्ति, तैरेवापरिमिताः संघाताः समाम्नाताश्च कर्तव्यतया चोच्यन्त इति। पदावयवभूतवर्णज्ञानेन पदवाक्यज्ञानवत् संघातावयवभूताङ्गज्ञानेन संघातज्ञानमेव उपपद्यत इति दृष्टान्तः। एतमेवार्थमुत्तरसूत्रं स्पष्टयति।

सिद्धानि त्वङ्गानि तेषां यः कश्च समाहारः सिद्धमेव शास्त्रं ॥ १७ ॥

यथा हि परिमिता वर्णाः सर्वां वाचो गतिमाप्नुवन्ति' एव मत्रापि सिद्धानि परिज्ञातान्यङ्गानि। तत्र यो यः संघातः समाम्नातः असमाम्नातश्च स संघातः पञ्चविंशतेरङ्गामेव नान्येषां, अतः संघातशस्त्रमपि सिद्धमेव, समुदायिभ्यः अनन्यत्वात् समुदायस्येति सिद्धम्।

अङ्गां तु संशये स्तोमपृष्ठसंस्थाभिरेके व्यवस्थां ॥ १८ ॥

समाम्नातेष्वसमाम्नातेषु च संघातेष्वहर्द्वारेण शस्त्रज्ञानमित्युक्तं। इदानीं येष्वसमाम्नातेष्वहरेव न ज्ञायते इदमेवेति। तत्राङ्गां संशये सति एवमेके आचार्या अहर्व्यवस्थामाहुः निश्चयमिच्छन्ति स्तोमपृष्ठसंस्थाभिर्लिङ्गभूतैरङ्गामुत्पत्तौ त्रिवृदादीनां स्तोमानां अन्यतमेन रथन्तरादीनां पृष्ठानामन्यतमेन अग्निष्टोमादीनां संस्थानामन्यतमयागसंयुक्तान्येवोत्पद्यन्त इति वदन्तः।

तदकृत्स्नं दृष्टत्वाद्व्यतिक्रमस्य ॥ १९ ॥

तदकृत्स्नमसार्वत्रिकमित्यर्थः। उत्पत्तौ तथोत्पन्नानामपि व्यवहारकाले व्यभिचारदर्शनादित्यर्थः। ततो नायं नियमे हेतुः।

छन्दोगैरेव कृत्वा समयमह्नोबार्हतराथन्तरतायामेकाहेन शस्त्रं राथन्तराणां ॥ २० ॥

अयमेवाहर्निश्चयोपायः। छंदोगैः समयः सङ्गमः संवाद

इत्यर्थः। तैः संवादेनाह्नो बार्हतराथन्तरत्वनिश्चयं कृत्वा राथन्तराणां प्रकृतैकाहेन शस्यं वेदितव्यम्।

द्वितीयेनाभिप्लविकेन बार्हतानां ॥ २१ ॥

बार्हतानां पुनर्द्वितीयेनाभिप्लविकेन शस्यं वेदितव्यम्।

अपि वा कयाशुभीयतदिदासीये एव निविद्धाने स्यातामैकाहिकमितरत् ॥ २२ ॥ ॥ ५ ॥

अथ वाऽयमन्यः पक्षः, असमाम्नाते बार्हतानां राथन्तराणां च मरुत्वतीयनिष्केवल्ययोः कयाशुभीयतदिदासीये निविद्धानीये भवतः, अन्यत् सर्वमैकाहिकमिति। अत्र त्रयः पक्षाः सन्ति। अहःसंशये स्तोमादीनां त्रयाणामानुगुण्येन तद्वशादेव शस्यनिश्चयः। अन्यथा चेद्बार्हतत्वराथन्तरत्वेनोपाधिना शस्यनिश्चयः। अस्मिन्नेव पक्षे एते निविद्धाने, अन्यदैकाहिकमित्ययं वा शस्यनिश्चय इति सर्वत्र छन्दोगैः संवाद आदरणीयः॥

इत्युत्तरषट्कस्य चतुर्थे पञ्चमी कण्डिका।

सर्वान् कामानाप्स्यन्त्सर्वा विजितीर्विजिगीषमाणः सर्वा व्युष्टीर्व्यशिष्यन्नश्वमेधेन यजेत ॥ १ ॥

सर्वान् कामान् साकल्येनाप्तुं यः कामयेत, यो वा सर्वा विजितीः इन्द्रियजयपर्यन्ता जेतुमिच्छति, यो वा सर्वा व्युष्टीः वि-

भूतीः व्यश्नुवन् व्याप्तुमुद्युक्तः सोऽश्वमेधेन यजेत। व्युष्टिर्विभूतिरित्यर्थः। व्यश्नुवन्निति विपूर्वस्याश्नोतेः शत्रन्तस्य रूपं। राज्ञोऽभिषिक्तस्यायं यज्ञः, नेतरयोर्जात्योः॥

अश्वमुत्सृक्ष्यन्निष्टिभ्यां यजेत॥२॥

येन अश्वेन मध्यमेऽहनि यष्टव्यं तमश्वं विधिवदुत्सृजति। तमुत्सृक्ष्यन् वक्ष्यमाणाभ्यामिष्टिभ्यां यजेत॥

अग्निर्मूर्धन्वान्॥३॥

पूर्वस्यामेषैका देवता॥

विराजौ संयाज्ये॥४॥

संयाज्याग्रहणं विस्पष्टार्थं॥

पौष्णी द्वितीया॥५॥

पूषदेवता द्वितीयेष्टिरित्यर्थः॥

त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्यन्तौ॥
॥६॥

आज्यभागावित्यर्थः॥

त्वां चित्रश्रवस्तम यद्धाहिष्ठं तदग्नय इति संयाज्ये । अश्व-मुत्सृज्य रक्षिणो विधाय सावित्र्यस्तिस्र इष्टयोऽहरहर्वैराज-तन्त्राः ॥ ७ ॥

एवमश्वमेधेन यक्ष्य इति सङ्कल्प्य एताभ्यामिष्ट्वा अश्वमु-त्सृज्य तस्य रक्षकान् विधाय ततः संवत्सरमहरहस्त्रिषु सवनेषु सावित्रीभिरिष्टिभिर्वैराजतन्त्राभिर्यजेत ॥

सविता सत्यप्रसवः प्रसविता ऽऽसविता ॥ ८ ॥

सत्यप्रसव इत्याद्यायामिष्टौ सवितुर्गुणः । प्रशब्दो मध्य-मायां । आशब्द उत्तमायां । एवं सगुणत्वे सत्यपि देवतानां पूर्वसूत्रे सावित्रीभिरितिनिर्गुणात् तद्धितनिर्देशं कुर्वन् ज्ञाप-यति । निर्गुणस्य सवितुर्यो धर्म उपांशुत्वं नाम स सगुणस्या-प्यत्र भवतीति ॥

य इमा विश्वा जातान्या देवो यातु सविता सुरत्नः स-ध्यानो देवः सविता सद्यावेति द्वे ॥ ९ ॥

सत्यप्रसवस्य पूर्वोक्त एव ॥

समाप्तासु समाप्तासु दक्षिणत आहवनीयस्य हिरण्यक-शिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लव माचक्षीत ॥ १० ॥

समामास्विति वीप्सावचनात् पारिप्लवाख्यानमपि संवत्सरमहरहः कर्त्तव्यमिति गम्यते। पारिप्लवमिति प्रथमेऽहनीत्यादेराख्यानस्याख्या॥

हिरण्मये कूर्चेऽध्वयुरासीनः प्रतिगृणाति॥ ११॥

अध्वर्युरपि हिरण्मये कूर्चे आसीनः प्रतिगृणाति॥

आख्यास्यन्नध्वर्यवित्याह्वयीत॥ १२॥

आख्यानमारप्स्यमानो होता अध्वर्युं 'अध्वर्यो' इत्याह्वानं करोति॥

हो होतरितीतरः॥ १३॥ ॥ ६॥

एवमाहूतोऽध्वर्युर्हो होतरिति प्रत्याह्वानं करोति। अयमेव प्रतिगरः अत्रैव प्रवक्तव्यो नान्यत्र॥

इत्युत्तरषट्कस्य चतुर्थे षष्ठी कण्डिका॥ ॥

प्रथमेऽहनि मनुर्वैवस्वतस्तस्य मनुष्या विशस्त इम आसत इति गृहमेधिन उपसमानीताः स्युस्तानुपदिशत्यृचो वेदः सोऽयमिति सूक्तं निगदेत् ॥ १ ॥

अत्र पूर्वोक्तमेव व्याख्यानं नान्यत् किञ्चित्। अध्वर्यो इत्युक्त्वा एवमारभते। प्रथमेऽहनि मनुर्वैवस्वतस्तस्य मनुष्या विशस्त इम आसते, एतद्यथासूत्रं कर्त्तव्यं। अस्यायमर्थः। अस्मिन् प्रथमेऽहनि मनुर्वैवस्वतः, विवस्वत्पुत्रे अधिपे सति, तस्य राज्ञो मनुष्या विशः, तद्राज्ञोपजीविन इत्यर्थः। त इति प्राकृतमनुष्या अतिदिश्यन्ते। इम इति पुरोऽवस्थिता मनुष्या निर्दिश्यन्ते। तान् मनुष्यानादाय समं उपवेश्य तान् निर्दिश्य प्रदर्श्य त इम आसत इति वदति। गृहमेधिन उपसमानीताः स्युस्तानुपदिशति। गृहमेधिन इति मनुष्यविशेषणं। ते च कुटुम्बिन इत्यर्थः। अन्यदुक्तार्थमुपदिशति, निर्दिश्य त इम आसत इत्याख्यानावयवं वदतीत्यर्थः। त इम आसत इत्येवमन्तमुक्त्वा अनन्तरं 'ऋचो वेदः सोऽयं' इति वदति। अस्यायमर्थः। अस्मिन्नहनि ऋग्वेदो वेद इति। कोऽयमृग्वेदो वेदो नामेत्यपेक्षायां सोऽयमृग्वेद इति। तस्य स्वरूपदर्शनार्थं यत् किञ्चन सूक्तमादित आरभ्य आन्तान्निगदेत्। एवमन्येऽहन्याख्यातव्यं। अत्र विशेषः। द्वितीयाद्यहःसु राजा तदर्थमानेतव्या वेति निगद्यं च भिद्यते ॥

द्वितीयेऽहनि यमो वैवस्वतस्तस्य पितरो विशस्त इम आसत

इति स्थविरा उपसमानीताः स्युस्तानुपदिशति यजुर्वेदो वेदः सोऽयमित्यनुवाकं निगदेत् ॥ २ ॥

स्थविरा वृद्धाः ॥

तृतीयेऽहनि वरुण आदित्यस्तस्य गन्धर्वा विशस्त इम आसत इति युवानः शोभना उपसमानीताः स्युस्तानुपदिशत्यथर्वाणो वेदः सोऽयमिति यद्भेषजं निशान्तं स्यात् तन्निगदेत् ॥ ३ ॥

भेषजमिति भिषजः प्रतिपादकं मन्त्रं ब्राह्मणञ्चेत्यर्थः ॥

चतुर्थेऽहनि सोमो वैष्णवस्तस्याप्सरसो विशस्ता इमा आसत इति युवतयः शोभना उपसमानीताः स्युस्ता उपदिशत्याङ्गिरसो वेदः सोऽयमिति यद्घोरं निशान्तं स्यात् तन्निगदेत् ॥ ४ ॥

घोरमिति आभिचारादिप्रतिपादकमित्यर्थः ॥

पञ्चमेऽहन्यर्बुदः काद्रवेयस्तस्य सर्पा विशस्त इम आसत इति सर्पाः सर्पविद इत्युपसमानीताः स्युस्तान्पदिशति विषविद्यावेदः सोऽयमिति विषविद्यां निगदेत् ॥ ५ ॥

सर्पविदः काश्यपीयादिविषतन्त्रविद इत्यर्थः ॥

षष्ठेऽहनि कुबेरो वैश्रवणस्तस्य रक्षांसि विशस्तानीमान्यासत इति सेलगाः पापकृत इत्युपसमानीताः स्युस्तानुपदिशति पिशाचविद्यावेदः सोऽयमिति यत् किंचित् पिशाचसंयुक्तं निशान्तं स्यात् तन्निगदेत् ॥ ६ ॥

सेलगा इति सर्पिणोन्मत्ता इत्यर्थः । पापकृतः पापकारिण इत्यर्थः ॥

सप्तमेऽहन्यसितो धान्वस्तस्यासुरा विशस्त इम आसत इति कुसीदिन उपसमानीताः स्युस्तानुपदिशत्यसुरविद्यावेदः सोऽयमिति मायां काञ्चित्-कुर्यात् ॥ ७॥

कुसीदिनो वार्धुषिका इत्यर्थः ॥

अष्टमेऽहनि मत्स्यः सामदस्तस्योदकेचरा विशस्त इम आसत इति मत्स्याः पुञ्जिष्ठा इत्युपसमानीताः स्युस्तानुपदिशति पुराणविद्यावेदः सोऽयमिति पुराणमाचक्षीत ॥ ८ ॥

पुञ्जिष्ठाः कैवर्त्ताः ॥

नवमेऽहनि तार्क्ष्यो वैपश्चितस्तस्य वयांसि विशस्तानीमान्यासत इति वयांसि ब्रह्मचारिण इत्युपसमानीताः स्युस्तानुपदिशतीतिहासो वेदः सोऽयमितीतिहासमाचक्षीत॥ दशमेऽहनि

धर्म इन्द्रस्तस्य देवा विशस्त इम आसत इति युवानः श्रोत्रिया अप्रतिग्राहका इत्युपसमानीताः स्युस्तानुपदिशति सामवेदो वेदः सोऽयमिति साम गायात्। एवमेवैतत् पर्यायशः संवत्सरमाचक्षीत ॥ ९ ॥

एवमेतत् पारिप्लवाख्यानं पर्यायशः संवत्सरमाचक्षीत ॥

दशमीं दशमीं समापयन् ॥ १० ॥

दशमीं दशमीं सम्पादयन् संवत्सरमाचक्षीत ॥

संवत्सरान्ते दीक्षेत ॥ ११ ॥ ॥ ७ ॥

ततः संवत्सरेऽतीते दीक्षेत ॥

इत्युत्तरषट्कस्य चतुर्थे सप्तमी कण्डिका ॥ * ॥

---

त्रीणि सुत्यानि भवन्ति ॥ १ ॥

अश्वमेधे त्रीणि सुत्यानि भवन्ति ॥

गोतमस्तोमः प्रथमं। द्वितीयस्याङ्कः पशोरुपाकरणकाले- ऽश्वमानीय बर्हिर्वेद्यास्तावेवास्थापयेयुः ॥ २ ॥

अध्वर्यव इति शेषः ॥

स चेदवघ्रायादुपवर्त्तेत वा यज्ञसमृद्धिं विद्यात् ॥ ३ ॥

अवजिघ्रेत, चङ्क्रम्येत वेत्यर्थः। अन्यतरमश्वः कुर्यात्। तदा यज्ञसमृद्धिर्भवतीति जानीयात् ॥

न चेत् सुगव्यं नो वाजी स्वश्व्यमिति यजमानं वाचयेत् ॥ ॥ ४ ॥

स यद्येतदुभयं न कुर्यात् अश्वस्तदा नैमित्तिकमिदं। 'सुगव्यं नो वाजी स्वश्व्यं' इति यजमानं वाचयेद्धोता ॥

तमवस्थितमुपाकरणाय यदक्रन्द इत्येकादशभिः स्तोत्य- प्रणुवन् ॥ ५ ॥

तमितिवचनेन स्तोतिलचोदनाया अपि एतत् संस्कार- कर्म तमश्वमभिदध्यादित्यर्थः। एकादशभिरित्यृग्विशेषणं। सूक्तविशेषणत्वे अभिधानासम्भवात्। अप्रणुवन्निति प्रतिषेध- सामर्थ्यात् सामिधेनीधर्मस्य कस्यचित् प्राप्तिरवगन्तव्या। तच्चै- कश्रुत्यं। अत एकश्रुत्यार्धर्चेऽर्धर्चेऽवसायाप्रणुवन् ॥

अनुस्वाध्यायमित्येके ॥ ६ ॥

यथाम्नातस्वरेणेत्येके अनुमन्यन्ते। उभयोः पक्षयोः त्रिर्वचनमाद्योत्तमयोर्न भवति ॥

अध्रिगो शमीध्वमिति शिष्ट्वा षड्विंशतिरस्य वङ्क्रय इति वा मा नो मित्र इत्यावपेत। उपप्रागाच्छसनं वाज्यर्वेति च द्वे ॥७॥

'अध्रिगो शमीध्वं' इत्यस्मात् पुरस्तात् 'षड्विंशतिरस्य वङ्क्रयः' इत्यस्माद्वा पुरस्तात् 'मा नो मित्रः' इति सूक्तमावपेत। 'उपप्रागात्' इति च द्वे ऋचौ। अत्रापि निगदान्तःपातित्वात् ऐकश्रुत्यं भवति, नान्यः सामिधेनीधर्मः ॥

संज्ञप्तमश्वं पत्न्यो धून्वन्ति दक्षिणान् केशपक्षानुद्ग्रथ्येतरान् प्रवृत्य सव्यानूरूनाघ्नानाः ॥ ८ ॥

उद्ग्रथ्य ऊर्ध्वं ग्रन्थयित्वा, प्रवृत्य विस्रस्य, सव्यैः पाणिभिः सव्यानूरूनाघ्नानाः दक्षिणैः पाणिभिः मृतमश्वं वासोभिर्धून्वन्ति पत्न्यः ॥

अथास्मै महिषीमुपनिपातयन्ति ॥ ९ ॥

अथानन्तरमस्मा अश्वाय महिषीं ज्येष्ठां भार्यामश्वसमीपे निपातयन्ति ॥

तां होताऽभिमेथति माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः प्रतिलामीति ते पिता गभेमुष्टिमतंसयदिति ॥ १० ॥

तां महिषीमश्वसमीपे शयानां 'माता च ते पिता च ते' इत्यनयर्चा अभिमेथति, आक्रोशतीत्यर्थः ॥

सा होतारं प्रत्यभिमेथत्यनुचर्य्यश्च शतं राजपुत्र्यो माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः। योयस्यत इव ते मुखं होतर्मा त्वं वदो बह्विति ॥ ११ ॥

सा महिषी होतारं प्रत्यभिमेथति अनुचरीभिः शतेन राजपुत्रीभिः सहानयर्चा ॥

वावातां ब्रह्मोर्ध्वामेनामुच्छ्रयतादिरौ भारं हरन्निव। अथास्यै मध्यमेजतु शीते वाते पुनन्निवेति ॥ १२ ॥

वावाता द्वितीया भार्या, तां प्रत्यभिमेथति ब्रह्मा ॥

सा ब्रह्माणं प्रत्यभिमेथत्यनुचर्य्यश्च शतं राजपुत्र्य ऊर्ध्वमेनमुच्छ्रयतगिरौ भारं हरन्निव। अथास्य मध्यमेजतु शीते वाते पुनन्निवेति ॥ १३ ॥

सा वावाता तं ब्रह्माणं प्रत्यभिमेथति आत्मनोऽनुचरीभिः शतेन राजपुत्रीभिः सह ॥

सदः प्रसृप्य स्वाहाकृतिभिश्चरित्वा ॥ १४ ॥ ॥ ८ ॥

सदः प्रसृप्येति पुनः प्रसर्पणविधानादभिमेथतीत्यादि ब-हिर्वेद्यग्न्यसमीपे स्थित्वा कर्त्तव्यमिति गम्यते ॥

इत्युत्तरषट्कस्य चतुर्थे अष्टमी कण्डिका ॥ ० ॥

---

ब्रह्मोद्यं वदन्ति ॥ १ ॥

ब्रह्मोद्यं नाम वक्ष्यमाणमन्त्रैः प्रश्नप्रतिवचनरूपेण यद्वच-नं तस्येह संज्ञा ॥

कःस्विदेकाकी चरति क उस्विज्जायते पुनः। किंस्विद्धिम-स्य भेषजं किंस्विदावपनम्महदिति होताऽध्वर्युं पृच्छति। सूर्य एकाकी चरति चन्द्रमा जायते पुनः। अग्निर्हिमस्य भेषजं भूमि-रावपनं महदिति प्रत्याह। किंस्वित् सूर्यसमं ज्योतिः किं समुद्रसमं सरः। कःस्वित् पृथिव्यै वर्षीयान् कस्य मात्रा न वि-द्यत इत्यध्वर्युर्होतारं पृच्छति। सत्यं सूर्यसमं ज्योतिर्द्यौः समु-द्रसमं सरः। इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यत इति प्रत्याह। पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ। केषु विष्णुस्त्रिषु पदेष्वस्थः केषु विश्वम्भुवनमाविवेशेति

ब्रह्मोद्गातारं पृच्छति। अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमाविवेश। सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठमिति प्रत्याह। केष्वन्तःपुरुष आविवेश कान्यन्तःपुरुष आर्पितानि एतद्ब्रह्मन्नुपवल्हामसि त्वा किंस्विन्नः प्रतिवोचास्यत्रेत्युद्गाता ब्रह्माणं पृच्छति। पञ्चस्वन्तःपुरुष आविवेश तान्यन्तःपुरुष आर्पितानि। एतत् त्वात्र प्रतिमन्वानो अस्मिन् मायया भवस्युत्तरोमदिति प्रत्याह। प्राञ्चमुपनिष्क्रम्यैकैकशो यजमानं पृच्छन्ति पृच्छामि त्वा परमन्तं पृथिव्या इति॥ ॥ २॥

स्वायतने प्राङ्मुखमुपविष्टं यजमानं एकैकशः ऋत्विजः क्रमेण पृच्छन्ति 'पृच्छामि त्वा परमन्तं पृथिव्यै' इत्यनयर्चा॥

इयं वेदिः परो अन्तः पृथिव्या इति प्रत्याह॥ ३॥

अनयर्चा यजमान इति शेषः॥

महिम्ना पुरस्तादुपरिष्टाच्च वपानाञ्चरन्ति॥ ४॥

अश्वमेधे महिमानौ नाम ग्रहौ स्तः, तौ सौवर्णराजताभ्यां पात्राभ्यां गृह्येते, वपानामुभयतस्ताभ्यां चरन्ति, तयोरनुवाक्या प्रैषयाज्या वक्ष्यन्ते॥

सुभूः स्वयम्भूः प्रथममन्तर्महत्यर्णवे। दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः। होता यक्षत् प्रजापतिं महिम्नो जुषतां वेतु पिबतु सोमं होतर्यजेति प्रैषः। तवेमे लोकाः प्रदिशो दिशश्चेति याज्या। अश्वोऽजस्तूपरो गोमृग इति प्राजापत्याः॥ ॥ ५ ॥

अश्व एकः पशुः। तूपरोऽजस्य विशेषणं। तस्याशृङ्गता। गोमृगोऽन्यः पशुः, एते त्रयः प्रजापतिदेवत्याः पशवः॥

इतरेषां पशूनां प्रचरन्ति ॥ ६ ॥

अश्वादीनां यागानन्तरं इतरेषां पशूनां वपादिभिः प्रचरन्ति। तेषां प्रचारदेवतामाह॥

वैश्वदेवी क्लृप्तिः ॥ ७ ॥

वैश्वदेवता त्वदेवत्वेन तेषां प्रचारक्लृप्तिः। विश्वेदेवा एषां देवतेत्यर्थः॥

पश्चिमेन पृष्ठ्याह्ना ग्रस्यं व्यूल्हस्य ॥ ८ ॥ ॥ ९ ॥

अश्वमेधे यत् द्वितीयमहस्तस्य ग्रस्यं व्यूल्हस्य पृष्ठ्यस्य पश्चिमेनाह्ना व्याख्यातं। पृष्ठ्यग्रहणं विस्पष्टार्थं॥

इत्युत्तरषट्कस्य चतुर्थे नवमी कण्डिका ॥ ० ॥

तस्य विशेषान् वक्ष्यामः ॥ १ ॥

प्रतिज्ञासूत्रमिदं। प्रतिज्ञाप्रयोजनमस्य तस्य सर्वप्रकारस्य प्रगाथानेकद्व्यादिकल्पयुक्तस्य ग्रहणार्थं ॥

अग्निन्तं मन्य इत्याज्यं तस्यैकाहिकमुपरिष्टात् ॥ २ ॥

एवं द्विसूक्तमाज्यं भवति ॥

प्रउगतृचेष्वैकाहिकास्तृचाः ॥ ३ ॥

उपरिष्टात् कर्त्तव्या इत्यर्थः ॥

त्रिकद्रुकेषु महिषो यवाशिरमिति मरुत्वतीयस्य प्रतिपदेका तृचस्थाने। ऐकाहिकोऽनुचरः। सूक्तेषु चान्त्यमुद्धृत्यैकाहिकमुपसंशस्य तस्मिन्निविदं दध्यात् ॥ ४ ॥

'इन्द्र पिब तुभ्यं' इत्येतदुद्धृत्य तत्स्थाने ऐकाहिकं सूक्तमुपसंशस्य तस्मिन्नैकाहिके निविदन्दध्यात्। उपसंशस्येति वचनं पूर्वेण सूक्तेन एकसूक्तत्वप्रदर्शनार्थं। अतोऽत्र संस्तवे सति तस्मादपि पुरस्तात् कयाशुभीयादिर्भवति। तस्मिन्निविदमिति वचनमेकसूक्तत्वेऽपि निवित्प्रवेशे तस्यैवैकाहिकस्य गणना कर्त्तव्या न पूर्वेण सहेत्येवमर्थं ॥

एवं निष्केवल्ये ॥ ५ ॥

'एवं' इति सूक्तेषु चान्त्यमुद्धृत्य एवमादि कर्त्तव्यमित्यर्थः ॥

अभि त्यन्देवं सवितारमोण्योरिति वैश्वदेवस्य प्रतिपदेका तृचस्थाने। ऐकाहिकोऽनुचरः। सूक्तेषु चैकाहिकान्युपसंग्रस्य तेषु निविदो दध्यात्॥ ६॥

उक्तार्थमेतत्। अत्र 'तेषु निविदः' इत्यस्य प्रयोजनान्तरमप्यस्तीति त्रैष्टुभाऽन्येषां तृतीयसवनानीति तत्र वचनमस्ति तस्यापि बाधनार्थं। अतोऽत्र निविद्रतिपत्तौ जागतेष्वेवान्येषु निविद्धेया भवति॥

एवमेवाग्निमारुते॥ ७॥

उक्तार्थमेतत्॥

चतुर्थं पृष्ठ्याहरुत्तमं॥ ८॥

अश्वमेधे त्रिरात्रस्य यदुत्तममहस्तच्चतुर्थं पृष्ठ्याहर्भवति॥

ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमोऽप्तोर्यामो वा॥ ९॥

एतेषामन्यतमो वा उत्तममहर्भवति। अतिरात्रस्त्वन्त्य इतिवचनादतिरात्रसंस्थमेव भवति। सर्वेषु सर्वस्तोमग्रहणेषु' गोत्वभयसामा सर्वस्तोमः' इत्येष एव ग्रहीतव्यः, नाश्व-

मेधे। अश्वमेधे त्वहीनत्वात् तृतीयमाभिप्लविकं ग्रहीतव्यं। 'षड़हाभ्या अभिप्लवाः' इतिवचनात् स एव सर्वस्तोमोऽतिरात्रश्च कर्त्तव्यः॥

भूमिपुरुषवर्जमब्राह्मणानां वित्तानि प्रतिदिशमृत्विग्भ्यो दक्षिणा ददाति। प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः। एता एव होत्रकाः अन्वायत्ता अन्वायत्ताः॥ १०॥   ॥ १०॥

होत्रकशब्देनात्र अमुख्या उच्यन्ते। स्वस्य स्वस्य मुख्यस्य या या दिक् तामेव दिशन्तदीयाः पुरुषाः अन्वायत्ताः। ऋत्विग्भ्य इति वचनं ताभ्यो दिग्भ्य आहृत्य दक्षिणा यथेतं नीत्वा दातव्यामित्येवमर्थं॥

इत्युत्तरषट्कस्य चतुर्थे दशमी कण्डिका॥ ०॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां दशमोऽध्यायः।

॥ ०॥ उत्तरषट्के चतुर्थोऽध्यायः॥ ०॥

॥ ॐ ॥



अथैतेषामह्नां योगविशेषान् वक्ष्यामो यथायुक्तानि यस्मै यस्मै कामाय भवन्ति ॥ १ ॥

पञ्चविंशतिरहान्युक्तानि । एतेभ्य एवाहोभ्योऽहीनैकाहानित्यतिदेशप्रसङ्गात्तऽहीनैकाहा उक्ताः । अथेदानीन्तेषां सात्त्रिकाणां अह्नां योगविशेषान् सङ्घातविशेषान् सत्रशब्दवाच्यान् वक्ष्यामः, यथा यथा तान्यहानि व्यतिषक्तानि सत्राणि भूत्वा यस्मै यस्मै कामाय भवन्ति तथा तथा वक्ष्याम इत्यर्थः ॥

अयमेवैकाहोऽतिरात्र आदौ प्रायणीयः ॥ २ ॥

अयमेवेति ज्योतिष्टोमो गृह्यते । एकाहग्रहणं सन्निहितस्याश्वमेधस्याह्नां ग्रहणं माभूदित्येष सत्राणामादौ कर्त्तव्यः प्रायणीयसंज्ञश्च भवति ॥

एषोऽन्त्य उदयनीयः ॥ ३ ॥

एष एव सत्राणामन्ते भवतीत्यर्थः । स उदयनीयसंज्ञो भवति ॥

अव्यक्तो मध्ये ॥ ४ ॥

अव्यक्त इत्यविशेषित इत्यर्थः। सत्राणां मध्ये चार्वाक् अविशेषितो योऽतिरात्रो विहितः स च ज्योतिष्टोमोऽतिरात्र इत्यवगन्तव्यः ॥

अहीनेषु वैश्वानर एष एव ॥ ५ ॥

अहीनेषु वैश्वानरशब्देन यो विहितः स च ज्योतिष्टोमोऽतिरात्र एवेत्यवगन्तव्य इत्यर्थः ॥

तावन्तरेण व्यूळ्हो दशरात्रः ॥ ६ ॥

तयोः प्रायणीयोदयनीययोरतिरात्रयोर्मध्ये व्यूळ्हो दशरात्रो भवति ॥

एषा प्रकृतिः सत्राणां ॥ ७ ॥

एवंरूपो द्वादशाहः सत्राणां प्रकृतिर्भवति ॥

तत्रावापस्थानं ॥ ८ ॥

अस्यां प्रकृतौ सिद्धायां त्रयोदशरात्रादिषु सत्रेषु अपरावापे कर्त्तव्ये सति आवापस्थानमुच्यते ॥

ऊर्ध्वं दशरात्रादेकाहार्थे महाव्रतं ॥ ९ ॥

एकाहेन प्रयोजने साध्ये तस्यावापस्थानं इदमूर्ध्वं दशरात्रादुदयनीयात् प्राक् महाव्रतमावप्तव्यं। एकाहावापे साध्ये महाव्रतमेवावप्तव्यमुदयनीयात् प्रागेवेति उभयत्र नियम्यते ॥

प्राग्दशरात्रादितरेषामह्नां ॥ १० ॥

महाव्रतादितरेषां द्व्यहादीनामह्नां आवापस्थानं प्राग्दशरात्रात् प्रायणीयादूर्ध्वं भवति ॥

द्व्यहार्थे गोआयुषी। त्र्यहार्थे त्रिकद्रुकाः। अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते। चतुरहार्थे त्रिकद्रुका महाव्रतञ्च ॥ ११ ॥

अत्रापि महाव्रतं दशरात्रादूर्ध्वमेव, इतरेषामितिवचनात् ॥

पञ्चाहार्थेऽभिप्लवपञ्चाहः। उत्तमस्य तु षष्ठात् तृतीयसवनं ॥ १२ ॥

अभिप्लवपञ्चाहे यदुत्तममहः पञ्चमन्तस्य स्वं तृतीयसवनं उत्सृज्य आभिप्लविकस्य षष्ठस्य यत् तृतीयसवनं तदत्र कर्त्तव्यं ॥

षड़हार्थेऽभिप्लवः षड़हः। एवंन्याया आवापाः ॥ १३ ॥

शाखान्तरोक्ताहरन्तरावापेऽप्यावापस्यायमेव न्याय इत्यवगन्तव्यं ॥

षड़हान्ताः पुनः पनः ॥ १४ ॥

एवमावापन्याये समाप्ते यावत् प्रयोजनं पुनः पुनरेकाहादयः षड़हान्ता आवापाः कर्त्तव्या इत्यर्थः ॥

पूर्णः पूर्णस्य षड़हस्तन्त्रतामेव गच्छति ॥ १५ ॥ ॥ १ ॥

प्रकृतितां गच्छतीत्यर्थः ॥

इत्युत्तरषट्कस्य पञ्चमे प्रथमा कण्डिका ॥ ० ॥

द्वौ त्रयोदशरात्रौ ॥ १ ॥

के एते योगविभागशः। उच्यन्ते। अत्र द्वादयः सङ्ख्याः प्रदर्शनार्थाः। अन्येऽप्यसमाम्नाता बहवः सन्तीति ॥

ऋद्धिकामानां प्रथमं। पृष्ठ्यं छन्दोमाश्चान्तरा सर्वस्तोमोऽतिरात्रः ॥ २ ॥

दशरात्रस्य यः पृष्ठ्यः तस्मादूर्ध्वं छन्दोमेभ्यः पुरस्तात्

सर्वस्तोमोऽतिरात्रो भवति। तेन तानि त्रयोदशाहानि भवन्ति॥

न्यायक्लृप्तं व्रतवन्तं प्रतिष्ठाकामा द्वितीयं॥ ३॥

उपेयुरिति शेषः। पूर्वोक्तन्यायेन क्लृप्तं महाव्रतवन्तमित्यर्थः॥

त्रीणि चतुर्दशरात्राणि सार्वकामिकं प्रथमं॥ ४॥

सर्वे कामा अस्य प्रयोजनमिति सार्वकामिकं॥

द्वौ पृष्ठ्यावावृत्त उत्तरः॥ ५॥

आवृत्तो विपर्यस्त इत्यर्थः। प्रायणीयोदयनीयाभ्यां चतुर्दश सम्पद्यन्ते॥

तल्पे वोदके वा विवाहे वा मीमांस्यमाना द्वितीयं॥ ६॥

तल्पः शयनं, उदकं उदकक्रियादि ज्ञातिकार्यं, विवाहो यौनादिसम्बन्धः, एवमादिषु कार्येषु ये योग्याः योग्यतया शक्यन्ते ते द्वितीयं चतुर्दशरात्रमुपेयुः।

पृष्ठ्यमभितस्त्रिकद्रुकाः॥ ७॥

अनावृत्त इत्यनुवर्त्तते। तेनोत्तरे त्रिकद्रुका आवृत्ता इति गम्यते। प्रायणीयोदयनीयाभ्यां चतुर्दशत्वं॥

न्यायकृप्तं ह्यहोपजनं प्रतिष्ठाकामास्तृतीयं ॥ ८ ॥

न्यायकृप्तं ह्यहोपजनमिति दशरात्रात् पुरस्तात् गोआयुषी भवत इत्यर्थः ॥

चत्वारि पञ्चदश रात्राणि देवत्वमोप्सन्तां प्रथमं। प्रथमस्य चतुर्दशरात्रस्य पृष्ठ्यमध्ये महाव्रतं ॥ ९ ॥

अत्राहःकल्पनं प्रथमे चतुर्दशरात्रे यान्यहानि तान्येव। विशेषस्तु पृष्ठ्ययोर्मध्ये महाव्रतमधिकं भवति।

ब्रह्मवर्चसकामा द्वितीयं। द्वितीयस्य चतुर्दशरात्रस्याग्निष्टुत्प्रायणीयादनन्तरः ॥ १० ॥

द्वितीयस्य द्वितीयाहान्येव। विशेषस्त्वग्निष्टुत् द्वितीयमहर्भवति ॥

सात्राहैनिका उभौ लोकावाप्स्यन्तां तृतीयं ॥ ११ ॥

सत्रेण प्राप्यः सात्रः। अहीनेन प्राप्य आहैनिकः। तौ उभौ लोकौ प्राप्तुमिच्छन्तां तृतीयं पञ्चदशरात्रं भवति। उभयोर्लोकयोः सर्वान् कामानुपभुज्य ततो ब्रह्मणि प्रविलयमिच्छन्तीत्यर्थः ॥

तृतीयस्य चतुर्दशरात्रस्याग्निष्टुत् प्रायणीयस्थाने न्यायक्लृप्त-स्त्र्यहोपजनः शेषः ॥ १२ ॥

तृतीयस्य चतुर्दशरात्रस्येत्येतावतः प्रयोजनं न विद्मः। अग्निष्टुत् प्रायणीयस्थाने न्यायक्लृप्तस्त्र्यहोपजनः शेष इत्येतावतैवाहःक्लृप्तेः पर्याप्तत्वात्। अत्राहनि अग्निष्टुत्त्रिकद्रुका दशरात्रोऽतिरात्र इति॥

न्यायक्लृप्तं त्र्यहोपजनं प्रतिष्ठाकामाश्चतुर्थं ॥ १३ ॥

प्रायणीयः त्रिकद्रुका दशरात्र उदयनीय इति॥

षोडशरात्रं चतूरात्रोपजनमन्नाद्यकामाः ॥ १४ ॥

प्रायणीयस्त्रिकद्रुका दशरात्रो महाव्रत उदयनीय इति॥

सप्तदशरात्रं पञ्चरात्रोपजनं पशुकामाः ॥ १५ ॥

अतिरात्रोऽभिप्लवपञ्चाहो दशरात्रोऽतिरात्र उत्तमस्य तु षष्ठात् तृतीयसवनमित्येवं पञ्चाहो भवति॥

अष्टादशरात्रमायुष्कामाः ॥ १६ ॥

अतिरात्रोऽभिप्लवः षडहो दशरात्रोऽतिरात्रः॥

षडहस्यात्र पूर्यते। स तन्त्रस्योपजनं वच्यामः ॥ १७ ॥

अष्टादशरात्रं प्रकृतिं कृत्वा उत्तरेष्वावापः कर्त्तव्य इत्यर्थः ॥

एकान्नविंशतिरात्रमेकरात्रोपजनं ग्राम्यारण्यान् पशूनवरुरुत्समानाः ॥ १८ ॥

ग्राम्यान् पशूनारण्यांश्च पशूनवरोद्धुमिच्छन्त इत्यर्थः ॥

विंशतिरात्रं प्रतिष्ठाकामाः। अभिजिद्विश्वजितावभिप्लवादूर्ध्वं ॥ १९ ॥ ॥ २ ॥

अस्मिन्नेव स्थाने अभिजिद्विश्वजितौ गोआयुषोरपवादः। षडहादूर्ध्वमित्यत्र वचनादसति वचने प्रायणीयादतिरात्रादूर्ध्वं आवापस्थानं भवति। प्रायणीयोदयनीयौ तावत् सत्राणां प्रत्येकं तन्त्रीभूतौ नेतरेतरयुक्तौ, द्वादशाहाद्दीनयोर्दशरात्रसङ्घातरूपेणैव तन्त्रीभूतौ नैकैकशो न षडहानामपि तन्त्रीभावे दशरात्रेण सहैवेति कृत्वा प्रायणीयोदयनीययोरेव ऊर्ध्वमधस्ताच्चावापस्थानमसति वचन इति सिद्धं ॥

इत्युत्तरषट्कस्य पञ्चमे द्वितीया कण्डिका ॥ ० ॥

द्वावेकविंशतिरात्रौ प्रतिष्ठाकामानां प्रथमं। त्रयाणामभिप्लवानां प्रथमावन्तराऽतिरात्रः ॥ १ ॥

प्रायणीयस्तयोऽभिप्लवाः षड़हा उदयनीयः प्रथमयोः षड़हयोर्मध्ये ज्योतिष्टोमोऽतिरात्रः इत्येकविंशतिरहानि ।

ब्रह्मवर्चसकामा द्वितीयं। नवरात्रस्याभिजिद्विश्वजितोः स्थाने द्वौ पृष्ठ्यावावृत्त उत्तरः ॥ २ ॥

नवरात्रे यावभिजिद्विश्वजितौ, तयोः स्थाने द्वौ पृष्ठ्यौ भवतः, तयोरुत्तर आवृत्तो भवति। अतिरात्रः पृष्ठ्यः स्वरसामानो विषुवानावृत्तः स्वरसामान आवृत्तः पृष्ठ्य उदयनीय इति॥

संवत्सरसम्मिता इत्याचक्षते ॥ ३ ॥

विषुवन्मध्यत्वादिना संवत्सरसाम्यादेव ता रात्रीः संवत्सरसम्मिता इत्याचक्षते सर्वे याज्ञिकाः ॥

द्वाविंशतिरात्रं चतूरात्रोपजनमन्नाद्यकामाः ॥ ४ ॥

प्रायणीयस्त्रिकद्रुका अभिप्लवे दशरात्रो महाव्रतमुदयनीयः ॥

त्रयोविंशतिरात्रं पञ्चरात्रोपजनं पशुकामाः ॥ ५ ॥

प्रायणीयोऽभिप्लवपञ्चाहोऽभिप्लवो दशरात्र उदयनीयः ॥

द्वौ चतुर्विंशतिरात्रौ प्रजातिकामाः पशुकामा वा प्रथमं॥ ॥ ६ ॥

प्रायणीयो द्वावभिप्लवौ दशरात्र उदयनीयः ॥

षड़हश्चात्र पूर्यते। सतन्त्रस्योपजनं वक्ष्यामः। स्वर्गे लोके सत्स्यन्तो ब्रध्नस्य विष्टपं रोक्ष्यन्तो द्वितीयं ॥ ७ ॥

सत्स्यन्त इति षदेरिदं सतन्तस्य रूपं। स्वर्गे प्रतिष्ठातुमिच्छन्त इत्यर्थः। ब्रध्नस्य विष्टपं रोक्ष्यन्तः आदित्यस्य मण्डलमारोढुमिच्छन्त इत्यर्थः। इदं वा इदं वा इच्छतां द्वितीयं चतुर्विंशतिरात्रं भवति, वाशब्दस्याभावेऽपि दृश्यमानभेदात् ॥

पृष्ठ्यस्तोमस्त्रयस्त्रिंशो निरुक्तो विशालः पृष्ठ्यस्तोमा एकविंशत्रिणवत्रयस्त्रिंशाः प्रतिलोमाः पूर्वस्मिंस्त्र्यहेऽनुलोमा उत्तरस्मिन् सविशालोऽपि वोत्तर एव त्र्यहः प्रतिलोमोऽनुलोमश्चानिरुक्तमहरावृत्तः पृष्ठ्यस्तोमः ॥ ८ ॥

तस्येदमष्टःकल्पनं। पृष्ठ्यस्तोमो नाम वैरूपादीनामभाव

पृष्ठ्यस्तोम इत्युक्तं। पृष्ठ्यविशेषस्त्रयस्त्रिंशो निरुक्त एकाहस्त्रयस्त्रिंशस्तोमः कर्त्तव्य इत्यर्थः। विशालः पृष्ठ्य इति पृष्ठ्य एव विशालगुणकः कर्त्तव्य इत्यर्थः। विशालस्वरूपप्रदर्शनार्थोऽयं ग्रन्थः। स्तोमा एकविंशत्रिणवत्रयस्त्रिंशा इत्यादिः सविशालइत्येतत्पर्यन्तः पृष्ठ्यस्तोत्तरे त्र्यहे ये स्तोमा एकत्रिणवत्रयस्त्रिंशास्ते पूर्वस्मिंस्त्र्यहे प्रतिलोमाः कर्त्तव्याः, त्रयस्त्रिंशत्रिणवैकविंशा इत्येते एवोत्तरे त्र्यहेऽनुलोमाः कर्त्तव्याः। एकविंशत्रिणवत्रयस्त्रिंशा इति सपृष्ठ्यः। एवं कृते विशालो भवतीत्यर्थः। एवं विशालः पृष्ठ्यस्तोत्तर एव त्र्यहः प्रतिलोमस्यानुलोमस्य कर्त्तव्यः, न पूर्वत्र्यहः कर्त्तव्य इति। पुनरप्यनिरुक्त एकाहस्त्रयस्त्रिंशस्तोम एव। पृष्ठ्यस्तोमस्यावृत्तः पुनरपि कर्त्तव्यः॥

## त्रिवृदनिरुक्तः॥ ९॥

स एवानिरुक्त एकाहः पुनस्त्रिंशस्तोम एव। पृष्ठ्यस्तोमस्यावृत्तः पुनरपि कर्त्तव्यस्त्रिवृदनिरुक्तः, स एवानिरुक्तः एकाहः पुनस्त्रिवृत्स्तोमः कर्त्तव्यः॥

## ज्योतिरुभयसामा॥ १०॥

ज्योतिष्टोमोऽग्निष्टोम उभयसामा कर्त्तव्यः। तत उदयनीयोऽतिरात्रः। प्रायणीयः पृष्ठ्यस्तोमस्त्रयस्त्रिंशो निरुक्तो

त्रिणवः पृष्ठ्यो निरुक्तस्त्रयस्त्रिंश आवृत्तः पृष्ठ्यस्तोमस्त्रिवृ-दनिरुक्तो ज्योतिष्टोमोऽग्निष्टोमोऽतिरात्र इति ॥

संसदामयनमित्येतदाचक्षते। पञ्चविंशतिरात्रमेकरात्रो-पजनमन्नाद्यकामाः। षड्विंशतिरात्रं द्विरात्रोपजनं प्रतिष्ठा-कामाः। सप्तविंशतिरात्रं त्रिरात्रोपजनमृद्धिकामाः। अष्टा-विंशतिरात्रं चतूरात्रोपजनं ब्रह्मवर्चसकामाः। एकान्नत्रिं-शद्रात्रं पञ्चरात्रोपजनं परमां विजितिं विजिगीषमाणाः। त्रिंशद्रात्रमन्नाद्यकामाः। षडहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः। एकत्रिंशद्रात्रमेकरात्रोपजनमन्नाद्यकामाः। द्वा-त्रिंशद्रात्रं द्विरात्रोपजनं प्रतिष्ठाकामाः॥ ११॥ ॥ ३॥

इत्युत्तरषट्कस्य पञ्चमे तृतीया कण्डिका॥ * ॥

---

त्रीणि त्रयस्त्रिंशद्रात्राणि प्रतिष्ठाकामानां प्रथमं। त्रया-णामभिप्लवानामुपरिष्टादुपरिष्टादतिरात्रः॥ १॥

ये त्रयोऽभिप्लवा दशरात्रेण सह तन्त्रीभूताः तेषामेकै-कस्योपरिष्टात् प्रकृतोऽतिरात्रः कर्त्तव्यः॥

ब्रह्मवर्चसकामा द्वितीयं। चतुर्णां पञ्चरात्राणामावृत्त उत्तमः उत्तमौ चान्तरा सर्वस्तोमोऽतिरात्रः ॥ २ ॥

षडहापवादः। पञ्चाहाश्चत्वारः, तेषां चतुर्थ आवृत्तः अन्त्ययोर्मध्ये सर्वस्तोमोऽतिरात्रः प्रायणीयोदयनीयौ दशरात्रश्चेति ॥

उभौ लोकावाप्स्यन्तां तृतीयं षण्णां पञ्चरात्राणां मध्ये विश्वजिदतिरात्रः ॥ ३ ॥

न्यायापवादः। षट् पञ्चाहास्तेषां मध्ये विश्वजिदतिरात्रः ॥

आवृत्तास्तूत्तरे त्रयः ॥ ४ ॥

तेषां पञ्चाहानामुत्तरे त्रयः पञ्चाहा आवृत्ता भवेयुः। प्रायणीयोदयनीयौ चेति ॥

चतुस्त्रिंशद्रात्रं चतूरात्रोपजनमन्नाद्यकामाः ॥ ५ ॥

अतिरात्रत्रिकद्रुकास्तयोऽभिप्लवा दशरात्रो महाव्रतमतिरात्रः ॥

पशुकामानामुत्तराणि चत्वारि। पञ्चत्रिंशद्रात्रः पञ्चरात्रोपजनः ॥ ६ ॥

अतिरात्रोऽभिप्लवं पञ्चाहस्त्रयोऽभिप्लवा दशरात्रोऽति-
रात्रः ॥

षट्त्रिंशद्रात्रे षडह उपजायते। सतन्त्रस्योपजननं वक्ष्यामः।
सप्तत्रिंशद्रात्र एकरात्रोपजननः ॥ ७ ॥

अतिरात्रश्चत्वारोऽभिप्लवा दशरात्रो महाव्रतमतिरात्रः ॥

अष्टात्रिंशद्रात्रो द्विरात्रोपजननः। एकान्नचत्वारिंशद्रात्रं
त्रिरात्रोपजननमनन्तां श्रियमिच्छन्तः। चत्वारिंशद्रात्रं च-
तूरात्रोपजननं परमायां विराजि प्रतितिष्ठन्तः। एकचत्वा-
रिंशद्रात्रप्रभृतीन्युत्तराणि न्यायेनाष्टाचत्वारिंशद्रात्रात्।
पञ्चाशद्रात्रप्रभृतीनि चाषष्टिरात्रात्। द्विषष्टिरात्रप्रभृतीनि
चैकोनशतरात्रात् ॥ ८ ॥

एतानि सूत्रचयोक्तानि न्यायकृप्तान्येव ॥

तत्रैकरात्रचतूरात्रोपजननानि व्रतवन्ति ॥ ६ ॥ ॥ ४ ॥

इदमपि न्यायप्राप्तमेव वचनं, प्रयोजनं शास्त्रान्तरे महा-
व्रतापवाद उक्तं, तथाप्यस्माकं महाव्रतमेवेतिप्रदर्शना-
र्थं। एकान्नपञ्चाशद्रात्राणि एकषष्टिरात्रं शतरात्रञ्च वि-

शेषेण वक्ष्यति। अतरात्रपर्यन्तं न्यायकल्पनेनैव कल्पयितव्यं॥

इत्युत्तरषट्कस्य पञ्चमे चतुर्थी कण्डिका॥ ॥

---

सप्तैकान्नपञ्चाशद्रात्राणि विपाप्मना वत्स्यन्तः प्रथमं॥ १॥

पाप्मना व्यावृत्तमिच्छन्त इत्यर्थः॥

अतिरात्रस्त्रीणि त्रिवृन्त्यहान्यतिरात्रो दशपञ्चदशान्यतिरात्रो द्वादशसप्तदशान्यतिरात्रः पृष्ठ्योऽतिरात्रो द्वादशैकविंशान्यतिरात्रः॥ २॥

षट्त्रिंशत् प्राकृता एव, अन्यानि त्रिचत्वारिंशदहानि। तेष्वेकोऽग्निष्टोमसंस्थः एकः षोडशिसंस्थः, उक्थ्या इतर इति तदर्थमिदमाह॥

त्रिवृतां प्रथमोऽग्निष्टोमः षोडश्युत्तमः पञ्चदशानां उक्थ्या इतरे विधृतय इत्याचक्षते॥ ३॥

एता रात्रीर्विधृतय इत्याचक्षते वैदिकाः॥

यमातिरात्रं यमां द्विगुणामिव श्रियमिच्छन्तः ॥ ४ ॥

यमातिरात्रं नाम एकान्नपञ्चाशद्रात्रं, तत्ते उपेयुर्ये द्विगुणीकृतां यममिव श्रियमिच्छन्ति ॥

द्वावभिप्लवौ गोआयुषी अतिरात्रौ द्वावभिप्लवावभिजिद्विश्वजितावतिरात्रावेकोऽभिप्लवः। सर्वस्तोमनवसप्तदशावतिरात्रौ महाव्रतं ॥ ५ ॥

पञ्चाभिप्लवाः षट् चातिरात्रा उक्ताः महाव्रतञ्च प्रायणीयो द्वावभिप्लवावतिरात्रौ एकोऽभिप्लवो द्वावतिरात्रौ दशरात्रो महाव्रतमुदयनीय इति ॥

स्वानां श्रैष्ठ्यकामास्तृतीयं। चतुर्णां पृष्ठ्याह्नामेकैकं नवकृत्वः ॥ ६ ॥

पृष्ठ्यस्यादितश्चत्वार्यहानि गृहीत्वा तेषामेकैकं नवकृत्वः कर्त्तव्यं। तानि षट्त्रिंशदहानि भवन्ति ॥

नववर्गाणां प्रथमषष्ठसप्तमोत्तमान्यहान्यग्निष्टोमाः ॥ ७ ॥

एकैकस्य नववर्गस्य प्रथमषष्ठसप्तमोत्तमान्यहानि अग्निष्टोमाः अग्निष्टोमसंस्था इत्यर्थः ॥

उक्थ्या इतरे पञ्च महाव्रतं॥ ८॥

महाव्रतञ्च भवति। प्रायणीयोदयनीयाभ्यां दशरात्रेण च पूर्यते॥

सवितुःककुभ इत्याचक्षते॥ ९॥ ॥ ५॥

एता रात्रीः सवितुःककुभ इत्याचक्षते॥

इत्युत्तरषट्कस्य पञ्चमे पञ्चमी कण्डिका।

---

त्रयाणामुत्तरेषां न्यायक्लृप्ता अभिप्लवाः॥ १॥

सप्तसु त्रयो गताः। चतुर्थपञ्चमषष्ठानां न्यायक्लृप्ता अभिप्लवा वेदितव्याः। न्यायवचनं प्रायणीयोदयनीयदशरात्राणामबाधनार्थं। अतः षडहाभिप्लवा आवप्तव्याः॥

प्रथमस्य त्वूर्ध्वं चतुर्थात् सर्वस्तोमोऽतिरात्रः॥ २॥

प्रथमस्येति त्रयाणां प्रथमस्येत्यर्थः। तस्य चतुर्थादभिप्लवादूर्ध्वं सर्वस्तोमोऽतिरात्रः कर्त्तव्यः। तेन चाहःसङ्ख्या पूर्यते। तुशब्दादयमत्र विशेष इति गम्यते॥

उपसत्सु गार्हपत्ये गुग्गुलुसुगन्धितेजनपैतुदारुभिः पृथक् सर्पींषि विपच्यानुसवनं सन्नेषु नाराशंसेष्वाञ्जीरन्नभ्यञ्जीरंश्च॥ ॥३॥

उपसत्काले यस्मिन् कस्मिंश्चिदहनि गार्हपत्ये गुग्गुलादिभिस्त्रिभिस्त्रीणि सर्पींषि एकैकेन एकैकं सर्पिः पृथक् पृथक् कृत्वा तदनुसवनं सन्नेषु नाराशंसेषु आञ्जीरन् अभ्यञ्जीरंश्च। गौग्गुलवेन प्रातःसवने, सौगन्धिकेन माध्यन्दिने, पैतुदारवेण तृतीयसवने इति॥

ये वर्चसा न भायुर्ये वात्मानं नैव जानीरंस्त एता उपेयुः॥ ॥४॥

न भायुः न दीप्येरन्नित्यर्थः, आत्मानं न जानीरन् कस्यान्वये वयमुत्पन्ना इति तदुभयार्त्ता रात्रीरुपेयुः॥

आञ्जनाभ्यञ्जनीया इत्याचक्षते॥ ५॥

एतासामाञ्जनाभ्यञ्जनीया इति संज्ञा॥

एता एव प्रतिष्ठाकामानामाञ्जनाभ्यञ्जनवर्जं॥ ६॥

त्रयाणां प्रथममुच्यते। प्रतिष्ठाकामानामाञ्जनाभ्यञ्जने च वर्जयित्वा। एता एवेति वचनमहरादृता क्षतं मान्भूत्॥

एतासामेव सर्वस्तोमस्थाने महाव्रतं ॥ ७ ॥

अयमेवात्र विशेषः। अत ऊर्ध्वं चतुर्थादभिप्लवात् महाव्रतं भवति ॥

ऐन्द्रमत्यन्याः प्रजा बुभूषन्तः ॥ ८ ॥

उपेयुरिति शेषः ॥

एतासामेव सर्वस्तोममुद्धृत्य यथास्थानं महाव्रतं ॥ ९ ॥

यथास्थानमिति दशरात्रादूर्ध्वमित्यर्थः ॥

संवत्सरकामानाप्स्यन्त उत्तमं ॥ १० ॥

इदानीं सप्तममुच्यते। संवत्सरकामाः गवामयनकामा इत्यर्थः ॥

अतिरात्रश्चतुर्विंशस्त्रयोऽभिप्लवा नवरात्रोऽभिप्लवौ गोआयुषी दशरात्रो व्रतमतिरात्रः ॥ ११ ॥

सर्वं प्रत्यक्षोक्तं ॥

संवत्सरसम्मिता इत्याचक्षते ॥ १२ ॥

विषुवन्मध्यत्वादिना संज्ञाप्रवृत्तिः ॥

एकषष्टिरात्रं प्रतिष्ठाकामाः। एतासामेव पृष्ठ्यावभितो नवरात्रं ॥१३॥

अनन्तरोक्तो यो नवरात्रः तमभितः पृष्ठ्यौ कर्त्तव्यौ ॥

तयोरावृत्त उत्तरः ॥१४॥

तयोरुत्तर आवृत्तो भवति ॥

शतरात्रमायुष्कामाः। चतुर्द्दशाभिप्लवाश्चतुरश्चोपजनाः ॥ ॥१५॥

प्रायणीयस्त्रिकद्रुकाश्चतुर्द्दशाभिप्लवा दशरात्रो महाव्रतमुदयनीय इति ॥

इति रात्रिसत्राणि ॥१६॥ ॥६॥

इत्येवंप्रकाराणि रात्रिसत्राणि समाम्नातानि असमाम्नातानि च सन्तीत्यर्थः ॥

इत्युत्तरषट्कस्य पञ्चमे षष्ठी कण्डिका।

---

अथ गवामयनं सर्वकामाः ॥ १ ॥

अथशब्दः प्रकरणविच्छेदार्थः। रात्रिसत्राण्युक्तानि। अथेदानीं सांवत्सरिकाणां प्रकृतिभूतं गवामयनमुच्यत इति। सर्वे कामा येषान्ते सर्वकामाः, ते गवामयनमुपेयुः ॥

प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासानुपयन्ति ॥ २ ॥

उपेत्येतिवचनं प्रायणीयचतुर्विंशयोः प्रथम एव मासे प्रयोगसिद्ध्यर्थं। इतरथा आद्याभ्यां पूर्यतेऽहोभ्यामिति षष्ठस्याद्याभ्यां पूरणवचनात् षष्ठ एवानयोः प्रयोगोऽपि स्यात्, तन्मासावयवता च। तथा सति दृतिवातवतोरयने प्रायणीयचतुर्विंशयोस्त्रयस्त्रिंशत्स्तोमता स्यात्, तच्चानिष्टं। अत उपेत्येति वचनं। तेन प्रथम एव मासे आदित एव प्रयोक्तव्ये प्रथमावयवत्वाय। अतो दृतिवातवतोरयने त्रिवृत्स्तोमताऽनयोः सिद्धा भवति ॥

अथ षष्ठं सम्भरन्ति ॥ ३ ॥

चतुर्भिरभिप्लवैः पृष्ठ्येन चैकेन पञ्च मासान् कृत्वाऽनन्तरं षष्ठं मासं सम्भरन्ति नानाहोभिः ॥

त्रीनभिप्लवान् पृष्ठ्यमभिजितं स्वरसाम्न इति ॥ ४ ॥

अतोऽष्टाविंशतिरहानि भवन्ति ॥

आद्याभ्यां पूर्यतेऽहोभ्यां ॥ ५ ॥

एतदुक्तं भवति। आद्याभ्यां प्रथमान्मासादुत्तरस्य निर्णयः, त्रिणवत्रयस्त्रिंशे द्वे अहनी द्वितीयं मासं प्राप्नुतः, ताभ्यां ततो द्वे इत्येवं परम्परया षष्ठं मासं प्राप्नुतः। एवं ताभ्यां तस्य पूरणमिति ॥

इति नु पूर्वं पक्षः ॥ ६ ॥

अयं पक्षःशब्दः सकारान्तो नपुंसकलिङ्गः। पक्ष इव पक्षः। यथा शालायां द्वे पक्षसी एवं गवामयनस्य पक्षसी। यथा शालायां मध्यमो वंशः एवमस्य विषुवानिति श्रूयते ॥

अथ विषुवानेकविंशः ॥ ७ ॥

एकविंशस्तोम इत्यर्थः ॥

न पूर्वस्य पक्षसो नोत्तरस्य ॥ ८ ॥

सोऽयं विषुवान् न पूर्वस्य पक्षसोऽहरिति गण्यते नोत्तरस्यापीत्यर्थः। अथोत्तरं पक्षः, वक्ष्यत इति शेषः। इदमपि सूत्रमचास्तीति तत्र पठितव्यं ॥

आवृत्ताः स्वरसामानः षडहाश्चोत्तरस्य पक्षसः ॥ ९ ॥

अत्रैवं भवति। स्वरसामसु उत्तमादि प्रथममन्त्यं षडहेषु

पृष्ठ्यादिरभिप्लवान्तेष्वहरावृत्तिरपि भवति । षष्ठादिप्रथमान्तमहरावृत्तिः । समुच्चयार्थश्चशब्दः ॥

स्वरसाम्नो विश्वजितं पृष्ठं त्रीनभिप्लवानिति सप्तमन्द्विरात्रीनं कृत्वाऽथ पृष्ठ्यमुखांश्चतुरभिप्लवांश्चतुरो मासानुपयन्ति ॥ १० ॥

सप्तमस्य द्विरात्रोनत्वे सिद्धेऽपि द्विरात्रोनत्ववचनमष्टमादिषु पञ्चसु मासेषु ये आद्ये अहनी द्वे ते पूर्वस्य पूरणत्वमपि कुरुत इत्येतस्य सिद्ध्यर्थं ॥

अथोत्तमं सम्भरन्ति । त्रीनभिप्लवान् गोआयुषी दशरात्रं । व्रतोदयनीयाभ्यां सप्तमः पूर्यते ॥ ११ ॥

वीचीतरङ्गन्यायेनेत्युक्तं । अतो व्रतोदयनीये उत्तमाङ्गमेवेति सिद्धं ॥

इति व्येकसम्भार्यमुत्तरं पक्षः ॥ १२ ॥

एको मासो यस्मिन् पक्षसि सम्भार्यते तदेकसम्भार्यं पक्षः । तुशब्दः सर्वोत्तरविवक्षार्थः ॥

अथ द्विसम्भार्यं ॥ १३ ॥

अथ द्विसम्भार्यं पक्ष उच्यते प्रथमस्य ॥

अतोदयनीये एवोत्तमस्य। गोआयुषी सप्तमस्य॥ १४॥

अतोदयनीये उत्तमस्यान्ते भवत इति सिद्धमेतत्, तस्य वचनमुत्तरविवक्षार्थं गोआयुषोः सप्तमसम्बन्धविधानार्थं। ते च गोआयुषी सप्तमस्यान्त एव भवतः। तस्य द्विरात्रेणत्वात् अतस-म्बन्धात् गोसम्बन्धाद्गोआयुषोः सम्बन्धाच्च संभार्यत्वं द्वयोर्मासयोः॥

गोआयुषी वा विहरेयुः॥ १५॥

एवं वा द्विसम्भार्यमुत्तरं पक्षः। गोआयुषोर्विहारेण द्वयो-र्मासयोर्विहारपक्षे तयोः स्थानमाह॥

गां विश्वजितोऽनन्तरं॥ १६॥

सप्तमे मासे विश्वजितोऽनन्तरङ्गामुपेयुः॥

आयुषं पूर्वं दशरात्रात्॥ १७॥

उत्तमे मासे दशरात्रात् पूर्वमायुषमुपेयुः॥

अपि वोर्ध्वं विश्वजितः सप्तमं सवनमासं कृत्वोद्धरेयुर्गो-आयुषी दशरात्रञ्च॥ १८॥

अथवाऽयमन्यः प्रकार उत्तरस्य पक्षस्य: स्वरसामविश्वजि-तमुपेत्य तत ऊर्ध्वं सप्तममपि सवनमासमुपेयुः। पृष्ठ्याभिप्लवा-हैभिः कृतो मासः सवनमास उच्यते। विश्वजित ऊर्ध्वं सप्त-ममपि मासं पृष्ठ्यमुखैश्चतुरभिप्लवैः कुर्वन्तीत्यर्थः। पूर्वमेवा-ष्टमादयश्चत्वारो मासाः षडहैरेव सिद्धा आसते। एवं स्थिते

सप्तमे मासे चत्वार्यहान्यतिरिक्तानि, तानि वीचीतरङ्गन्यायेन उत्तमं मासङ्गमयितव्यानि। तेष्वागतेषु उत्तममासे षडहान्यतिरिच्यन्ते। तत्र गोआयुषी षडहस्थाद्धरेयुः। एवमयं मासः षडहोनो भवति। तत्र षडहार्थे 'अभिप्लवः षडहः' इति आवापे कृते पूर्णो भवति॥

अपि वोत्तरस्य पक्षसोऽहान्येवावर्त्तेरन्ननुलोमाः षडहाः स्युः षड्हा वाऽऽवर्त्तेरन्ननुलोमान्यहानि॥ १९॥

'आवृत्ताः स्वरसामानः' इत्यस्मिन् सूत्रे उभयावृत्तिरुक्ता। इदानीं षडहावृत्तिर्वोभयवृत्तिर्वेति विकल्प उच्यते। तत्रोभयावृत्तिः पूर्वोक्ता॥

इति गवामयनं॥ २०॥

एवंप्रकारङ्गवामयनं भवत्यस्माकं। अन्येषामन्ये प्रकाराः सन्ति॥

सर्वे वा षड्हा अभिप्लवाः स्युरभिप्लवाः स्युः॥ २१॥ ७॥

येऽत्र षडहाः सर्वे ते अभिप्लवा एव भवन्ति न पृष्ठ्या इत्यर्थः। सर्वग्रहणं पूर्वपक्षस्यापि प्रापणार्थं॥

इत्युत्तरषट्कस्य पञ्चमे सप्तमी कण्डिका॥ ०॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां एकादशोऽध्यायः।

॥ ०॥ उत्तरषट्के पञ्चमोऽध्यायः॥ ०॥

॥ ॐ ॥



गवामयनेनादित्यानामयनं व्याख्यातं ॥ १ ॥

गवामयनं नाम सांवत्सरिकं सत्रमुक्तं। इदानीमादित्यानामयनं नाम सत्रमुच्यते। तद्गवामयनेन व्याख्यातं। गवामयनेनादित्यानामयनमित्येतावतैवातिदेशे सिद्धे यद्व्याख्यातवचनं करोति तज्ज्ञापयत्याचार्यः। गवामयने यावन्तो गवामयनविकल्पा उक्तास्तेषामत्राविरोधिनां प्राप्तिरस्तीति विविधमाख्यातं व्याख्यातमित्यर्थः॥

सर्वे त्वभिप्लवास्त्रिवृत्पञ्चदशाः ॥ २ ॥

अत्र विशेषा उच्यन्ते। ये अत्र अभिप्लवास्ते सर्वे त्रिवृत्पञ्चदशस्तोमाः कर्त्तव्याः। प्रथमं त्रिवृत्स्तोमं, द्वितीयं पञ्चदशस्तोमं, तृतीयं त्रिवृत्स्तोममित्येवमहरहरनुक्रमेण सर्वेष्वभिप्लवेष्वेतौ स्तोमौ कर्त्तव्यौ। एवंकृते सर्वेऽभिप्लवास्त्रिवृत्पञ्चदशस्तोमाः कृता भवन्ति ॥

मासाश्च पृष्ठ्यमध्यमा नव। षष्ठसप्तमोत्तमान् वर्जयित्वा॥ ॥ ३ ॥

षष्ठसप्तमोत्तमान् मासान् वर्जयित्वा अवशिष्टा ये मासास्ते

सर्वे पृष्ठ्यमध्यमाः कर्त्तव्याः। गवामयने तावत् पूर्वस्मिन् पक्षसि पृष्ठ्यान्ताः पञ्च मासाः, इतरस्मिन् पक्षसि पृष्ठ्यादयश्चत्वारो मासास्ते सर्वेऽस्मिन् सत्रे पृष्ठ्यमध्यमाः कर्त्तव्या इत्यर्थः। उत्तम एव मासे कूढो नवग्रहणं षष्ठसप्तमोत्तमान् वर्जनवचनन्त्वासन्नकारितं न तु सावनत्वकारितमित्येवमर्थं। तेन 'अपि वोर्ध्वं विश्वजितः' इत्यस्मिन् पक्षे सप्तमस्य सावनत्वेऽपि पृष्ठ्यमध्यमत्वं तस्य न भवति॥

बृहस्पतिसवेन्द्रस्तुतौ चाभिजिद्विश्वजितोः स्थाने॥ ४॥

अयञ्च विशेषो भवति॥

सप्तमस्य च मासस्योत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूल्हो दशरात्र उद्भिद्वलभिदौ च॥ ५॥

सप्तमस्य च मासस्य ये त्रयोऽभिप्लवाः तेषां यौ उत्तमाभिप्लवौ तयोः स्थाने त्रिवृत्स्तोमको व्यूल्हो दशरात्र उद्भिद्वलभिदौ च द्वे अहनी इत्येतानि द्वादशाहानि भवन्ति॥

उत्तमस्य च मासस्यादौ येऽभिप्लवास्त्रय उद्धृत्य तेषां मध्यममथ स्युः पृष्ठ्यमध्यमाः॥ ६॥

उत्तमस्य मासस्यादौ ये त्रयोऽभिप्लवास्तेषां मध्यममभिप्लवमुद्धृत्य तस्य स्थाने पृष्ठ्यः कर्त्तव्यः, एवं कृते पृष्ठ्यमध्यमा भवन्ति, एवं कर्त्तव्यमित्यर्थः॥

समूढो दशरात्रः ॥ ७ ॥   ॥ १ ॥

उत्तम एव मासे यो व्यूढो दशरात्रः सत्राणां प्रकृतित्वेन प्रविश्य स्थितस्तस्य स्थाने समूढो दशरात्रः कर्त्तव्यः ॥

इत्युत्तरषट्कस्य षष्ठे प्रथमा कण्डिका ॥०॥

---

आदित्यानामयनेनाङ्गिरसामयनं व्याख्यातं ॥ १ ॥

आङ्गिरसामयनमिति सत्रनाम । अन्यत् सर्वमुक्तं ॥

त्रिवृतस्त्वभिप्लवाः सव ॥ २ ॥

अत्र येऽभिप्लवास्ते सर्वे त्रिवृत्स्तोमाः कर्त्तव्या इत्यर्थः । सर्वग्रहणं पक्षद्वयमध्यवर्त्तिमाससङ्ग्रहार्थं ॥

पृष्ठ्यादयस्त्वाद्या मासाः पञ्च पूर्वस्य पक्षसः ॥ ३ ॥

पूर्वपक्षसो ये आद्याः पञ्च मासास्ते पृष्ठ्यादयः कर्त्तव्याः ॥

चत्वारस्तूत्तरस्य पृष्ठ्यान्ता अष्टमादयः ॥ ४ ॥

उत्तरस्य पक्षसो येऽष्टमादयश्चत्वारो मासाः ते पृष्ठ्यान्ताः कर्त्तव्याः ॥

उत्तमस्य च मासस्यादौ ये षडहास्त्रयः पृष्ठ्यान्ता एवं तेऽपि स्युः ॥ ५ ॥

उत्तरस्य पक्षस्य उत्तमो यो मासस्तस्यादौ ये त्रयः षडहाः तेषामन्त्यः षडहः पृष्ठ्यः कर्त्तव्यः। एवं कृते ते षट् व्यूढाः पृष्ठ्यान्ताः स्युरित्यर्थः ॥

पूर्वौ स्यातामभिप्लवौ ॥ ६ ॥ ॥ २ ॥

यावत्र व्यूढौ षडहौ आदित्यानामयने अभिप्लवस्य पृष्ठ्यस्य तौ चात्राभिप्लवावेव भवतः, न तयोरन्यतरपृष्ठ्यः षडह इत्यर्थः ॥

इत्युत्तरषट्कस्य षष्ठे द्वितीया कण्डिका ॥०॥

---

इतिवातवतोरयनं ॥ १ ॥

एतन्नामकं सत्रमिदानीमुच्यत इत्यर्थः ॥

प्रायणीयोऽतिरात्रः ॥ २ ॥

'व्रतं विषुवत्स्थाने' इत्यनेन गवामयनप्रकृतित्वे सिद्धे प्रायणीयोऽपि सिद्ध एव। पुनर्वचनस्येदं प्रयोजनं प्रायणीयस्य

स्वस्तोमसिद्धिः। यत्पुनरिदमुक्तं प्रायणीयचतुर्विंशे उपेत्येत्यु-पेत्यवचनसामर्थ्यात् प्रायणीयचतुर्विंशयोस्त्रिवृत्स्तोमत्वमिति तस्यास्य च निवेशः कर्त्तव्यः। यदा प्रायणीयस्य *समासता तदा स्वस्तोमत्वं भवति, यदा पुनर्मासान्तर्भावः तदा त्रिवृत्स्तो-मतेति। चतुर्विंशस्य तु सर्वदा मासान्तर्भावात् त्रिवृत्स्तोमत्व-मेवेति सिद्धं॥

त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासं॥ ३॥

षण्मासानेवं कुर्युः॥

शतं विषुवत्स्थाने॥ ४॥

ततोऽनन्तरं विषुवत्स्थाने महाव्रतमुपेयुः। तच्च स्वस्तोम-मेव भवति। मासान्तर्भावाद्विषुवति विषुवत्स्थान इति ब्रुवन् गवामयनस्य प्रकृतिरिति दर्शयति॥

एतैरेव मासैः प्रतिलोमैः पक्ष उत्तरं॥ ५॥

उत्तरस्य पक्षसा ये मासाः तानप्येतैरेव स्तोमैरुपेयुः। त्रय-स्त्रिंशाद्यैस्त्रिवृदन्तैरित्यर्थः॥

---

* समासान्तदेति सं॰ पु॰ द्वये।

उदयनीयोऽतिरात्रः ॥ ६ ॥

एवं षण्मासानुपेत्य उदयनीयं स्तोममुपेयुः। उदयनीयग्रहणमपि स्वस्तोमार्थमेव ॥

एतेषामेवाक्षामतिरात्राविति ॥ ७ ॥

अत्र ये मासविषयाः स्तोमविधयः ते गवामयनिकाद्ययुक्तमासेषु वा स्युः, पार्ष्ठिकानामेव त्रिवृदादीनामह्नां आवृत्तविषयाः स्युः। उभयथापि प्रायणीयोदयनीयौ अतिरात्रावेव भवत इत्ययमेकः पक्षः। अपरः पक्ष उच्यते ॥

अपरमन्यत्राप्यादिष्टैः कालपूरणेन चेत् संस्थानियमः ॥ ८ ॥
॥ ३ ॥

प्रायणीयोदयनीये भवत इत्यत्रोक्तं, तदन्यत्रापि भवति। यत्रादिष्टैरेव कालपूरणं सत्राहोभिर्भवति, आदिष्टानामेवाद्योत्तमयोः संस्थानियमस्य नास्ति, तत्र सर्वत्रादिष्टानां आद्योत्तमे प्रायणीयोदयनीयौ भवत इति सिद्धं त्रयस्त्रिवृतः संवत्सरा इत्येवमादीनि उदाहरणानीति ॥

इत्युत्तरषट्कस्य षष्ठे तृतीया कण्डिका ॥ ० ॥

कुण्डपायिनामयनं॥ १॥

एतन्नामकमिदं सत्रमधिकृतं वेदितव्यं॥

मासन्दीक्षिता भवन्ति॥ २॥

अयं मासशब्द एकान्नविंशतिरात्र उपचरितः, एकान्नविंशतिरात्रादिकं सावनवद्भवतीत्यर्थः॥

ते मासि सोमं क्रीणन्ति॥ ३॥

अयमप्युपचार एव। दीक्षाकाले मास्यतीते दीक्षिताः सोमं क्रीणन्तीत्यर्थः।

तेषां द्वादशोपसदो भवन्ति॥ ४॥

सात्त्रिकाणान्दीक्षाणामपवादो दीक्षाविधिः, तथा सात्त्रिकाणामुपसदामपवादोऽयमुपसद्विधिः॥

सोममुपनह्य प्रवर्ग्यपात्राण्युत्साद्योपनह्य वा मासमग्निहोत्रं जुह्वति॥ ५॥

उपसत्स्वतीतासु प्रवर्ग्यपात्राण्युत्साद्योपनह्य वा तानि तानि ते एकं मासं अग्निहोत्रं जुह्वति सायं प्रातः। प्रातरुपक्रमः सायमपवर्गः, प्रातःकालस्य प्रथमप्राप्तत्वात्। उपसत्काले द्वादशाहेऽतीतेऽग्निहोत्रस्य प्रातरारम्भान्नैमित्तिकादग्निहोत्रात् कर्मान्तरमेतदिति न्यायविदां प्रसिद्धं॥

मासं दर्शपूर्णमासाभ्यां यजन्ते ॥ ६ ॥

अग्निहोत्रमासेऽतीते ततः अनन्तरमेकं मासं दर्शपूर्णमासाभ्यां यजन्ते। कृष्णपक्षेऽहरहः पौर्णमास्या, शुक्लपक्षेऽहरहरमावास्यया, मित्रावरुणयोरयने तथा दृष्टत्वात्। एवमत्र सम्पादनीयं। यथा कृष्णपक्षादौ पौर्णमास्याऽहः सम्भवति, तत्र दीक्षारम्भः कर्त्तव्य इति ॥

मासं वैश्वदेवेन ॥ ७ ॥

अहरहरनेन यष्टव्यं। वैश्वानरपार्जन्या तु न भवति। आरम्भार्थत्वात्तस्याः, स चारम्भसत्रेण प्रसक्त इति ॥

मासं वरुणप्रघासैः। मासं साकमेधैः ॥ ८ ॥

एतैरहरहर्यजेरन् एकाहेनापवृज्य प्रकृतेर्द्व्यहसमापनीयत्वाद्व्यहेन वा कुर्यात्। अध्वर्युप्रत्ययात्समापनमिति स्थितिः ॥

मासं शुनासीरीयेण ॥ ९ ॥

अनेनाप्यहरहरेव ॥

यदहर्मासः पूर्यते तदहरिष्टिं समाप्याग्निप्रणयनादिधर्मोत्सादनादि वैपवसथिकं कर्म कृत्वा श्वोभूते प्रसुनुयुः ॥ १० ॥

यस्मिन्नहनि मासः पूर्यते तस्मिन्नहनि शुनासीरीयेष्टिं स-

माण्य तदनन्तरं यदि पूर्वमेव प्रवर्ग्योपाचाण्युत्सादितानि तदाग्नि-प्रणयनाद्यौपवसथिकं कर्म कृत्वा सुत्यारम्भः ॥

तद्वैक उपसद्भ्य एवानन्तरं कुर्वन्ति तथादृष्टत्वात् सौत्यान्मासानग्निहोत्रादीन् वदन्तः॥ ११ ॥

तदिदमग्निप्रणयनाद्यौपवसथिकं कर्म। कुण्डपायिनामयने अग्निहोत्रादिमासेभ्यः कर्त्तव्यमित्युक्तं। तचैक आहुः तत्कर्माग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्योऽनन्तरं कर्त्तव्यमिति। तत्र हेतुमाहुः प्रकृतौ तथादृष्टत्वादिति। न त्वग्निहोत्रादिमासेभ्य उपरिष्टात् क्रियमाणे वा औपवसथिके सुत्यानन्तरस्य विद्यमानत्वादिति। तथादृष्टत्वात्साधारणमिति, तत्परिहारार्थमग्निहोत्रादिमासान् सौत्यानिति। कथमस्य सत्रस्य गवामयनप्रकृतिकत्वात्तस्य सांवत्सरिकत्वात् कुण्डपायिनामयने चित्रादयः षण्मासा एकं पक्षः, अग्निहोत्रादयः षण्मासा अपरं पक्ष इति मन्यमानाः। एवं च उपसदास्च सुत्यास्च सुत्य औपवसथिकस्य कृतत्वान्न कश्चिद्धेतुदोष इति वदन्तोऽग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्यः ऊर्ध्वमौपवसथिकं कुर्वन्ति। एतदुक्तं भवति। अग्निहोत्रादिमासान् सुत्यानिति मन्यमानाः तेभ्यः पुरस्तादुपसद्भ्य ऊर्ध्वं औपवसथिकं कर्म केचित् कुर्वन्ति, प्रकृतौ तथादृष्टत्वादिति ॥

तदनुपपन्नं॥ १२॥

यदेतदग्निहोत्रादिमासान् सौत्यानिति वदन्ति तदनुपपन्नं। कुतः। सोमयागस्वरूपत्वात् सुत्यानां। अग्निहोत्रादीनां तु हविर्यज्ञस्वरूपत्वादसुत्यत्वमिति। यत्पुनरिदमुक्तं गवामयनप्रकृतिकत्वादग्निहोत्रादिमासैः पूर्वपक्षमिद्धिरिति। तदयुक्तं। सोमयागानामेव गवामयनप्रकृतित्वं पूर्वपक्षत्वमुत्तरपक्षत्वञ्चेति। अग्निहोत्रादयोऽस्मिन् सत्रे अप्राकृता आगन्तवः कर्मविशेषाः, अतस्तेषान्तत्स्थानापन्नत्वमपि न सम्भवति। अतस्तेषां सुत्यत्वन्न सम्भवति। सुत्यत्वासम्भवे तथादृष्टत्वादित्यस्य हेतोः साधारण्यादसाधकत्वादित्यनेनाभिप्रायेणोक्तं भगवताचार्येण 'तदनुपपन्नम्' इति॥

पश्वर्थे ह्यग्निप्रणयनन्तस्य च श्वःसुत्यानिमित्तं॥ १३॥

परोक्तस्य हेतोरसाधकत्वमुक्त्वा स्वपक्षं समर्थयति। औपवसथ्येषु कर्मसु यः पशुभागः स श्वःसुत्यानिमित्तमिति प्रत्यक्षं श्रूयते 'अग्नीषोमाभ्यामिन्द्रो वृत्रमहंस्तावेनमभूताम्' इत्यादिना। अतो वचनात् पशोः सुत्यानन्तर्यमेव सम्पादनीयं। तत्र यदग्निप्रणयनन्तत् सोमयागार्थमेव पशोरप्युपकरोति प्रसङ्गादिति पश्वर्थमित्युक्तं। अतोऽग्निप्रणयनस्य पशोः श्वःसुत्यानन्तर्यमेव कर्त्तुं युक्तं॥

अतिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोः। तथाग्निहोत्रस्य ॥ १४ ॥

एवं तावदौपवसथिकस्य अग्निप्रणयनादेरग्निहोत्रादिमासेभ्य ऊर्ध्वमेव कर्त्तव्यतां प्रतिपाद्येदानीमस्ति अग्निप्रणयनस्याग्निहोत्रादिमासेभ्यः पुरस्तात् क्रियायां दर्शपूर्णमासयोरग्निहोत्रस्य च वैगुण्यं भवतीति प्रतिपादयति। कुत इति चेत्, प्रकृतौ नैयमिकेऽतिप्रणीते उत्तरवेद्यास्तयोर्यागादिदर्शनात्। अतो वैगुण्यकरत्वादग्निप्रणयनस्तावत् पुरस्तान्न कर्त्तव्यमित्यस्य विशेषोऽन्येभ्य इत्युक्तं ॥

सदो हविर्धानान्याग्नीध्रीयाग्नीषोमप्रणयनवसतीवरीग्रहणानि पश्वर्थानि भवन्ति सुत्यार्थान्येके ॥ १५ ॥

एवं तावदौपवसथिकेषु यः सः। श्वःसुत्यानिमित्तत्वादग्निहोत्रादिमासेभ्य ऊर्ध्वं कर्त्तव्यमित्युक्तं। अग्निप्रणयनं च सुत्यार्थत्वात् पशोरप्युपकारकत्वाच्च पुरस्तात् क्रियायाश्चाग्निहोत्रादीनां वैगुण्यकरत्वात्तद्वदित्युक्तं। इदानीं येषां श्वःसुत्यावचनं नास्ति श्रुत्यादिभिस्तु सुत्याङ्गभावोऽस्त्येव अङ्गभावश्च सन्निपत्योपकारकद्वारेण, तेषां सुत्याकर्मणो देशादिसाधन इत्यकस्वरूपाणां सदआदीनामग्निहोत्रादिमासेभ्यः पुरस्तात् करणे किञ्चिददृष्टं दृष्टं वा प्रयोजनं नास्ति। एतेषां पुरस्तात् करणे प्रमाणं च नास्ति, कुतः ॥

तत्कालास्त्वेव तद्गुणाः ॥ १६ ॥

यस्य प्रधानस्य यः कालः स एव कालस्तद्गुणानां प्रधानकाल एव, अङ्गानां मुख्यकाल इत्यर्थः। तदेतन्न्यायविदां प्रसिद्धं। अत एव प्रसिद्धवदुपदिष्टवानाचार्यः 'तत्कालास्त्वेव तद्गुणाः' इति। एतदुक्तं भवति। यस्मात् प्रधानकाला एव प्रधानगुणाः तस्मात् सदआदीनामग्निहोत्रादिमासेभ्यः पुरस्तादक्रियैव। तत्कालास्त्वेव तद्गुणा इति चशब्दोऽत्र पठितः प्रधानकाले च गुणाः कर्त्तव्या इत्यर्थः। सदआदीनामपर्यन्तावचनं अभ्युपगम्य सदआदीनि पर्य्यर्थानि वा भवन्तु, सुत्यार्थानि वा। सर्वथा तावदग्निहोत्रादिभ्यः पुरस्तात् क्रिया न स्यादित्ययमभिप्रायः। अङ्गानां प्रधानकालत्वमुक्तं 'तत्कालास्त्वेव तद्गुणाः' इति। यानि पुनरङ्गानि प्रधानकालाद्विप्रकृष्टानि, यथा 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति, तेषां पर्य्यर्थता नास्ति सौमिकैः पदार्थैर्व्यवधानादिति। अतोऽनुयाजसदृशानि कर्मान्तराणि सोमाङ्गत्वेनैव विधीयन्त इति प्राप्ते उच्यते॥

सिद्धस्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयोः ॥
॥ १७ ॥

प्रकृतौ सिद्धस्वभावानां पदार्थानां विकृतौ पदार्थान्तरव्यवधानमात्रेण तेषामन्यत्वं न स्यात्। अनन्यत्वे च प्राकृतोपकारत्वेनाङ्गत्वमपि स्यात्। प्राकृतानां हि पदार्थानां विकृतावुपका-

रद्वारेण प्राप्तानामनुपकारकत्वमित्ययुक्तं, यदि परं व्यवधाना-दन्यत्वं भवति। अतो विप्रकृष्टकाला अपि पदार्थास्तद्गुणा एव भवन्ति, तद्धानपगमादिति कर्मान्तरत्वपक्षे वाक्यभेदा-दिति प्रसज्येत। यथा पृष्ठ्याभिप्लवयोरिति व्यवधानादन्यत्वा-भावे दृष्टान्तः। यथा पृष्ठ्यस्य वाभिप्लवस्य वान्यस्य वा सङ्घाते रूपविशेषस्य मध्ये यजमानमरणस्य निमित्तेन नैमित्तिकमहर-न्तरमुपजायते तत्र तेन व्यवधानमस्ति, तथा पृष्ठ्यादिसङ्घा-तविशेषबुद्धिर्नापैति तद्वदत्रापीति। यस्माद्व्यवधानात् पदा-र्थान्यत्वं नास्ति, अत एवौपवसथिकस्याग्निहोत्रादिमासेभ्यः पुरस्तात् क्रियाशङ्कानिराकरणार्थमिदं प्रकरणमारब्धं। कानि-चिदङ्गानि तत्कालानि कानिचिद्विप्रकृष्टकालानीत्येवमुभयथा व्यवहारोऽस्ति। सर्वथा तावदग्निहोत्रादिमासेभ्यः पुरस्तादौप-वसथिकं न कर्त्तव्यमिति प्रकरणार्थः॥

सगुणानां ह्येव कर्मणामुद्धार उपजनो वा॥१८॥

अयमप्यग्निहोत्रादिमासेभ्यः उपरिष्टादौपवसथिकक्रिया-यां हेतुः। यस्मात् प्रधानकर्मणामुद्धारे उपजने उत्कर्षे च सगुणानामेव सर्वत्रोद्धारादिर्दृष्टः। यथा स्नानभोजनविहारा-णामहरहःकार्याणां कस्यचिदुद्धारे सगुणस्यैवोद्धारो दृष्टः, उत्कर्षे च सगुण एवोत्क्रष्यते, एतेषां नित्यकार्याणामन्तराले अन्यन्नैमित्तिकमुपजायमानं सगुणमेवोपजायते, एवमत्रापि

वैशेषिकैरग्निहोत्रादिभिरुत्कृष्यमाणं सौत्यं कर्म आत्मनो गुणभूतेन आपवर्गिकेन सहोत्कृष्यन्ते। हिशब्दः प्रसिद्धौ। यस्मात् सर्वत्र उद्धारोपजनोत्कर्षाः सगुणानामेव दृष्टाः तस्मादत्रापि सगुणस्य सौत्यस्य उत्कर्षो युक्त इति सूत्रार्थः ॥

सुब्रह्मण्या त्वत्यन्तं ॥ १९ ॥

प्रासङ्गिकोऽयं सुब्रह्मण्याविचारः। प्रकृतावुपसत्सुत्याकालत्वात्सुब्रह्मण्याया अग्निहोत्रादिमासानाञ्च सुत्योपसद्भावात् सुब्रह्मण्याया अभावशङ्का स्यात्, तत इदमुच्यते। सुब्रह्मण्याया अयं विशेषः। अत्यन्तन्नित्यं कर्त्तव्या, अग्निहोत्रादिमासेष्वपि अप्राकृतोऽयङ्काल इति नोत्स्रष्टव्या ॥

अनवधृतेहकालसंशयत्वात् ॥ २० ॥

प्रकृतावुपसत्सुत्याकाला सती सुब्रह्मण्या तत्कालविशेषविशिष्टाऽऽह्वयते। इह पुनरप्राकृतत्वात्कालस्य तेनोपलक्षणं प्रकृत्या सुब्रह्मण्याया अयुक्तमिति मन्यमानेनानवधृता कालसङ्ख्याविशेषणाऽऽह्वातव्या। सुत्यामागच्छेति कालसंशयत्वादित्यस्यायमर्थः। प्रकृतौ द्व्यहे सुत्यामित्यादयः सङ्ख्याविशेषाः किमुपसद्दिवःसङ्ख्याविशेषप्रयुक्ताः आहोस्वित्प्राक्सुत्यावन्त्यहानि। तद्दिवःसङ्ख्याप्रयुक्ता इत्येवङ्कालसंशयत्वादित्यर्थः ॥

उत्सर्गमके सुत्योपसङ्गुणत्वात् ॥ २१ ॥

सुब्रह्मण्याया उत्सर्गमेक इच्छन्ति सुत्योपसद्गुणत्वात्। कि-

मिदं सुत्योपसद्गुणत्वादिति सुत्यानामेवायङ्गुणो नोपसदां क्रमा-लिङ्गं बलीय इति। अतोऽयमुपसदाङ्गुण उपसत्कालवर्त्तित्वात् उपसद्गुणत्वोपचारः। अग्निहोत्रादिमासानामसुत्यत्वात् उपसत्कालत्वात्सुब्रह्मण्योत्सर्गमेक आहुरित्यर्थः॥

क्रिया त्वेव प्रवृत्ते ह्यन्तमगत्वाऽवस्थाने दोषः॥ २२॥

अस्याः क्रियैव निश्चीयते। सोमयागसाधनसंस्कारत्वात् मन्त्रस्य प्रकृतौ सोमयागादूर्ध्वं यावत्सुत्याकालस्तावदाह्वयते। तद्वदत्राप्याह्वातव्या। तावतः कालस्योपसत्स्वेवैतत्सम्बन्धा-दस्या उपसत्सम्बन्धः, तदभावान्नास्यास्त्यागो युक्तः। अत्रा-यमपि विशेषोऽस्ति। औचित्यादपि न त्याज्या। आदित आरभ्य सर्वेष्वेवाहःस्वाह्वयन्ति। कथमिदानीं नाह्वयन्ति। नून-मयं सोमोऽसम्पन्न दास्यत इति देवतायाः शङ्का स्यात् तन्नि-वृत्त्यर्थमाह्वातव्या। प्रारब्धस्य मध्ये त्यागस्य कारणाभावात् त्यागे दोष एव स्यादित्यभिप्रायः। परवदर्थविचारोऽत्र स्वप-क्षार्थपरिज्ञानार्थ एव। अतिप्रैषः श्वःसुत्यामुपोह्यत इति॥

त्रिवृता मासं। पञ्चदशेन मासं। सप्तदशेन मासं। एक-विंशेन मासं। त्रिणवेन मासं। अष्टादशत्रयस्त्रिंशानि। द्वाद-शाहस्य दशाहानि। महाव्रतञ्चातिरात्रश्च॥ २३॥

अत्र पृष्ठ्यस्य पञ्चभिरहोभिः पञ्च मासाः कर्त्तव्याः। षष्ठे-

नाष्टादशाष्टानि दशरात्रो महाव्रतमुदयनीयः। कृत्स्नो मासात्-मासाच प्रायणीयः॥

सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति॥ २४॥ ॥ ४॥

स्तुतिवादोऽयं। बहूनामत्र सम्भवादृत्विक्समासोऽनेन सूत्रकारेण न सूचितः। स कर्त्तव्यस्तेन परप्रत्ययादेव कर्त्तव्यः॥

इत्युत्तरषट्कस्य षष्ठे चतुर्थी कण्डिका॥ ०॥

सर्पाणामयनं॥ १॥

इदमपि संवत्सरसत्रं॥

गोआयुषी द्वादशी स्तोमे॥ २॥

एते अहनी द्वादशी स्तोमे अभ्यस्याभ्यस्य कृत्स्नं संवत्सरस्याभुतः॥

अनुलोमे षण्मासान्। प्रतिलोमे षट्॥ ३॥

अयमेवात्र विशेषः, अनुलोमप्रतिलोमत्वमेव॥

ज्योतिर्द्वादशस्तोमो विषुवत्स्थाने ॥ ४ ॥

ज्योतिरेकाहो विषुवत्स्थाने भवति। स द्वादशस्तोमश्च भवति ॥

प्रकाशकामा उपेयुः ॥ ५ ॥

विद्यया धनेन प्रकाशकामाः सर्पाणामयनमुपेयुः। अत्र प्रायणीयोदयनीयौ पूर्वोक्तेन न्यायेन भिन्नावभिन्नौ भवतः ॥

त्रैवर्षिकं प्रजाकामाः ॥ ६ ॥

त्रैवर्षिकमिति सत्रनाम ॥

गवामयनं प्रथमः संवत्सरः। अथादित्यानां। अथाङ्गिरसां ॥ ॥ ७ ॥

त्रिः संवत्सरः सत्य इति तस्यैते त्रयः संवत्सराः ॥

चत्वारि तापश्चितानि ॥ ८ ॥

चत्वारि तापश्चितानि वक्ष्यन्त इत्यर्थः। उपदेशादेव चतुष्ट्वे सिद्धे चतुर्ग्रहणं सर्वेषां तापश्चितानां तुल्यत्वज्ञापनार्थं। कथमनेन तुल्यत्वमिति चेत्, तापश्चितानीत्यस्य विशेषणत्वात्। तापश्चितानि तापश्चितानीत्येकशेषात् एतत् त्रयं सिद्धं। एकशेषश्च सरूपाणामिति स प्रसिद्धः, तेन सामानाधिकरण्याच-

तुर्णां तुल्यत्वमध्यवसितं। तुल्यत्वसिद्धौ प्रयोजनं यथा प्रथमे सौत्ये षाण्मास्येष्वहराधिक्यं नास्ति, एवं सर्वेषु तापश्चितेषु सौत्येषु संवत्सरचतुःसंवत्सरद्वादशसंवत्सरषट्त्रिंशत्संवत्सरे अह-राधिक्यं विषुवता न कर्त्तव्यमित्यर्थः ॥

क्षुल्लकतापश्चितं प्रथमं संवत्सरं सदीक्षोपसत्कं ॥ ९ ॥

क्षुल्लकतापश्चितमिति प्रथमं व्याख्यानन्दीक्षोपसद्भिः सह संवत्सरकालमित्यर्थः ॥

तस्य चत्वारः सौत्या मासाः गवामयनस्य प्रथमषष्ठसप्तमो-त्तमाः ॥ १० ॥

अतो महाव्रतवदेतत् सत्रं। महाव्रतत्वेऽपि तस्य संवत्स-रदीक्षानिवृत्त्यर्थं संवत्सरं सदीक्षोपसत्कमित्युक्तं। अत्र मासा-तिदेशाद्विषुवान्न भवति ॥

त्रैवर्षिकं तापश्चितं। तस्य सौत्यः संवत्सरः ॥ ११ ॥

तापश्चितानां यथा सुत्यापसद इति सुत्यानां त्रिभागे सिद्धे चत्वारः सौत्या मासाः सौत्यः संवत्सरः चत्वारः सौत्याः संवत्सरा द्वादश सौत्याः संवत्सराः इत्येतानि वचनानि विषु-वन्निवृत्त्यर्थानि ॥

उक्तो गवामयनेन। ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतञ्चतुर्विंशानां वैकैकं॥ १२॥

गवामयनस्यायमपवादः। एतेषां सप्तानामह्नामेकैकेनाह्ना संवत्सरः पूरयितव्योऽभ्यस्याभ्यस्येत्यर्थः॥

द्वादशवर्षिकं तापश्चितं। तस्य चत्वारः सौत्याः संवत्सराः। गवामयनशस्याः पूर्वेणैव न्यायेन॥ १३॥

पूर्वन्यायशब्देनैकसप्तत्यादि उत्तरपक्ष उच्यते॥

षट्त्रिंशद्वर्षिकं महातापश्चितं। तस्य द्वादश सौत्याः संवत्सराः। गवामयनशंस्याः पूर्वेणैव न्यायेन। अपि वोत्तरस्य पक्षसो द्वाविंशतिः सवनमासा भवेयुः। त्रयोविंशतिः पूर्वस्य॥ १४॥

सवनमासा उभयोः पक्षयोः पृष्ठ्याभिप्लवसम्भृता उदयनीयास्त्रिंशिनस्ते द्वाविंशतिरुत्तरे पक्षसि त्रयोविंशतिः पूर्वपक्षसि षट्सप्तोत्तमैस्त्रयः स्वरूपेणैव। एवमष्टाचत्वारिंशत् मासा भवन्ति चतुर्णां संवत्सराणां पर्याप्ताः। अत एतत् क्लृप्तः क्लृप्तस्योयते, किमेतद्व्युत्क्रमेण प्रणीतं भगवता सूत्रकारेणेति। अयमभिप्रायः। मासवृद्धौ सवनमासानामेव वृद्धिः इतरेषां त्रयाणां स्वरूपेणैवेत्यस्य न्यायस्य सर्वार्थत्वायैवं प्रणीतं। अतः षट्त्रिंशद्वर्षिकेऽपि एकसप्ततिः पूर्वपक्षसवनमासाः सप्ततिरुत्तरे पक्षसि त्रयस्त्र षष्ठसप्तमोत्तमास्त्र षड्डकल्पना भवतीति गम्यते॥

प्रजापतेर्द्वादशसंवत्सरं ॥ १५ ॥

इदं सत्रनाम, तस्याहान्युच्यन्ते ॥

त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशाः। एतैरेव स्तोमैः शाक्त्यानां षट्त्रिंशद्वर्षिकं ॥ १६ ॥

स्तोमैरिति स्तोमविशिष्टैरहोभिरित्यर्थः। शाक्त्यानामयनमिति सत्रनाम। अयनशब्दोऽध्याहर्त्तव्यः। एवमुत्तरेष्वपि साध्यानां विश्वसृजामयने अग्नेरित्येतेषु। षट्त्रिंशद्वर्षिकमित्यादयः शब्दाः सत्रकालवचनाः ॥

एकैकेन नव नव वर्षाणि ॥ १७ ॥

पूर्वस्येयमहःकल्पना ॥

एतैरेव स्तोमैः साध्यानां शतसंवत्सरं। एकैकेन पञ्चविंशतिः पञ्चविंशतिर्वर्षाणि ॥ १८ ॥

साध्यानामयनस्येयमहःकल्पना ॥

एतैरेव स्तोमैर्विश्वसृजां सहस्रसंवत्सरं एकैकेनार्द्धतृतीयान्यर्द्धतृतीयानि वर्षशतानि ॥ १९ ॥

विश्वसृजामयनस्याहःकल्पना। सहस्रसंवत्सरन्तदायुषामसम्भवादिति विचारितौ सम्भवासम्भवौ। तत्र यथा सम्भवति तथा प्रतिपत्तव्यं ॥

अग्नेः ॥ २० ॥

अयनशब्द एतेषु शेष इत्युक्तं। तस्याहःक्लृप्तिरुच्यते ॥

अग्निष्टोमसहस्रं ॥ २१ ॥

अत्र बहिरेव प्रायणीयोदयनीयौ। 'अग्निष्टोमसहस्रम्' इत्यनेन सहस्राहःप्रमाणस्यानुक्तत्वात् ॥

सहस्रसाव्यमित्येतदाचक्षते ॥ २२ ॥ ॥ ५ ॥

एतदयनं सहस्रसाव्यमित्यनेन नामाचक्षते ॥

इत्युत्तरषट्कस्य षष्ठे पञ्चमी कण्डिका ॥ ० ॥

---

अथ सारस्वतानि ॥ १ ॥

अनन्तरं सारस्वतानि सत्राण्युच्यन्त इत्यर्थः ॥

सरस्वत्याः पश्चिम उदकान्ते दीक्षेरन् ॥ २ ॥

पश्चिम उदकान्त इत्यनेन सरस्वत्या विनशनमिति प्रसिद्धो देश उच्यते। तस्मिन्दीक्षेरन्नित्यर्थः ॥

ते तत्रैव दीक्षोपसदः कृत्वा प्रायणीयञ्च सरस्वतीं दक्षिणेन तीरेण शम्याप्रासे शम्याप्रासेऽहरहर्यजमाना अनुव्रजेयुः ॥ ३॥

ते सत्रिणस्तत्रैव दीक्षोपसदश्च समाप्य औपवसथिकञ्च कृत्वा प्रायणीयमतिरात्रञ्च तत्रैव कुर्युः। एवं तत्रैव कृत्वा सरस्वतीं दक्षिणेन तीरेणानुव्रजेयुः, शम्याप्रासेऽहरहर्वमित्वा। ते तत्रैवेतिवचनं सर्वेषु सारस्वतेषु प्रायणीयान्तं कर्म विनशनप्रदेश एव कर्त्तव्यमित्येवमर्थं ॥

संहार्य उलूखलबुध्नो यूपः ॥ ४॥

संहार्यगमनकाले संहृत्य गन्तुं योग्यः समो देशस्तत्र गच्छेयुरित्यर्थः। उलूखलस्येव बुध्नो मूलं यस्य स उलूखलबुध्नः। समे देशे स्थापयितुं योग्य इत्यर्थः ॥

चक्रीवन्ति सदोहविर्धानानि ॥ ५॥

हविर्धानयोर्विशालाभिप्रायेण बहुवचनं ॥

आग्नीध्रीयं पत्नीशालञ्च ॥ ६॥

चक्रवदित्यर्थः ॥

दक्षिणपुरस्तादाहवनीयस्यावस्थाय ब्रह्मा शम्यां प्रहरेत्। सा यत्र निपतेत् तद्गार्हपत्यस्यायतनं। ततोऽधिविहारः ॥ ७॥

गार्हपत्यादारभ्य पुरस्ताद्यथा पुनर्विहारः कल्पनीयः ॥

विषमे चेन्निपतेदुद्धृत्य समे विहरेयुः ॥ ८ ॥

समीकर्त्तुं अशक्येऽपि विषमे देशे शम्या चेत् परिपतेदुद्धृत्य तां शम्यां पुनः समे देशे तां प्रहृत्य विहारः कर्त्तव्यस्तत्रैव ॥

अप्सु चेद्वारुणं पुरोडाशं निर्वपेयुः। आपांनपत्रे चरुं। अपान्नपाद्धा ह्यस्थादुपस्थं समन्या यन्त्युपयन्त्यन्या इति। अतः समानं सर्वेषां ॥ ९ ॥

एवमन्तं सर्वेषां सारस्वतानां समानं ॥

मित्रावरुणयोरयनं ॥ १० ॥

मित्रावरुणयोरयनं नाम सारस्वतं सत्रमिदानीमधिक्रियते ॥

कुण्डपायिनामयनस्याद्यान् षण्मासानावर्त्तयन्तो व्रजेयः ॥ ॥ ११ ॥

अग्निहोत्रादीनित्यर्थः। अत्र दण्डचक्रवदावृत्तिरपेक्ष्यते, परावधेरनियतत्वात् ॥

मासि मासि च गोआयषो उपेयुः। आयरयुग्मेषु। गौर्युग्मेषु ॥ १२ ॥

यथाऽपरपक्षस्य चतुर्दश्यामौपवसथिकं कर्म भवेत्तथा दीक्षे-

रम्। ततः अमावास्यायां प्रायणीयमतिरात्रं कृत्वा अग्नि-होत्रादीनां मासानां यजेत। ततः पौर्णमास्यामुपेयुः। एव-मुत्तरस्यां पौर्णमास्यामायुषमुपेयुः। एवमेव गोआयुषी पौर्ण-मास्यां पौर्णमास्यां क्रमेणोपेयुः। हविर्यज्ञमासान् क्रमेणाव-र्तयन्तः प्राचं प्रस्रवणं सरस्वत्या दक्षिणेन तीरेणाभिप्रजेयुः। एवं कृते आयुरयुग्मेषु मासेषु, गौर्युग्मेषु मासेषु कृतौ भवतः। मासा-नां युग्मायुग्मत्वं सत्रारम्भकालावधिकं। अत्र दीक्षोपसदोर्द्वा-दश द्वादशैव। अत एव तदुक्तं ॥

इति न प्रथमः कल्पः ॥ १३ ॥

मित्रावरुणायनस्याद्यं प्रथमः कल्पः ॥

अथ द्वितीयः ॥ १४ ॥

कल्प इति शेषः ॥

यथामावास्यायामतिरात्रः स्यात् तथा दीक्षेरन् ॥ १५ ॥

यथाऽमावास्यायां प्रायणीयोऽतिरात्रो भवेत्तथा दीक्षित्वा-ऽपरपक्षस्य चतुर्दश्यामेवौपवसथिकं कर्म कृत्वाऽमावास्यायाम-तिरात्रं प्रायणीयं कुर्युः।

तेऽमावास्यायामतिरात्रं संस्थाप्य तदहरेवामावास्यस्य सा-न्नाय्यवत्सानपाकुर्युः ॥ १६ ॥

तेऽमावास्यायामेकस्मिन्नेवाहनि अतिरात्रमाश्विनान्तं समाप्य तदहरेव अस्य वत्साप्राकरणादि कृत्वा श्वोभूते यजेरन् ॥

तं पक्षमामावास्येन ब्रजित्वा पौर्णमास्याङ्गामुपेयुः तं पूर्वपक्षमामावास्येन ब्रजित्वा पौर्णमास्याङ्गामुपेयुः। पौर्णमासेनोत्तरं ब्रजित्वाऽमावास्यायामायुषमुपेयुः ॥ १७ ॥

पौर्णमासेनापरपक्षं ब्रजित्वाऽमावास्यायामायुषमुपेयुः ॥

एवमावर्त्तयन्तो ब्रजेयुः ॥ १८ ॥

यावत् प्लाक्षं प्राप्यते ॥

इन्द्राग्न्योरयनं ॥ १९ ॥

इदमप्यन्यत् सारस्वतं ॥

गोआयुषीभ्यां ॥ २० ॥

अस्मिन् सारस्वते गोआयुषीभ्यामेवान्तं कात्स्नमभ्यस्यान्तं ब्रजन्ति ॥

अर्यम्णोरयनं त्रिकद्रुकैः ॥ २१ ॥

इदमपि सारस्वतान्तरं। त्रिकद्रुकैस्त्रिकद्रुकैरेकस्त्रिनवदभ्यस्यान्तं ब्रजेयुः ॥

सरस्वतीपरिसर्पणस्य प्रत्युक्तं गवामयनेन ॥ २२ ॥

सरस्वतीपरिसर्पणं नाम सारस्वतान्तरं। तस्य प्रत्युक्तं गवामयनेनोक्तं। प्रत्युग्रहणं प्रत्युमात्रमेव गवामयनस्य उत्थानादि सारस्वतमेवेति ज्ञापनार्थं ॥

एकपातीनि त्वहान्यतिरात्राः ॥ २३ ॥

अयमत्र विशेषः, चतुर्विंशाभिजिद्विषुवन्महाव्रतादीनि एकपातीन्यहानि, तानि अतिरात्रसंस्थानि भवेयुः ॥

पृष्ठ्यश्चतुर्थं ॥ २४ ॥

अतिरात्रसंस्थमित्यर्थः ॥

इति नु गतयः ॥ २५ ॥

एवंप्रकारा गतयः सर्वेषु सारस्वतेषूक्ता अस्माभिः। शास्त्रान्तरेष्वन्येऽपि प्रकाराः सन्ति ॥

अथोत्थानानि ॥ २६ ॥

उत्थानान्यपि सर्वेषां वक्ष्यन्ते ॥

प्रासं प्रस्रवणं प्राप्योत्थानं ॥ २७ ॥

इमन्द्रेयं प्राप्योत्थानमेव कर्त्तव्यं, न क्रमप्राप्तं कर्मारब्धं ॥

तेयमुनायाश्चारपत्त्ववेऽवभृथमभ्युपेयुः ॥ २८ ॥

ये म्राद्यं प्रस्रवणं प्राप्योत्तिष्ठन्ति तेऽस्मिन्देशेऽवभृथं कुर्युः ॥

उदेत्याग्नये कामायेष्टिर्वैराजतन्त्रा ॥ २९ ॥

अवभृथमुदेत्य इयमिष्टिः कार्या ॥

तस्यामश्वीञ्च पुरुषीं च धेनुके दद्युः ॥ ३० ॥

अश्वजाती स्त्री पुरुषीत्युच्यते । ते धेन्ववत्से दद्युः ॥

एतद्वोत्थानं ॥ ३१ ॥

एतद्वोत्थानं वक्ष्यमाणानि वा । उक्तस्य पुनर्वचनं वक्ष्यमाणेष्विष्टिर्न भवतीत्येवमर्थं ॥

ऋषभैकशतानां वा गवां सहस्रभावे ॥ ३२ ॥

ऋषभैकशतसञ्ज्ञा आसाङ्गवामित्यृषभैकशताः सत्रारम्भकाले उत्सृज्यन्ते। आसां सहस्रभावे उत्थानमित्यर्थः ॥

सर्वस्वज्यान्यां ॥ ३३ ॥

चोरादिभिः सर्वस्वापहारे अथवोत्सृष्टानाङ्गवां सर्वनाशे ॥

गृहपतिमरणे वा। ज्यान्यां त्वत्तिष्ठन्तो विश्वजिताऽतिरात्रेणोत्तिष्ठेयुः। गृहपतिमरण आयुषा। *गवा गवां सहस्रभावे ॥ ३४ ॥

एतानि पश्चोत्थानानि सत्रप्राप्तेः प्रागेव निमित्तानि भवन्ति। सत्रप्राप्तिनिमित्ते गवां नाशनिमित्ते चोत्थाननिमित्तस्य क्रतोरविधानादुदयनीय एवातिरात्रस्तयोः कर्त्तव्यः ॥

इति शस्त्रं ॥ ३५ ॥ ॥ ६ ॥

इत्येवं ज्योतिष्टोमादिभिः सारस्वतान्तैरिति शस्त्रमित्युक्तं। तस्यायमर्थः। एतेषु सारस्वतान्तेषु सर्वं शस्त्रमुक्तमित्यर्थः ॥

इत्युत्तरषट्कस्य षष्ठे षष्ठी कण्डिका ॥ • ॥

---

अथ सवनीयाः ॥ १ ॥

पशवो वक्ष्यन्त इति शेषः ॥

क्रतुपशवो वात्यन्तं ॥ २ ॥

आग्नेयोऽग्निष्टोम इत्यादयः पशवः, तेषां संस्थावशेन प्रयोग उक्तः। †ते एव गवामयनेऽप्यन्यहनि संस्थावशेनैव सत्रपरिसमाप्तेरालब्धव्याः ॥

---

* गवेत्यधिकं सो० मू० पु० वर्त्तते नास्माकं। † ते एवमिति पु० द्वये।

आग्नेयो वैन्द्राग्नो वा ॥ ३ ॥

अयमपि पूर्ववत् ॥

आग्नेयं वा रथन्तरपृष्ठेषु ॥ ४ ॥

रथन्तरभक्तिष्वपि वैरूपशाक्करयोः परोक्षरथन्तरे नौधसे च ॥

ऐन्द्रं बृहत्पृष्ठेषु ॥ ५ ॥

अत्रापि तद्भक्तिष्वपि वैराजरैवते ॥

एकादशिनान् वा ॥ ६ ॥

अन्वहमेकादशिनान् वा समस्तानालभेरन्। अत्यन्तमित्येवमन्तमनुवर्त्तते ॥

प्रायणीयोदयनीययोरतिरात्रयोः समस्तानालभेरन्। ऐन्द्राग्नमन्तर्द्धा वा ॥ ७ ॥

अयमपरः कल्पः सन्नियोगशिष्टः। प्रायणीये चातिरात्रे उदयनीये चातिरात्रे एकादशिनान् समस्तानालभेरन्, मध्यवर्त्तिष्वन्येष्वहःस्वित्यर्थः। तेष्वैन्द्राग्नमालभेरन्। प्रायणीयोदयनीयातिरात्रग्रहणं अग्निष्टुत्प्रायणीयस्थान इत्येवमादिष्वेवायङ्कल्पो माभूदित्येवमर्थं ॥

अन्वहं वैकैकश एकादशिनान् ॥ ८ ॥

अयञ्चापरः कल्पः। एकादशिनामेव एकैकमादित आरभ्य अहन्यहनि क्रमेणालभेरन्। अस्मिन् पक्षे दण्डकलिनवदावृत्तिः। तदेवं निरूपितं वचनादन्यत्परिवृत्ति नैकादशिनेषु, लिङ्गदर्शनात् ॥

न त्वेवैकादशिनीं न्यूनामालभेरन् ॥ ९ ॥

एकादशिन्यामेव अन्वहमेकैकालम्भे क्रियमाणेऽन्त्या एकादशिनी अपरिसमाप्ता न्यूनवत्तिष्ठते तथा न कर्त्तव्यमिति प्रतिक्षिप्यते ॥

एतेन चेत् पश्वयनेनेयुस्तृतीयेऽहनि दशरात्रस्य द्वात्रिंशतमेकादशिन्यः सन्तिष्ठन्तेऽत एतस्मिन् नवरात्रेऽतिरिक्तपशूनालभेरन् ॥ १० ॥

न्यूनालम्भप्रतिषेधादेकैकालम्भे एवं कर्त्तव्यमित्युच्यते। एकैकालम्भपक्षे एकादशिन्या द्वात्रिंशत्परिवृत्तिषु गतासु नवाहानि परिशिष्यन्ते। तेष्वहःस्वतिरिक्तपशूनालभेरन्। अतिरिक्तपशव इति वक्ष्यमाणनामधेयं ॥

वैष्णवं वामनमेकविंशे ॥ ११ ॥

दशरात्रस्य चतुर्थप्रभृतिष्वहःसु एते पशवः सम्भवन्ति। *यान्येकविंशादीनि तेन तेन स्तोमेन तानि लक्ष्यन्ते ॥

---

* तान्येकेत्यादि सर्वत्र।

ऐन्द्राग्नं त्रिणवे। वैश्वदेवं त्रयस्त्रिंशे। द्यावापृथिवीयां धेनुञ्चतुर्विंशे। तस्या एव वत्सं वायव्यं चतुश्चत्वारिंशे। आदित्यां वशामष्टाचत्वारिंशे। मैत्रावरुणीमविवाक्ये॥ १२॥

इयमपि वशैव॥

वैश्वकर्मणमृषभं महाव्रते। आग्नेयमुदयनीयेऽतिरात्रे॥१३॥

एते सर्वे गोपशवः। अत्र स्तोमग्रहणमहरुपलक्षणार्थं, न तु स्तोमविवक्षार्थं॥

अपि वैकादशिनीमेव त्रयस्त्रिंशीं पूरयेयुः। अभिजिद्विश्वजिद्विषुवन्ति द्विपशूनि स्युः॥ १४॥　　॥ ७॥

गवामयने त्रयस्त्रिंशी एकादशिन्याः पूरणी वाऽयमुच्यते। अभिजिति सप्तदशस्वैकादशिन्या आरभते, तस्मिन्नहन्यादितो द्वौ पशू आलभ्येते। ततः सप्तदशावशिष्यन्ते। अहानि च सप्तैव। विषुवतो द्विपशुत्वं पूर्वमेव प्राप्तं तत्किमित्यत्र गृह्यते, परिसङ्ख्याभयात्। एवं कृते त्रयस्त्रिंश्येकादशिनी पूर्णा भवति। अयञ्च पक्षोऽतिरिक्तपशुभिर्विकल्प्यते॥

इत्युत्तरषट्कस्य षष्ठे सप्तमी कण्डिका॥ ※॥

अथ सत्त्रिधर्माः ॥ १ ॥

सत्त्राण्युक्तानि। अथेदानीं सत्त्रिणां नियमा उच्यन्ते ॥

दीक्षणादिपित्र्याणां दैवानाञ्च धर्माणां प्राकृतानां निवृत्तिः ॥ २ ॥

दीक्षणीयाप्रभृति आकर्मसमाप्तेः पित्र्याणां पिण्डपितृयज्ञादीनां, दैवानामग्निहोत्रादीनां निवृत्तिः। प्राकृतानां नित्यानामित्यर्थः। सत्त्रिग्रहणं यजमानोपलक्षणार्थं। तेनैकाहाहीनेष्वपि यजमानानां धर्मा भवन्ति ॥

सर्वशश्च वर्जयेयुर्ग्रामचर्यां ॥ ३ ॥

ग्रामचर्या स्त्रीसम्भोगः, सर्वशस्तं वर्जयेयुः, मनोवाक्कायैरित्यर्थः। दैवपित्र्याण्यपि सर्वशो वर्जयेयुः, श्रौतानि स्मार्त्तानि च ॥

सरणं ॥ ४ ॥

अद्रुतगतिः, धावनमित्यर्थः ॥

विवृतस्मयनं ॥ ५ ॥

दन्तान् प्रकाश्य हसनं न कर्त्तव्यं, यदि कर्त्तव्यन्तदा आच्छाद्यैव ॥

स्त्र्यभिहासं ॥ ६ ॥

स्त्रीभिः सहाभिहाससमाचमपि वर्जयेयुः ॥

अनार्याभिभाषणं ॥ ७ ॥

अनार्याः प्रतिलोमा अनुलोमाः दुष्टदोषिणश्च तैर्न सम्भाषेरन् ॥

· अन्टतं क्रोधं अपां *प्रगाहणं ॥ ८ ॥

स्नानानि ॥

अभिवर्षणं ॥ ९ ॥

आत्मनः शरीरे वर्षाबिन्दुपतनं ॥

आरोहणं च वृक्षस्य नावो वा ॥ १० ॥

वाशब्दः समुच्चयार्थः । अन्यस्याप्येवंप्रकारस्य वृक्षादेः ॥

रथस्य वा ॥ ११ ॥

अयमपि निषेधोऽश्वादीनामुपलक्षणार्थं ॥

दीक्षिताभिवादनं ॥ १२ ॥

एतानि सर्वेषा वर्जयेयुरिति सम्बध्यते ॥

---

* प्रगाहणमिति सं० सटी० पु० द्वये ।

दीक्षितस्त्वौपसदं ॥ १३ ॥

तुशब्दोऽभिवादनविधायकेषु पञ्चसु सूत्रेषु वर्जयेयुरित्यस्य व्यावृत्त्यर्थः। दीक्षावस्थ उपसदवस्थमभिवादयेत् ॥

उभौ सुन्वन्तं ॥ १४ ॥

दीक्षावस्थश्चोपसदवस्थश्च सुन्वन्तं सुत्यावस्थं अभिवादयेतां ॥

समसिद्धान्ताः पूर्वारम्भिणं ॥ १५ ॥

समावस्थयोर्यः पूर्वमारभते तमितरोऽभिवादयेत् पश्चादारम्भी ॥

अभितप्ततरं वा ॥ १६ ॥

समसिद्धान्तयोरभितप्ततरमितरोऽभिवादयेत्। अभितप्ततरो नाम पूर्वं बहुभिः क्रतुभिः इष्टवान् इदानीं च प्रवर्त्तमानः ॥

सर्वसाम्ये यथावयः ॥ १७ ॥

सर्वत्र समत्वे वयोऽधिकमितरोऽभिवादयेत्। एतावानभिवादनविधिः ॥

नृत्यगीतवादितानि ॥ १८ ॥

तुशब्देनाभिवादनविधेर्व्यावृत्तेर्व्यावृत्तौ वर्जयेदितिशब्दः पुनरप्यागच्छतीति सूत्रद्वयोपपादित दुन्दुभ्याघ्ननादि ॥

अन्यांश्चाव्रत्योपचारान् ॥ १९ ॥

वर्जयेयुरित्यर्थः। उक्तेभ्योऽन्ये ये शास्त्रान्तरोक्ताः व्रतविरोधिन उपचारास्तानपि वर्जयेयुरित्यर्थः ॥

*न चैनान् बहिर्वेदिसदोऽभ्याश्रावयेयुः ॥ २० ॥

†यदा सत्रिणो बहिर्वेदिस्थिताः तदाऽभ्याश्रावणं न कर्त्तव्यं। आश्रावणशब्देन यागहोमा लक्ष्यन्ते ॥

नोदक्यान् ॥ २१ ॥

उदक्या आचमनार्हास्तान् बहिर्वेदिस्थितान्नाभ्याश्रावयेयुः॥

नो एवाभ्युदियान्नाभ्यस्तमियात् ॥ २२ ॥

यदा सत्रिणः एतान् बहिर्वेदिस्थितानात्मनो नोभयं कुर्यादित्यर्थः। न यागहोमकाले उदयास्तमयकाले च बहिर्वेदि तिष्ठेयुः, अशुचयो वा भवेयुः ॥

तेषाञ्चेत् किञ्चिदापदोपनमेत् त्वमग्ने व्रतपा असीति जपेत् ॥ २३ ॥

तेषां ग्रामचर्यादीनां यत्किञ्चिदापदा अकामत उपनमेत्तदा 'त्वमग्ने व्रतपा असि' इत्येतामृचञ्जपेत् ॥

---

* न चैनान्न बहिरिति सटीक पु० द्वये। † यदेति पु० द्वये।

आख्याय वेतरेषूपहवं लोपेत ॥ २४ ॥

यो विध्यतिक्रमं कृतवान् स इतरेषु सत्त्रिषु ममायमतिक्रम इत्याख्याय तेषूपहवं याचेत वेत्यर्थः। तेनायमर्थः। सर्वेष्वतिक्रमेषु जपो नित्यः, जपानन्तरमिदं वा कर्त्तव्यं। 'व्रतातिपत्तौ व्रतपतयः' इति शास्त्रान्तरविहितमन्यं व्रतविशिष्टमस्ति चेत्तदा कर्त्तव्यमित्यर्थः॥

अवकीर्णिनं तैरेव दीक्षितद्रव्यैरपर्युप्य पुनर्दीक्षयेयुः ॥ २५ ॥

यो व्यवायपर्यन्तां ग्रामचर्याङ्करोति सः अवकीर्णीत्युच्यते। शास्त्रान्तरोक्तं वर्जयन् शास्त्रोक्तं च प्रायश्चित्तङ्कारयित्वा पुनरपि तैरेव दीक्षितद्रव्यैर्दण्डादिभिः दीक्षयेयुः। अपर्युप्य परिवापनमकृत्वा इत्यर्थः।

आग्रयणकाले नवानां सवनीयान् निर्वपेयुः ॥ २६ ॥

आग्रयणकाले सत्यागतासु नवानां व्रीहियवानां सवनीयान्निर्वपेयुः 'शरदि व्रीहीणां वसन्ते यवानाम्' इति। विध्यन्तरानुरोधे तु श्यामाकानां, प्रकृतौ दर्शपूर्णमासयोस्तेषामपि विधानात्॥

दीक्षोपसत्सु व्रतदुघ आदयेयुः ॥ २७ ॥

दीक्षासु उपसत्सु च आग्रयणकाले आगते तत्तत्कालीन-

मन्त्रं तेषां व्रतदुघ आदधित्वा तत्पयसा व्रतं कुर्युः। यत्र श्यामाकानामप्याग्रयणं न सम्भवति तत्रैवङ्कुर्युर्विरोधाभावात्॥

## तेषां व्रत्यानि॥ २८॥

व्रतार्हेषु भवानि व्रत्यानीत्युच्यन्ते। दर्शपूर्णमासयोर्यदौपवसथ्यमहस्तद्व्रताहः। तत्र यानि पत्नीयजमानयोः भोजनार्थान्युक्तानि व्रतार्हाणि तानि तेषां सत्रिणां पत्नीयजमानानां एकाहाहीनस्थानानां च पत्नीयजमानानां भोजनार्थे भवन्तीति सूत्रार्थः। दीक्षोपसत्सुत्यासु भोजनार्थे विहितत्वात् कुण्डपायिनामयनादिषु अग्निहोत्रादिमासप्रकारा अस्य विधेरवकाशं हविरुच्छिष्टभक्षविषयं पत्न्यस्य, तासां हविरुच्छिष्टभक्षविरोधात्॥

## पयो दीक्षासु॥ २९॥

दीक्षासु भोजनार्थे पयो विधीयते॥

## व्यतिनीय कालमुपसदाञ्चतुर्थमेकस्या दुग्धेन॥ ३०॥

उपसदामाद्योत्तमलक्षणं व्यतिनीयापोह्य अवशिष्टानुपसत्कालांश्चतुर्धा विभज्य आद्यभागश्चतुस्तनं व्रतङ्कुर्यात्। तत्राद्यः कालः प्रथमेऽहनि प्रातः, स दीक्षाव्रतेन व्याप्यत्वादपोह्यते। उत्तमस्तु काल औपवसथ्येऽहनि सायं, तस्य तत्र निवृत्तत्वात्तद्धविरुच्छिष्टत्वमेव। अतो व्यतिनीय कालमिति कालद्वयाभिप्रायेणोक्तं॥

तावद्व त्रिभिस्तनैः । तावद्द्वाभ्यां । एकेन तावदेव ॥ ३१ ॥

उपसदामेकैकं चतुर्भागं व्रतयितव्यं। एवमुपसत्समृद्धौ यथायोगं भागाः कल्पनीयाः ॥

सुत्यासु हविरुच्छिष्टभचा एव स्युः ॥ ३२ ॥

सुत्यासु हविरुच्छिष्टभचा एव भवेयुः, नौपवसथिकं च तत्र, व्रतस्य निवृत्तत्वादित्युक्तं । अवधारणं यजमानानामेतदेव व्रतं न सामान्यं तेषां व्रतामीत्येतत् । पत्नीनां तु सामान्यमेव, तासां हविरुच्छिष्टभचविरोधादित्युक्तं ॥

धानाः करम्भः परिवापः पुरोडाशः पयस्येति तेषां यद्यत् कामयीरंस्तत्तदुपविगुल्फयेयुः ॥ ३३ ॥

यदि यथाप्राप्तेन हविरुच्छिष्टभचणेन प्राणा न भ्रियेरन् तदा धानादीनां मध्ये यस्मिंस्तेषामभिरुचिस्तत् द्रव्यमुपकल्पयेयुः, अभिवर्धयेयुः ॥

आशिरदुघो दध्यर्थं ॥ ३४ ॥

यदि व्यञ्जनरहितो हविरुच्छिष्टमुपभोक्तुमशक्तः स्यात् तदा आशिरदुघा गा वर्धयेयुः दध्यर्थं । तेन तेन दध्ना आशिरार्थं ग्टहीतशेषेण व्रतेनोपयुञ्जीरन् ॥

सौम्यं वा विगुल्फं निर्वपेयुरिति शौनको यावच्छरावं मन्येरन् ॥ ३५ ॥

यदि धानादीनां वा हविरुच्छिष्टेन प्राणा न ध्रियेरन् तदा यः प्राकृतः सौम्यश्चरुस्तं प्रवृद्धं निर्वपेयुः, यावद्भिः शरावैः निरुप्तैः सत्रिणां प्राणधारणाय पर्याप्तिः सम्भवति तावन्निर्वपेयुरित्यर्थः ॥

वैश्वदेवमेके ॥ ३६ ॥

अथवा एतौ पक्षौ भवतः। सौम्यो यथाप्रकृति वक्तव्यः, यथाप्रकृत्येव प्रतिपादनीयश्च सत्रिणां प्राणरक्षार्थमेव, वैश्वदेवश्चरुं विगुल्फं निरुप्य तेभ्यो यागं कृत्वा तच्छेषमुपयुञ्जीरन् फलचमसन्यायेन ॥

बार्हस्पत्यमेके ॥ ३७ ॥

बार्हस्पत्येन चैवमेवकुर्युः। द्वावेतौ कौवौ पक्षौ ॥

सर्वान् वाऽनुसवनं ॥ ३८ ॥

सर्वानेतान सौम्यादींश्चरूननुसवनं निर्वपेयुः। एकैकस्मिन तत्र सौम्यः प्रकृत इति स्वस्थान तृतीयसवने भवति। इतरयाः सवनयोरितरौ चरू अनूबन्ध्यानकर्षेण भवतः ॥

अपि वान्यत्र सिद्धाङ्गार्हपत्ये पुनरधिश्रित्योपव्रतयेरन्॥ ३९॥

गार्हपत्येऽधिश्रयणधर्ममात्रं उपव्रतयेरन्, न वा व्रतेन संस्कृत्य वा॥

अन्यान् वा पथ्यान् भक्षानामूलफलेभ्यः॥ ४०॥

उपव्रतयेरन्नित्यर्थः॥

एतेन वर्त्तयेयुः पशुना च॥ ४१॥ ॥ ८॥

एतेन सवनीयेन च पशुना वर्त्तयेयुः। न केवलं धानादिभिरेव, सुत्याधिकारात् सवनीय एव पशुरत्र सन्निहितः, किमर्थमेतेनेत्युच्यते। वक्ष्यमाणेऽपि यागे सवनीयस्यैव प्रापणार्थं नाग्नीषोमीयस्य। अतोऽग्नीषोमीये पशौ हविरुच्छिष्टभक्षणार्थं विभागे प्राप्ते 'समं स्यादश्रुतत्वात्' इति सममेव भागः स्याद्धसमादिति॥

इत्युत्तरषट्कस्य षष्ठे अष्टमी कण्डिका।

तस्य विभागं वक्ष्यामः ॥ १ ॥

तस्य सवनीयस्य पशोर्विभागं वक्ष्याम इति प्रतिज्ञासूत्र-मिदं ॥

हनू सजिह्वे प्रस्तोतुः ॥ २ ॥

जिह्वया सह हनू प्रस्तोतुर्भवति, त्रीण्येतानि ॥

श्येनं वक्ष उद्गातुः ॥ ३ ॥

श्येनसदृशं वक्ष इत्यर्थः ॥

कण्ठः काकुद्रः प्रतिहर्त्तुः ॥ ४ ॥

काकुद्रः ककुदित्यर्थः । द्वे एते ॥

दक्षिणा श्रोणिर्होतुः । सव्या ब्रह्मणः । दक्षिणं सक्थि मैत्रावरुणस्य । सव्यं ब्राह्मणाच्छंसिनः । दक्षिणं पार्श्वं सांसमध्वर्य्योः ॥ ५ ॥

अंसेन सहितं पार्श्वं । द्वे एते ॥

सव्यमुपगातॄणां । सव्योऽसः प्रतिप्रस्थातुः । दक्षिणं दोर्नेष्टुः । सव्यं पोतुः ॥ ६ ॥

दोरित्यर्थः ॥

दक्षिण ऊरुरच्छावाकस्य। सव्य आग्नीध्रस्य। दक्षिणो बाहुरात्रेयस्य। सव्यः सदस्यस्य। सदञ्चानूकञ्च गृहपतेः॥ ७॥

द्वे एते॥

दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य॥ ८॥

द्वे एते॥

सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्य। ओष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्रशिंष्यात्॥ ९॥

एतयोर्व्रतप्रदयोरोष्ठः साधारणो भवति। तं गृहपतिस्ताभ्यां विभज्य दद्यादित्यर्थः॥

जाघनीं पत्नीभ्यो हरन्ति। तां ब्राह्मणाय दद्युः॥ १०॥

तां जाघनीं पत्न्यः कस्मैचिद्ब्राह्मणाय दद्युः॥

स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा ग्रावस्तुतः॥ ११॥

स्कन्धजा मणिकाः कीकसाश्च: एते द्वे॥

तिस्रश्चैव कीकसा अर्द्धं च वैकर्त्तस्योन्नेतुः। द्वयोस्तूक्तयोः खत्रयोस्त्रीणि त्रीणि। अर्द्धश्चैव वैकर्त्तस्य क्लोमा च शमितुस्तद्ब्राह्मणाय दद्यात्॥ १२॥

ब्राह्मणश्चेच्छमिता स्यात् तस्मै दद्यात्॥

यद्यब्राह्मणः स्यात्॥ १३॥

तदा तं भागमन्यस्मै ब्राह्मणाय दद्यात्॥

शिरः सुब्रह्मण्यायै। यः श्वःसुत्यां प्राह तस्याजिनं। इडा सर्वेषां। होतुर्वा। ता वा एताः षट्त्रिंशतमेकपदा यज्ञं वहन्ति॥ १४॥

यान्येतानि षट्त्रिंशदङ्गान्युक्तानि तान्येकपदा उच्यन्ते। ताश्च यज्ञं वहन्ति, भक्षयितॄणां बलवर्धनद्वारेण॥

षट्त्रिंशदक्षरा वै बृहती॥ १५॥

सङ्ख्यासामान्यात् स बृहतीत्युच्यते॥

बार्हताः स्वर्गलोकास्तत् प्राणेषु चैव तत् स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति॥ १६॥

स्वर्गाश्च प्राणाश्च बार्हतः इति कश्चित् संस्तुतिरिति। त-

स्मात् प्राणेषु च स्वर्गेषु च प्रतितिष्ठन्तो यन्ति, येऽङ्गानि बृह-तीसंमितानि जानन्ति ॥

स एषः स्वर्ग्यः पशुर्य एनमेवं विभजन्त्यथ येऽतोन्यथा त-द्यथा सेलगावा पापकृतो वा पशुं विमथ्नीरंस्तादृक्तत् ॥ १७॥

स एव पशुरानन्त्याय सुखाय भवति। ये अनेन विधा-नेन विभजन्ति। अन्यथा चेत् प्रत्यवायायैव भवतीति। वि-भागस्तुतिपरा सैषा निन्दा॥

तां वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदाञ्च-कार तामु हाप्रोच्यैवास्माल्लोकादुच्चक्राम तामु ह गिरि-जाय बाभ्रव्याया मनुष्यः प्रोवाच ततो हैनामेतदर्वाङ्मनुष्या अधीयते ॥ १८ ॥ ॥ ९ ॥

विद्यास्तुतिद्वारेणापि विभागस्यैव प्रशस्तता कथिता। इति पशुविभागः॥

इत्युत्तरषट्कस्य षष्ठे नवमी कण्डिका।

सर्वे समानगोत्राः स्युरिति गाणगारिः कथं ह्याग्नीध्रकानि भवेयुः कथं प्रयाजा इति ॥ १ ॥

सत्राण्युक्तानि। तेषां च बहुयजमानत्वमुक्तं। बहुषु च समानार्षेयाः भिन्नार्षेयाश्च संभवन्ति। तत्र भिन्नार्षेयाणां सत्रासनं नास्तीति गाणगारिराचार्यो मन्यते। कुतः। कथं ह्याग्नीध्रकानि भवेयुः कथं प्रयाजा इति, भिन्नार्षेयत्वे सत्येवमादीनि कथं भवेयुरित्यर्थः। अतः सर्वे सत्रिणः समानगोत्राः स्युरित्युक्तं। आर्षेयः प्रवर इति पर्यायौ। ऋषिरिति वंशनामधेयभूता वत्सबिदार्ष्टिषेणादयः शब्दा उच्यन्ते। गोत्रशब्दोऽपत्यं पौत्रप्रभृति गोत्रमित्येवं पारिभाषिकोऽस्ति। अन्यथा च पारिभाषिक एवास्ति। यथोक्तं भगवता बौधायनेन 'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयोऽगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते'। अयमर्थः। एतेषामपत्यमिति ये स्मर्यन्ते ते तद्गोत्रमित्युच्यते। यथा जमदग्नेर्गोत्रं वत्सादयः। तथा गौतमस्यायास्यादयः। भरद्वाजस्य दक्षगर्गादयः। तथाऽत्र्यादीनां स्वस्ववर्ग्या इति। तथार्षेयगोत्रशब्दयोः भिन्नविषयत्वं शिष्टव्यवहारे दृष्टं। यथाह याज्ञवल्क्यः। 'अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्' इति। तथा 'पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन्' इत्येवं व्यवहारा बहवः सन्ति। अस्मिंस्तु सूत्रे गोत्रशब्द आप्त्यादेरनुष्ठेयत्वादनर्थमित्येकत्वादेकोपाधिवचनेनाऽभिप्रेतः। 'यावन्तोऽनन्त-

र्षिताः समानगोत्रास्तावतां सक्तत् इत्यत्र सूत्रे समानप्रवरमात्रोपाधिवचनो गोत्रशब्दः प्रयुक्तः। यस्त्वगस्त्याष्टमानां अन्येष्वपि गोत्रशब्दो लोके प्रयुज्यमानो दृश्यते मित्रयुवगोत्रोऽहं मुद्गलगोत्रोऽहमित्येवमादिषु, स चौपचारिको परामर्शजः प्रयोगः। अगस्त्याष्टमानामपत्येषु यथास्वगर्गकुण्डिनादिषु गौतमभरद्वाजवसिष्ठादिषु गोत्रत्वमस्ति, तत्सामान्यं दृष्ट्वा मित्रयुवमुद्गलादिषु परामर्शेन लौकिकाः प्रयुञ्जन्ते। अस्यायमर्थः इति स्मरन्ति। अतो भगवतो बोधायनस्य सूत्यन्तर उक्त एव गोत्रशब्दस्यार्थ इति निश्चिनुमः। व्याकरणस्मृतिस्त्वायस्या न बाधिका सामान्यविशेषरूपत्वात्तयोः॥

अपि नानागोत्राः स्युरिति शौनकस्तन्त्राणां व्यापित्वात्॥ ॥२॥

गाणगारिणा समानविधानानामेव सत्रसम्बन्धे उक्ते शौनक आचार्य आह समानगोत्राणामेवेति न नियमः। नानागोत्रा अपि सत्रमासीरन्निति। कुतः, तन्त्राणां व्यापित्वात्। तन्त्रशब्देनात्र सर्वपुरुषसाधारणोऽङ्गसमुदाय उच्यते। तस्य च व्यापित्वमस्त्येव। कथं पुनरसाधारणं इतिपदार्थं इति तत्राह॥

गृहपतिगोत्रान्वया विशेषाः॥ ३॥

अयमर्थः। ये विशेषा असाधारणाः ते गृहपतिगोत्रान्वया गृहपतिविधानानुगुणाः कर्त्तव्याः। एतदुक्तं भवति।

असमानविधानानामपि सत्रासमं भवति। प्रायेणाङ्गसमुदायस्य अविरोधित्वात्। ये केचन विरोधिनस्ते गृहपतेरविरोधित्वेन कर्त्तव्या इति। ननु गृहपत्यविरोधेन सत्रे कृते येषां विरोधस्तेषां फलसम्बन्धो न स्यादित्यत आह॥

तस्य राद्धिमनु राद्धिः सर्वेषां॥ ४॥

तस्य गृहपतेः फलसिद्धिमनु सर्वेषां सत्रिणां फलसिद्धिर्भवत्येव। कुतः, 'तन्मुखाः सत्राण्यासते' इति वचनात्। अत एव सूत्रस्यायमेव पच इति गम्यते॥

प्रवरास्त्वावर्त्तेरन्नावापधर्मित्वात्॥ ५॥

आप्यत इत्यावापा आहवनीयाः, ते च प्रवरेण धर्मेण धर्मिणः तस्य प्रवरस्याहवनीयसंस्कारत्वादाहवनीयधर्म इत्युच्यते, अत आहवनीयबहुत्वात् प्रतिप्रधानमावर्त्तन्त इत्युच्यते आवापधर्मित्वादित्ययमर्थः। आवापानामाहवनीयानां प्रवरं प्रति धर्मित्वादित्ययमर्थः। एवं प्रवरानुक्रमणस्य प्रसङ्गमापाद्यानन्तरं प्रवरानुक्रमणमिति 'जामदग्ना वत्साः' इत्येवमादिना ग्रन्थेन। तस्यानुक्रमणस्येदं प्रयोजनं श्रुतावेतावन्मात्रमस्ति। कस्याश्चिदेवं श्रूयते 'आर्षेयान् वृणीते आम्नातानृषीन् मन्त्रकृतो वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इति। अर्थः, आर्षेयवरणस्य मन्त्रकृत्त्वं विशेषणत्वेनोच्यते।

अतो ये आम्नातानामृषीणां मन्त्रकृत्त्वेनाम्नायन्ते तेषामेकाद्याद्यीनानां यथेष्टसङ्ख्याकानां वरणे प्राप्ते 'न चतुरो वृणीते न पञ्चातिवृणीते' इति चतुर्णामतिपञ्चानाञ्च प्रतिषेध इति वाक्यत्रयमस्यां श्रुताविति वर्णयन्ति। अन्यस्यामन्यथा श्रूयते। 'आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इति। अयमर्थः। 'त्रीन् वृणीते' इत्येवात्र विधिः, इतरेषां कश्चिदवद्युत्यानुवाद इति वर्णयन्ति। इमामेव श्रुतिमुपन्यस्य न्यायविद्भिरयमेवार्थो वर्णितः, अत्रार्षेयस्य ज्ञानं स्यादनधिकारादिति पूर्वोक्तश्रुत्यनुसारेणाऽऽर्षेयाणामप्यधिकारोऽस्तीति कल्पकाराणां सूत्रकाराणाञ्च प्रवृत्तिरिति, सैवानुसृताऽस्माभिः। तत्र ये आत्मीया ऋषयस्तेषां ये मन्त्रकृतस्ते प्रोक्तसङ्ख्या वरीतव्या इत्येव तावन्मात्रं श्रुतितोऽवगतं। तत्रैते आत्मीयाः तेषामेते मन्त्रकृत इति ज्ञानेन श्रुतिस्मृतिरेवात्र शरणं। तत्र एतावदेव लौकिकानां स्मरणं दृश्यते वयं वत्साः वयं विदाः वयमायास्याः वयं रथीतराः वयं कण्वाः वयङ्गविष्ठिराः वयं कर्षणाः वयं कुण्डिनाः वयं गर्गाः इति नास्माकमेते श्रूयन्ते मन्त्रकृतो मन्त्रकृतः, इति स्मरन्ति। अपि च द्व्यार्षेयास्त्र्यार्षेयाः पञ्चार्षेया इति च स्मरन्ति। अपि चास्मकमङ्गिरोमुख्यः प्रवरोऽष्टादंष्ट्रमुखो वेति वचनं स्मरन्ति। अथ चैतेषां ज्ञानस्य स्मरणादन्यत् प्रमाणं नास्ति। आर्षेयवरणविध्यपेक्षितं चैतज्ज्ञानं। एवञ्चेत् कल्पसूत्राणां वंशनामधेयभूतमित्रयुवादिविषया श्रुतिर्लोके

उपजीव्या। उद्देशेनास्यैत एतावन्तः अस्यैको द्वावस्य पञ्चास्य त्रयोऽस्य त्रयो वा पञ्च वास्य एको वा त्रयो वा पञ्च वा इत्य-स्यायमुखतःपञ्चैवेत्येवमादिपदार्थविषयत्वादिकल्पानां* अुति-मागच्छन्तोऽयम्प्रभ्रंशपरिहारार्थं स्वे स्वे कल्पे सूत्रेण निरु-ध्नन्ति। प्रवरादिस्वीयसंज्ञाया आपत् प्रवरानुक्रमस्य प्रयोजन-मित्यवगन्तव्यं। इदानीं प्रवरा अनुक्रम्यन्ते॥

जामदग्न्या वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजा-मदग्न्येति॥ ६॥

द्विविधा वत्सा जामदग्न्या अजामदग्न्याश्च। तत्र ये जाम-दग्न्या वत्साः वयमिति स्मरन्ति तेषां पञ्चार्षेयः प्रवरो भवति, भार्गवच्यावनाप्नवानौर्वजामदग्न्येति॥

अथ त्वजामदग्न्यानां भार्गवच्यावनाप्नवानेति॥ ७॥

ये तु वयमजामदग्न्या वत्सा इति स्मरन्ति तेषां त्र्यार्षेयः प्रवरो भवति, भार्गवच्यावनाप्नवानेति। एतेषामजामदग्न्यत्वा-दौर्वजामदग्न्यशब्दौ न भवतः। अतएव तौ शब्दौ जामदग्न्य-त्वप्रयुक्तौ। द्विप्रकाराणां वत्सानां परस्परमविवाहः, आर्षेय-सन्निपातात्। एतदुक्तं भगवता बौधायनेन 'आर्षेयाणामवि-वाहः' इति॥

---

* कल्पानामित्यस्य स्थाने कालानामित्येकस्मिन् पाठः प्रामादिकः।

आर्ष्टिषेणानां भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति ॥ ८ ॥

अयमपि पञ्चार्षेयः प्रवरः ॥

बिदानां भार्गवच्यावनाप्नवानौर्वबैदेति ॥ ९ ॥

अयमपि पञ्चार्षेय एव। बिदानामौर्वशब्दसमन्वयाज्जमदग्निगोत्रत्वमप्यस्ति। वत्सानां बिदानां आर्ष्टिषेणानाञ्च कचिदृषिसन्निपातात् कचित् सगोत्रत्वाच्च परस्परमविवाहः। सर्वेषु च समानप्रवरत्वादविवाहः। सर्वत्र चैवं समानधर्मेषु ॥

यस्कवाधौलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिदैवन्त्यायनानां भार्गववैतहव्यसावेतसेति ॥ १० ॥

अयं गणः आर्षेयः। यस्कादीनां दशानां परस्परमविवाहः। प्रवरेषु कचिच्छास्त्रान्तरवशात् पदविपर्यासो वर्णविपर्यासो वा पदान्यत्वं वाऽस्ति, न तेन प्रवरान्यत्वं भवतीति मन्तव्यं ॥

श्यैतानां भार्गववैन्यपार्थेति ॥ ११ ॥

आर्षेयोऽयं ॥

मित्रयुवां वाध्र्यश्वेति त्रिप्रवरं वा भार्गवदैवोदासवाध्र्यश्वेति ॥ १२ ॥

मित्रयुवामेकार्षेयोऽयं, आर्षेयो वा प्रवरो भवति। अयं

प्रवरविकल्पः सर्वेषां मित्रयुवां, भेदेन स्मरणाभावात्। वत्सानां तु स्मरणादेव वत्सभावतद्भेदात् तत्प्रवरस्य व्यवस्था युक्ता, न तु तद्विशेषणभेदेन प्रवरान्यग्रहणमिति। तदयुक्तं, अदृष्टप्रमाणस्य भेदस्य सत्त्वे प्रमाणाभावात्। प्रवरणभेदः प्रमाणमिति चेत्, न तत् साधकं, प्रयोगविकल्पेनापि संभवात्। अतो भेदग्रहणात् व्यवस्थायां प्रमाणं नास्तीति विकल्प एव प्रवरयोरित्यध्यवसितं। एवमेव आर्षेयपञ्चार्षेयविकल्पे आद्यपदविकल्पे वा अन्यस्मिन्नप्येवंविधे ऋषिभेदग्रहणे सति व्यवस्था नास्तीति निश्चीयते॥

शुनकानां गृत्समदेति त्रिप्रवरं वा भार्गवशौनहोत्रगार्त्समदेति॥१३॥ ॥१०॥

एकार्षेयोऽयं आर्षेयो वा शुनकानां प्रवरः॥

इत्युत्तरषट्कस्य षष्ठे दशमी कण्डिका॥०॥

गोतमानामाङ्गिरसायास्यगौतमेति। उचथ्यानामाङ्गिरसौचथ्यगौतमेति। रहूगणानामाङ्गिरसराहूगण्यगौतमेति। सोमराजकानामाङ्गिरससौमराज्यगौतमेति। वामदेवानामाङ्गिरसवामदेव्यगौतमेति। बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति। पृषदश्वानामाङ्गिरसपार्षदश्ववैरूपेति। अष्टादंष्ट्रं हैके ब्रुवतेऽतीत्याङ्गिरसमष्टादंष्ट्रपार्षदश्ववैरूपेति ॥ १ ॥

आङ्गिरसाष्टादंष्ट्रयोर्विकल्पः *अतीत्य त्यक्त्वेत्यर्थः ॥

ऋक्षाणामाङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति ॥ ॥ २ ॥

अयं पञ्चार्षेयः प्रवरः ॥

कक्षीवतामाङ्गिरसौचथ्यगौतमौशिजकाक्षीवतेति ॥ ३ ॥

अयमपि पञ्चार्षेय एव ॥

दीर्घतमसामाङ्गिरसौचथ्यदैर्घतमसेति ॥ ४ ॥

अयं त्र्यार्षेयः। अयास्योचथ्यरहूगणसोमराजकिवामदेवबृहदुक्थकक्षीवद्दीर्घतमस इत्येते गोतमाः। उचथ्यशब्दसमभ्याद्दीर्घतमसां गोतमत्वमस्त्येव। गोतमानां सर्वेषामविवाहः। 'पृषदश्वो रथीतरस्य' इति स्मरन्ति। एकपातिन ऋक्षाः पुनर्भारद्वाजाः ॥

* अतीत्य तत्स्थान इत्यर्थः, इति पाठान्तरः।

भरद्वाजाग्निवेश्यानामाङ्गिरसबार्हस्पत्यभारद्वाजेति ॥ ५ ॥
॥ ११ ॥

भरद्वाजानामाग्निवेश्यानाञ्च अयं प्रवरो भवति ॥

इत्युत्तरषट्कस्य षष्ठे एकादशी कण्डिका ॥ ० ॥

---

मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति । तार्क्ष्यं हैके ब्रुवते-ऽतीत्याङ्गिरसन्तार्क्ष्यभार्म्यश्वमौद्गल्येति ॥ १ ॥

अयं आर्षेयः आङ्गिरसतार्क्ष्ययोर्विकल्पः ॥

विष्णुवृद्धानामाङ्गिरसपौरुकुत्स्यत्रासदस्यवेति । गर्गाणा-माङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति । आङ्गिरसशैन्य-गार्ग्येति वा ॥ २ ॥

गर्गाणां पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो भवति । व्यवस्थया विकल्पः न वर्गभेदानवगमादित्युक्तं । एते च भरद्वाजाः । आग्निवेश्यानां गर्गाणां च भरद्वाजत्वात् सर्वेषां च परस्पर-मविवाहः । मुद्गला विष्णुवृद्धाश्च एकपातिनः ॥

हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवना-श्वेति ॥ ३ ॥

हरितकुत्सपिङ्गशङ्खदर्भभैमगवा इत्येतेषां षण्णामयं प्रवरो भवति ॥

मन्धातारं हैके ब्रुवतेऽतीत्याङ्गिरसं मान्धात्राम्बरीषयौवनाश्वेति ॥ ४ ॥

अयं वा हरितादीनां षष्णां प्रवरो भवति ॥

संकृतिपूतिमाषतण्डिशम्बुशैवगवानामाङ्गिरसगौरिवीतसांकृत्येति ॥ ५ ॥

संकृत्यादीनां पञ्चानामयं प्रवरो भवति ।

शाक्त्यो वा मूलं शाक्त्यगौरिवीतसांकृत्येति ॥ ६ ॥ ॥ १२ ॥

संकृत्यादीनामयं वा प्रवरो भवति । एते संकृत्यादयः प्रकरणादङ्गिरःशब्दसमवायाच्चाङ्गिरसा इति प्रतीयन्ते । शक्तिगुरुवीतसम्बन्धाद्वसिष्ठा इत्यपि प्रतीयते । तथा क्वचित् प्रवराम्नायेऽङ्गिरसां प्रकरण एव संकृत्यादीनादिश्याङ्गिरोमुखमेव प्रवरं पठ्यमानं पश्यामः । तथा कस्मिंश्चित् प्रवराम्नाये वसिष्ठानां प्रकरणे एतानेवोद्दिश्य शाक्त्यमुखं प्रवरं पठ्यमानं पश्यामः । एवं द्वाभ्यामपि सम्बन्धदर्शनादुभयोरन्यतरसम्बन्धिन एवेत्यवगन्तुं न शक्यते । यद्येषां वंशभेदस्थितिरस्ति तदा इमे आङ्गिरसा इमे वसिष्ठा इत्यवगम्यते । तत्राङ्गिरसानामयं वसिष्ठानामयमिति नियमे विकल्पाभावः । अतो वंशभेदादविकल्प एव प्रवरयोः । ततः संकृत्यादीनां वसिष्ठत्वाभावे प्रमाणाभावाद्वसिष्ठैरेषामविवाहः ॥

इत्युत्तरषट्कस्य षष्ठे द्वादशी कण्डिका ॥०॥

कण्वानामाङ्गिरसाजमीळ्हकाण्वेति। घोरमु हैके ब्रुवते-ऽवक्त्र्याजमीळ्हमाङ्गिरसघौरकाण्वेति ॥ १ ॥

अवक्त्र्येति अपोद्येत्यर्थः ॥

कपीनामाङ्गिरसामहीयवौरुक्षयसेति। अथ य एते द्वि-प्रवाचना यथैतच्छौङ्गशैशिरयः भरद्वाजाद्दशुङ्गाः कताः शैशि-रयः ॥ २ ॥

अथेदानीमिदमुच्यते। ये एते द्विप्रवाचना ऋषिद्वय-व्यपदेश्याः। यथा एते शौङ्गशैशिरयो द्व्यामुष्यायणाः शौङ्गेयस्य क्षेत्रे शैशिरेयबीजोत्पन्नानां वंशाः। अन्येषां वा भिन्नार्षेय-क्षेत्रजोत्पन्नानां वंशा इत्येवोदाहरणं। शौङ्गशैशिरिग्रहणं प्रदर्शनार्थं। सर्वे हि ते भिन्नार्षेयाः। यस्माद्भरद्वाजाः शुङ्गा-स्तेषामयं प्रवरः आङ्गिरसबार्हस्पत्यभारद्वाजेति। कताः शैशिरयस्तेषां वैश्वामित्रकात्यात्कीलेति। एवं स्थिते कथमे-तेषां आर्षेयप्रवरणमिति प्रसङ्गमुक्त्वाह ॥

तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः ॥ ३ ॥

आर्षेयवरणपक्षे एवं भवति ॥

द्वौ वेतरतस्त्रीनितरतः ॥ ४ ॥

पञ्चार्षेयवरणपक्षोऽयं ॥

नहि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणं ॥ ५ ॥

अत उभयतो द्वौ द्वौ न ग्रहीतव्यौ। कुतः, चतुर्णां वरणनिषेधात्, अतिपञ्चानां प्रवरनिषेधात्। तत् द्वयोरेकार्षेयत्वेऽपि द्व्यार्षेयवरणमनुज्ञातमिति गम्यते ॥

आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ॥ ६ ॥ ॥ १३ ॥

प्रदर्शनमात्रमेतत्। द्व्यामुष्यायणलक्षणमुच्यते।

'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।
आवयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः' ॥

इति याज्ञवल्क्यवचनादेवंप्रकारमेव द्व्यामुष्यायणत्वं, नान्यथेति मन्तव्यं। द्व्यामुष्यायणानां सर्वेषां पक्षद्वयेऽप्यविवाहः। द्व्यामुष्यायणत्वाभावे वा ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्चेत्यस्य वचनस्याऽविषयः ॥

इत्युत्तरषट्कस्य षष्ठे त्रयोदशी कण्डिका ॥ ० ॥

अत्रीणामात्रेयार्चनानसश्यावाश्वेति। गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति॥ १॥

अत्र द्विविधा अत्रय उक्ताः। अन्यत्राऽन्ये च सन्ति। तेषां सर्वेषामत्रीणां परस्परमविवाहः। एवमुत्तरे क्वचिद्द्रष्टव्यं॥

चिकितगालवकालवव*मनुतन्तुकुशिकानां वैश्वामित्रदेवरातौदलेति॥ २॥

चिकितानाङ्गालवानाङ्कालानां ववानां मनुतन्तूनां कुशिकानामित्येतेषां षण्णां अयं प्रवरो भवति॥

श्रौमतकामकायनानां वैश्वामित्रदैवश्रवसदैवतरसेति॥ ॥ ३॥

श्रौमतानाङ्कामकायनानामयं प्रवरः॥

धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति। अजानां वैश्वामित्रमाधुच्छन्दसाज्येति। रोहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति। अष्टकानां वैश्वामित्रमाधुच्छन्दसाष्टकेति॥ ४॥

धनञ्जयाजरोहिणाष्टकविश्वामित्राख्यप्रवराः॥

---

* मनूनां तन्तूनामिति गणनां कृत्वा सप्तानामयं प्रवर इत्येकेषां मतं। इत्यादर्शपुस्तके उद्धृतपाठो वर्त्तते पुस्तकान्तरे तु नास्ति।

पूरणवारिधापयन्तानां वैश्वामित्रदैवरातपौरणेति ॥ ५ ॥

पूरणानां वारिधापयन्तानामयं प्रवरः ॥

कतानां वैश्वामित्रकात्यात्कीलेति। अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति। रेणूनां वैश्वामित्रगाथिनरैणवेति। वेणूनां वैश्वामित्रगाथिनवैणवेति। शालङ्कायनशालाक्षलोहिताक्षलोहितजह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति ॥ ६ ॥

पञ्चानामयं प्रवरो भवति। लोहितजह्नूनामिति समस्तैके। एते विश्वामित्राः। एतेषां सर्वेषामविवाहः ॥

कश्यपानां काश्यपावत्सारासितेति। निध्रुवाणां काश्यपावत्सारनैध्रुवेति। रेभाणां काश्यपावत्साररैभ्येति। शण्डिलानां शाण्डिलासितदैवलेति ॥ ७ ॥

एते कश्यपाः। एतेषां परस्परमविवाहः ॥

काश्यपासितदैवलेति वा ॥ ८ ॥ ॥ १४ ॥

शण्डिलानां काश्यपशाण्डिलयोर्विकल्पः ॥

इत्युत्तरषट्कस्य षष्ठे चतुर्दशी कण्डिका ॥ ० ॥

वासिष्ठेति वसिष्ठानां येऽन्य उपमन्युपराशरकुण्डिनेभ्यः ॥ १ ॥

उपमन्युपराशरकुण्डिनातिरिक्ता वासिष्ठा एकार्षेयाः ॥

उपमन्यूनां वासिष्ठाभरद्वस्विन्द्रप्रमदेति। परासराणां वासिष्ठशाक्त्यपाराशर्येति। कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति ॥ २ ॥

उपमन्युपराशरकुण्डिना वसिष्ठाः, एतेषां सर्वेषामविवाहः॥

आगस्तीनामागस्त्यदार्ढच्युतेध्मवाहेति। सोमवाहो वोत्तम आगस्त्यदार्ढच्युतसोमवाहेति ॥ ३ ॥

उत्तमपदविकल्पः ॥

पुरोहितप्रवरो राज्ञां ॥ ४ ॥

उत्तरविवक्षार्थमेतत्। 'पौरोहित्यान् राजन्यविशां' इति सिद्धत्वात्॥

अथ यदि *सार्ष्टं प्रवृणीरन्मानवैलपौरूरवसेति ॥ ५ ॥

'राजर्षीन् वा राज्ञाम्' इत्युक्तं, तस्य स्वरूपमेतेनोच्यते। यदि राज्ञां राजर्षीन् वृणीत तदेत्यर्थः। सात्कुशब्दो वदनो-

---

* सार्षमित्यर्थे सार्ष्टमिति पाठः सर्वत्र दृश्यते। विवरणे तु एतद्व्याख्यानं न समीचीनं प्रतिभाति। तत्र 'सात्कु' इत्यादिः 'इत्यर्थः' इत्यन्तः पाठोऽसङ्गतत्वाद्भ्रान्तोऽनुमीयते।

च्यते। अगौरवं साष्टं सनुत्यत्तिरित्यर्थः। तथाहि सर्वेषां राजन्यानां मनुइलपुरूरवादयो वंशकारा इति स्मर्यते, तेषां वरणमित्यर्थः॥

इति सत्राणि॥ ६॥

इत्थं सत्राण्युक्तानीत्यर्थः। उक्तानुकीर्त्तनमुत्तरविवक्षार्थं॥

तान्यदक्षिणानि॥ ७॥

तान्येतानि सत्राण्यदक्षिणानि भवन्ति। सत्राणीत्यनेनैव सन्निहितत्वात् सत्राणामेव तानीति योगविभागार्थमुच्यते। तेनायमर्थः। सन्निहितान्यसन्निहितानि च यानि सत्राणि भवन्ति तेषु सर्वेषु सत्रेषु यजमानऋत्विक्त्वाविशेषात् परिक्रयाभाव इति। अनेन सर्वेषां सत्राणां दक्षिणाभावोऽवधार्यते॥ यत्र 'कृष्णाजिनानि धून्वन्ते' इत्यनेन दक्षिणानयनमाचापवादः।—

तेषामन्ते ज्योतिष्टोमः पृष्ठ्यशमनीयः॥ ८॥

तेषां सत्राणामन्ते ज्योतिष्टोमः पृष्ठ्यशमनीयसंज्ञकः सदक्षिणः कर्त्तव्यः। अन्वर्थसंज्ञेयं। सत्रेषु प्रयुज्यमानानां पृष्ठ्यानां दक्षिणाभावाद्दीयमानानां* यजमानानां निर्वपणं शमनं क्रियत इति पृष्ठ्यशमनीयः। पृष्ठ्यानां शमनप्रयोजनोऽयं

* यजमानानामिति असकृतत्वेनाङ्कितमस्यादर्शपुस्तके।

क्रतुरित्यर्थः। सत्रादुदवसायैषामन्यतमेनापि क्रतुना सर्वे सत्रिणः पृथक् पृथक् यजेरन्। स्वकीयैरेव ऋत्विग्भिर्वाऽयं क्रतुः॥

सहस्रदक्षिणः॥९॥

सत्रोदवसाननिमित्ताधिकारोऽयं, एकाहो ज्योतिष्टोमो वा *द्वादशशतदक्षिण इत्यस्य दक्षिणामात्रविधानं। स को यज्ञः? स्वरूपतो ज्योतिष्टोम एव पृष्ठ्यशमनीयः कर्त्तव्य इत्यर्थः। इति सिद्धं॥

अन्यो वा प्रज्ञातदक्षिणः॥१०॥

अन्यो वा ज्योतिष्टोमात् पृष्ठ्यशमनीयः कर्त्तव्यः, प्रज्ञातदक्षिण आम्नातदक्षिण इत्यर्थः॥

दक्षिणावता पृष्ठ्यानि शमयेरन्निति विज्ञायते॥११॥

'सत्रादुदवसाय दक्षिणावता पृष्ठ्यशमनीयेन यजेरन् सत्रिणः' इत्येवमेव श्रुतिः सर्वेषां सत्रिणां ज्योतिष्टोमो वान्यो वेत्यसमुभयोर्द्रष्टव्यः। तन्न। अस्यां श्रुतावेतावानेवार्थः, सहस्रदक्षिणः पृष्ठ्यशमनीयः कर्त्तव्य इति। नात्र क्रतुविशेषनिर्देशोऽस्ति। एवं स्थिते भगवानाचार्यो वैकृतेषु सर्वेषु विधिषु प्रकृ-

---

* दशशतेति वक्तव्ये द्वादशशतेति सटी॰ पु॰ द्वये।

तेषु बुद्धिस्थत्वात्सत्यामेकं प्रकृष्टदक्षिणत्वं नाम गुणं विधातुमुक्त इत्यर्थं मत्वाह 'तेषामन्ते ज्योतिष्टोमः पृष्ठ्यशमनीयः सहस्रदक्षिणः' इति। 'दशशतानि तत् सहस्रं तत् सर्वम्' इत्यादिषु श्रुतिवाक्येषु सहस्रसङ्ख्यायाः प्रकृष्टत्वदर्शनात् सहस्रदक्षिणत्वमेवोक्तवानाचार्यः। अन्ये पुनराचार्याः 'दक्षिणवता' इत्यनेन प्रकृष्टदक्षिणा प्रकृतेरेवाच प्रतीयत इति सहत्वमाहुः। अन्ये वा 'प्रज्ञातदक्षिणः' इति। एवमात्मीयं परिमाणमुक्त्वा तयोर्मूलं दर्शयितुं तां श्रुतिं पठितवानाचार्यः 'दक्षिणावता पृष्ठ्यानि शमयेरन्निति विज्ञायते' इति। एवमनयोः पक्षयोरित्येव श्रुतिर्मूलमित्युक्त्वा स्वपक्षमेव द्रढयितुमाह। प्रकृष्टत्वं सहत्वस्य पृष्ठ्यशमनीये हेतुरुक्तः। दक्षिणावता पृष्ठ्यानि शमयेरन्निति विज्ञायत इति सप्रकृतिर्ज्योतिष्टोमः पृष्ठ्यशमनीयभावस्येदोषः प्रकृष्टदक्षिणत्वेनोपाधिना क्रतुविशेषोऽन्वेषणीयः। तत्रानवस्थादेः प्रसङ्ग इति ॥

**स एव हेतुः प्रकृतिभावे प्रकृतिभावे। नमो ब्रह्मणे नमो ब्रह्मणे॥ १२॥**

स एव हेतुः प्रकृतिभावे इत्युक्तवानाचार्यः। नमो ब्रह्मण इति नमस्कृतवानाचार्यः। ब्रह्मनाम तदाविर्भावोपायस्य तत्रैवोक्तः श्रवणमननिदिध्यासनवैराग्यलक्षणं लक्ष्यत इति श्रौतस्मार्त्तप्रसिद्धः। आत्मश्रवणादीन्येवंरूपाणि। तत्राहं-

रूपो यः सर्वेषां शंसनमभिन्नेदम्भावोऽहम्भेदरूपो भेदः, स तु बोधः सर्वदा स्वस्थ एवावतिष्ठते। यदा वा पुनर्बोध्यसन्निधिस्तदायं *प्रोतकाष्ठयोरिवाविवेकोऽवगन्तुमशक्य एव। स एष-शब्द आत्मशब्देनोच्यते। अयमेवापहतपाप्मा विरजो विशोको विमन्युर्विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो नित्यानन्दो नित्यतृप्त उच्यते, तादृशस्यान्यस्यानुपलम्भात्, अन्यस्य चापहतपाप्मादिभिर्गुणैः किञ्चित्तादर्थ्यं निरूपयित्वा इममेव संसारिणमात्मानमभिमुखीकृत्य तत्त्वव्यपदेशाच्च। अतोऽयमेवात्मा परं ब्रह्मेत्युच्यते। अनेन रूपेणास्यात्मनः सर्वत्र रागद्वेषादिभ्यो वैराग्यमित्युच्यते। एवमात्मश्रवणमननिदिध्यासनवैराग्ययुक्तस्यैव श्रौतस्मार्त्तकर्माणि नित्यनैमित्तिकान्यनुतिष्ठत आदर्शशोधनवत् संसारिताहेतुपुण्यपापपूर्वशस्मलाद्यपचमहता कालेन अयमेवात्मा सोऽहं ब्रह्मेत्यवगच्छति। अहमयमित्येवं ब्रह्मणे नमस्कृत्य स्वार्थे संसारिणो ब्रह्मोपायो नान्यः। अयमेवास्यपदस्यार्थो नान्य इत्येवाभिप्रायेणास्माभिः पुरस्तादुक्तं। अत एव भगवान् सूत्रकारः श्रौतानि कर्माण्युक्त्वा अन्ते ब्रह्मणे नमस्कारं कृतवान्। तेन भगवतोऽप्ययमेवाभिप्राय इति लक्ष्यते॥

**नम आचार्येभ्यो नम आचार्येभ्यः ॥१३॥**

---

* प्रातकाष्ठयोरिति १ सं० पु०।

एवं ब्रह्मणे नमस्कृत्य आचार्येभ्यो नमस्कारं कृतवान् योऽयमस्य शास्त्रस्य अर्थसंप्रदायाविच्छेदी अस्माभिरधिगतेन स्वमनीषिके चयति भगवता दर्शितः। तेन स्मरणेन।—

नमः शौनकाय नमः शौनकाय ॥ १४ ॥ ॥ १५ ॥

भगवानाचार्यः स्वाभिमतज्येष्ठं शौनकाचार्यं नमस्करोति। चतुःकृत्वो द्विरुक्तिः शास्त्रसमाप्तिसूचनार्था ॥

इत्युत्तरषट्कस्य षष्ठे पञ्चदशी कण्डिका ॥ * ॥

इत्याश्वलायनश्रौतसूत्रवृत्तौ नारायणीयायां द्वादशोऽध्यायः॥

॥ * ॥ समाप्तोऽयं वृत्तिसहितो ग्रन्थः ॥ * ॥

## श्रौतसूत्रपरिशिष्टभागः ॥

भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः ।
श्येतादयस्त्रयस्तेषां विवाहो मिथ इष्यते ॥
षण्णां वै गौतमादीनां विवाहो नेष्यते मिथः ।
दीर्घतमा औचथ्यः कक्षीवांश्चैकगोत्रजाः ॥
भरद्वाजाग्निवेश्यर्क्षाः शृङ्गाः शैशिरयः कताः ।
एते समानगोत्राः स्युर्गर्गानेके वदन्ति वै ॥

पृषदश्वा मुद्गला विष्णुवृद्धाः
कण्वोऽगस्त्यो हरितः सङ्कृतिः कपिः ।
यस्कश्चैषां मिथ इष्टो विवाहः
सर्वैरन्यैर्जामदग्न्यादिभिश्च ।

यावत् समानगोत्राः स्युर्विश्वामित्रोऽनवर्त्तते ।
तावद्वसिष्ठश्चात्रिश्च कश्यपश्च पृथक् पृथक् ॥
द्व्यार्षेयाणां त्र्यार्षेयसन्निपाते अविवाहः ।
त्र्यार्षेयाणां पञ्चार्षेयसन्निपाते अविवाहः ॥
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गोतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥
सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते।
एक एव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसाङ्गणादित्यसमानप्रवरैर्विवाहो विवाहः ॥ * ॥ * ॥

परिशिष्टभागस्य श्रौतप्रसङ्गासङ्गतत्वेनाप्राकरणिकत्वं मन्यमानेनाचार्य्येणास्य भागस्य सूत्रग्रन्थान्ते कारिकाकारेण पृथक् सन्निवेशितत्वात्, वृत्तिकृता च केवलसूत्रव्याख्यानस्यैव प्रतिज्ञातत्वाच्चास्य वृत्तिर्न पृथक् विहिता इत्यतो मूलभिन्नेषु सवृत्तिकेषु पुस्तकेषु अयं भागो न विद्यत इति प्रतिभाति। सुतरां एतद्ग्रन्थमुद्रणार्थं समाहृतानां पञ्चानां सवृत्तिकपुस्तकद्वयेऽयं भागो न दृश्यते केवलं मूलेषु त्रिषु विद्यत एव। विशेषस्त्वेतावान् यत् मूलानां त्रयाणामेकस्मिन् चतुर्दशकण्डिकान्तेऽपरयोः पञ्चदशान्ते धृतत्वात् अस्य समावेशव्यतिक्रमो दृश्यत इति॥ ❋ ॥